गें ह्यहंकारः परिघो दुरतिक्रमः । ज्ञानं विना च नास्त्येव मोक्षो व्रतशतैरपि ॥ १३७
न मुमुक्षूणां क्षयी चित्तं विलोभयेत् । तस्मादहंकृतित्यागाज्ज्ञाने यत्नं मुने कुरु ॥ १३८
ं मुनिं तेन प्रणतेन कृतस्तुतिः । तं बदर्याश्रमोद्देशं शान्तं वररुचिर्ययौ ॥ १३९

अथ स निबिडभक्त्या तत्र देवीं शरण्यां शरणमुपगतोऽसौ मर्त्यभावं मुमुक्षुः ।
प्रकटितनिजमूर्तिः सापि तस्मै शशंस स्वयमनलसमुत्थां धारणां देहमुक्त्यै ॥ १४०
दग्ध्वा शरीरमथ धारणया तया तद्दिव्यां गतिं वररुचिः स निजां प्रपेदे ।
विन्ध्याटवीभुवि ततः स च काणभूतिरासीदभीप्सितगुणाढ्यसमागमोत्कः ॥ १४१

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथापीठलम्बके पञ्चमस्तरङ्गः ।

---

## षष्ठस्तरङ्गः ।

। मर्त्यवपुषा माल्यवान्विचरन्वने । नाम्ना गुणाढ्यः सेवित्वा सातवाहनभूपतिम् ॥ १
द्यास्तदग्रे च भाषास्तिस्रः प्रतिज्ञया । त्यक्त्वा खिन्नमना द्रष्टुमाययौ विन्ध्यवासिनीम् ॥ २
ान गत्वा च काणभूतिं ददर्श सः । ततो जातिं निजां स्मृत्वा प्रबुद्धः सहसाभवत् ॥ ३
। भाषां पैशाचीं भाषात्रयविलक्षणाम् । श्रावयित्वा निजं नाम काणभूतिं च सोऽब्रवीत् ॥ ४
ताच्छ्रुतां दिव्यां शीघ्रं कथय मे कथाम् । येन शापं तरिष्यावस्त्वं चाहं च समं सखे ॥ ५
। प्रणतो हृष्टः काणभूतिरुवाच तम् । कथयामि कथां किं तु कौतुकं मे महत्प्रभो ॥ ६
ाचरितं तावच्छंस मे कुर्वनुग्रहम् । इति तेनार्थितो वक्तुं गुणाढ्योऽथ प्रचक्रमे ॥ ७
ेऽस्ति नगरं सुप्रतिष्ठितसंज्ञकम् । तत्राभूत्सोमशर्माख्यः कोऽपि ब्राह्मणसत्तमः ॥ ८
गुल्मकश्चैव तस्य द्वौ तनयौ सखे । जायेते स्म तृतीया च श्रुतार्था नाम कन्यका ॥ ९
ब्राह्मणः सोऽथ सभार्यः पञ्चतां गतः । तत्पुत्रौ तौ स्वसारं तां पालयन्तावतिष्ठताम् ॥ १०
कस्मात्सगर्भाभूत्तद्दृष्ट्वा वत्सगुल्मयोः । तत्रान्यपुरुषाभावाच्छङ्कान्योन्यमजायत ॥ ११
ुतार्था चित्तज्ञा भ्रातरौ तावभाषत । पापशङ्का न कर्तव्या श्रृणुतं कथयामि वाम् ॥ १२
कीर्तिसेनाख्यो नागराजस्य वासुकेः । भ्रातुः पुत्रोऽस्ति तेनाहं दृष्टा स्नातुं गता सती ॥ १३
मदनाक्रान्तो निवेद्यान्वयनामनी । गान्धर्वेण विवाहेन मां भार्यामकरोत्तदा ॥ १४
ेरयं तस्मान्मम गर्भ इति स्वसुः । श्रुत्वा कः प्रत्ययोऽत्रेति वत्सगुल्माववोचताम् ॥ १५
ुसि सस्मार सा तं नागकुमारकम् । स्मृतमात्रागतः सोऽथ वत्सगुल्मावभाषत ॥ १६
कृता मयैवेयं शापभ्रष्टा वराप्सराः । युष्मत्स्वसा युवां चैव शापेनैव च्युतौ भुवि ॥ १७
निष्यते चात्र युष्मत्स्वसुरसंशयम् । ततोऽस्याः शापनिर्मुक्तिर्युवयोश्च भविष्यति ॥ १८
ान्तर्हितः सोऽभूत्ततः स्तोकैश्च वासरैः । श्रुतार्थायाः सुतो जातस्तं हि जानीहि मां सखे ॥ १९
ारो जातोऽयं गुणाढ्यो नाम ब्राह्मणः । इति तत्कालमुदभूदन्तरिक्षात्सरस्वती ॥ २०
ापास्ततस्ते च जननीमातुला मम । कालेन पञ्चतां प्राप्ता गतश्चाहमधीरताम् ॥ २१
ोकं समुत्सृज्य बालोऽपि गतवानहम् । स्वावष्टम्भेन विद्यानां प्राप्तये दक्षिणापथम् ॥ २२
तत्र संप्राप्य सर्वा विद्याः प्रसिद्धिमान् । स्वदेशमागतोऽभूवं दर्शयिष्यन्निजान्गुणान् ॥ २३
त्र चिरात्तत्र नगरे सुप्रतिष्ठिते । अपश्यं शिष्यसहितः शोभां कामप्यहं तदा ॥ २४
ामानि छन्दोगा गायन्ति च यथाविधि । कचिद्विवादो विप्राणामभूद्वेदविनिर्णये ॥ २५
द्यूतकलां वेत्ति तस्य हस्तगतो निधिः । इत्यादिकैतवैर्द्यूतमस्तुवन्कितवाः क्वचित् ॥ २६
यं निजवाणिज्यकलाकौशलवादिनाम् । क्वचिच्च वणिजां मध्ये वणिगेकोऽब्रवीदिदम् ॥ २७
ंयमवानर्थान्प्राप्नोति कियदद्भुतम् । मया पुनर्विनैवार्थं लक्ष्मीरासादिता पुरा ॥ २८
स्य च मे पूर्वं पिता पञ्चत्वमागतः । मन्मातुश्च तदा पापैर्गोत्रजैः सकलं हृतम् ॥ २९

ततः सा तद्भयाद्गत्वा रक्षन्ती गर्भमात्मनः। तस्थौ कुमारदत्तस्य पितृमित्रस्य वेश्मनि ॥
तत्र तस्याश्च जातोऽहं साध्व्या वृत्तिनिबन्धनम्। ततश्चावर्धयत्सा मां कृच्छ्रकर्माणि कुर्वती ॥
उपाध्यायमथाभ्यर्थ्य तयाकिंचन्यदीनया। क्रमेण शिक्षितश्चाहं लिपिं गणितमेव च ॥
वणिक्पुत्रोऽसि तत्पुत्र वाणिज्यं कुरु सांप्रतम्। विशाखिलाख्यो देशेऽस्मिन्वणिक्चास्ति महाधनः ॥
दरिद्राणां कुलीनानां भाण्डमूल्यं ददाति सः। गच्छ याचस्व तं मूल्यमिति माताब्रवीच्च माम् ॥
ततोऽहमगमं तस्य सकाशं सोऽपि तत्क्षणम्। इत्यवोचत्क्रुधा कंचिद्वणिक्पुत्रं विशाखिलः ॥
मूषकोदृश्यते योऽयं गतप्राणोऽत्र भूतले। एतेनापि हि पण्येन कुशलो धनमर्जयेत् ॥
दत्तास्तव पुनः पाप दीनारा बहवो मया। दूरे तिष्ठतु तद्वृद्धिस्त्वया तेऽपि न रक्षिताः ॥
तच्छ्रुत्वा सहसैवाहं तमवोचं विशाखिलम्। गृहीतोऽयं मया त्वत्तो भाण्डमूल्याय मूषकः ॥
इत्युक्त्वा मूषकं हस्ते गृहीत्वा संपुटे च तम्। लिखित्वास्य गतोऽभूवमहं सोऽप्यहसद्वणिक् ॥
चणकाञ्जलियुग्मेन मूल्येन स च मूषकः। मार्जारस्य कृते दत्तः कस्यचिद्वणिजो मया ॥
कृत्वा तांश्चणकान्भृष्टान्गृहीत्वा जलकुम्भिकाम्। अतिष्ठं चत्वरे गत्वा छायायां नगराद्बहिः ॥
तत्र श्रान्तागतायाम्भः शीतलं चणकांश्च तान्। काष्ठभारिकसंघाय सप्रश्रयमदामहम् ॥
एकैकः काष्ठिकः प्रीत्या काष्ठे द्वे द्वे ददौ मम। विक्रीतवानहं तानि नीत्वा काष्ठानि चापणे ॥
ततः स्तोकेन मूल्येन क्रीत्वा तांश्चणकांस्ततः। तथैव काष्ठिकेभ्योऽहमन्येद्युः काष्ठमाहरम् ॥
एवं प्रतिदिनं कृत्वा प्राप्य मूल्यं क्रमान्मया। काष्ठिकेभ्योऽखिलं दारु क्रीतं तेभ्यो दिनत्रयम् ॥
अकस्मादथ संजाते काष्ठच्छेदेऽतिवृष्टिभिः। मया तद्दारु विक्रीतं पणानां बहुभिः शतैः ॥
तेनैव विपणिं कृत्वा धनेन निजकौशलात्। कुर्वन्वणिज्यां क्रमशः संपन्नोऽस्मि महाधनः ॥
सौवर्णो मूषकः कृत्वा मया तस्मै समर्पितः। विशाखिलाय सोऽपि स्वां कन्यां मह्यमदात्ततः ॥
अत एव च लोकेऽस्मिन्प्रसिद्धो मूषकाख्यया। एवं लक्ष्मीरियं प्राप्ता निर्धनेन सता मया ॥
तच्छ्रुत्वा तत्र तेऽभूवन्वणिजोऽन्ये सविस्मयाः। धीर्न चित्रीयते कस्मादभित्तौ चित्रकर्मणा ॥
कश्चित्प्रतिग्रहप्राप्तहेममाषाष्टको द्विजः। छन्दोगः कश्चिदित्युक्तो विटप्रायेण केनचित् ॥
ब्राह्मण्याद्भोजनं तावदस्ति ते तत्त्वयामुना। लोकयात्रा सुवर्णेन वैदग्ध्यायेह शिक्ष्यताम् ॥
को मां शिक्षयतीत्युक्ते तेन मुग्धेन सोऽब्रवीत्। यैषा चतुरिका नाम वेश्या तस्या गृहं व्रज ॥
तत्र किं करवाणीति द्विजेनोक्तो विटोऽब्रवीत्। स्वर्णं दत्त्वा प्रयुञ्जीथा रञ्जयन्साम किंचन ॥
श्रुत्वेत्यगच्छच्छन्दोगो द्रुतं चतुरिकागृहम्। उपाविशत्प्रविश्यात्र कृतप्रत्युद्गतिस्तया ॥
मामद्य लोकयात्रां त्वं शिक्षयैतेन सांप्रतम्। इति जल्पन्स तत्तस्यै स्वर्णमर्पितवान्द्विजः ॥
प्रहसत्यथ तत्रस्थे जने किंचिद्विचिन्त्य सः। गोकर्णसदृशौ कृत्वा करावाबद्धसारणौ ॥
तारस्वरं तथा साम गायति स्म जडाशयः। यथा तत्र मिलन्ति स्म विटा हास्यदिदृक्षवः ॥
तेचावोचञ्श्रृगालोऽयं प्रविष्टोऽत्र कुतोऽन्यथा। तच्छीघ्रमर्धचन्द्रोऽस्य गलेऽस्मिन्दीयतामिति ॥
अर्धचन्द्रं शरं मत्वा शिरश्छेदभयाद्द्रुतम्। शिक्षिता लोकयात्रेति गर्जन्स निरगात्ततः ॥
तत्सकाशं ततोऽगच्छद्येनासौ प्रेषितोऽभवत्। वृत्तान्तं चावदत्तस्मै सोऽपि चैनमभाषत ॥
साम सान्त्वं मयोक्तं ते वेदस्यावसरोऽत्र कः। किं वा धाराधिरूढं हि जाड्यं वेदजडे जने ॥
एवं विहस्य गत्वा च तेनोक्ता सा विलासिनी। द्विपदस्य पशोरस्य तत्सुवर्णतृणं त्यज ॥
हसन्त्या च तया त्यक्तं सुवर्णं प्राप्य स द्विजः। पुनर्जातमिवात्मानं मन्वानो गृहमागतः ॥
एवंप्रायाण्यहं पश्यन्कौतुकानि पदे पदे। प्राप्तवान्राजभवनं महेन्द्रसदनोपमम् ॥
ततश्चान्तः प्रविष्टोऽहं शिष्यैरग्रे निवेदितः। आस्थानस्थितमद्राक्षं राजानं सातवाहनम् ॥
शर्ववर्मप्रभृतिभिर्मन्त्रिभिः परिवारितम्। रत्नसिंहासनासीनममरैरिव वासवम् ॥
विहितस्वस्तिकारं मामुपविष्टमथासने। राज्ञा कृतादरं चैव शर्ववर्मादयोऽस्तुवन् ॥

ैव भुवि ख्यातः सर्वविद्याविशारदः । गुणाढ्य इति नामास्य यथार्थमत एव हि ॥ ६९
ै तत्स्तुतिं दृष्ट्वा मन्त्रिभिः सातवाहनः । प्रीतः सपदि सत्कृत्य मन्त्रित्वे मां न्ययोजयत् ॥ ७०
ं राजकार्याणि चिन्तयन्नवसं सुखम् । शिष्यानध्यापयंस्तत्र कृतदारपरिग्रहः ॥ ७१
चेत्कौतुकाक्रान्त्यन्स्वैरं गोदावरीतटे । देवीकृतिरिति-ख्यातमुद्यानं दृष्टवानहम् ॥ ७२
तेरम्यमालोक्य क्षितिस्थमिव नन्दनम् । उद्यानपालः पृष्टोऽभून्मया तत्र तदागमम् ॥ ७३
मामब्रवीत्स्वामिन्वृद्धेभ्यः श्रूयते यथा । पूर्वं मौनी निराहारो द्विजः कश्चित्समाययौ ॥ ७४
व्यमिदमुद्यानं सदेवभवनं व्यधात् । ततोऽत्र ब्राह्मणाः सर्वे मिलन्ति स्म सकौतुकाः ॥ ७५
यात्तैः स पृष्टः स्वं वृत्तान्तमवदद्द्विजः । अस्तीह भरुकच्छाख्यो विषयो नर्मदातटे ॥ ७६
त्रहं समुत्पन्नो विप्रस्तस्य च मे पुरा । न भिक्षामप्यदात्कश्चिद्दरिद्रस्यालसस्य च ॥ ७७
वेदादहं त्यक्त्वा विरक्तो जीवितं प्रति । भ्रान्त्वा तीर्थान्यहं द्रष्टुमगच्छं विन्ध्यवासिनीम् ॥ ७८
ततश्च तां देवीमिति संचिन्तितं मया । लोकः पशूपहारेण प्रीणाति वरदामिमाम् ॥ ७९
वात्मानमेवेह हन्मि मूर्खमिमं पशुम् । निश्चित्येति शिरश्छेत्तुं मया शस्त्रमगृह्यत ॥ ८०
ां सा प्रसन्ना मां देवी स्वयमभाषत । पुत्र सिद्धोऽसि मात्मानं वधीस्तिष्ठ ममान्तिके ॥ ८१
ेवीवरं लब्ध्वा संप्राप्ता दिव्यता मया । ततः प्रभृति नष्टा मे बुभुक्षा च तृषा सह ॥ ८२
वेदथ देवी मां तत्रस्थं स्वयमादिशत् । गत्वा पुत्र प्रतिष्ठाने रचयोद्यानमुत्तमम् ॥ ८३
त्वा सैव मे बीजं दिव्यं प्रादात्ततो मया । इहागत्य कृतं कान्तमुद्यानं तत्प्रभावतः ॥ ८४
मेतच्च युष्माकमित्युक्त्वा स तिरोदधे । इति निर्मितमुद्यानमिदं देव्या पुरा प्रभो ॥ ८५
पालादित्येवं तद्देशे देव्यनुग्रहम् । आकर्ण्य विस्मयाविष्टो गृहाय गतवानहम् ॥ ८६
के गुणाढ्येन काणभूतिरभाषत । सातवाहन इत्यस्य कस्मान्नामाभवत्प्रभो ॥ ८७
ब्रवीद्गुणाढ्योऽपि शृण्वेतत्कथयामि ते । दीपकर्णिरिति ख्यातो राजाभूत्प्राज्यविक्रमः ॥ ८८
शक्तिमती नाम भार्या प्राणाधिकाभवत् । रतान्तसुप्तामुद्याने सर्पस्तां जातु दष्टवान् ॥ ८९
मिथ पञ्चत्वं तस्यां तद्गतमानसः । अपुत्रोऽपि स जग्राह ब्रह्मचर्यव्रतं नृपः ॥ ९०
कदाचिद्राज्याहपुत्रासद्भावदुःखितम् । इत्यादिदेश तं स्वप्ने भगवानिन्दुशेखरः ॥ ९१
ां द्रक्ष्यसि भ्राम्यन्सिंहारूढं कुमारकम् । तं गृहीत्वा गृहं गच्छेः स ते पुत्रो भविष्यति ॥ ९२
बुद्धस्तं स्वप्नं स्मरन्राजा जहर्ष सः । कदाचिच्च ययौ दूरामटवीं मृगयारसात् ॥ ९३
तत्र मध्याह्ने सिंहारूढं स भूपतिः । बालकं पद्मसरसस्तीरे तपनतेजसम् ॥ ९४
राजा स्मरन्स्वप्नमवतारितबालकम् । जलाभिलाषिणं सिंहं जघानैकशरेण तम् ॥ ९५
हस्तद्वपुस्त्यक्त्वा सद्योऽभूत्पुरुषाकृतिः । कष्टं किमेतद्ब्रूहीति राज्ञा पृष्टो जगाद च ॥ ९६
य सखा यक्षः सातो नामास्मि भूपते । सोऽहं स्नान्तीमपश्यं प्राग्गङ्गायामृषिकन्यकाम् ॥ ९७
मां वीक्ष्य संजातमन्मथाभूदहं तथा । गान्धर्वेण विवाहेन ततो भार्या कृता मया ॥ ९८
द्बान्धवा बुद्ध्वा तां च मां चाशपन्क्रुधा । सिंहौ भविष्यतः पापौ स्वेच्छाचारौ युवामिति ॥ ९९
मावधिं तस्याः शापान्तं मुनयो व्यधुः । मम तु त्वच्छराघातपर्यन्तं तदनन्तरम् ॥ १००
ां सिंहमिथुनं संजातौ सापि कालतः । गर्भिण्यभूत्ततो जाते दारकेऽस्मिन्व्यपद्यत ॥ १०१
वर्धितोऽन्यासां सिंहीनां पयसा मया । अद्य चाहं विमुक्तोऽस्मि शापाद्बाणाहतस्त्वया ॥ १०२
ग महासत्त्वं मया दत्तममुं सुतम् । अयं ह्यर्थः समादिष्टस्तैरेव मुनिभिः पुरा ॥ १०३
वान्तर्हिते तस्मिन्सातनामनि गुह्यके । स राजा तं समादाय बालं प्रत्याययौ गृहम् ॥ १०४
यस्मादूढोऽभूत्तस्मात्तं सातवाहनम् । नाम्ना चकार कालेन राज्ये चैनं न्यवेशयत् ॥ १०५
स्मिन्गतेऽरण्यं दीपकर्णौ क्षितीश्वरे । संवृत्तः सार्वभौमोऽसौ भूपतिः सातवाहनः ॥ १०६
त्वा कथां मध्ये काणभूत्यनुयोगतः । गुणाढ्यः प्रकृतं धीमाननुस्मृत्याब्रवीत्पुनः ॥ १०७

ततः कदाचिदध्यास्त वसन्तसमयोत्सवे। देवीकृतं तदुद्यानं स राजा सातवाहनः॥ १०८
विहरन्सुचिरं तत्र महेन्द्र इव नन्दने। वापीजलेऽवतीर्णोऽभूत्क्रीडितुं कामिनीसखः॥ १०९
असिञ्चत्तत्र दयिताः सहेलं करवारिभिः। असिच्यत स ताभिश्च वशाभिरिव वारणः॥ ११०
मुखैर्धौताञ्जनाताम्रनेत्रैर्जह्रुर्जलाप्लुतैः। अङ्गैः सक्ताम्बरव्यक्तविभागैश्च तमङ्गनाः॥ १११
विदलत्पत्रतिलकाः स चक्रे वनमध्यगाः। च्युताभरणपुष्पास्ता लता वायुरिव प्रियाः॥ ११२
अथैका तस्य महिषी राज्ञः स्तनभरालसा। शिरीषसुकुमाराङ्गी क्रीडन्ती क्लममभ्यगात्॥ ११३
सा जलैरभिषिञ्चन्तं राजानमसहा सती। अब्रवीन्मोदकैर्देव परिताडय मामिति॥ ११४
तच्छ्रुत्वा मोदकान्राजा द्रुतमानाययद्बहून्। ततो विहस्य सा राज्ञी पुनरेवमभाषत॥ ११५
राजन्नवसरः कोऽत्र मोदकानां जलान्तरे। उदकैः सिञ्च मा त्वं मामित्युक्तं हि मया तव॥ ११६
संधिमात्रं न जानासि माशब्दोदकशब्दयोः। न च प्रकरणं वेत्सि मूर्खस्त्वं कथमीदृशः॥ ११७
इत्युक्तः स तया राज्ञा शब्दशास्त्रविदा नृपः। परिवारे हसत्यन्तर्लज्जाक्रान्तो झगित्यभूत्॥ ११८
परित्यक्तजलक्रीडो वीतदर्पश्च तत्क्षणम्। जातावमानो निर्लक्षः प्राविशन्निजमन्दिरम्॥ ११९
ततश्चिन्तापरो मुह्यन्नाहारादिपराङ्मुखः। चित्रस्थ इव पृष्टोऽपि नैव किंचिदभाषत॥ १२०
पाण्डित्यं शरणं वा मे मृत्युर्वेति विचिन्तयन्। शयनीयपरित्यक्तगात्रः संतापवानभूत्॥ १२१
अकस्मादथ राज्ञस्तां दृष्ट्वावस्थां तथाविधाम्। किमेतदिति संभ्रान्तः सर्वः परिजनोऽभवत्॥ १२२
ततोऽहं शर्ववर्मा च ज्ञातवन्तौ क्रमेण ताम्। अत्रान्तरे स च प्रायः पर्यहीयत वासरः॥ १२३
अस्मिन्काले न च स्वस्थो राजेत्यालोच्य तत्क्षणम्। आवाभ्यां राजहंसाख्य आहूतो राजचेटकः॥ १२४
शरीरवार्तां भूपस्य स च पृष्टोऽब्रवीदिदम्। नेदृशो दुर्मनाः पूर्वं दृष्टो देवः कदाचन॥ १२५
विष्णुशक्तिदुहित्रा च मिथ्यापण्डितया तया। विलक्षीकृत इत्याहुर्देव्योऽन्याः कोपनिर्भरम्॥ १२६
एतत्तस्य मुखाच्छ्रुत्वा राजचेटस्य दुर्मनाः। शर्ववर्मद्वितीयोऽहं संशयादित्यचिन्तयम्॥ १२७
व्याधिर्यदि भवेद्राज्ञः प्रविशेयुश्चिकित्सकाः। आधिर्वा यदि तत्रास्य कारणं नोपलभ्यते॥ १२८
नास्त्येव हि विपक्षोऽस्य राज्ये निहतकण्टके। अनुरक्ताः प्रजाश्चैता न हानिः परिदृश्यते॥ १२९
तत्कस्मादेष खेदः स्यादीदृशः सहसा प्रभोः। एवं विचिन्तिते धीमाञ्शर्ववर्मेदमब्रवीत्॥ १३०
अहं जानामि राज्ञोऽस्य मन्युर्मौर्ख्यानुतापतः। मूर्खोऽहमिति पाण्डित्यं सदैवायं हि वाञ्छति॥ १३१
उपलब्धो मया चैष पूर्वमेव तदाशयः। राज्ञ्यावमानितश्चाद्य तन्निमित्तमिति श्रुतम्॥ १३२
एवमन्योन्यमालोच्य तां रात्रिमतिवाह्य च। प्रातरावामगच्छाव वासवेश्म महीपतेः॥ १३३
तत्र सर्वस्य रुद्धेऽपि प्रवेशे कथमप्यहम्। प्राविशं मम पश्चाच्च शर्ववर्मा लघुक्रमम्॥ १३४
उपविश्याथ निकटे विज्ञप्तः स मया नृपः। अकारणं कथं देव वर्तसे विमना इति॥ १३५
तच्छ्रुत्वापि तथैवासीत्स तूष्णीं सातवाहनः। शर्ववर्मा ततश्चेदमद्भुतं वाक्यमब्रवीत्॥ १३६
श्रुतं मम स्यात्कापीति प्रागुक्तं देव मे त्वया। तेनाहं कृतवानद्य स्वप्नमाणवकं निशि॥ १३७
स्वप्ने ततो मया दृष्टं नभसश्च्युतमम्बुजम्। तच्च दिव्येन केनापि कुमारेण विकासितम्॥ १३८
ततश्च निर्गता तस्माद्दिव्या स्त्री धवलाम्बरा। तव देव मुखं सा च प्रविष्टा समनन्तरम्॥ १३९
इयद्दृष्ट्वा प्रबुद्धोऽस्मि मन्ये सा च सरस्वती। देवस्य वदने साक्षात्संप्रविष्टा न संशयः॥ १४०
एवं निवेदितस्वप्ने शर्ववर्मणि तत्क्षणम्। मामस्तमौनः साकूतमवदत्सातवाहनः॥ १४१
शिक्षमाणः प्रयत्नेन कालेन कियता पुमान्। अधिगच्छति पाण्डित्यमेतन्मे कथ्यतां त्वया॥ १४२
मम तेन विना ह्येषा लक्ष्मीर्न प्रतिभासते। विभवैः किं नु मूर्खस्य काष्ठस्याभरणैरिव॥ १४३
ततोऽहमवदं राजन्वर्षैर्द्वादशभिः सदा। ज्ञायते सर्वविद्यानां मुखं व्याकरणं नरैः॥ १४४
अहं तु शिक्षयामि त्वां वर्षषट्केन तद्विभो। श्रुत्वेतत्सहसा सेर्ष्यं शर्ववर्मा किलावदत्॥ १४५
सुखोचितो जनः क्लेशं कथं कुर्यादियच्चिरम्। तदहं मासषट्केन देव त्वां शिक्षयामि तत्॥ १४६

त्वैवैतदसंभाव्यं तमवोचमहं रुषा । षड्भिर्मासैस्त्वया देवः शिक्षितश्चेत्ततो मया ॥ १४७
स्कृतं प्राकृतं तद्वद्देशभाषा च सर्वदा । भाषात्रयमिदं त्यक्तं यन्मनुष्येषु संभवेत् ॥ १४८
र्ववर्मा ततोऽवादीन्न चेदेवं करोम्यहम् । द्वादशाब्दान्वहाम्येष शिरसा तव पादुके ॥ १४९
युक्त्वा निर्गते तस्मिन्नहमप्यगमं गृहम् । राजाप्युभयतः सिद्धिं मत्वाश्वस्तो बभूव सः ॥ १५०
हस्तः शर्ववर्मा च प्रतिज्ञां तां सुदुस्तराम् । पश्यन्सानुशयः सर्वं स्वभार्यायै शशंस तत् ॥ १५१
ापि तं दुःखितावोचत्संकटेऽस्मिंस्तव प्रभो । विना स्वामिकुमारेण गतिरन्या न दृश्यते ॥ १५२
थेति निश्चयं कृत्वा पश्चिमे प्रहरे निशि । शर्ववर्मा निराहारस्तत्रैव प्रस्थितोऽभवत् ॥ १५३
च चारमुखाद्बुद्ध्वा मया प्रातर्निवेदितम् । राज्ञे सोऽपि तदाकर्ण्य किं भवेदित्यचिन्तयत् ॥ १५४
तस्तं सिंहगुप्ताख्यो राजपुत्रो हितोऽब्रवीत् । त्वयि खिन्ने तदा देव निर्वेदो मे महानभूत् ॥ १५५
ः श्रेयोनिमित्तं ते चण्डिकाग्रे निजं शिरः । छेत्तुं प्रारब्धवानस्मि गत्वास्मान्नगराद्बहिः ॥ १५६
ं कथा नृपस्येच्छा सेत्स्यत्येवेत्यवारयत् । वागन्तरिक्षादथ मां तन्मन्ये सिद्धिरस्ति ते ॥ १५७
युक्त्वा नृपमामन्त्र्य सत्वरं शर्ववर्मणः । पश्चाच्चारद्वयं सोऽथ सिंहगुप्तो व्यसर्जयत् ॥ १५८
ऽपि वातैकभक्षः सन्कृतमौनः सुनिश्चयः । प्राप स्वामिकुमारस्य शर्ववर्मान्तिकं क्रमात् ॥ १५९
ीरनिरपेक्षेण तपसा तत्र तोषितः । प्रसादमकरोत्तस्य कार्तिकेयो यथेप्सितम् ॥ १६०
ागत्याग्रे ततो राज्ञे चाराभ्यां स निवेदितः । सिंहगुप्तविसृष्टाभ्यामुदयः शर्ववर्मणः ॥ १६१
त्वा मम राज्ञश्च विषादप्रमदौ द्वयोः । अभूतां मेघमालोक्य हंसचातकयोरिव ॥ १६२
ागत्य शर्ववर्माथ कुमारवरसिद्धिमान् । चिन्तितोपस्थिता राज्ञे सर्वा विद्याः प्रदत्तवान् ॥ १६३
दुरासंश्च तास्तस्य सातवाहनभूपतेः । तत्क्षणं किं न कुर्याद्धि प्रसादः पारमेश्वरः ॥ १६४

अथ तमखिलविद्यालाभमाकर्ण्य राज्ञः प्रमुदितवति राष्ट्रे तत्र कोऽप्युत्सवोऽभूत् ।
अपि पवनविधूतास्तत्क्षणोल्लास्यमानाः प्रतिवसति पताका बद्धनृत्ता इवासन् ॥ १६५
राजार्हरत्ननिचयैरथ शर्ववर्मा तेनार्चितो गुरुरिति प्रणतेन राज्ञा ।
स्वामीकृतश्च विषये भरुकच्छनाम्नि कूलोपकण्ठविनिवेशिनि नर्मदायाः ॥ १६६
योऽग्रे चारमुखेन षण्मुखवरप्राप्तिं समाकर्णय-
त्संतुष्यात्मसमं श्रिया नरपतिस्तं सिंहगुप्तं व्यधात् ।
राज्ञीं तामपि विष्णुशक्तितनयां विद्यागमे कारणं
देवीनामुपरि प्रसह्य कृतवान्प्रीत्याभिषिच्य स्वयम् ॥ १६७

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथापीठलम्बके षष्ठस्तरङ्गः ।

---

सप्तमस्तरङ्गः ।

ो गृहीतमौनोऽहं राजान्तिकमुपागमम् । तत्र च श्लोकमपठद्द्विजः कश्चित्स्वयं कृतम् ॥ १
चाचष्ट स्वयं राजा सम्यक्संस्कृतया गिरा । तत्रालोक्य च तत्रस्थो जनः प्रमुदितोऽभवत् ॥ २
ः स शर्ववर्माणं राजा सविनयोऽब्रवीत् । स्वयं कथय देवेन कथं तेऽनुग्रहः कृतः ॥ ३
त्वानुग्रहं राज्ञः शर्ववर्माभ्यभाषत । इतो राजन्निराहारो मौनस्थोऽहं तदा गतः ॥ ४
ोऽध्वनि मनाक्छेषे जाते तीव्रतपः कृशः । क्लान्तः पतितवानस्मि निःसंज्ञो धरणीतले ॥ ५
त्तिष्ठ पुत्र सर्वं ते संपत्स्यत इति स्फुटम् । शक्तिहस्तः पुमानेत्य जाने मामब्रवीत्तदा ॥ ६
ाहममृतासारसंसिक्त इव तत्क्षणम् । प्रबुद्धः क्षुत्पिपासादिहीनः स्वस्थ इवाभवम् ॥ ७
थ देवस्य निकटं प्राप्य भक्तिभराकुलः । स्नात्वा गर्भगृहं तस्य प्रविष्टोऽभूवमुन्मानाः ॥ ८
ोऽन्तः प्रभुणा तेन स्कन्देन मम दर्शनम् । दत्तं ततः प्रविष्टा मे मुखे मूर्ता सरस्वती ॥ ९
थासौ भगवान्साक्षात्षड्भिराननपङ्कजैः । सिद्धो वर्णसमाम्नाय इति सूत्रमुदैरयत् ॥ १०

तच्छ्रुत्वैव मनुष्यत्वसुलभाचापलाद्धृत। उत्तरं सूत्रमभ्यूह्य स्वयमेव मयोदितम्॥ ९
अथाब्रवीत्स देवो मां नावदिष्यः स्वयं यदि। अभविष्यदिदं शास्त्रं पाणिनीयोपमर्दकम्॥ १०
अधुना स्वल्पतन्त्रत्वात्कातन्त्राख्यं भविष्यति। मद्वाहनकलापस्य नाम्ना कालापकं तथा॥ ११
इत्युक्त्वा शब्दशास्त्रं तत्प्रकाश्याभिनवं लघु। साक्षादेव स मां देवः पुनरेवमभाषत॥ १२
युष्मदीयः स राजापि पूर्वजन्मन्यभूदृषिः। भरद्वाजमुनेः शिष्यः कृष्णसंज्ञो महातपाः॥ १३
तुल्याभिलाषामालोक्य स चैकां मुनिकन्यकाम्। ययावकस्मात्पुष्पेषुशरघातरसज्ञताम्॥ १४
अतः स शप्तो मुनिभिरवतीर्ण इहाधुना। सा चावतीर्णा देवीत्वे तस्यैव मुनिकन्यका॥ १५
इत्थमृष्यवतारोऽयं नृपतिः सातवाहनः। दृष्टे त्वय्यखिला विद्या प्राप्स्यत्येव त्वदिच्छया॥ १६
अक्लेशलभ्या हि भवन्त्युत्तमार्था महात्मनाम्। जन्मान्तरार्जिताः स्फारसंस्काराक्षिप्तसिद्धयः॥ १७
इत्युक्त्वान्तर्हिते देवे निरगच्छमहं बहिः। तण्डुला मे प्रदत्ताश्च तत्र देवोपजीविभिः॥ १८
ततोऽहमागतो राजंस्तण्डुलास्ते च मे पथि। चित्रं तावन्त एवासन्भुज्यमाना दिने दिने॥ १९
एवमुक्त्वा स्ववृत्तान्तं विरते शर्ववर्मणि। उदतिष्ठन्नृपः स्नातुं प्रहृष्टः सातवाहनः॥ २०
ततोऽहं कृतमौनत्वाद्व्यवहारबहिष्कृतः। अनिच्छन्तं तमामन्त्र्य प्रणामेनैव भूपतिम्॥ २१
निर्गत्य नगरात्तस्माच्छिष्यद्वयसमन्वितः। तपसे निश्चितो द्रष्टुमागतो विन्ध्यवासिनीम्॥ २२
स्वप्नादेशेन देव्या च तयैव प्रेषितस्ततः। विन्ध्याटवीं प्रविष्टोऽहं त्वां द्रष्टुं भीषणामिमाम्॥ २३
पुलिन्दवाक्यादासाद्य सार्थं दैवात्कथंचन। इह प्राप्तोऽहमद्राक्षं पिशाचान्सुबहूनमून्॥ २४
अन्योन्यालापमेतेषां दूरादाकर्ण्य शिक्षिता। मया पिशाचभाषेयं मौनमोक्षस्य कारणम्॥ २५
उपगम्य ततश्चैतां त्वां श्रुत्वोज्जयिनीगतम्। प्रतिपालितवानस्मि यावदभ्यागतो भवान्॥ २६
दृष्ट्वा त्वां स्वागतं कृत्वा चतुर्थ्या भूतभाषया। मया जातिः स्मृतेत्येष वृत्तान्तो मेऽत्र जन्मनि॥ २७
एवमुक्ते गुणाढ्येन काणभूतिरुवाच तम्। त्वदागमो मया ज्ञातो यथाद्य निशि तच्छृणु॥ २८
राक्षसो भूतिवर्माख्यो दिव्यदृष्टिः सखास्ति मे। गतवानस्मि चोद्यानमुज्जयिन्यां तदास्पदम्॥ २९
तत्रासौ निजशापान्तं प्रति पृष्टो मयाब्रवीत्। दिवा नास्ति प्रभावो नस्तिष्ठ रात्रौ वदाम्यतः॥ ३०
तथेति चाहं तत्रस्थः प्राप्तायां निशि वल्गताम्। तमपृच्छं प्रसङ्गेन भूतानां हर्षकारणम्॥ ३१
पुरा विरिञ्चिसंवादे यदुक्तं शंकरेण तत्। शृणु वच्मीति मामुक्त्वा भूतिवर्माथ सोऽब्रवीत्॥ ३२
दिवा नैषां प्रभावोऽस्ति ध्वस्तानामर्कतेजसा। यक्षरक्षःपिशाचानां तेन हृष्यन्त्यमी निशि॥ ३३
न पूज्यन्ते सुरा यत्र न च विप्रा यथोचितम्। भुज्यतेऽविधिना वापि तत्रैते प्रभवन्ति च॥ ३४
अमांसभक्षः साध्वी वा यत्र तत्र न यान्त्यमी। शुचीञ्शूरान्प्रबुद्धांश्च नाक्रामन्ति कदाचन॥ ३५
इत्युक्त्वा मे स तत्कालं भूतिवर्माब्रवीत्पुनः। गच्छागतो गुणाढ्यस्ते शापमोक्षस्य कारणम्॥ ३६
श्रुत्वैतदागतश्चास्मि त्वं च दृष्टो मया प्रभो। कथयाम्यधुना तां ते पुष्पदन्तोदितां कथाम्॥ ३७
किं त्वेकं कौतुकं मेऽस्ति कथ्यतां केन हेतुना। स पुष्पदन्तस्त्वं चापि माल्यवानिति विश्रुतः॥ ३८
काणभूतेरिति श्रुत्वा गुणाढ्यस्तमभाषत। गङ्गातीरेऽग्रहारोऽस्ति नाम्ना बहुसुवर्णकः॥ ३९
तत्र गोविन्ददत्ताख्यो ब्राह्मणोऽभूद्बहुश्रुतः। तस्य भार्याग्निदत्ता च बभूव पतिदेवता॥ ४०
स कालेन द्विजस्तस्यां पञ्च पुत्रानजीजनत्। ते च मूर्खाः सुरूपाश्च बभूवुरभिमानिनः॥ ४१
अथ गोविन्ददत्तस्य गृहानतिथिराययौ। विप्रो वैश्वानरो नाम वैश्वानर इवापरः॥ ४२
गोविन्ददत्ते तत्कालं गृहादपि बहिः स्थिते। तत्पुत्राणामुपागत्य कृतं तेनाभिवादनम्॥ ४३
हासमात्रं च तैस्तस्य कृतं प्रत्यभिवादनम्। ततः स कोपान्निर्गन्तुं प्रारेभे तद्गृहाद्द्विजः॥ ४४
आगतेनाथ गोविन्ददत्तेन स तथाविधः। क्रुद्धः पृष्टोऽनुनीतोऽपि जगादैवं द्विजोत्तमः॥ ४५
पुत्रास्ते पतिता मूर्खास्तत्संपर्काद्भवानपि। तस्मान्न भोक्ष्ये त्वद्गेहे प्रायश्चित्तं नु मे भवेत्॥ ४६
अथ गोविन्ददत्तस्तमुवाच शपथोत्तरम्। न स्पृशाम्यपि जातेतानहं कुतनयानिति॥ ४७

ार्योपि तथैवैत्य तमुवाचातिथिप्रिया । ततः कथंचिदातिथ्यं तत्र वैश्वानरोऽग्रहीत् ॥ ५०
ष्ट्वा देवदत्ताख्यस्तस्यैकस्तनयस्तदा । अभूद्गोविन्ददत्तस्य नैर्घृण्येनानुतापवान् ॥ ५१
र्थं जीवितमालोक्य पितृभ्यामथ दूषितम् । सनिर्वेदः स तपसे ययौ बदरिकाश्रमम् ॥ ५२
: पर्णाशनः पूर्वं धूमपश्चाप्यनन्तरम् । तस्थौ चिराय तपसे तोषयिष्यन्नुमापतिम् ॥ ५३
। च दर्शनं तस्य शंभुस्तीव्रतपोर्जितः । तस्यैवानुचरत्वं च स वव्रे वरमीश्वरात् ॥ ५४
ाः प्राप्नुहि भोगांश्च भुवि भुङ्क्ष्व ततस्तव । भविताभिमतं सर्वमिति शंभुस्तमादिशत् ॥ ५५
: स गत्वा विद्यार्थी पुरं पाटलिपुत्रकम् । सिषेवे वेदकुम्भाख्यमुपाध्यायं यथाविधि ॥ ५६
स्थं तमुपाध्यायपत्नी जातु स्मरातुरा । हठाद्वव्रे बत स्त्रीणां चञ्चलाश्चित्तवृत्तयः ॥ ५७
संत्यज्य तं देशमनङ्गकृतविप्लवः । स देवदत्तः प्रययौ प्रतिष्ठानमतन्द्रितः ॥ ५८
वृद्धमुपाध्यायं वृद्धया भार्ययान्वितम् । मन्त्रस्वाम्याख्यमभ्यर्थ्य विद्याः सम्यगधीतवान् ॥ ५९
विद्यं च तं तत्र ददर्श नृपतेः सुता । सुशर्माख्यस्य सुभगं श्रीर्नाम श्रीरिवाच्युतम् ॥ ६०
ापि तां दृष्टवान्कन्यां स्थितां वातायनोपरि । विहरन्तीं विमानेन चन्द्रस्येवाधिदेवताम् ॥ ६१
ाविव तयान्योन्यं मारशृङ्खलया दृशा । नापसर्तुं समर्थौ तौ बभूवतुरुभावपि ॥ ६२
। तस्यैकयाङ्गुल्या मूर्तयेव स्मराज्ञया । इतो निकटमेहीति संज्ञां चक्रे नृपात्मजा ॥ ६३
समीपं तस्याश्च ययावन्तःपुराच्च सः । सा च चिक्षेप दन्तेन पुष्पमादाय तं प्रति ॥ ६४
ामितामजानानो गूढां राजसुताकृताम् । स कर्तव्यविमूढः सन्नुपाध्यायगृहं ययौ ॥ ६५
ाठ तत्र धरणौ न किंचिद्वक्तुमीश्वरः । तापेन दह्यमानोऽन्तर्मूकः प्रमुषितो यथा ॥ ६६
क्यं कामजैश्चिह्नैरुपाध्यायेन धीमता । युक्त्या पृष्टः कथंचिच्च यथावृत्तं शशंस सः ॥ ६७
ध्वा तमुपाध्यायो विदग्धो वाक्यमब्रवीत् । दन्तेन पुष्पं मुञ्चन्त्या तया संज्ञा कृता तव ॥ ६८
ात्पुष्पदन्ताख्यं पुष्पाढ्यं सुरमन्दिरम् । तत्रागत्य प्रतीक्षेथाः सांप्रतं गम्यतामिति ॥ ६९
ति ज्ञातसंज्ञार्थः स तत्याज शुचं युवा । ततो देवगृहस्यान्तस्तस्य गत्वा स्थितोऽभवत् ॥ ७०
ष्टमीं समुद्दिश्य तत्र राजसुता ययौ । एकैव देवं द्रष्टुं च गर्भागारमथाविशत् ॥ ७१
ऽत्र द्वारपट्टस्य पश्चात्सोऽथ प्रियस्तया । गृहीतानेन चोत्थाय सा कण्ठे सहसा ततः ॥ ७२
त्वया कथं ज्ञाता सा संज्ञेत्युदिते तया । उपाध्यायेन सा ज्ञाता न मयेति जगाद सः ॥ ७३
मामविदग्धस्त्वमित्युक्त्वा तत्क्षणात्क्रुधा । मन्त्रभेदभयात्साथ राजकन्या ततो ययौ ॥ ७४
पि गत्वा विविक्ते तां दृष्टनष्टां स्मरन्प्रियाम् । देवदत्तो वियोगाग्निविगलज्जीवितोऽभवत् ॥ ७५
तं तादृशं शंभुः प्राक्प्रसन्नः किलादिशत् । गणं पञ्चशिखं नाम तस्याभीप्सितसिद्धये ॥ ७६
ागत्य समाश्वास्य स्त्रीवेषं तं गणोत्तमः । अकारयत्स्वयं चाभूद्वृद्धब्राह्मणरूपधृत् ॥ ७७
तेन समं गत्वा तं सुशर्ममहीपतिम् । जनकं सुदृशस्तस्याः स जगाद गणाग्रणीः ॥ ७८
मे प्रोषितः क्वापि तमन्वेष्टुं व्रजाम्यहम् । तन्मे स्नुषेयं निःक्षेपो राजन्संप्रति रक्ष्यताम् ॥ ७९
त्वा शापभीतेन तेनादाय सुशर्मणा । स्वकन्यान्तःपुरे गुप्ते स्त्रीति संस्थापितो युवा ॥ ८०
पञ्चशिखे याते स्वप्रियान्तःपुरे वसन् । स्त्रीवेषः स द्विजस्तस्या विस्रम्भास्पदतां ययौ ॥ ८१
ा चोत्सुका रात्रौ तेनात्मानं प्रकाश्य सा । गुप्तं गान्धर्वविधिना परिणीता नृपात्मजा ॥ ८२
च धृतगर्भायां तं द्विजं स गणोत्तमः । स्मृतमात्रागतो रात्रौ ततोऽनैषीदलक्षितम् ॥ ८३
तस्य समुत्सार्य यूनः स्त्रीवेषमाशु तम् । प्रातः पञ्चशिखः सोऽभूत्पूर्ववद्ब्राह्मणाकृतिः ॥ ८४
सह गत्वा च सुशर्मनृपमभ्यधात् । अद्य प्राप्तो मया राजन्पुत्रस्तद्देहि मे स्नुषाम् ॥ ८५
स राजा तां बुद्ध्वा रात्रौ क्वापि पलायिताम् । तच्छापभयसंभ्रान्तो मन्त्रिभ्य इदमब्रवीत् ॥ ८६
ाप्रोऽयमयं कोऽपि देवो मद्वञ्चनागतः । एवंप्राया भवन्तीह वृत्तान्ताः सततं यतः ॥ ८७
च पूर्वं राजाभूत्तपस्वी करुणापरः । दाता धीरः शिबिर्नाम सर्वसत्त्वाभयप्रदः ॥ ८८

तं वञ्चयितुमिन्द्रोऽथ कृत्वा श्येनवपुः स्वयम्। मायाकपोतवपुषं धर्ममन्वपतद्द्रुतम्॥
कपोतश्च भयाद्गत्वा शिबेरङ्कमशिश्रियत्। मनुष्यवाचा श्येनोऽथ स तं राजानमब्रवीत्॥
राजन्भक्ष्यमिदं मुञ्च कपोतं क्षुधितस्य मे। अन्यथा मां मृतं विद्धि कस्ते धर्मस्ततो भवेत्॥
ततः शिबिरुवाचैनमेष मे शरणागतः। अत्याज्यस्तद्ददाम्यन्यन्मांसमेतत्समं तव॥
श्येनो जगाद यद्येवमात्ममांसं प्रयच्छ मे। तथेति तत्प्रहृष्टः सन्स राजा प्रत्यपद्यत॥
यथा यथा च मांसं स्वमुत्कृत्यारोपयन्नृपः। तथा तथा तुलायां स कपोतोऽभ्यधिकोऽभवत्॥
ततः शरीरं सकलं तुलां राजाध्यरोपयत्। साधु साधु समं त्वेतद्दिव्या वागुदभूत्ततः॥
इन्द्रधर्मौ ततस्त्यक्त्वा रूपं श्येनकपोतयोः। तुष्टावक्षतदेहं तं राजानं चक्रतुः शिबिम्॥
दत्त्वा चास्मै वरानन्यांस्तावन्तर्धानमीयतुः। एवं मामपि कोऽप्येष देवो जिज्ञासुरागतः॥
इत्युक्त्वा सचिवान्स्वैरं स सुशर्मा महीपतिः। तमुवाच भयप्रह्वो विप्ररूपं गणोत्तमम्॥
अभयं देहि साद्यैव स्नुषा ते हारिता निशि। माययैव गता क्वापि रक्ष्यमाणाप्यहर्निशम्॥
कृच्छ्रात्स दययेवाथ विप्ररूपो गणोऽब्रवीत्। तर्हि पुत्राय राजन्मे देहि स्वां तनयामिति॥ १
तच्छ्रुत्वा शापभीतेन राज्ञा तस्मै निजा सुता। सा दत्ता देवदत्ताय ततः पञ्चशिखो ययौ॥ १
देवदत्तोऽपि तां भूयः प्रकाशं प्राप्य वल्लभाम्। जजृम्भेऽनन्यपुत्रस्य श्वशुरस्य विभूतिषु॥ १
कालेन तस्य पुत्रं च दौहित्रमभिषिच्य सः। राज्ये महीधरं नाम सुशर्मा शिश्रिये वनम्॥ १
ततो दृष्ट्वा सुतैश्वर्यं कृतार्थः स तपोवनम्। राजपुत्र्या तया साकं देवदत्तोऽप्यशिश्रियत्॥ १
तत्राराध्य पुनः शंभुं त्यक्त्वा मर्त्यकलेवरम्। तत्प्रसादेन तस्यैव गणभावमुपागतः॥ १
प्रियादन्तोज्झितात्पुष्पात्संज्ञां न ज्ञातवान्यतः। अतः स पुष्पदन्ताख्यः संपन्नो गणसंसदि॥ १
तद्भार्या च प्रतीहारी देव्या जाता जयाभिधा। इत्थं स पुष्पदन्ताख्यो मदाख्यामधुना शृणु॥ १
यः स गोविन्ददत्ताख्यो देवदत्तपिता द्विजः। तस्यैव सोमदत्ताख्यः पुत्रोऽहमभवं पुरा॥ १
तेनैव मन्युना गत्वा तपश्चाहं हिमाचले। अकार्षं बहुभिर्माल्यैः शंकरं नन्दयन्सदा॥ १
तथैव प्रकटीभूतात्प्रसन्नादिन्दुशेखरात्। त्यक्तान्यभोगलिप्सेन तद्गणत्वं मया वृतम्॥ १

यः पूजितोऽस्मि भवता स्वयमाहृतेन माल्येन दुर्गवनभूमिसमुद्भवेन।
तन्माल्यवानिति भविष्यसि मे गणस्त्वमित्यादिशच्च स विभुर्गिरिजापतिर्माम्॥ १

अथ मर्त्यवपुर्विमुच्य पुण्यां सहसा तद्गणतामहं प्रपन्नः।
इति धूर्जटिना कृतं प्रसादादभिधानं मम माल्यवानितीदम्॥ १

सोऽहं गतः पुनरिहाद्य मनुष्यभावं शापेन शैलदुहितुर्बत काणभूते।
तन्मे कथां हरकृतां कथयाधुना त्वं येनावयोर्भवति शापदशोपशान्तिः॥ १

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथापीठलम्बके सप्तमस्तरङ्गः।

---

अष्टमस्तरङ्गः।

एवं गुणाढ्यवचसा साथ सप्तकथामयी। स्वभाषया कथा दिव्या कथिता काणभूतिना॥
तथैव च गुणाढ्येन पैशाच्या भाषया तया। निबद्धा सप्तभिर्वर्षैर्ग्रन्थलक्षाणि सप्त सा॥
मैतां विद्याधरा हार्षुरिति तामात्मशोणितैः। अटव्यां मष्यभावाच्च लिलेख स महाकविः॥
तथा च श्रोतुमायातैः सिद्धविद्याधरादिभिः। निरन्तरमभूत्तत्र सवितानमिवाम्बरम्॥
गुणाढ्येन निबद्धां च तां दृष्ट्वैव महाकथाम्। जगाम मुक्तशापः सन्काणभूतिर्निजां गतिम्॥
पिशाचा येऽपि तत्रासन्नन्ये तत्सहचारिणः। तेऽपि प्रापुर्दिवं सर्वे दिव्यामाकर्ण्य तां कथाम्॥
प्रतिष्ठां प्रापणीयैषा पृथिव्यां मे बृहत्कथा। अयमर्थोऽपि मे देव्या शापान्तोक्तावुदीरितः॥
तत्कथं प्रापयाम्येनां कस्मै तावत्समर्पये। इति चाचिन्तयत्तत्र स गुणाढ्यो महाकविः॥

यो नन्दिदेवाभिधः परः । तमूचतुरुपाध्यायं शिष्यावनुगतावुभौ ॥ ९
ानमेकः श्रीसातवाहनः । रसिको हि वहेत्काव्यं पुष्पामोदमिवानिलः ॥ १०
िष्यावन्तिकं तस्य भूपतेः । प्राहिणोत्पुस्तकं दत्त्वा गुणाढ्यो गुणशालिनौ ॥ ११
ाव प्रतिष्ठानपुराद्बहिः । कृतसंकेत उद्याने तस्थौ देवीविनिर्मिते ॥ १२
गत्वा तत्सातवाहनभूपतेः । गुणाढ्यकृतिरेषेति दर्शितं काव्यपुस्तकम् ॥ १३
श्रुत्वा तौ च दृष्ट्वा तदाकृती । विद्यामदेन सासूयं स राजैवमभाषत ॥ १४
ो पैशाचं नीरसं वचः । शोणितेनाक्षरन्यासो धिक्पिशाचकथामिमाम् ॥ १५
ा गत्वा ताभ्यां यथागतम् । शिष्याभ्यां तद्गुणाढ्याय यथावृत्तमकथ्यत ॥ १६
कर्ण्य सद्यः खेदवशोऽभवत् । तत्त्वज्ञेन कृतावज्ञः को नामान्तर्न तप्यते ॥ १७
त्वा नातिदूरं शिलोच्चयम् । विविक्तरम्यभूभागमग्निकुण्डं व्यधात्पुरः ॥ १८
शिष्याभ्यां साश्रु वीक्षितः । वाचयित्वा स चिक्षेप श्रावयन्मृगपक्षिणः ॥ १९
रितं शिष्ययोः कृते । ग्रन्थलक्षं कथामेकां वर्जयित्वा तदीप्सिताम् ॥ २०
देव्यां पठत्यपि दहत्यपि । परित्यक्ततृणाहाराः शृण्वन्तः साश्रुलोचनाः ॥ २१
ा निश्चला बद्धमण्डलाः । निखिलाः खलु सारङ्गवराहमहिषादयः ॥ २२
भूदस्वस्थः सातवाहनः । दोषं चास्यावदन्वैद्याः शुष्कमांसोपभोगजम् ॥ २३
च सूपकारा बभाषिरे । अस्माकमीदृशं मांसं ददते लुब्धका इति ॥ २४
चुर्नातिदूरे गिरावितः । पठित्वा पत्रमेकैकं कोऽप्यग्नौ क्षिपति द्विजः ॥ २५
ाः शृण्वन्ति प्राणिनोऽखिलाः । नान्यतो यान्ति तेनैषां शुष्कं मांसमिदं क्षुधा ॥ २६
त्वा कृत्वा तानेव चाग्रतः । स्वयं स कौतुकाद्राजा गुणाढ्यस्यान्तिकं ययौ ॥ २७
जटाभिर्वनवासतः । प्रशान्तशेषशापाग्निधूमिकाभिरिवाभितः ॥ २८
सबाष्पमृगमध्यगम् । नमस्कृत्य च पप्रच्छ तं वृत्तान्तं महीपतिः ॥ २९
तस्य राज्ञे शापादिचेष्टितम् । ज्ञानी कथावतारं तमाचख्यौ भूतभाषया ॥ ३०
मत्वा पादानतो नृपः । ययाचे तां कथां तस्माद्दिव्यां हरमुखोद्गताम् ॥ ३१
पं गुणाढ्यः सातवाहनम् । राजन्षड्ग्रन्थलक्षाणि मया दग्धानि षट् कथाः ॥ ३२
कथैका सैव गृह्यताम् । मच्छिष्यौ तव चात्रैतौ व्याख्यातारौ भविष्यतः ॥ ३३
न्त्र्य त्यक्त्वा योगेन तां तनुम् । गुणाढ्यः शापनिर्मुक्तः प्राप दिव्यं निजं पदम् ॥ ३४

अथ तां गुणाढ्यदत्तामादाय कथां बृहत्कथां नाम्ना ।
नृपतिरगान्निजनगरं नरवाहनदत्तचरितमयीम् ॥ ३५
गुणदेवनन्दिदेवौ तत्र च तौ तत्कथाकवेः शिष्यौ ।
क्षितिकनकवस्त्रवाहनभवनधनैः संविभेजे सः ॥ ३६
ताभ्यां सह च कथां तामाश्वास्य स सातवाहनस्तस्याः ।
तद्भाषयावतारं वक्तुं चक्रे कथापीठम् ॥ ३७
सा च चित्ररसनिर्भरा कथा विस्मृतामरकथा कुतूहलात् ।
तद्विधाय नगरे निरन्तरां ख्यातिमत्र भुवनत्रये गता ॥ ३८

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथापीठलम्बकेऽष्टमस्तरङ्गः ।

**समाप्तश्चायं कथापीठलम्बकः प्रथमः ।**

॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## कथामुखं नाम द्वितीयो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

प्रथमस्तरङ्गः ।

गौरीनवपरिष्वङ्गे विभोः स्वेदाम्बु पातु वः । नेत्राग्निभीत्या कामेन वारुणास्त्रमिवाहितम् ॥
कैलासे धूर्जटेर्वक्त्रात्पुष्पदन्तं गणोत्तमम् । तस्माद्वररुचीभूतात्काणभूतिं च भूतले ॥
काणभूतेर्गुणाढ्यं च गुणाढ्यात्सातवाहनम् । यत्प्राप्तं शृणुतेदं तद्विद्याधरकथाद्भुतम् ॥
अस्ति वत्स इति ख्यातो देशो दर्पोपशान्तये । स्वर्गस्य निर्मितो धात्रा प्रतिमल्ल इव क्षितौ ॥
कौशाम्बी नाम तत्रास्ति मध्यभागे महापुरी । लक्ष्मीविलासवसतिर्भूतलस्येव कर्णिका ॥
तस्यां राजा शतानीकः पाण्डवान्वयसंभवः । जनमेजयपुत्रोऽभूत्पौत्रो राज्ञः परीक्षितः ॥
अभिमन्युप्रपौत्रश्च यस्यादिपुरुषोऽर्जुनः । त्रिपुरारिभुजस्तम्भहृष्टदोर्दण्डविक्रमः ॥
कलत्रं भूरभूत्तस्य राज्ञी विष्णुमती तथा । एका रत्नानि सुषुवे न तावदपरा सुतम् ॥
एकदा मृगयासङ्गाद्भ्राम्यतश्चास्य भूपतेः । अभूच्छाण्डिल्यमुनिना समं परिचयो वने ॥
सोऽस्य पुत्रार्थिनो राज्ञः कौशाम्बीमेत्य साधितम् । मन्त्रपूतं चरुं राज्ञीं प्राशयन्मुनिसत्तमः ॥
ततस्तस्य सुतो जज्ञे सहस्रानीकसंज्ञकः । शुशुभे स पिता तेन विनयेन गुणो यथा ॥
युवराजं क्रमात्कृत्वा शतानीकोऽथ तं सुतम् । संभोगैरेव राजाभून्न तु भूभारचिन्तनैः ॥
अथासुरैः समं युद्धे प्राप्ते साहायकेच्छया । दूतस्तस्मै विसृष्टोऽभूद्राज्ञे शक्रेण मातलिः ॥
ततो युगंधराख्यस्य हस्ते धूर्यस्य मन्त्रिणः । सुप्रतीकाभिधानस्य मुख्यसेनापतेश्च सः ॥
समर्प्य पुत्रं राज्यं च निहन्तुमसुरान्रणे । शक्रान्तिकं शतानीकः सह मातलिना ययौ ॥
असुरान्यमदंष्ट्रादीन्बहून्पश्यति वासवे । हत्वा तत्रैव सङ्ग्रामे प्राप मृत्युं स भूपतिः ॥
मातल्यानीतदेहं च देवी तं नृपमन्वगात् । राजलक्ष्मीश्च तत्पुत्रं सहस्रानीकमाश्रयत् ॥
चित्रं तस्मिन्समारूढे पित्र्यं सिंहासनं नृपे । भरेण सर्वतो राज्ञां शिरांसि नतिमाययुः ॥
ततः शक्रः सुहृत्पुत्रं विपक्षविजयोत्सवे । स्वर्गं सहस्रानीकं तं निनाय प्रेष्य मातलिम् ॥
स तत्र नन्दने देवान्क्रीडतः कामिनीसखान् । दृष्ट्वा स्वोचितभार्यार्थी राजा शोकमिवाविशत् ॥
विज्ञायैतमभिप्रायं तमुवाचाथ वासवः । राजन्नलं विषादेन वाञ्छेयं तव सेत्स्यति ॥
उत्पन्ना हि क्षितौ भार्या तुल्या ते पूर्वनिर्मिता । इमं च शृणु वृत्तान्तमत्र ते वर्णयाम्यहम् ॥
पुरा पितामहं द्रष्टुमगच्छं तत्सभामहम् । विधूमो नाम पश्चाच्च ममैको वसुरागमत् ॥
स्थितेष्वस्मासु तत्रैव विरिञ्चिं द्रष्टुमप्सराः । आगादलम्बुषा नाम वातविस्रंसितांशुका ॥
तां दृष्ट्वैव स कामस्य वशं वसुरुपागमत् । साप्यप्सरा इङ्गितज्ञासीत्तद्रूपाकृष्टलोचना ॥

ालोक्य ममापश्यन्मुखं कमलसंभवः । अभिप्रायं विदित्वास्य तावहं शप्तवान्क्रुधा ॥ २६
ालोकेऽवतारोऽस्तु युवयोरविनीतयोः । भविष्यथश्च तत्रैव युवां भार्यापती इति ॥ २७
वसुस्त्वं समुत्पन्नः सहस्रानीकभूपते । शतानीकस्य तनयो भूषणं शशिनः कुले ॥ २८
यप्सरा अयोध्यायां कृतवर्मनृपात्मजा । जाता मृगावती नाम सा ते भार्या भविष्यति ॥ २९
न्द्रवाक्यपवनैरुद्धूतो हृदि भूपतेः । सस्नेहे तस्य झगिति प्राज्वलन्मदनानलः ॥ ३०
: संमान्य शक्रेण प्रेषितस्तद्रथेन सः । सह मातलिना राजा प्रतस्थे स्वां पुरीं प्रति ॥ ३१
छन्तं चाप्सराः प्रीत्या तमुवाच तिलोत्तमा । राजन्वक्ष्यामि ते किंचित्प्रतीक्षस्व मनागिति ॥ ३२
श्रुत्वैव हि ययौ स तां ध्यायन्मृगावतीम् । ततः सा लज्जिता कोपात्तं शशाप तिलोत्तमा ॥ ३३
। हृतमना राजन्न शृणोषि वचो मम । तस्याश्चतुर्दशसमा वियोगस्ते भविष्यति ॥ ३४
ालिस्तच्च शुश्राव स च राजा प्रियोत्सुकः । ययौ रथेन कौशाम्बीमयोध्यां मनसा पुनः ॥ ३५
' युगंधरादिभ्यो मन्त्रिभ्यो वासवाच्छ्रुतम् । मृगावतीगतं सर्वं शशंसोत्सुकया धिया ॥ ३६
वेतुं तां स कन्यां च तत्पितुः कृतवर्मणः । अयोध्यां प्राहिणोद्दूतं कालक्षेपासहो नृपः ॥ ३७
वर्मा च तद्दूताच्छ्रुत्वा संदेशमभ्यधात् । हर्षाद्देव्यै कलावत्यै ततः साप्येनमब्रवीत् ॥ ३८
न्सहस्रानीकाय देयावश्यं मृगावती । इममर्थं च मे स्वप्ने जाने कोऽप्यत्रवद्द्विजः ॥ ३९
हृष्टो मृगावत्या नृत्तगीतादिकौशलम् । रूपं चाप्रतिमं तस्मै दूतायादर्शयन्नृपः ॥ ४०
' तां च स कान्तानां कलानामेकमास्पदम् । कृतवर्मा सुतां तस्मै राज्ञे मूर्तिमिवैन्दवीम् ॥ ४१
परगुणावास्त्यै स श्रुतप्रज्ञयोरिव । अभूत्सहस्रानीकस्य मृगावत्याश्च संगमः ॥ ४२
तस्याचिराद्राज्ञो मन्त्रिणां जज्ञिरे सुताः । जज्ञे युगंधरस्यापि पुत्रो यौगन्धरायणः ॥ ४३
ीकस्य पुत्रश्च रुमण्वानित्यजायत । योऽस्य नर्मसुहृत्तस्य पुत्रोऽजनि वसन्तकः ॥ ४४
तस्यापि दिवसैः सहस्रानीकभूपतेः । बभार गर्भमापाण्डुमुखी राज्ञी मृगावती ॥ ४५
ाचे साथ भर्तारं दर्शनातृप्तलोचनम् । दोहदं रुधिरापूर्णलीलावापीनिमज्जनम् ॥ ४६
वेच्छां पूरयन्राज्ञ्या लाक्षादिरसनिर्भराम् । चकार धार्मिको राजा वापीं रक्तावृतामिव ॥ ४७
ां स्नान्तीमकस्माच्च लाक्षालिप्तां निपत्य ताम् । गरुडान्वयजः पक्षी जहारामिषशङ्कया ॥ ४८
ाणा कापि नीतां तामन्वेष्टुमिव तत्क्षणम् । ययौ सहस्रानीकस्य धैर्यं विह्वलचेतसः ॥ ४९
ानुरक्तं चेतोऽपि नूनं तस्य पतत्रिणा । जह्रे येन स निःसंज्ञः पपात भुवि भूपतिः ॥ ५०
ाच्च लब्धसंज्ञेऽस्मिन्राज्ञि बुद्ध्वा प्रभावतः । अवतीर्य द्युमार्गेण तत्र मातलिराययौ ॥ ५१
ाजानं समाश्वास्य सावधि प्राग्यथा श्रुतम् । तस्मै तिलोत्तमाशापं कथयित्वा ततोऽगमत् ॥ ५२
प्रिये पूर्णकामा सा जाता पापा तिलोत्तमा । इत्यादि च स शोकार्तो विललाप महीपतिः ॥ ५३
ातशापवृत्तान्तो बोधितश्च स मन्त्रिभिः । कथंचिज्जीवितं दध्रे पुनः संगमवाञ्छया ॥ ५४
च राज्ञीं स पक्षीन्द्रः क्षणान्नीत्वा मृगावतीम् । जीवन्तीं वीक्ष्य तत्याज दैवादुदयपर्वते ॥ ५५
त्वा तस्मिन्गते चाथ राज्ञी शोकभयाकुला । ददर्शानाथमात्मानं दुर्गमाद्रितटस्थितम् ॥ ५६
ाकिनीमेकवस्त्रां क्रन्दन्तीमथ तां वने । ग्रासीकर्तुं प्रवृत्तोऽभूदुत्थायाजगरो महान् ॥ ५७
त्याजगरं तं च शुभोदर्का तथैव सा । दिव्येन मोचिता पुंसा दृष्टनष्टेन केनचित् ॥ ५८
' वनगजस्याग्रे सा स्वयं मरणार्थिनी । आत्मानमक्षिपत्सोऽपि ररक्ष दययेव ताम् ॥ ५९
ं यच्छ्वापदोऽप्येनां पतितामपि गोचरे । नावधीदथवा किं हि न भवेदीश्वरेच्छया ॥ ६०
' प्रपाताभिमुखी बाला गर्भभरालसा । स्मरन्ती तं च भर्तारं मुक्तकण्ठं रुरोद सा ॥ ६१
त्वा मुनिपुत्रोऽथ तत्रैकस्तां समाययौ । आगतः फलमूलार्थं शुचं मूर्तिमतीमिव ॥ ६२
व पृष्ट्वा यथावृत्तमाश्वास्य च कथंचन । जमदग्न्याश्रमं राज्ञीं निनायैनां दयार्द्रधीः ॥ ६३
मूर्तमिवाश्वासं जमदग्निं ददर्श सा । तेजसा स्थिरबालार्कं कुर्वाणमुदयाचलम् ॥ ६४

सोऽपि तां पादपतितां मुनिराश्रितवत्सलः । राज्ञीं वियोगदुःखार्तां दिव्यदृष्टिरभाषत ॥
इह ते जनिता पुत्रि पुत्रो वंशधरः पितुः । भविष्यति च भर्त्रा ते संगमो मा शुचं कृथाः ॥
इत्युक्ता मुनिना साध्वी सा जग्राह मृगावती । आश्रमेऽवस्थितिं तस्मिन्नाशां च प्रियसंगमे ॥
ततश्च दिवसैस्तत्र श्लाघनीयमनिन्दिता । सत्संगतिरिवाचारं पुत्ररत्नमसूत सा ॥
श्रीमानुदयनो नाम्ना राजा जातो महायशाः । भविष्यति च पुत्रोऽस्य सर्वविद्याधराधिपः ॥
इत्यन्तरिक्षादुदभूत्तस्मिन्काले सरस्वती । आदधाना मृगावत्याश्चित्तविस्मृतमुत्सवम् ॥
क्रमादुदयनः सोऽथ बालस्तस्मिंस्तपोवने । अवर्धत निजैः सार्धं वयस्यैरिव सद्गुणैः ॥
कृत्वा क्षत्रोचितान्सर्वान्संस्काराञ्जमदग्निना । व्यनीयत स विद्यासु धनुर्वेदे च वीर्यमान् ॥
कृष्ट्वा च स्वकरान्माता तस्य स्नेहान्मृगावती । सहस्रानीकनामाङ्कं चकार कटकं करे ॥
हरिणाखेटके जातु भ्राम्यन्नुदयनोऽथ सः । शबरेण हठाक्रान्तमटव्यां सर्पमैक्षत ॥
सदयः सुन्दरे तस्मिन्सर्पे तं शबरं च सः । उवाच मुच्यतामेष सर्पो मद्वचनादिति ॥
ततः स शबरोऽवादीज्जीविकेयं मम प्रभो । कृपणोऽहं हि जीवामि भुजगं खेलयन्सदा ॥
विपन्ने पन्नगे पूर्वं मन्त्रौषधिबलादयम् । वष्टब्धश्च मया लब्धश्चिन्वतैतां महाटवीम् ॥
श्रुत्वेत्युदयनस्त्यागी दत्त्वास्मै शबराय तम् । कटकं जननीदत्तं स तं सर्पममोचयत् ॥
गृहीतकटके याते शबरे पुरतो नतिम् । कृत्वा स भुजगः प्रीतो जगादोदयनं तदा ॥
वसुनेमिरिति ख्यातो ज्येष्ठो भ्रातास्मि वासुकेः । इमां वीणां गृहाण त्वं मत्तः संरक्षितात्त्वया ॥
तन्त्रीनिर्घोषरम्यां च श्रुतिभागविभाजिताम् । ताम्बूलीश्च सहाम्लानमालातिलकयुक्तिभिः ॥
तद्युक्तो जमदग्नेस्तं नागोत्क्षिप्तः स चाश्रमम् । आगादुदयनो मातुर्दृशि वर्षन्निवामृतम् ॥
अत्रान्तरे स शबरोऽप्यटवीं प्राप्य पर्यटन् । आदायोदयनात्प्राप्तं कटकं तद्विधेर्वशात् ॥
विक्रीणानश्च तत्तत्र राजनामाङ्कमापणे । वष्टभ्य राजपुरुषैर्निन्ये राजकुलं च सः ॥
कुतस्त्वयेदं कटकं संप्राप्तमिति तत्र सः । राज्ञा सहस्रानीकेन स्वयं शोकादपृच्छयत ॥
अथोदयाद्रौ सर्पस्य ग्रहणात्प्रभृति स्वकम् । कटकप्राप्तिवृत्तान्तं शबरः स जगाद तम् ॥
तद्बुद्ध्वा शबराद्दृष्ट्वा दयितावलयं च तम् । विचारदोलामारोहत्सहस्रानीकभूपतिः ॥
क्षीणः शापः स ते राजन्नुदयाद्रौ च सा स्थिता । जमदग्न्याश्रमे जाया सपुत्रा ते मृगावती ॥
इति दिव्या तदा वाणी नन्दयामास तं नृपम् । विप्रयोगनिदाघार्तं वारिधारेव बर्हिणम् ॥

अथोत्कण्ठादीर्घे कथमपि दिनेऽस्मिन्नवसिते तमेवाग्रे कृत्वा शबरमपरेद्युः स नृपतिः ।
सहस्रानीकस्तां सरभसमवाप्तुं प्रियतमां प्रतस्थे तत्सैन्यैः सममुदयशैलाश्रमपदम् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथामुखलम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

गत्वाथ दूरमध्वानं राजा वसतिमग्रहीत् । दिने तस्मिन्स कस्मिंश्चिदरण्यसरसस्तटे ॥
शयनीयगतः श्रान्तस्तत्र सेवारसागतम् । सायं संगतकं नाम जगाद कथकं नृपः ॥
कथामाख्याहि मे कांचिद्धृदयस्य विनोदिनीम् । मृगावतीमुखाम्भोजदर्शनोत्सवकाङ्क्षिणः ॥
अथ संगतकोऽवादीद्देव किं तप्यसे वृथा । आसन्न एव देव्यास्ते क्षीणशापः समागमः ॥
संयोगा विप्रयोगाश्च भवन्ति बहवो नृणाम् । तथा चात्र कथामेकां कथयामि शृणु प्रभो ॥
मालवे यज्ञसोमाख्यो द्विजः कश्चिदभूत्पुरा । तस्य च द्वौ सुतौ साधोर्जायेते स्म जनप्रियौ ॥
एकस्तयोरभून्नाम्ना कालनेमिरिति श्रुतः । द्वितीयश्चापि विगतभय इत्याख्ययाभवत् ॥
पितरि स्वर्गते तौ च भ्रातरौ तीर्णशैशवौ । विद्याप्राप्त्यै प्रययतुः पुरं पाटलिपुत्रकम् ॥

वोपात्तविद्याभ्यामुपाध्यायो निजे सुते । देवशर्मा ददौ ताभ्यां मूर्ते विद्ये इवापरे ॥ ९
ान्यान्वीक्ष्य तानाढ्यान्गृहस्थानीर्ष्यया श्रियम् । होमैः स साधयामास कालनेमिः कृतव्रतः ॥ १०
च तुष्टा सती साक्षाद्देवं श्रीस्तमभाषत । भूरि प्राप्स्यसि वित्तं च पुत्रं च पृथिवीपतिम् ॥ ११
त्वन्ते चौरसदृशो वधस्तव भविष्यति । हुतमग्नौ त्वया यस्मादमर्षकलुषात्मना ॥ १२
क्त्वान्तर्दधे लक्ष्मीः कालनेमिरपि क्रमात् । महाधनोऽभूत्किं चास्य दिनैः पुत्रोऽप्यजायत ॥ १३
ारादेष संप्राप्त इति नाम्ना तमात्मजम् । श्रीदत्तमकरोत्सोऽपि पिता पूर्णमनोरथः ॥ १४
ात्स वृद्धिं संप्राप्तः श्रीदत्तो ब्राह्मणोऽपि सन् । अस्त्रेषु बाहुयुद्धेषु बभूवाप्रतिमो भुवि ॥ १५
ऽनेमेरथ भ्राता तीर्थार्थी सर्पभक्षिताम् । भार्यामुद्दिश्य विगतभयो देशान्तरं ययौ ॥ १६
त्तोऽपि गुणज्ञेन राज्ञा वल्लभशक्तिना । तत्र विक्रमशक्तेः स स्वपुत्रस्य कृतः सखा ॥ १७
पुत्रेण तेनास्य सहवासोऽभिमानिना । बाल्ये दुर्योधनेनेव भीमस्यासीत्तरस्विना ॥ १८
तस्याथ मित्रत्वं विप्रस्यावन्तिदेशजौ । क्षत्रियौ बाहुशाली च वज्रमुष्टिश्च जग्मतुः ॥ १९
युद्धजिताश्चान्ये दाक्षिणात्या गुणप्रियाः । स्वयंवरसुहृत्त्वेन मन्त्रिपुत्रास्तमाश्रयन् ॥ २०
बलव्याघ्रभटावुपेन्द्रबल इत्यपि । तथा निष्ठुरको नाम सौहार्दं तस्य चक्रिरे ॥ २१
चिदथ वर्षासु विहर्तुं जाह्नवीतटे । श्रीदत्तः सह तैर्मित्रै राजपुत्रसखो ययौ ॥ २२
त्यास्तत्र तं चक्रुर्निजं राजसुतं नृपम् । श्रीदत्तोऽपि स तत्कालं राजा मित्रैरकल्प्यत ॥ २३
ता जातरोषेण राजपुत्रेण तेन सः । विप्रवीरो रणायाशु समाहूतो मदस्पृशा ॥ २४
ान बाहुयुद्धेन श्रीदत्तेनाथ निर्जितः । चकार हृदि वध्यं तु वर्धमानं कलङ्कितः ॥ २५
ा च तमभिप्रायं राजपुत्रस्य शङ्कितः । श्रीदत्तः सह तैर्मित्रैस्तत्समीपादपासरत् ॥ २६
र्पन्स चापश्यद्गङ्गामध्यगतां स्त्रियम् । ह्रियमाणां जलौघेन सागरस्थामिव श्रियम् ॥ २७
ावततारैतामुद्धर्तुं जलमध्यतः । षड्बाहुशालिप्रमुखान्स्थापयित्वा तटे सखीन् ॥ २८
व केशेष्वपि प्राप्तां निमग्नां दूरमम्भसि । अनुसर्तुं स्त्रियं सोऽपि वीरस्तत्रैव मग्नवान् ॥ २९
ज्य च ददर्शात्र स श्रीदत्तः क्षणादिति । शैवं देवकुलं दिव्यं न पुनर्वारि न स्त्रियम् ॥ ३०
ा महदाश्चर्यं श्रान्तो नत्वा वृषध्वजम् । उद्याने सुन्दरे तत्र तां निनाय विभावरीम् ॥ ३१
श्च देवमीशानं सा पूजयितुमागता । ददृशे तेन मूर्तेव रूपश्रीः स्त्रीगुणान्विता ॥ ३२
ं पूजयित्वा च सा ततो निजमन्दिरम् । ययाविन्दुमुखी सोऽपि श्रीदत्तोऽनुजगाम ताम् ॥ ३३
ो मन्दिरं तच्च तस्याः सुरपुरोपमम् । प्रविवेश च संभ्रान्ता सावमानेव मानिनी ॥ ३४
यसंभाषमाणैव तमन्तर्वासवेश्मनि । तन्वी न्यषीदत्पर्यङ्के स्त्रीसहस्रोपसेविता ॥ ३५
त्तोऽपि स तत्रैव निषसाद तदन्तिके । अथाकस्मात्प्रववृते तया साध्व्या प्ररोदितुम् ॥ ३६
तुः स्तनयोस्तस्याः संतप्ता बाष्पबिन्दवः । श्रीदत्तस्य च तत्कालं कारुण्यं हृदये गतम् ॥ ३७
स चैनां पप्रच्छ का त्वं दुःखं च किं तव । वद सुन्दरि शक्तोऽहं तन्निवारयितुं यतः ॥ ३८
कथंचित्सावादीद्वयं दैत्यपतेर्बलेः । पौत्र्यो दशशतं तासां ज्येष्ठा विद्युत्प्रभेत्यहम् ॥ ३९
ः पितामहो नीतो विष्णुना दीर्घबन्धनम् । पिता च बाहुयुद्धेन हतस्तेनैव शौरिणा ॥ ४०
त्वा तेन च निजात्पुरान्निर्वासिता वयम् । प्रवेशरोधकृत्तत्र सिंहश्च स्थापितोऽन्तरे ॥ ४१
तं तत्पदं तेन दुःखेन हृदयं च नः । स च यक्षः कुबेरस्य शापात्सिंहत्वमागतः ॥ ४२
श्चाभिभवस्तस्य शापान्तः कथितः पुरा । पुरप्रवेशोपायार्थं विज्ञप्तो विष्णुरादिशत् ॥ ४३
स शत्रुरस्माकं केसरी जीयतां त्वया । तदर्थमेव चानीतो मया वीर भवानिह ॥ ४४
ङ्काख्यं खड्गं च जितात्तस्मादवाप्स्यसि । पृथिवीं यत्प्रभावेण जित्वा राजा भविष्यसि ॥ ४५
त्वा स तथेत्यत्र श्रीदत्तोऽतीततद्दिनः । अन्येद्युर्दैत्यकन्यास्ताः कृत्वाग्रे तत्पुरं ययौ ॥ ४६
ाय बाहुयुद्धेन तत्र तं सिंहमुद्धतम् । सोऽपि शापविमुक्तः सन्बभूव पुरुषाकृतिः ॥ ४७

दत्त्वा चास्मै स खड्गं स्वं तुष्टः शापान्तकारिणे । सहासुराङ्गनादुःखभारेणादर्शनं ययौ ॥ ४८
सोऽथ सानुजया साकं श्रीदत्तो दैत्यकन्यया । बहिर्गतमिवानन्तं तद्विवेश पुरोत्तमम् ॥ ४९
अङ्गुलीयं विषघ्नं च तस्मै दैत्यसुता ददौ । ततः सोऽत्र स्थितस्तस्यां साभिलाषोऽभवद्युवा ॥ ५०
साथ युक्त्या जगादैनं वाप्यां स्नानमितः कुरु । आदायैनं च मज्जेस्त्वं खड्गं ग्राहभयापहम् ॥ ५१
तथेति वाप्यां मग्नः सन्श्रीदत्तो जाह्नवीतटात् । तस्मादेव समुत्तस्थौ यस्मात्पूर्वमवातरत् ॥ ५२
खड्गाङ्गुलीयके पश्यन्पातालादुत्थितोऽथ सः । विषण्णो विस्मितश्चासीद्वञ्चितोऽसुरकन्यया ॥ ५३
ततस्तान्सुहृदोऽन्वेष्टुं स्वगृहाभिमुखं ययौ । गच्छन्निष्टुरकाख्यं च मित्रं मार्गे ददर्श सः ॥ ५४
स चोपेत्य प्रणम्याथ नीत्वैकान्ते च सत्वरम् । तं पृष्टस्वजनोदन्तमेवं निष्टुरकोऽब्रवीत् ॥ ५५
गङ्गान्तस्त्वां तदा मग्नमन्विष्य दिवसान्बहून् । स्वशिरांसि शुचा छेत्तुमभूम वयमुद्यताः ॥ ५६
न पुत्राः साहसं कार्यं जीवन्नेष्यति वः सखा । इत्यन्तरिक्षाद्वाणी नस्तमुद्योगं न्यवारयत् ॥ ५७
ततश्च त्वत्पितुः पार्श्वमस्माकं प्रतिगच्छताम् । मार्गे सत्वरमभ्येत्य पुमानेकोऽब्रवीदिदम् ॥ ५८
नगरं न प्रवेष्टव्यं युष्माभिरिह सांप्रतम् । यतो वल्लभशक्तिः स विपन्नोऽत्र महीपतिः ॥ ५९
दत्तो विक्रमशक्तिश्च राज्ये संभूय मन्त्रिभिः । प्राप्तराज्यः स चान्येद्युः कालनेमेरगाद्गृहम् ॥ ६०
श्रीदत्तः क स ते पुत्र इति चामर्षनिर्भरः । तमपृच्छत्स चाप्येनं नाहं वेद्मीत्यभाषत ॥ ६१
प्रच्छादितोऽमुना पुत्र इति तेन निषूदितः । कालनेमिः स शूलायां राज्ञा चौर इति क्रुधा ॥ ६२
तद्दृष्ट्वा तस्य भार्यायाः स्वयं हृदयमस्फुटत् । पापं पापान्तराक्षेपक्रूरं हि क्रूरकर्मणाम् ॥ ६३
तेन चान्विष्यते हन्तुं सोऽपि विक्रमशक्तिना । श्रीदत्तस्तद्वयस्याश्च यूयं तद्गम्यतामितः ॥ ६४
इति तेनोदिताः पुंसा शोकार्तास्ते निजां भुवम् । बाहुशाल्यादयः पञ्च संमन्त्र्योज्जयिनीं गताः ॥ ६५
प्रच्छन्नः स्थापितश्चाहं त्वदर्थमिह तैः सखे । तदेहि तावद्गच्छावस्तत्रैव सुहृदन्तिकम् ॥ ६६
एवं निष्टुरकाच्छ्रुत्वा पितरावनुशोच्य सः । निदधे प्रतिकाराशामिव खड्गे दृशं मुहुः ॥ ६७
कालं प्रतीक्षमाणोऽथ वीरो निष्टुरकान्वितः । प्रतस्थे तान्सखीन्प्राप्तुं स तामुज्जयिनीं पुरीम् ॥ ६८
आमज्जनान्तं वृत्तान्तं सख्युस्तस्य च वर्णयन् । श्रीदत्तः स ददर्शैकां क्रोशन्तीमबलां पथि ॥ ६९
अबला भ्रष्टमार्गाहं मालवं प्रस्थितेति ताम् । ब्रुवन्तीं दयया सोऽथ सहप्रस्थायिनीं व्यधात् ॥ ७०
तया दयानुरोधाच्च स्त्रिया निष्टुरकान्वितः । कस्मिंश्चिच्छून्यनगरे दिने तस्मिन्नुवास सः ॥ ७१
तत्र रात्रावकस्माच्च मुक्तनिद्रो ददर्श ताम् । स्त्रियं निष्टुरकं हत्वा हर्षात्तन्मांसमश्नतीम् ॥ ७२
उदतिष्ठत्समाकृष्य सोऽथ खड्गं मृगाङ्ककम् । सापि स्त्री राक्षसीरूपं घोरं स्वं प्रत्यपद्यत ॥ ७३
स च केशेषु जग्राह निहन्तुं तां निशाचरीम् । तत्क्षणं दिव्यरूपत्वं संप्राप्ता तमुवाच सा ॥ ७४
मा मां वधीर्महाभाग मुञ्च नैवास्मि राक्षसी । अयमेवंविधः शापो ममाभूत्कौशिकान्मुनेः ॥ ७५
तपस्यतो हि तस्याहं धनाधिपतिनामुना । विघ्नाय प्रेषिता पूर्वं तत्पदप्राप्तिकाङ्क्षिणः ॥ ७६
ततः कान्तेन रूपेण तं क्षोभयितुमक्षमा । लज्जिता त्रासयन्त्येनमकार्षं भैरवं वपुः ॥ ७७
तद्दृष्ट्वा स मुनिः शापं सदृशं मय्यथो दधे । राक्षसी भव पापे त्वं निघ्नन्ती मानुषानिति ॥ ७८
त्वत्तः केशग्रहे प्राप्ते शापान्तं मे स चाकरोत् । इत्यहं राक्षसीभावमिमं कष्टमुपागमम् ॥ ७९
मयैव नगरं चैतद्ग्रस्तमद्य च मे चिरात् । त्वया कृतः स शापान्तस्तद्गृहाणाधुना वरम् ॥ ८०
इति तस्या वचः श्रुत्वा श्रीदत्तः सादरोऽभ्यधात् । किमन्येन वरेणाद्य जीवत्वेष सखा मम ॥ ८१
एवमस्त्विति सा चास्मै वरं दत्त्वा तिरोदधे । अक्षताङ्गः स चोत्तस्थौ जीवन्निष्टुरकः पुनः ॥ ८२
तेनैव सह च प्रातः प्रहृष्टो विस्मितश्च सः । ततः प्रतस्थे श्रीदत्तः प्राप चोज्जयिनीं क्रमात् ॥ ८३
तत्र संभावयामास सखीन्मार्गोन्मुखान्स तान् । दर्शनेन यथायातो नीलकण्ठानिवाम्बुदः ॥ ८४
कृतातिथ्यविधिश्चासौ स्वगृहं बाहुशालिना । नीतोऽभूत्कथिताशेषनिजवृत्तान्तकौतुकः ॥ ८५
तत्रोपचर्यमाणः सन्पितृभ्यां बाहुशालिनः । स उवास समं मित्रैः श्रीदत्तः स्वगृहे यथा ॥ ८६

चैत्सोऽथ संप्राप्ते मधुमासमहोत्सवे । यात्रामुपवने द्रष्टुं जगाम सखिभिः सह ॥ ८७
कन्यां ददर्शैकां राज्ञः श्रीबिम्बकेः सुताम् । आगतामाकृतिमतीं साक्षादिव मधुश्रियम् ॥ ८८
ृगाङ्कवती नाम हृदयं तस्य तत्क्षणम् । विवेश दत्तमार्गेव दृष्ट्यास्य सविकासया ॥ ८९
अपि मुहुः स्निग्धा प्रथमप्रेमशंसिनी । न्यस्ता तं प्रति दूतीव दृष्टिश्चक्रे गतागतम् ॥ ९०
ां वृक्षगहनं तामपश्यन्नथ क्षणात् । श्रीदत्तः शून्यहृदयो दिशोऽपि न ददर्श सः ॥ ९१
मया ते हृदयं सखे मापह्नवं कृथाः । तदेहि तत्र गच्छावो यत्र राजसुता गता ॥ ९२
ऋश्चेङ्गितज्ञेन सुहृदा बाहुशालिना । तथेति स ययौ तस्याः संनिकर्षं सुहृत्सखः ॥ ९३
ष्टमहिना दष्टा राजपुत्रीति तत्क्षणम् । आक्रन्द उदभूत्तत्र श्रीदत्तहृदयज्वरः ॥ ९४
ामङ्गुलीयं च विद्या च सुहृदोऽस्य मे । अस्तीति गत्वा जगदे कञ्चुकी बाहुशालिना ॥ ९५
तत्क्षणमभ्येत्य कञ्चुकी चरणानतः । निकटं राजदुहितुः श्रीदत्तमनयद्द्रुतम् ॥ ९६
पे तस्यास्तदङ्गुल्यां निचिक्षेपाङ्गुलीयकम् । ततो जजाप विद्यां च तेन प्रत्युज्जिजीव सा ॥ ९७
सर्वजने हृष्टे श्रीदत्तस्तुतितत्परे । तत्रैव ज्ञातवृत्तान्तो राजा बिम्बकिराययौ ॥ ९८
ौ सखिभिः सार्धमगृहीताङ्गुलीयकः । प्रत्याजगाम श्रीदत्तो भवनं बाहुशालिनः ॥ ९९
तस्मै सुवर्णादि यत्प्रीतः प्राहिणोन्नृपः । तद्बाहुशालिनः पित्रे समग्रं स समर्पयत् ॥ १००
तां चिन्तयन्कान्तां स तथा पर्यतप्यत । यथा किंकार्यतामूढा वयस्यास्तस्य जज्ञिरे ॥ १०१
भावनिका नाम राजपुत्र्याः प्रिया सखी । अङ्गुलीयार्पणव्याजात्तस्यान्तिकमुपाययौ ॥ १०२
व चैनं मत्सख्यास्तस्याः सुभग सांप्रतम् । त्वं वा प्राणप्रदो भर्ता मृत्युर्वाप्येष निश्चयः ॥ १०३
के भावनिकया श्रीदत्तः स च सापि च । बाहुशाली च तेऽन्ये च मन्त्रं संभूय चक्रिरे ॥ १०४
ो निभृतं युक्त्या राजपुत्रीमिमां वयम् । निवासहेतोर्गुप्तं च गच्छामो मथुरामितः ॥ १०५
संमन्त्रिते सम्यक्कार्यसिद्ध्यै च संविदि । अन्योन्यं स्थापितायां सा ययौ भावनिका ततः ॥ १०६
ाुर्बाहुशाली च वयस्यत्रितयान्वितः । वणिज्याव्यपदेशेन जगाम मथुरां प्रति ॥ १०७
च्छन्स्थापयामास वाहनानि पदे पदे । राजपुत्र्यभिसाराय गूढानि चतुराणि च ॥ १०८
तोऽपि ततः कांचिद्दुहित्रा सहितां स्त्रियम् । सायं राजसुतावासे पाययित्वा मधु न्यधात् ॥ १०९
त्र दीपोद्देशेन दत्त्वाग्निं वासवेश्मनि । प्रच्छन्नं भावनिकया निन्ये राजसुता बहिः ॥ ११०
ं तां च संप्राप्य श्रीदत्तः स बहिः स्थितः । प्राक्प्रस्थितस्य निकटं प्राहिणोद्बाहुशालिनः ॥ १११
मित्रद्वयं चास्याः पश्चाद्भावनिकां तथा । तन्मन्दिरे च दग्धा सा क्षीबा स्त्री सुतया सह ॥ ११२
तु तां सखीयुक्तां मेने दग्धां नृपात्मजाम् । प्रातश्च पूर्ववत्तत्र श्रीदत्तो ददृशे जनैः ॥ ११३
रात्रौ द्वितीयस्यां स गृहीतमृगाङ्ककः । श्रीदत्तः प्रययौ पूर्वप्रस्थितां तां प्रियां प्रति ॥ ११४
च रात्र्यातिक्रम्य दूरमध्वानमुत्सुकः । विन्ध्याटवीमथ प्राप स प्रातः प्रहरे गते ॥ ११५
ावनिमित्तानि पश्चात्पथि ददर्श तान् । सर्वान्प्रहाराभिहतान्सह भावनिकान्सखीन् ॥ ११६
दृष्ट्वा निजगदुस्तं संभ्रान्तमुपागतम् । मुषिताः स्मो निपत्याद्य बह्वश्वारोहसेनया ॥ ११७
चाश्वारोहेण राजपुत्री भयाकुला । अस्मास्वेतदवस्थेषु नीताश्वमधिरोप्य सा ॥ ११८
ा यावन्नीता च तावद्गच्छानया दिशा । अस्माकमन्तिके मा स्थाः सर्वथाभ्यधिका च सा ॥ ११९
तैः प्रेषितो मित्रैर्मुहुः पश्यन्निवृत्य सः । जवेन राजतनयां श्रीदत्तोऽनुससार ताम् ॥ १२०
सुदूरं लेभे च तामश्वारोहवाहिनीम् । युवानमेकं तन्मध्ये क्षत्रियं स ददर्श च ॥ १२१
ारि तुरंगस्य गृहीतां तां नृपात्मजाम् । अपश्यच्च ययौ चास्य क्षत्रयूनोऽन्तिकं क्रमात् ॥ १२२
वेन राजपुत्रीं तामामुञ्चन्तं च पादतः । अश्वादाक्षिप्य दृषदि श्रीदत्तस्तमचूर्णयत् ॥ १२३
ा च तमेवाश्वमारुह्य निजघान तान् । अन्यानपि बहून्क्रुद्धानश्वारोहान्प्रधावितान् ॥ १२४
षास्ततस्ते च तद्दृष्ट्वा तस्य तादृशम् । वीरस्यामानुषं वीर्यं पलाय्य सभयं ययुः ॥ १२५

स चापि तुरगारूढो राजपुत्र्या तया सह । मृगाङ्कवत्या श्रीदत्तः प्रययौ तान्सखीन्प्रति ॥ १२६
स्तोकं गत्वा च तस्याश्वः संग्रामे व्रणितो भृशम् । सभार्यस्यावतीर्णस्य पपात प्राप पञ्चताम् ॥ १२७
तत्कालं चास्य तत्रैव सा मृगाङ्कवती प्रिया । त्रासायासपरिश्रान्ता तृषार्ता समपद्यत ॥ १२८
स्थापयित्वा च तां तत्र गत्वा दूरमितस्ततः । जलमन्विष्यतश्चास्य सवितास्तमुपाययौ ॥ १२९
ततः स लब्धेऽपि जले मार्गनाशवशाद्भ्रमन् । चक्रवाकवदुत्कूजंस्तां निनाय निशां वने ॥ १३०
प्रातः प्राप च तत्स्थानं पतिताश्वोपलक्षितम् । न च तत्र क्वचित्कान्तां राजपुत्रीं ददर्श ताम् ॥ १३१
ततः स मोहाद्विन्यस्य भुवि खड्गं मृगाङ्ककम् । वृक्षाग्रमारुरोहैनामवेक्षितुमितस्ततः ॥ १३२
तत्क्षणं तेन मार्गेण कोऽप्यागाच्छबराधिपः । स चागत्यैव जग्राह वृक्षमूलान्मृगाङ्ककम् ॥ १३३
तं दृष्ट्वापि स वृक्षाग्रादवतीर्यैव पृष्टवान् । प्रियाप्रवृत्तिमत्यार्तः श्रीदत्तः शबराधिपम् ॥ १३४
इतस्त्वं गच्छ मत्पल्लीं जाने सा तत्र ते गता । अहं तत्रैव चेष्यामि दास्याम्यसिमिमं च ते ॥ १३५
इत्युक्त्वा प्रेषितस्तेन शबरेण स चोत्सुकः । श्रीदत्तस्तां ययौ पल्लीं तदीयैः पुरुषैः सह ॥ १३६
श्रमं तावद्विमुञ्चेति तत्रोक्तः पुरुषैश्च तैः । प्राप्य पल्लीपतेर्गेहं श्रान्तो निद्रां क्षणाद्ययौ ॥ १३७
प्रबुद्धश्च ददर्श स्वौ पादौ निगडसंयुतौ । अलब्धतद्गती कान्ताप्राप्त्युपायोद्यमाविव ॥ १३८
अथ क्षणं दत्तसुखां क्षणान्तरविमाथिनीम् । दैवस्येव गतिं तत्र तस्थौ शोचन्स तां प्रियाम् ॥ १३९
एकदा तमुवाचैत्य चेटी मोचनिकाभिधा । आगतोऽसि महाभाग कुत्रेह बत मृत्यवे ॥ १४०
कार्यसिद्ध्यै स हि क्वापि प्रयातः शबराधिपः । आगत्य चण्डिकायास्त्वामुपहारीकरिष्यति ॥ १४१
एतदर्थं हि तेन त्वमितो विन्ध्याटवीतटात् । प्राप्य युक्त्या विसृज्येह नीतः संप्रति बन्धनम् ॥ १४२
भगवत्युपहारत्वे यत एवासि कल्पितः । अत एव सदा वस्त्रैर्भोजनैश्चोपचर्यसे ॥ १४३
एकस्तु मुक्त्युपायस्ते विद्यते यदि मन्यसे । अस्त्यस्य सुन्दरी नाम शबराधिपतेः सुता ॥ १४४
अत्यर्थं सा च दृष्ट्वा त्वां जायते मदनातुरा । तां भजस्व वयस्यां मे ततः क्षेममवाप्स्यसि ॥ १४५
तयेत्युक्तो विमुक्त्यर्थी स श्रीदत्तस्तथेति ताम् । गान्धर्वविधिना गुप्तं भार्यां व्यधित सुन्दरीम् ॥ १४६
रात्रौ रात्रौ च सा तस्य बन्धनानि न्यवारयत् । अचिराच्च सगर्भा सा सुन्दरी समपद्यत ॥ १४७
तत्सर्वमथ तन्माता बुद्ध्वा मोचनिकामुखात् । जामातृस्नेहतो गत्वा स्वैरं श्रीदत्तमब्रवीत् ॥ १४८
पुत्र श्रीचण्डनामासौ कोपनः सुन्दरीपिता । न त्वां क्षमेत तद्गच्छ विस्मर्तव्या न सुन्दरी ॥ १४९
इत्युक्त्वा मोचितः श्वश्र्वा खड्गं श्रीचण्डहस्तगम् । सुन्दर्यै निजमावेद्य श्रीदत्तः प्रययौ ततः ॥ १५०
विवेश चाद्यां तामेव चिन्ताक्रान्तो निजाटवीम् । मृगाङ्कवत्याः पदवीं तस्या जिज्ञासितुं पुनः ॥ १५१
निमित्तं च शुभं दृष्ट्वा तमेवोद्देशमाययौ । यत्रास्याश्वो मृतः सोऽथ यत्र सा हारिता वधूः ॥ १५२
तत्र चैकं ददर्शाराल्लुब्धकं संमुखागतम् । दृष्ट्वा च पृष्टवांस्तस्याः प्रवृत्तिं हरिणीदृशः ॥ १५३
किं श्रीदत्तस्त्वमित्युक्तो लुब्धकेन च तत्र सः । स एव मन्दभाग्योऽहमित्युवाच विनिःश्वसन् ॥ १५४
ततः स लुब्धकोऽवादीत्तर्हि वच्मि सखे शृणु । दृष्टा सा ते मया भार्या क्रन्दन्ती त्वामितस्ततः ॥ १५५
पृष्ट्वा ततश्च वृत्तान्तमाश्वास्य च कृपाकुलः । निजां पल्लीमितोऽरण्याद्दीनां तां नीतवानहम् ॥ १५६
तत्र चालोक्य तरुणान्पुलिन्दान्सभयेन सा । मथुरानिकटं ग्रामं नीता नागस्थलं मया ॥ १५७
तत्र च स्थापिता गेहे स्थविरस्य द्विजन्मनः । विश्वदत्ताभिधानस्य न्यासीकृत्य सगौरवम् ॥ १५८
ततश्चाहमिहायातो बुद्ध्वा त्वन्नाम तन्मुखात् । तामन्वेष्टुं ततो गच्छ शीघ्रं नागस्थलं प्रति ॥ १५९
इत्युक्तो लुब्धकेनाशु स श्रीदत्तस्ततो ययौ । तं च नागस्थलं प्रापदपरेद्युर्दिनात्यये ॥ १६०
भवनं विश्वदत्तस्य प्रविश्याथ विलोक्य तम् । ययाचे देहि मे भार्यां लुब्धकस्थापितामिति ॥ १६१
तच्छ्रुत्वा विश्वदत्तस्तं श्रीदत्तं निजगाद सः । मथुरायां सुहृन्मेऽस्ति ब्राह्मणो गुणिनां प्रियः ॥ १६२
उपाध्यायश्च मन्त्री च शूरसेनस्य भूपतेः । तस्य हस्ते त्वदीया सा गृहिणी स्थापिता मया ॥ १६३
अयं हि विजनो ग्रामो न तद्रक्षाक्षमो भवेत् । तत्प्रातस्तत्र गच्छ त्वमद्य विश्रम्यतामिह ॥ १६४

ो विश्वदत्तेन स नीत्वात्रैव तां निशाम् । प्रातः प्रतस्थे प्राप च मथुरामपरे दिने ॥ १६५
ग्मलिनस्तस्मिन्नगरे बहिरेव सः । स्नानं चक्रे परिश्रान्तो निर्मले दीर्घिकाजले ॥ १६६
वाम्बुमध्याच्च वस्त्रं चौरनिवेशितम् । प्राप्तवानञ्चलग्रन्थिबद्धहारमशङ्कितम् ॥ १६७
द्वस्त्रमादाय स तं हारमलक्षयन् । प्रियां दिदृक्षुः श्रीदत्तो विवेश मथुरां पुरीम् ॥ १६८
त्प्रत्यभिज्ञाय वस्त्रं हारमवाप्य च । स चौर इत्यवष्टभ्य निन्ये नगररक्षिभिः ॥ १६९
श्च तथाभूतो नगराधिपतेश्च तैः । तेनाप्यावेदितो राज्ञे राजाप्यस्यादिशद्वधम् ॥ १७०
ध्यमुर्वं हन्तुं नीयमानं ददर्श तम् । सा मृगाङ्कवती दूरात्पश्चात्प्रहतडिण्डिमम् ॥ १७१
मे नीयते भर्ता वधायेति ससंभ्रमम् । सा गत्वा मन्त्रिमुख्यं तमब्रवीद्यद्गृहे स्थिता ॥ १७२
वधकान्सोऽथ मन्त्री विज्ञप्य भूपतिम् । श्रीदत्तं मोचयित्वा तं वधादानाययद्गृहम् ॥ १७३
ोऽयं पितृव्यो मे गत्वा देशान्तरं पुरा । इहैव दैवाद्विगतभयः प्राप्तोऽद्य मन्त्रिताम् ॥ १७४
मन्त्रिणं सोऽथ श्रीदत्तस्तद्गृहागतः । प्रत्यभिज्ञातवान्पृष्ट्वा पपातास्य च पादयोः ॥ १७५
तं प्रत्यभिज्ञाय भ्रातुः पुत्रं सविस्मयः । कण्ठे जग्राह सर्वं च वृत्तान्तं परिपृष्टवान् ॥ १७६
स्मै स निखिलं श्रीदत्तः स्वपितुर्वधात् । आरभ्य निजवृत्तान्तं पितृव्याय न्यवेदयत् ॥ १७७
मुक्त्वाश्रु विजने भ्रातुः पुत्रं तमभ्यधात् । अधृतिं मा कृथाः पुत्र मम सिद्धा हि यक्षिणी ॥ १७८
ाजिसहस्राणि हेमकोटीश्च सप्त सा । प्रादान्मह्यमपुत्राय तत्तवैवाखिलं धनम् ॥ १७९
वा स पितृव्यस्तां श्रीदत्तायार्पयत्प्रियाम् । श्रीदत्तोऽप्यात्तविभवस्तत्र तां परिणीतवान् ॥ १८०
तस्थौ तत्रैव संगतः कान्तया तया । मृगाङ्कवत्या सानन्दो रात्र्येव कुमुदाकरः ॥ १८१
ल्यादिचिन्ता तु तस्याभूत्पूर्णसंपदः । इन्दोः कलङ्कलेखेव हृदि मालिन्यदायिनी ॥ १८२
स पितृव्यस्तं रहः श्रीदत्तमभ्यधात् । पुत्र राज्ञः सुतास्त्यस्य शूरसेनस्य कन्यका ॥ १८३
ावन्तिदेशे सा नेया दातुं तदाज्ञया । तत्तेनैवापदेशेन हृत्वा तुभ्यं ददामि ताम् ॥ १८४
ानुगे प्राप्ते बले सति च मामके । यद्राज्यं ते श्रियादिष्टं तत्प्राप्स्यस्यचिरादिति ॥ १८५
ेतच्च तां कन्यां गृहीत्वा ययतुस्ततः । श्रीदत्तस्तत्पितृव्यश्च ससैन्यौ सपरिग्रहौ ॥ १८६
ान्ध्याटवीमेतौ प्राप्तमात्रावतर्कितौ । चौरसेनातिमहती रुरोध शरवर्षिणी ॥ १८७
र्छितं बद्ध्वा श्रीदत्तं भग्नसैनिकम् । निन्युश्चौराः स्वपल्लीं ते स्वीकृत्य सकलं धनम् ॥ १८८
ा प्रापयामासुश्चण्डिकासद्म भीषणम् । उपहाराय घण्टानां नादैर्मृत्युरिवाह्वयत् ॥ १८९
ायच्च तं पल्ली सा पल्लीपतिपुत्रिका । सुन्दरी द्रष्टुमायाता देवीं बालसुतान्विता ॥ १९०
वत्या मध्यस्थान्दस्यूनानन्दपूर्णया । स श्रीदत्तस्तया सार्कं तन्मन्दिरमथाविशत् ॥ १९१
ाल्लीराज्यं तत्राप पित्रा यदर्पितम् । प्रागेवानन्यपुत्रेण सुन्दर्यै गच्छता दिवम् ॥ १९२
ौरसमाक्रान्तं सपितृव्यपरिच्छदम् । सकलत्रं च लेभेऽसौ तं खड्गं च मृगाङ्ककम् ॥ १९३
शूरसेनस्य सुतां तां परिणीय च । श्रीदत्तोऽपि महान्राजा नगरे समपद्यत ॥ १९४
य स दूतांश्च ततः श्वशुरयोस्तयोः । बिम्बकेस्तस्य तस्यापि शूरसेनस्य भूपतेः ॥ १९५
ागमतुस्तौ च सेनासमुदयान्वितौ । तं विज्ञायैव संबन्धं मुदा दुहितृवत्सलौ ॥ १९६
रूढव्रणाः स्वस्थास्तद्वियुक्ता वयस्यकाः । बाहुशालिप्रभृतयस्तद्बुद्ध्वा तमुपाययुः ॥ १९७
ाशुरसंयुक्तो गत्वा तं पितृघातिनम् । चक्रे विक्रमशक्तिं स वीरः क्रोधानलाहुतिम् ॥ १९८
साब्धिवलयां श्रीदत्तः प्राप्य मेदिनीम् । ननन्द विरहोत्तीर्णः स मृगाङ्कवतीसखः ॥ १९९
रपते दीर्घवियोगव्यसनार्णवम् । तरन्ति च लभन्ते च कल्याणं धीरचेतसः ॥ २००
गतकाच्छ्रुत्वा कथां स दयितोत्सुकः । तां निनाय निशां मार्गे सहस्रानीकभूपतिः ॥ २०१
ानोरथारूढः पुरःप्रहितमानसः । प्रातः सहस्रानीकोऽसौ प्रतस्थे स्वां प्रियां प्रति ॥ २०२
कतिपयैस्तं च जमदग्नेरवाप सः । मृगैरपि परित्यक्तचापलं शान्तमाश्रमम् ॥ २०३

ददर्श कल्पितातिथ्यं जमदग्निं च तत्र तम्। प्रणतः पावनालोकमाकारं तपसामिव ॥ ८
स च तस्मै मुनी राज्ञे सपुत्रां तां समर्पयत्। चिरान्मृगावतीं राज्ञीं सानन्दामिव निर्वृतिम् ॥ ८
शापान्ते तच्च दंपत्योस्तयोरन्योन्यदर्शनम्। आनन्दबाष्पपूर्णाया ववर्षेवामृतं दृशि ॥ ८
तत्पूर्वदर्शनं पुत्रमालिङ्ग्योदयनं स तम्। मुमोच नृपतिः कृच्छ्राद्रोमाञ्चेनेव कीलितम् ॥ ९
ततः सोदयनां राज्ञीं तामादाय मृगावतीम्। आ तपोवनमुद्बाष्पैरनुयातो मृगैरपि ॥ ९
आमन्त्र्य जमदग्निं च प्रतस्थे स्वां पुरीं प्रति। प्रशान्तादाश्रयात्तस्मात्सहस्रानीकभूपतिः ॥ ९
शृण्वन्विरहवृत्तानि प्रियाया वर्णयंश्च सः। उत्तोरणपताकां तां कौशाम्बीं प्राप्तवान्क्रमात् ॥ ९
समं च पत्नीपुत्राभ्यां प्रविवेश स तां पुरीम्। पीयमान इवोत्पक्ष्मराजिभिः पौरलोचनैः ॥ ९
अभ्यषिञ्चच्च तं तत्र झगित्युदयनं सुतम्। यौवराज्ये महाराजः प्रेर्यमाणः स तद्गुणैः ॥ ९
स्वमन्त्रिपुत्रांस्तस्मै स मन्त्रहेतोः समर्पयत्। वसन्तकरुमण्वन्तौ तथा यौगन्धरायणम् ॥ ९
एभिर्मन्त्रिवरैरेष कृत्स्नां प्राप्स्यति मेदिनीम्। इति वागुदभूद्दिव्या पुष्पवृष्ट्या समं तदा ॥ ९
ततः सुते न्यस्तभरः स राजा चिरकाङ्क्षितम्। जीवलोकसुखं भेजे मृगावत्या तया सह ॥ ९

अथ तस्य जरां प्रशान्तिदूतीमुपयातां क्षितिपस्य कर्णमूलम्।
सहसैव विलोक्य जातकोपा बत दूरे विषयस्पृहा बभूव ॥ ९

ततस्तं कल्याणं तनयमनुरक्तप्रकृतिकं निवेश्य स्वे राज्ये जगदुदयहेतोरुदयनम्।
सहस्रानीकोऽसौ सचिवसहितः सप्रियतमो महाप्रस्थानाय क्षितिपतिरगच्छद्धिमगिरिम् ॥ ९

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथामुखलम्बके द्वितीयस्तरङ्गः।

---

तृतीयस्तरङ्गः।

ततः स वत्सराज्यं च प्राप्य पित्रा समर्पितम्। कौशाम्ब्यवस्थितः सम्यक्छशासोदयनः प्रजाः ॥
यौगन्धरायणाद्येषु भरं विन्यस्य मन्त्रिषु। बभूव स शनै राजा सुखेष्वेकान्ततत्परः ॥
सदा सिषेवे मृगयां वीणां घोषवतीं च ताम्। दत्तां वासुकिना पूर्वं नक्तंदिनमवादयत् ॥
तत्तन्त्रीकलनिर्ह्रादमोहमन्त्रवशीकृतान्। आनिनाय च संयम्य सदा मत्तान्वनद्विपान् ॥
स वारनारीवक्त्रेन्दुप्रतिमालंकृतां सुराम्। मन्त्रिणां च मुखच्छायां वत्सराजः समं पपौ ॥
कुलरूपानुरूपा मे भार्या कापि न विद्यते। एका वासवदत्ताख्या कन्यका श्रूयते परम् ॥
कथं प्राप्येत सा चेति चिन्तामेकामुवाह सः। सोऽपि चण्डमहासेन उज्जयिन्यामचिन्तयत् ॥
तुल्यो मद्दुहितुर्भर्ता जगत्यस्मिन्न विद्यते। अस्ति चोदयनो नाम विपक्षः स च मे सदा ॥
तत्कथं नाम जामाता वश्यश्च स भवेन्मम। उपायस्त्वेक एवास्ति यदटव्यां भ्रमत्यसौ ॥
एकाकी द्विरदान्बध्नन्मृगयाव्यसनी नृपः। तेन च्छिद्रेण तं युक्त्यावष्टभ्यानाययाम्यहम् ॥ १
गान्धर्वज्ञस्य तस्यैतां सुतां शिष्यीकरोमि च। ततश्चास्यां स्वयं तस्य चक्षुः श्लिष्येदसंशयम् ॥ १
एवं स मम जामाता वश्यश्च नियतं भवेत्। नान्योऽस्त्युपायः कोऽप्यत्र येन वश्यो भवेच्च सः ॥ १
इति संचिन्त्य तत्सिद्ध्यै स गत्वा चण्डिकागृहम्। चण्डीमभ्यर्च्य तुष्टाव चक्रेऽस्या उपयाचितम् ॥ १
एतत्संपत्स्यते राजन्न चिराद्वाञ्छितं तव। इति शुश्राव तत्रासावशरीरां सरस्वतीम् ॥ १
ततस्तुष्टः समागत्य बुद्धदत्तेन मन्त्रिणा। सह चण्डमहासेनस्तमेवार्थमचिन्तयत् ॥ १
मानोद्धतो वीतलोभो रक्तभृत्यो महाबलः। असाध्योऽपि स सामादेः साम्ना तावन्निरूप्यताम् ॥ १
इति संमन्त्र्य स नृपो दूतमेकं समादिशत्। गच्छ मद्वचनाद्ब्रूहि वत्सराजमिदं वचः ॥ १
मत्पुत्री तव गान्धर्वे शिष्या भवितुमिच्छति। स्नेहस्तेऽस्मासु चेत्तत्त्वं तामिहैवैत्य शिक्षय ॥ १
इत्युक्त्वा प्रेषितस्तेन दूतो गत्वा न्यवेदयत्। कौशाम्ब्यां वत्सराजाय संदेशं तं तथैव सः ॥ १
वत्सराजोऽपि तच्छ्रुत्वा दूतादनुचितं वचः। यौगन्धरायणस्येदमेकान्ते मन्त्रिणोऽब्रवीत् ॥ २

तत्तेन संदिष्टं सदर्पं मम भूभुजा । एवं संदिशतस्तस्य कोऽभिप्रायो दुरात्मनः ॥ २१
को वत्सराजेन तदा यौगन्धरायणः । उवाचैनं महामन्त्री स स्वामिहितनिष्ठुरः ॥ २२
व्यसनिताख्यातिः प्ररूढा ते लतेव या । इदं तस्या महाराज कषायकटुकं फलम् ॥ २३
ई त्वां रागिणं मत्वा कन्यारत्नेन लोभयन् । नीत्वा चण्डमहासेनो बद्ध्वा स्वीकर्तुमिच्छति ॥ २४
ञ्च व्यसनानि त्वं सुखेन हि परैर्नृपाः । सीदन्तस्तेषु गृह्यन्ते खातेष्विव वनद्विपाः ॥ २५
को मन्त्रिणा धीरः प्रतिदूतं व्यसर्जयत् । स वत्सराजस्तं चण्डमहासेननृपं प्रति ॥ २६
देश च यद्यस्ति वाञ्छा मच्छिष्यतां प्रति । त्वत्पुत्र्यास्तदिहैवैषा भवता प्रेष्यतामिति ॥ २७
कृत्वा च सचिवान्वत्सराजो जगाद सः । यामि चण्डमहासेनमिह बद्ध्वानयामि तम् ॥ २८
त्वा तमुवाचाग्र्यो मन्त्री यौगन्धरायणः । न चैतच्छक्यते राजन्कर्तुं नैव च युज्यते ॥ २९
ई प्रभाववान्राजा स्वीकार्यश्च तव प्रभो । तथा च तद्वृत्तं सर्वं शृण्विदं कथयामि ते ॥ ३०
ोह्योज्जयिनी नाम नगरी भूषणं भुवः । हसन्तीव सुधाधौतैः प्रासादैरमरावतीम् ॥ ३१
ां वसति विश्वेशो महाकालवपुः स्वयम् । शिथिलीकृतकैलासनिवासव्यसनो हरः ॥ ३२
ां महेन्द्रवर्माख्यो राजाभूद्भूभृतां वरः । जयसेनाभिधानोऽस्य बभूव सदृशः सुतः ॥ ३३
तेनस्य तस्याथ पुत्रोऽप्रतिमदोर्बलः । समुत्पन्नो महासेननामा नृपतिकुञ्जरः ॥ ३४
थ राजा स्वराज्यं तत्पालयन्समचिन्तयत् । न मे खड्गोऽनुरूपोऽस्ति न च भार्या कुलोद्गता ॥ ३५
संचिन्त्य स नृपश्चण्डिकागृहमागमत् । तत्रातिष्ठन्निराहारो देवीमाराधयंश्चिरम् ॥ ३६
ञ्याथ स्वमांसानि होमकर्म स चाकरोत् । ततः प्रसन्ना साक्षात्सा देवी चण्डी तमभ्यधात् ॥ ३७
स्मि ते गृहाणेमं पुत्र खड्गोत्तमं मम । एतत्प्रभावाच्छत्रूणामजेयस्त्वं भविष्यसि ॥ ३८
वाङ्गारवतीं नाम कन्यां त्रैलोक्यसुन्दरीम् । अङ्गारकासुरसुतां शीघ्रं भार्यामवाप्स्यसि ॥ ३९
व चण्डं कर्मेह कृतं चैतद्यतस्त्वया । अतश्चण्डमहासेन इत्याख्या ते भविष्यति ॥ ४०
क्त्वा दत्तखड्गा सा देवी तस्य तिरोऽभवत् । राज्ञः संकल्पसंपत्तिहृष्टिराविरभूत्पुनः ॥ ४१
ाज्ञो मत्तहस्तीन्द्रो नडागिरिरिति प्रभो । द्वे तस्य रत्ने शक्रस्य कुलिशैरावणाविव ॥ ४२
प्रभावात्सुखितः कदाचित्सोऽथ भूपतिः । अगाच्चण्डमहासेनो मृगयायै महाटवीम् ॥ ४३
प्रमाणं तत्रैकं वराहं घोरमैक्षत । नैशं तम इवाकाण्डे दिवा पिण्डत्वमागतम् ॥ ४४
राहः शरैरस्य तीक्ष्णैरप्यकृतव्रणः । आहत्य स्यन्दनं राज्ञः पलाय्य बिलमाविशत् ॥ ४५
पि रथमुत्सृज्य तमेवानुसरन्क्रुधा । धनुर्द्वितीयस्तत्रैव प्राविशत्स बिलान्तरम् ॥ ४६
ाविश्य चापश्यत्कान्तं पुरवरं महत् । सविस्मयो न्यषीदच्च तदन्तर्दीर्घिकातटे ॥ ४७
यः कन्यकामेकामपश्यत्स्त्रीशतान्विताम् । संचरन्तीं स्मरस्येव धैर्यनिर्भेदिनीमिषुम् ॥ ४८
प्रेमरसासारवर्षिणा चक्षुषा मुहुः । स्नपयन्तीव राजानं शनकैस्तमुपागमत् ॥ ४९
ां सुभग कस्माच्च प्रविष्टोऽसीह सांप्रतम् । इत्युक्तः स तया राजा यथातत्त्वमवर्णयत् ॥ ५०
त्वा नेत्रयुगलात्सरागादश्रुसंततिम् । हृदयाद्धीरतां चापि समं कन्या मुमोच सा ॥ ५१
ं रोदिषि कस्माच्च पृष्टा तेनेति भूभृता । सा तं प्रत्यब्रवीदेवं मन्मथाज्ञानुवर्तिनी ॥ ५२
ाराहः प्रविष्टोऽत्र स दैत्योऽङ्गारकाभिधः । अहं चैतस्य तनया नामाङ्गारवती नृप ॥ ५३
ारमयश्चासौ राजपुत्रीरिमाः शतम् । आच्छिद्य राज्ञां गेहेभ्यः परिवारं व्यधान्मम ॥ ५४
ैष राक्षसीभूतः शापदोषान्महासुरः । तृष्णाश्रमार्तश्चाद्य त्वां प्राप्यापि त्यक्तवानयम् ॥ ५५
ों चास्तवाराहरूपो विश्राम्यति स्वयम् । सुप्तोत्थितश्च नियतं त्वयि पापं समाचरेत् ॥ ५६
मे तव कल्याणमपश्यन्त्या गलन्त्यमी । संतापक्वथिताः प्राणा इव बाष्पाम्बुबिन्दवः ॥ ५७
ारवतीवाक्यं श्रुत्वा राजा जगाद ताम् । यदि मय्यस्ति ते स्नेहस्तदिदं मद्वचः कुरु ॥ ५८
स्यास्य गत्वा त्वं रुदिहि स्वपितुः पुरः । ततश्च नियतं स त्वां पृच्छेदुद्वेगकारणम् ॥ ५९

त्वां चेन्निपातयेत्कश्चित्ततो मे का गतिर्भवेत् । एतद्दुःखं ममेत्येवं स च वाच्यस्त्वया ततः ॥
एवं कृतेऽस्ति कल्याणं तवापि च ममापि च । इत्युक्ता तेन सा राज्ञा तथेत्यङ्गीचकार तम् ॥
तं च च्छन्नमवस्थाप्य राजानं पापशङ्किनी । अगादसुरकन्या सा प्रसुप्तस्यान्तिकं पितुः ॥
सोऽपि दैत्यः प्रबुबुधे प्रारेभे सा च रोदितुम् । किं पुत्रि रोदिषीत्येवं स च तामब्रवीत्ततः ॥
हन्यात्त्वां कोऽपि चेत्तात तदा मे का गतिर्भवेत् । इत्यार्ता तमवादीत्सा स विहस्य ततोऽब्रवीत् ॥
को मां व्यापादयेत्पुत्रि सर्वो वज्रमयो ह्यहम् । वामहस्तेऽस्ति मे छिद्रं तच्च चापेन रक्ष्यते ॥
इत्थमाश्वासयामास स दैत्यस्तां निजां सुताम् । एतच्च निखिलं तेन राज्ञा छन्नेन शुश्रुवे ॥
ततः क्षणादिवोत्थाय कृत्वा स्नानं स दानवः । कृतमौनः प्रववृते देवं पूजयितुं हरम् ॥
तत्कालं प्रकटीभूय स राजाकृष्टकार्मुकः । उपेत्य प्रसभं दैत्यं रणायाह्वयते स्म तम् ॥
सोऽप्युत्क्षिप्य करं वामं मौनस्थस्तस्य भूपतेः । प्रतीक्षस्व क्षणं तावदिति संज्ञां तदाकरोत् ॥
राजापि लघुहस्तत्वात्करे तत्रैव तत्क्षणम् । तस्मिन्मर्मणि तं दैत्यं पृषत्केन जघान सः ॥
स च मर्माहतो घोरं रावं कृत्वा महासुरः । अङ्गारकोऽपतद्भूमौ निर्यज्जीवो जगाद च ॥
तृषितोऽहं हतो येन स मामद्भिर्न तर्पयेत् । प्रत्यब्दं यदि तत्तस्य नश्येयुः पञ्च मन्त्रिणः ॥
इत्युक्त्वा पञ्चतां प्राप स दैत्यः सोऽपि तत्सुताम् । तामङ्गारवतीं राजा गृहीत्वोज्जयिनीं ययौ ॥
परिणीतवतस्तस्य तत्र तां दैत्यकन्यकाम् । जातौ द्वौ तनयौ चण्डमहासेनस्य भूपतेः ॥
एको गोपालको नाम द्वितीयः पालकस्तथा । तयोरिन्द्रोत्सवं चासौ जातयोरकरोन्नृपः ॥
ततस्तं नृपतिं स्वप्ने तुष्टो वक्ति स्म वासवः । प्राप्स्यस्यनन्यसदृशीं मत्प्रसादात्सुतामिति ॥
ततः कालेन जातास्य राज्ञः कन्या तु तन्व्यथ । अपूर्वा निर्मिता धात्रा चन्द्रस्येवापरा तनुः ॥
कामदेवावतारोऽस्याः पुत्रो विद्याधराधिपः । भविष्यतीति तत्कालमुदभूद्भारती दिवः ॥
दत्ता मे वासवेनैषा तुष्टेनेति स भूपतिः । नाम्ना वासवदत्तां तां तनयामकरोत्तदा ॥
सा च तस्य पितुर्गेहे प्रदेया संप्रति स्थिता । प्राङ्मन्थादर्णवस्येव कमला कुक्षिकोटरे ॥

एवंविधप्रभावश्चण्डमहासेनभूपतिः स किल ।
देव न शक्यो जेतुं यथा तथा दुर्गदेशस्थः ॥
किं च स राजन्वाञ्छति दातुं तुभ्यं सदैव तनयां ताम् ।
प्रार्थयते तु स राजा निजपक्षमहोदयं मानी ॥
सा चावश्यं मन्ये वासदत्ता त्वयैव परिणेया ।
स सपदि वासवदत्ताहृतहृदयो वत्सराजोऽभूत् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथामुखलम्बके तृतीयस्तरङ्गः ।

---

चतुर्थस्तरङ्गः ।

अत्रान्तरे स वत्सेशप्रतिदूतस्तदब्रवीत् । गत्वा प्रतिवचश्चण्डमहासेनाय भूभृते ॥
सोऽपि चण्डमहासेनस्तच्छ्रुत्वैव व्यचिन्तयत् । स तावदिह नायाति मानी वत्सेश्वरो भृशम् ॥
कन्या हि तत्र न प्रेष्या भवेदेवं हि लाघवम् । तस्माद्बद्ध्वैव तं युक्त्या नृपमानाययाम्यहम् ॥
इति संचिन्त्य संमन्त्र्य स राजा मन्त्रिभिः सह । अकारयत्स्वसदृशं महान्तं यन्त्रहस्तिनम् ॥
तं चान्तर्वीरपुरुषैः कृत्वा छन्नैरधिष्ठितम् । विन्ध्याटव्यां स निदधे राजा यन्त्रमयं गजम् ॥
तत्र तं चारपुरुषाः पश्यन्ति स्म विदूरतः । गजबन्धरसासक्तवत्सराजोपजीविनः ॥
ते च त्वरितमागत्य वत्सराजं व्यजिज्ञपन् । देव दृष्टो गजोऽस्माभिरेको विन्ध्यवने भ्रमन् ॥
अस्मिन्नियति भूलोके नैवं योऽन्यत्र दृश्यते । वर्ष्मणा व्याप्तगगनो विन्ध्याद्रिरिव जङ्गमः ॥
ततश्चारवचः श्रुत्वा वत्सराजो जहर्ष सः । तेभ्यः सुवर्णलक्षं च प्रददौ पारितोषिकम् ॥

जेन्द्रं प्राप्स्यामि प्रतिमल्लं नडागिरेः । ततश्चण्डमहासेनो वश्यो भवति मे ध्रुवम् ॥ १०
ासवदत्तां तां स स्वयं मे प्रयच्छति । इति संचिन्तयन्सोऽथ राजा तामनयन्निशाम् ॥ ११
मन्त्रिवचनं न्यक्कृत्वा गजतृष्णया । पुरस्कृत्यैव तांश्चारान्ययौ विन्ध्याटवीं प्रति ॥ १२
ग्नस्य फलं कन्यालाभं सबन्धनम् । यदूचुर्गणकास्तस्य तत्स नैव व्यचारयत् ॥ १३
वेन्ध्याटवीं तस्य गजस्य क्षोभशङ्कया । वत्सराजः स सैन्यानि दूरादेव न्यवारयत् ॥ १४
त्रसहायस्तु वीणां घोषवतीं दधत् । निजव्यसनविस्तीर्णां तां विवेश महाटवीम् ॥ १५
य दक्षिणे पार्श्वे दूराच्चारैः प्रदर्शितम् । गजं सत्यगजाभासं तं ददर्श स भूपतिः ॥ १६
वादयन्वीणां चिन्तयन्बन्धनानि सः । मधुरध्वनि गायंश्च शनैरुपजगाम तम् ॥ १७
दत्तचित्तत्वात्संध्याध्वान्तवशाच्च सः । न तं वनगजं राजा मायागजमलक्षयत् ॥ १८
हस्ती तमुत्कर्णतालो गीतरसादिव । उपेत्योपेत्य विचलन्दूरमाकृष्टवान्नृपम् ॥ १९
स्माच्च निर्गत्य तस्माद्यन्त्रमयाद्गजात् । वत्सेश्वरं तं संनद्धाः पुरुषाः पर्यवारयन् ॥ २०
नृपतिः कोपादाकृष्टच्छुरिकोऽथ सः । अग्रस्थान्योधयन्नन्यैरेत्य पश्चादगृह्यत ॥ २१
ालितैश्चान्यैर्योधास्तैः सैनिकैः सह । निन्युर्वत्सेश्वरं चण्डमहासेनान्तिकं च तम् ॥ २२
चण्डमहासेनो निर्गत्याग्रे कृतादरः । वत्सेशेन समं तेन विवेशोज्जयिनीं पुरीम् ॥ २३
ददृशे पौरैरवमानकलङ्कितः । शशीव लोचनानन्दो वत्सराजो नवागतः ॥ २४
गुणरागेण वधमाशङ्क्य तत्र ते । पौराः संभूय सकलाश्चक्रुर्मरणनिश्चयम् ॥ २५
ःसेश्वरो वध्यः संधेय इति तान्ब्रुवन् । सोऽथ चण्डमहासेनः पौरान्क्षोभादवारयत् ॥ २६
सवदत्तां तां सुतां तत्रैव भूपतिः । वत्सराजाय गान्धर्वशिक्षाहेतोः समर्पयत् ॥ २७
वैनं गान्धर्वे त्वमेतां शिक्षय प्रभो । ततः प्राप्स्यसि कल्याणं मा विषादं कृथा इति ॥ २८
ष्ट्वा तु तां कन्यां वत्सराजस्य मानसम् । तथा स्नेहात्क्रमभवन्न यथा मन्युमैक्षत ॥ २९
चक्षुर्मनसी सह तं प्रति जग्मतुः । ह्रिया चक्षुर्निववृते मनस्तु न कथंचन ॥ ३०
सवदत्तां तां गापयंस्तद्गतेक्षणः । तत्र गान्धर्वशालायां वत्सराज उवास सः ॥ ३१
षवती तस्य कण्ठे गीतश्रुतिस्तथा । पुरो वासवदत्ता च तस्थौ चेतोविनोदिनी ॥ ३२
ासवदत्तास्य परिचर्यापराभवत् । लक्ष्मीरिव तदेकाग्रा बद्धस्याप्यनपायिनी ॥ ३३
ि च कौशाम्ब्यां वत्सराजानुगे जने । आवृत्ते तं प्रभुं बुद्ध्वा बद्धं राष्ट्रं प्रचुक्षुभे ॥ ३४
ग्रामवस्कन्दं दातुमैच्छन्समन्ततः । वत्सेश्वरानुरागेण क्रुद्धाः प्रकृतयस्तदा ॥ ३५
डमहासेनो बलसाध्यो महान्हि सः । न चैवं वत्सराजस्य शरीरे कुशलं भवेत् ॥ ३६
युक्तोऽवस्कन्दो बुद्धिसाध्यमिदं पुनः । इति प्रकृतयः क्षोभान्न्यवार्यन्त रुमण्वता ॥ ३७
क्तमालोक्य राष्ट्रमव्यभिचारि तत् । रुमण्वदादीनाह स्म धीरो यौगन्धरायणः ॥ ३८
र्युष्माभिः स्थातव्यं सततोद्यतैः । रक्षणीयमिदं राष्ट्रं काले कार्यश्च विक्रमः ॥ ३९
द्वितीयश्च गत्वाहं प्रज्ञया स्वया । वत्सेशं मोचयित्वा तमानयामि न संशयः ॥ ४०
विशेषेण वैद्युताग्नेरिव द्युतिः । आपदि स्फुरति प्रज्ञा यस्य धीरः स एव हि ॥ ४१
अनान्योगांस्तथा निगडभञ्जनान् । अदर्शनप्रयोगांश्च जानेऽहमुपयोगिनः ॥ ४२
प्रकृतीः कृत्वा हस्तन्यस्ता रुमण्वतः । यौगन्धरायणः प्रायात्कौशाम्ब्याः सवसन्तकः ॥ ४३
च तेनैव सह विन्ध्यमहाटवीम् । स्वप्रज्ञामिव सत्त्वाढ्यां स्वनीतिमिव दुर्गमाम् ॥ ४४
ाशमित्रस्य विन्ध्यप्राग्भारवासिनः । गृहं पुलिन्दकाख्यस्य पुलिन्दाधिपतेरगात् ॥ ४५
स्थापयित्वा च पथा तेनागमिष्यतः । वत्सराजस्य रक्षार्थं भूरिसैन्यसमन्वितम् ॥ ४६
सन्तकसखस्ततो यौगन्धरायणः । उज्जयिन्यां महाकालश्मशानं प्राप स क्रमात् ॥ ४७
च वेतालैः क्रव्यगन्धिभिरावृतम् । इतस्ततस्तमःश्यामैश्चिताधूमैरिवापरैः ॥ ४८

तत्रैनं दर्शनप्रीतो मित्रभावाय तत्क्षणम्। योगेश्वराख्यो वृतवानभ्येत्य ब्रह्मराक्षसः॥
तेनोपदिष्टया युक्त्या ततो यौगन्धरायणः। स चकारात्मनः सद्यो रूपस्य परिवर्तनम्॥
बभूव तेन विकृतः कुब्जो वृद्धश्च तत्क्षणात्। उन्मत्तवेषः खल्वाटो हास्यसंजननः परम्॥
तथैव युक्त्या स तदा सिरानद्धपृथूदरम्। चक्रे वसन्तकस्यापि रूपं दन्तुरदुर्मुखम्॥
ततो राजकुलद्वारमादौ प्रेष्य वसन्तकम्। विवेशोज्जयिनीं तां स तादृग्यौगन्धरायणः॥
नृत्यन्गायंश्च तत्रासौ बटुभिः परिवारितः। दृष्टः सकौतुकं सर्वैर्ययौ राजगृहं प्रति॥
तत्र राजावरोधानां तेनासौ कृतकौतुकः। अगाद्वासवदत्तायाः शनैः श्रवणगोचरम्॥
सा समानाययामास चेटिकां प्रेष्य सत्वरम्। गान्धर्वशालां नर्मैकसादरं हि नवं वयः॥
स च तत्र गतो बद्धं वत्सराजं ददर्श तम्। उन्मत्तवेषो विगलद्बाष्पो यौगन्धरायणः॥
चकार तस्मै संज्ञां च वत्सराजाय सोऽपि तम्। प्रत्यभिज्ञातवान्राजा वेषप्रच्छन्नमागतम्॥
ततो वासवदत्तां च तच्चेटीः प्रति चात्मनः। अदर्शनं युक्तिबलाद्व्यधाद्यौगन्धरायणः॥
राजा त्वेको ददर्शैनं ताश्च सर्वाः सविस्मयम्। वदन्ति स्म गतोऽकस्मादुन्मत्तः क्वाप्यसाविति॥
तच्छ्रुत्वा तं च दृष्ट्वाग्रे मत्वा योगबलेन तत्। युक्त्या वासवदत्तां तां वत्सराजोऽब्रवीदिदम्॥
गत्वा सरस्वतीपूजामादायागच्छ दारिके। तच्छ्रुत्वा सा तथेत्युक्त्वा सवयस्या विनिर्ययौ॥
यथोचितमुपेत्याथ ददौ वत्सेश्वराय सः। यौगन्धरायणस्तस्मै योगान्निगडभञ्जनान्॥
अन्यान्वासवदत्ताया वीणातन्त्रीनियोजितान्। वशीकरणयोगांश्च राज्ञेऽस्मै स समार्पयत्॥
व्यजिज्ञपच्च तं राजन्निहायातो वसन्तकः। द्वारि स्थितोऽन्यरूपेण तं कुरुष्वान्तिके द्विजम्॥
यदा वासवदत्तेयं त्वयि विस्रम्भमेष्यति। तदा वक्ष्यामि यदहं तत्कुर्यास्तिष्ठ सांप्रतम्॥
इत्युक्त्वा निर्ययौ शीघ्रं ततो यौगन्धरायणः। आगाद्वासवदत्ता च पूजामादाय तत्क्षणात्॥
सोऽथ तामवदद्राजा बहिर्द्वारि द्विजः स्थितः। सरस्वत्यर्चने सोऽस्मिन्दक्षिणार्थं प्रवेश्यताम्॥
तथेति द्वारदेशात्स तत्र वासवदत्तया। विरूपामाकृतिं बिभ्रदानाय्यत वसन्तकः॥
स चानीतस्तमालोक्य वत्सेशमरुदच्छुचा। ततश्चाप्रतिभेदाय स राजा निजगाद तम्॥
हे ब्रह्मन्रोगवैरूप्यं सर्वमेतदहं तव। निवारयामि मा रोदीस्तिष्ठेहैव ममान्तिके॥
महान्प्रसादो देवेति स चोवाच वसन्तकः। सोऽथ तं विकृतं दृष्ट्वा राजा स्मितमुखोऽभवत्॥
तच्चालोक्याशयं बुद्ध्वा तस्य सोऽपि वसन्तकः। हसति स्माधिकोद्भूतविरूपाननवैकृतः॥
तं हसन्तं तथा दृष्ट्वा क्रीडनीयकसंनिभम्। तत्र वासवदत्तापि जहास च तुतोष च॥
ततः सा नर्मणा बाला तं पप्रच्छ वसन्तकम्। किं विज्ञानं विजानासि भो ब्रह्मन्कथ्यतामिति॥
कथाः कथयितुं देवि जानामीति स चावदत्। कथां कथय तर्ह्येकामिति सापि ततोऽब्रवीत्॥
ततस्तां राजतनयां रञ्जयन्स वसन्तकः। हास्यवैचित्र्यसरसामिमामकथयत्कथाम्॥
अस्तीह मथुरा नाम पुरी कंसारिजन्मभूः। तस्यां रूपणिकेत्यासीत्ख्याता वारविलासिनी॥
तस्या मकरदंष्ट्राख्या माताभूद्वृद्धकुट्टनी। तद्गुणाकृष्यमाणानां यूनां दृशि विषच्छटा॥
पूजाकाले सुरकुलं स्वनियोगाय जातु सा। गता रूपणिका दूरादेकं पुरुषमैक्षत॥
स दृष्टः सुभगस्तस्या विवेश हृदयं तथा। यथा मात्रा कृतास्तेऽस्मादुपदेशा विनिर्ययुः॥
चेटिकामथ सावादीद्गच्छ मद्वचनादमुम्। पुरुषं ब्रूहि मद्गेहे त्वयाद्यागम्यतामिति॥
तथेति चेटिका सा च गत्वा तस्मै तदब्रवीत्। ततः स किंचिद्विमृशन्पुरुषस्तामभाषत॥
लोहजङ्घाभिधानोऽस्मि ब्राह्मणो नास्ति मे धनम्। तदाढ्यजनलभ्ये हि कोऽहं रूपणिकागृहे॥
न धनं वाञ्छ्यते त्वत्तः स्वामिन्येत्युदिते तया। स लोहजङ्घस्तद्वाक्यं तथेति प्रत्यपद्यत॥
ततश्चेटीमुखाद्बुद्ध्वा तच्च सा गृहमुत्सुका। गत्वा रूपणिका तस्थौ तन्मार्गन्यस्तलोचना॥
क्षणाच्च लोहजङ्घोऽथ तस्या मन्दिरमाययौ। कुतोऽयमिति कुट्टन्या दृष्टो मकरदंष्ट्रया॥

रूपणिका दृष्ट्वा स्वयमुत्थाय सादरा । वासवेश्मान्तरं हृष्टा कण्ठे लग्ना निनाय तम् ॥ ८८
पा लोहजङ्घस्य तस्य सौभाग्यसंपदा । वशीकृता सती नान्यत्फलं जन्मन्यमन्यत ॥ ८९
ाया निवृत्तान्यपुरुषासङ्गया सह । यथासुखं स तत्रैव तस्थौ तन्मन्दिरे युवा ॥ ९०
ा शिक्षिताशेषवेषयोषिज्जगाद ताम् । माता मकरदंष्ट्रा सा खिन्ना रूपणिकां रहः ॥ ९१
र्यं निर्धनः पुत्रि सेव्यते पुरुषस्त्वया । शवं स्पृशन्ति सुजना गणिका न तु निर्धनम् ॥ ९२
ागः क वेश्यात्वमिति ते विस्मृतं कथम् । संध्येव रागिणी वेश्या न चिरं पुत्रि दीप्यते ॥ ९३
र कृत्रिमं प्रेम गणिकार्थाय दर्शयेत् । तदेनं निर्धनं मुञ्च मा कृथा नाशमात्मनः ॥ ९४
मातुर्वचः श्रुत्वा रुषा रूपणिकाब्रवीत् । मैवं वादीर्मम ह्येष प्राणेभ्योऽप्यधिकः प्रियः ॥ ९५
ास्ति च मे भूरि किमन्येन करोम्यहम् । तदम्ब नैव वक्तव्या भूयोऽप्येवमहं त्वया ॥ ९६
त्वा लोहजङ्घस्य निर्वासनविधौ कुधा । तस्थौ मकरदंष्ट्रा सा तस्योपायं विचिन्वती ॥ ९७
मार्गागतं कंचित्क्षीणकोषं ददर्श सा । राजपुत्रं परिवृतं पुरुषैः शस्त्रपाणिभिः ॥ ९८
स्य द्रुतं तं च नीत्वैकान्ते जगाद सा । निर्धनेन ममैकेन कामुकेनावृतं गृहम् ॥ ९९
मागच्छ तत्राद्य तथा च कुरु येन सः । गृहान्मम निवर्तेत मदीयां च सुतां भज ॥ १००
र राजपुत्रोऽथ प्रविवेश स तद्गृहम् । तस्मिन्क्षणे रूपणिका तस्थौ देवकुले च सा ॥ १०१
ङ्घश्च तत्कालं बहिः क्वापि स्थितोऽभवत् । क्षणान्तरे च निःशङ्कस्तत्रैव समुपाययौ ॥ १०२
र्णं राजपुत्रस्य तस्य भृत्यैः प्रधाव्य सः । दृढं पादप्रहाराद्यैः सर्वेष्वङ्गेष्वताड्यत ॥ १०३
पैव चामेध्यपूर्णे क्षिप्तः स खातके । लोहजङ्घः कथमपि प्रपलायितवांस्ततः ॥ १०४
गता रूपणिका तद्बुद्ध्वा शोकविह्वला । साभूद्वीक्ष्याथ स ययौ राजपुत्रो यथागतम् ॥ १०५
जङ्घोऽपि कुट्टन्या प्रसभं स खलीकृतः । गन्तुं प्रववृते तीर्थं प्राणांस्त्यक्तुं वियोगवान् ॥ १०६
ाटव्यां संतप्तः कुट्टनीमन्युना हृदि । त्वचि च ग्रीष्मतापेन च्छायामभिललाप सः ॥ १०७
प्राप्नुवन्सोऽथ लेभे हस्तिकलेवरम् । जघनेन प्रविश्यान्तर्निर्मांसं जम्बुकैः कृतम् ॥ १०८
वशोषे तत्रान्तः परिश्रान्तः प्रविश्य सः । लोहजङ्घो ययौ निद्रां प्रविशद्वातशीतले ॥ १०९
कस्मात्समुत्थाय क्षणेनैव समन्ततः । मेघः प्रववृते तत्र धारासारेण वर्षितुम् ॥ ११०
निर्विवरं प्राप संकोचं हस्तिचर्म तत् । क्षणाच्च तेन मार्गेण जलौघो भृशमाययौ ॥ १११
पहृत्य गङ्गायामक्षेपि गजचर्म तत् । तज्जलौघेन नीत्वा च समुद्रान्तर्न्यधीयत ॥ ११२
दृष्ट्वा च तच्चर्म निपत्यामिषशङ्कया । हृत्वाब्धेः पारमनयत्पक्षी गरुडवंशजः ॥ ११३
च त्वा विदार्यैतद्गजचर्म विलोक्य च । अन्तःस्थं मानुषं पक्षी पलाय्य स ततो ययौ ॥ ११४
ा चर्मणस्तस्मात्पक्षिसंरम्भबोधितः । तच्चञ्चुरचितद्वाराल्लोहजङ्घो विनिर्ययौ ॥ ११५
समुद्रपारस्थमात्मानं च सविस्मयः । अनिद्रस्वप्नमिव तत्स समग्रममन्यत ॥ ११६
द्वौ राक्षसौ तत्र घोरौ भीतो ददर्श सः । तौ चापि राक्षसौ दूराच्चकितौ तमपश्यताम् ॥ ११७
त्पराभवं स्मृत्वा तं तथैव च मानुषम् । दृष्ट्वा तीर्णाम्बुधिं भूयस्तौ भयं हृदि चक्रतुः ॥ ११८
स्य च तयोर्मध्यादेको गत्वा तदैव तम् । विभीषणाय प्रभवे यथादृष्टं न्यवेदयत् ॥ ११९
ामप्रभावः सन्सोऽपि राजा विभीषणः । मानुषागमनाद्भीतो राक्षसं तमभाषत ॥ १२०
द मद्वचनाद्भद्र प्रीत्या तं ब्रूहि मानुषम् । आगम्यतां गृहेऽस्माकं प्रसादः क्रियतामिति ॥ १२१
गागत्य तेनासौ स्वप्रभुप्रार्थनावचः । चकितो लोहजङ्घाय शशंस स च राक्षसः ॥ १२२
त्यङ्गीकृत्य सोद्वेगो लोहजङ्घः प्रशान्तधीः । तेनैव सद्वितीयेन सह लङ्कां ततोऽगमत् ॥ १२३
ं च दृष्टसौवर्णनानाप्रासादविस्मितः । प्रविश्य राजभवनं स ददर्श विभीषणम् ॥ १२४
ऽपि पप्रच्छ राजा तं कृतातिथ्यः कृताशिषम् । ब्रह्मन्कथमिमां भूमिमनुप्राप्तो भवानिति ॥ १२५
स धूर्तोऽवादीत्तं लोहजङ्घो विभीषणम् । विप्रोऽहं लोहजङ्घाख्यो मथुरायां कृतस्थितिः ॥ १२६

सोऽहं दारिद्र्यसंतप्तस्तत्र नारायणाग्रतः। निराहारः स्थितोऽकार्षं गत्वा देवकुलं तपः ॥ १२७
विभीषणान्तिकं गच्छ मद्भक्तः स हि ते धनम्। दास्यतीत्यादिशत्स्वप्ने ततो मां भगवान्हरिः ॥ १२८
क्वाहं बिभीषणः क्वेति मयोक्ते स पुनः प्रभुः। समादिशद्व्रजाद्यैव तं द्रक्ष्यसि विभीषणम् ॥ १२९
इत्युक्तः प्रभुणा सद्यः प्रबुद्धोऽहमिहाम्बुधेः। पारेऽवस्थितमात्मानमपश्यं वेद्मि नापरम् ॥ १३०
इत्युक्तो लोहजङ्घेन लङ्कामालोक्य दुर्गमाम्। सत्यं दिव्यप्रभावोऽयमिति मेने विभीषणः ॥ १३१
तिष्ठ दास्यामि ते वित्तमित्युक्त्वा ब्राह्मणं च तम्। मत्वा च रक्षसां हस्ते तमप्रेष्यं नृघातिनाम् ॥ १३२
तत्रस्थात्स्वर्णमूलाख्याद्द्रिरेः संप्रेष्य राक्षसान्। आनाययत्पक्षिपोतं गरुडान्वयसंभवम् ॥ १३३
तं चास्मै लोहजङ्घाय मथुरायां गमिष्यते। तत्कालमेव प्रददौ वशीकाराय वाहनम् ॥ १३४
लोहजङ्घोऽपि लङ्कायां वाहयन्नधिरुह्य तम्। कंचित्कालं विशश्राम स विभीषणसत्कृतः ॥ १३५
एकदा तं च पप्रच्छ राक्षसेन्द्रं सकौतुकः। लङ्कायां काष्ठमय्येषा कथं सर्वैव भूरिति ॥ १३६
तच्छ्रुत्वा स च तद्वृत्तं तमुवाच विभीषणः। यदि ते कौतुकं ब्रह्मंस्तदिदं शृणु वच्मि ते ॥ १३७
पुरा प्रतिज्ञोपनतां नागानां दासभावतः। निष्क्रष्टुकामो जननीं गरुडः कश्यपात्मजः ॥ १३८
तन्मूल्यभूतां देवेभ्यः सुधामाहर्तुमुद्यतः। बलस्य हेतोर्भक्ष्यार्थी स्वपितुर्निकटं ययौ ॥ १३९
स चैनं याचितोऽवादीन्महान्तौ गजकच्छपौ। अब्धौ स्तः पुत्र तौ भुङ्क्ष्व गच्छ शापच्युताविति ॥ १४०
ततः स गरुडो गत्वा भक्ष्यावादाय तावुभौ। महतः कल्पवृक्षस्य शाखायां समुपाविशत् ॥ १४१
तां च शाखां भरात्सद्यो भग्नां चञ्च्वा बभार सः। अधःस्थिततपोनिष्ठवालखिल्यानुरोधतः ॥ १४२
लोकोपमर्दभीतेन तेनाथ पितुराज्ञया। आनीय विजने त्यक्ता सा शाखेह गरुत्मता ॥ १४३
तस्याः पृष्ठे कृता लङ्का तेन काष्ठमयीह भूः। एतद्विभीषणाच्छ्रुत्वा लोहजङ्घस्तुतोष सः ॥ १४४
ततस्तस्मै महार्घाणि रत्नानि सुबहूनि च। विभीषणो ददाति स्म मथुरां गन्तुमिच्छते ॥ १४५
भक्त्या च देवस्य हरेर्मथुरावर्तिनः कृते। हस्तेऽस्याब्जगदाशङ्खचक्रान्हेममयान्ददौ ॥ १४६
तद्गृहीत्वाखिलं तस्मिन्विभीषणसमर्पिते। आरुह्य विहगे लक्षं योजनानां प्रयातरि ॥ १४७
उत्पत्य व्योममार्गेण लङ्कायास्तीर्णवारिधिः। स लोहजङ्घो मथुरामक्लेशेनाजगाम ताम् ॥ १४८
तस्यां शून्ये विहारे च बाह्ये व्योम्नोऽवतीर्य सः। स्थापयामास रत्नौघं तं बबन्ध च पक्षिणम् ॥ १४९
आपणे रत्नमेकं च गत्वा विक्रीतवांस्ततः। अथ वस्त्राङ्गरागादि क्रीतवान्भोजनं तथा ॥ १५०
तद्विहारे च तत्रैव भुक्त्वा दत्त्वा च पक्षिणे। वस्त्राङ्गरागपुष्पाद्यैरात्मानं तैरभूषयत् ॥ १५१
प्रदोषे चाययौ तस्यास्तत्रैवारुह्य पक्षिणि। गृहं रूपणिकायास्ताः शङ्खचक्रगदा वहन् ॥ १५२
तत्रोपरि ततः स्थित्वा स्थानवित्खे चरंश्च सः। शब्दं चकार गम्भीरं रहःस्थां श्रावयन्प्रियाम् ॥ १५३
तं च श्रुत्वैव निर्याता सापश्यद्रत्नराजितम्। एनं नारायणाकल्पं व्योम्नि रूपणिका निशि ॥ १५४
अहं हरिरिहायातस्त्वदर्थमिति तेन सा। उक्ता प्रणम्य वक्ति स्म दयां देवः करोत्विति ॥ १५५
अथावतीर्य संयम्य लोहजङ्घो विहंगमम्। विवेश वासभवनं स तया कान्तया सह ॥ १५६
तत्र संप्राप्तसंभोगः स निष्क्रम्य क्षणान्तरे। तथैव विहगारूढो जगाम नभसा ततः ॥ १५७
देवता विष्णुभार्याहं मर्त्यैः सह न मन्त्रये। इति रूपणिका प्रातस्तस्थौ मौनं विधाय सा ॥ १५८
कस्मादेवंविधं पुत्रि वर्तसे कथ्यतां त्वया। इत्यपृच्छत सा मात्रा ततो मकरदंष्ट्रया ॥ १५९
निर्बन्धपृष्टा तस्यै च सा मात्रे मौनकारणम्। शशंस रात्रिवृत्तान्तं दापयित्वान्तरे पटम् ॥ १६०
सा तच्छ्रुत्वा ससंदेहा स्वयं तं कुट्टनी निशि। ददर्श विहगारूढं लोहजङ्घं ततः क्षणम् ॥ १६१
प्रभाते च पटान्तःस्थामेत्य रूपणिकां रहः। प्रह्वा मकरदंष्ट्रा सा कुट्टनीति व्यजिज्ञपत् ॥ १६२
देवस्यानुग्रहात्पुत्रि त्वं देवीत्वमिहागता। अहं च तेऽत्र जननी तन्मे देहि सुताफलम् ॥ १६३
वृद्धानेनैव देहेन यथा स्वर्गं व्रजाम्यहम्। तथा देवस्य विज्ञप्तिं कुरुष्वानुगृहाण माम् ॥ १६४
तथेति सा रूपणिका तमेवार्थं व्यजिज्ञपत्। व्याजविष्णुं पुनर्नक्तं लोहजङ्घमुपागतम् ॥ १६५

स देववेषस्तां लोहजङ्घोऽब्रवीत्प्रियाम्। पापा ते जननी स्वर्गं व्यक्तं नेतुं न युज्यते ॥ १६६
दृश्यां पुनः प्रातर्द्वारमुद्धाट्यते दिवि। तत्र च प्रविशन्त्यग्रे बहवः शांभवा गणाः ॥ १६७
ध्ये कृततद्वेषा त्वन्मातासौ प्रवेश्यते। तदस्याः पञ्चचूडं त्वं क्षुरकृत्तं शिरः कुरु ॥ १६८
करङ्कमालाढ्यं पार्श्वे चैकं सकज्जलम्। अन्यत्सिन्दूरलिप्तं च कुर्वस्या वीतवाससः ॥ १६९
नां गणाकारां सुखं स्वर्गं नयाम्यहम्। इत्युक्त्वा स क्षणं स्थित्वा लोहजङ्घस्ततोऽगमत् ॥ १७०
ा सा रूपणिका यथोक्तं तमकारयत्। वेषं मातुरथैषापि तस्थौ स्वर्गैकसंमुखी ॥ १७१
गौ च पुनस्तत्र लोहजङ्घो निशामुखे। सा च रूपणिका तस्मै मातरं तां समर्पयत् ॥ १७२
स विहगारूढस्तामादायैव कुट्टनीम्। नग्नां विकृतवेषां च जवादुदपतन्नभः ॥ १७३
स्थश्च तत्रैव प्रांशुं देवकुलाग्रतः। स ददर्श शिलास्तम्भं चक्रेणोपरि लाञ्छितम् ॥ १७४
पृष्ठे स चक्रैकसालम्बे तां न्यवेशयत्। खलीकारप्रतीकारपताकामिव कुट्टनीम् ॥ १७५
ष्ठ क्षणं यावत्सांनिध्यानुग्रहं भुवि। गत्वा करोमीत्युक्त्वा च तस्या दृष्टिपथाद्ययौ ॥ १७६
त्रैव देवाग्रे दृष्ट्वा जागरणागतान्। रात्रौ यात्रोत्सवे लोकान्गगनादेवमब्रवीत् ॥ १७७
का इह युष्माकमुपर्यद्य पतिष्यति। सर्वसंहारिणी मारी तदेत शरणं हरिम् ॥ १७८
ां गगनाद्वाणीं भीताः सर्वेऽपि तत्र ते। माथुरा देवमाश्रित्य तस्थुः स्वस्त्ययनादृताः ॥ १७९
ा व्योम्नोऽवतीर्यैव लोहजङ्घोऽवलोकयन्। तस्थावदृष्टस्तन्मध्ये देववेषं निवार्य तम् ॥ १८०
े नागतो देवो न च स्वर्गमहं गता। इति च स्तम्भपृष्ठस्था कुट्टन्येवमचिन्तयत् ॥ १८१
वोपरि स्थातुं श्रावयन्ती जनानधः। हा हाहं पतितास्मीति सा चक्रन्द च बिभ्यती ॥ १८२
ा पतिता सेयं मारीत्याशङ्क्य चाकुलाः। देवि मा मा पतेत्यूचुस्ते देवाग्रगता जनाः ॥ १८३
बालवृद्धास्ते माथुरास्तां विभावरीम्। मारीपातभयोद्भ्रान्ता कथमप्यत्यवाहयन् ॥ १८४
दृष्ट्वा स्तम्भस्थां कुट्टनीं तां तथाविधाम्। प्रत्यभिज्ञातवान्सर्वः पौरलोकः सराजकः ॥ १८५
ान्तभये तत्र जातहासेऽखिले जने। आययौ श्रुतवृत्तान्ता तत्र रूपणिकाथ सा ॥ १८६
दृष्ट्वा सवैलक्ष्या स्तम्भाग्राज्जननीं निजाम्। तामवातारयत्सद्यस्तत्रस्थैश्च जनैः सह ॥ १८७
ा कुट्टनी तत्र सर्वैस्तैः सकुतूहलैः। अपृच्छयत यथावृत्तं सापि तेभ्यः शशंस तत् ॥ १८८
सिद्धादिचरितं तन्मत्वाद्भुतकारकम्। सराजविप्रवणिजो जनास्ते वाक्यमब्रुवन् ॥ १८९
विप्रलब्धा हि वञ्चितानेककामुका। प्रकटः सोऽस्तु तस्येह पट्टबन्धो विधीयते ॥ १९०
ा लोहजङ्घः स तत्रात्मानमदर्शयत्। पृष्टश्चामूलतः सर्वं वृत्तान्तं तमवर्णयत् ॥ १९१
तत्र देवाय शङ्खचक्राद्युपायनम्। विभीषणेन प्रहितं जनविस्मयकारकम् ॥ १९२

अथ तस्य सपदि पट्टं बद्ध्वा संतुष्य माथुराः सर्वे।
स्वाधीनां रूपणिकां राजादेशेन तां चक्रुः ॥ १९३

ततश्च तत्र प्रियया समं तदा समृद्धकोषो बहुरत्नसंचयैः।
स लोहजङ्घः प्रतिकृत्य कुट्टनीनिकारमन्युं न्यवसद्यथासुखम् ॥ १९४

इत्यन्यरूपस्य वसन्तकस्य मुखात्समाकर्ण्य कथामवापि।
वद्धस्य वत्साधिपतेः समीपे तोषः परो वासवदत्तयान्तः ॥ १९५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथामुखलम्बके चतुर्थस्तरङ्गः।

---

पञ्चमस्तरङ्गः।

सवदत्ता सा शनैर्वत्सेश्वरं प्रति। गाढं बबन्ध सद्भावं पितृपक्षपराङ्मुखी ॥ १
सेशनिकटं पुनर्यौगन्धरायणः। विवेशादर्शनं कृत्वा सर्वानन्याञ्जनान्प्रति ॥ २
समक्षं च विजने तं व्यजिज्ञपत्। राजन्बद्धो भवांश्चण्डमहासेनेन मायया ॥ ३

सुतां च दत्त्वा संमान्य त्वामयं मोक्तुमिच्छति। तदस्यैनां स्वयं हृत्वा गच्छामस्तनयां वयम्॥
एवं ह्यस्य प्रतीकारो दृप्तस्य विहितो भवेत्। अपौरुषकृतं लोके नैव स्याल्लाघवं च नः॥
अस्ति चैतेन दत्तास्यास्तनयायाः करेणुका। राज्ञा वासवदत्ताया नाम्ना भद्रवती नृप॥
सा चानुगन्तुं वेगेन शक्या नान्येन दन्तिना। मुक्त्वा नडागिरिं सोऽपि तां दृष्ट्वैव न युध्यते॥
तस्याश्चाषाढको नाम हस्त्यारोहोऽत्र विद्यते। स च दत्त्वा धनं भूरि स्वीकृत्य स्थापितो मया॥
तदारुह्य करेणुं तां सह वासवदत्तया। सायुधेनापयातव्यं नक्तं गुप्तमितस्त्वया॥
इहत्यश्च महामात्रो द्विरदेङ्गितवित्तदा। मद्येन क्षीबतां नेयो नैतच्चेतयते यथा॥
पुलिन्दकस्य सख्युस्ते पार्श्वमग्रे च याम्यहम्। मार्गरक्षार्थमित्युक्त्वा ययौ यौगन्धरायणः॥
वत्सराजोऽपि तत्सर्वं कर्तव्यं हृदये व्यधात्। अथ वासवदत्ता सा तस्यान्तिकमुपाययौ॥
ततस्तास्ताः सविस्रम्भाः कथाः कुर्वंस्तया सह। यौगन्धरायणोक्तं च तस्यै राजा शशंस सः॥
सा च तत्प्रतिपद्यैव निश्चित्य गमनं प्रति। आनाय्याषाढकं सज्जं हस्त्यारोहं चकार तम्॥
देवपूजापदेशेन दत्त्वा मद्यं मदान्वितम्। सर्वाधोरणसंयुक्तं सहामात्रं च साकरोत्॥
ततः प्रदोषे विलसन्मेघशब्दसमाकुले। आषाढकः करेणुं तां सज्जीकृत्यानिनाय सः॥
सज्ज्यमाना च सा शब्दं चकार करिणी किल। तं च हस्तिरुताभिज्ञो महामात्रोऽथ सोऽशृणोत्॥
त्रिषष्टियोजनान्यद्य यास्यामीत्याह हस्तिनी। इत्युवाच स चोद्दाममदविस्खलिताक्षरम्॥
विचारार्हं पुनस्तस्य मत्तस्याभून्न मानसम्। तच्च हस्तिपकाः क्षीबास्तद्वाक्यं नैव शुश्रुवुः॥
ततश्च वत्सराजोऽत्र वीणामादाय तां निजाम्। यौगन्धरायणात्प्राप्तैर्योगैः स्रंसितबन्धनः॥
उपनीतप्रहरणः स्वैरं वासवदत्तया। करेणुकायामारोहत्स तस्यां सवसन्तकः॥
ततो वासवदत्तापि सह काञ्चनमालया। सख्या रहस्यधारिण्या तस्यामेवारुरोह सा॥
अथोज्जयिन्या निरगात्स हस्तिपकपञ्चमः। वत्सेशो निशि मत्तेभभिन्नप्राकारवर्त्मना॥
तत्स्थानरक्षिणौ वीरौ स्वैरं स हतवान्नृपः। वीरबाहुं तथा तालभटं राजसुतावुभौ॥
ततः प्रतस्थे वेगेन स राजा दयितासखः। हृष्टः करेणुकारूढो दधत्याषाढकेऽङ्कुशम्॥
उज्जयिन्यां च तौ दृष्ट्वा हतौ प्राकाररक्षिणौ। राज्ञे न्यवेदयन्रात्रौ क्षुभिताः पुररक्षिणः॥
सोऽप्यन्विष्य क्रमाच्चण्डमहासेनः पलायितम्। हृतवासवदत्तं तं वत्सराजमबुध्यत॥
तत्पुत्रः पालकाख्योऽथ जातकोलाहले पुरे। अन्वधात्स वत्सेशमधिरुह्य नडागिरिम्॥
वत्सेशोऽपि तमायान्तं पथि बाणैरयोधयत्। नडागिरिः करेणुं तां दृष्ट्वा न प्रजहार च॥
ततः स पालको भ्रात्रा पश्चादेत्य न्यवर्त्यत। गोपालकेन वाक्यज्ञः पितृकार्यानुरोधिना॥
वत्सराजोऽपि विस्रब्धं गन्तुं प्रववृते ततः। गच्छतश्चात्र शनकैः शर्वरी पर्यहीयत॥
ततो विन्ध्याटवीं प्राप्य मध्याह्ने तस्य भूपतेः। त्रिषष्टियोजनायाता तृषिताभूत्करेणुका॥
अवतीर्णे सभार्ये च राज्ञि तस्मिञ्जलानि सा। पीत्वा तद्दोषतः प्राप पञ्चतां हस्तिनी क्षणात्॥
विषण्णोऽथ स वत्सेशः सह वासवदत्तया। गगनादुद्गतामेतां शृणोति स्म सरस्वतीम्॥
अहं मायावती नाम राजन्विद्याधराङ्गना। इयन्तं कालमभवं शापदोषेण हस्तिनी॥
उपकारं च वत्सेश तवाद्य कृतवत्यहम्। करिष्यामि च भूयोऽपि त्वत्पुत्रस्य भविष्यतः॥
एषा वासवदत्ता च पत्नी ते नैव मानुषी। देवीयं कारणवशादवतीर्णा क्षिताविति॥
ततः स हृष्टो व्यसृजद्विन्ध्यसानुं वसन्तकम्। पुलिन्दकाय सुहृदे वक्तुं स्वागमनं नृपः॥
स्वयं च पादचारी सन्स शनैर्दयितान्वितः। तत्रैव गच्छन्नुत्थाय दस्युभिः पर्यवार्यत॥
धनुर्द्वितीयो दस्यूनां तेषां पञ्चोत्तरं शतम्। पुरो वासवदत्ताया वत्सराजः स चावधीत्॥
तत्क्षणं सोऽस्य राज्ञोऽत्र मित्रं चागात्पुलिन्दकः। यौगन्धरायणसखो वसन्तकपुरःसरः॥
स तान्दस्यून्निवार्यान्यान्वत्सेशं प्रणिपत्य तम्। नयति स्म निजां पल्लीं भिल्लराजः सवल्लभम्॥

तेन मत्तां सशिष्यां च च्छिन्नश्रवणनासिकाम्। तामप्यशुचिपङ्कान्तः क्षेपयामास सा सती ॥ १६

गत्वा मैते वणिक्पुत्राः पतिं हन्युः कदाचन। इत्याकुला च सा श्वश्र्वास्तं वृत्तान्तमवर्णयत् ॥ १६

ततः श्वश्रूरवादीत्तां पुत्रि साधु कृतं त्वया। किं तु पुत्रस्य मे तस्य कदाचिदहितं भवेत् ॥ १६

ततो देवस्मितावोचद्यथा शक्तिमती पतिम्। ररक्ष प्रज्ञया पूर्वममुं रक्षाम्यहं तथा ॥ १६

कथं शक्तिमती पुत्रि ररक्ष पतिमुच्यताम्। इति पृष्टा तया श्वश्र्वा साथ देवस्मिताब्रवीत् ॥ १६

अस्मद्देशे पुरस्यान्तर्मणिभद्र इति श्रुतः। पूर्वैः कृतप्रतिष्ठोऽस्ति महायक्षः प्रभावितः ॥ १६

तस्योपयाचितान्येत्य तत्रत्याः कुर्वते जनाः। तत्तद्वाञ्छितसंसिद्धिहेतोस्तैस्तैरुपायनैः ॥ १६

यो नरः प्राप्यते तत्र रात्रौ सह परस्त्रिया। स्थाप्यते सोऽस्य यक्षस्य गर्भागारे तया समम् ॥ १६

प्रातस्तथैव सस्त्रीकः स नीत्वा राजसंसदि। प्रकटीकृत्य तद्वृत्तं निगृह्यत इति स्थितिः ॥ १६

एकदा तत्र नक्तं च संगतः परजायया। वणिक्समुद्रदत्ताख्यः प्राप्तोऽभूत्पुररक्षिणा ॥ १६

नीत्वा च तेन क्षिप्तोऽभूत्सपरस्त्रीक एव सः। यक्षदेवगृहे तस्मिन्दृढदत्तार्गले वणिक् ॥ १

तत्क्षणं वणिजश्चास्य महाप्रज्ञा पतिव्रता। भार्या शक्तिमती नाम तं वृत्तान्तमबुध्यत ॥ १

साथ धीरान्यरूपेण तद्यक्षायतनं निशि। पूजामादाय साश्वासं सखीजनयुता ययौ ॥ १

तत्रैत्य दक्षिणालोभादेतस्या एव पूजकः। ददौ प्रवेशमुद्घाट्य द्वारमुक्त्वा पुराधिपम् ॥ १

सा च प्रविश्य सस्त्रीके दृष्टे पत्यौ विलक्षिते। स्वं वेषं कारयित्वा तां निर्याहीत्यवदत्स्त्रियम् ॥ १

सा च निर्गत्य रात्रौ स्त्री तद्वेषैव ततो ययौ। तस्थौ शक्तिमती तत्र तेन भर्त्रा समं तु सा ॥ १

प्रातश्च राजाधिकृतैरेत्य यावन्निरूप्यते। तावत्स्वपत्न्यैव युतः सर्वैः स ददृशे वणिक् ॥ १

तद्बुद्ध्वा यक्षभवनान्मृत्योरिव मुखान्नृपः। दण्डयित्वा पुराध्यक्षं वणिजं तममोचयत् ॥ १

एवं शक्तिमती पूर्वं ररक्ष प्रज्ञया पतिम्। अहं तथैव भर्तारं गत्वा रक्षामि युक्तितः ॥ १

इति देवस्मिता श्वश्रूं रहः उक्त्वा तपस्विनी। स्वचेटिकाभिः सहिता वणिग्वेषं चकार सा ॥ १

आरुह्य च प्रवहणं वणिज्याव्याजतस्ततः। कटाहद्वीपमगमद्यत्र सोऽस्याः पतिः स्थितः ॥ १

गत्वा तं च पतिं तत्र वणिङ्मध्ये ददर्श सा। गुहसेनं समाश्वासमिव मूर्तिधरं बहिः ॥ १

सोऽपि तां पुरुषाकारां दूराद्दृष्ट्वा पिबन्निव। प्रियायाः सदृशः कोऽयं वणिक्स्यादित्यचिन्तयत् ॥ १

सा च देवस्मिता तत्र भूपं गत्वा व्यजिज्ञपत्। विज्ञप्तिर्मेऽस्ति तत्सर्वाः संघट्यन्तां प्रजा इति ॥ १

ततः सर्वान्समानीय राजा पौरान्सकौतुकः। का ते विज्ञप्तिरस्तीति वणिग्वेषामुवाच ताम् ॥ १

ततो देवस्मितावादीदिह मध्ये मम स्थिताः। पलाय्य दासाश्चत्वारस्तान्मे देवः प्रयच्छतु ॥ १

अथ तामवदद्राजा सर्वे पौरा इमे स्थिताः। तत्सर्वान्प्रत्यभिज्ञाय निजान्दासान्गृहाण तान् ॥ १

ततस्तया जगृहिरे स्वगृहे प्राक्खलीकृताः। वणिक्सुतास्ते चत्वारः शिरःस्वाबद्धशाटकाः ॥ १

सार्थवाहसुता एते कथं दासा भवन्ति ते। इति क्रुद्धाश्च तामूचुस्तत्रस्था वणिजस्तदा ॥ १

ततः प्रत्यब्रवीत्सा तान्यदि न प्रत्ययोऽस्ति वः। ललाटं प्रेक्ष्यतामेषां शुनः पादाङ्कितं मया ॥ १

तथेति तेषामुन्मोच्य चतुर्णां शीर्षपट्टकान्। सर्वेऽपि ददृशुस्तत्र शुनःपादं ललाटगम् ॥ १

लज्जितेऽथ वणिग्ग्रामे राजा संजातविस्मयः। किमेतदिति पप्रच्छ स तां देवस्मितां स्वयम् ॥ १

सा शशंस यथावृत्तं सर्वेऽपि जहसुर्जनाः। न्याय्यास्ते भवतीदासा इति तां चावदन्नृपः ॥ १

ततोऽन्ये वणिजस्तेषां चतुर्णां दास्यमुक्तये। ददुस्तस्यै धनं भूरि साध्व्यै दण्डं च भूपतेः ॥ १

आदाय तद्धनमवाप्य पतिं च तं स्वं देवस्मिता सकलसज्जनपूजिता सा।
प्रत्याययौ निजपुरीमथ ताम्रलिप्तीं नास्या बभूव च पुनः प्रियविप्रयोगः ॥ १

इति स्त्रियो देवि महाकुलोद्गता विशुद्धधीरैश्चरितैरुपासते।
सदैव भर्तारमनन्यमानसाः पतिः सतीनां परमं हि दैवतम् ॥ १

इत्याकर्ण्य वसन्तकस्य वदनादेतामुदारां कथां
मार्गे वासवदत्तया नवपरित्यक्ते पितुर्वेश्मनि ।
तल्लज्जासदनं विधाय विदधे वत्सेश्वरे भर्तरि
प्राक्प्रौढप्रणयावबद्धमपि तद्भक्त्येकतानं मनः ॥ १९६

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे कथामुखलम्बके पञ्चमस्तरङ्गः ।

षष्ठस्तरङ्गः ।

अथ विन्ध्यान्तरे तत्र वत्सराजस्य तिष्ठतः । पार्श्वं चण्डमहासेनप्रतीहारः समाययौ ॥ १
स चागत्य प्रणम्यैनं राजानमिदमब्रवीत् । राजा चण्डमहासेनस्तव संदिष्टवानिदम् ॥ २
युक्तं वासवदत्ता यत्स्वयमेव त्वया हृता । तदर्थमेव हि मया त्वमानीत इहाभवः ॥ ३
संयतस्य च नैवेह दत्तैषा ते मया स्वयम् । नैवमस्मासु ते प्रीतिर्भवेदिति विशङ्किना ॥ ४
तदिदानीमविधिना ममास्या दुहितुर्यथा । न विवाहो भवेद्राजन्प्रतीक्षेथास्तथा मनाक् ॥ ५
गोपालको हि न चिराद्द्रष्टैष्यति मत्सुतः । स चास्याः स्वसुरुद्वाहं यथाविधि विधास्यति ॥ ६
इतीमं वत्सराजाय संदेशमवधार्य सः । तत्तद्वासवदत्तायै प्रतीहारो न्यवेदयत् ॥ ७
ततः सानन्दया साकं तया वासवदत्तया । हृष्टो वत्सेश्वरश्चक्रे कौशाम्बीगमने मनः ॥ ८
गोपालकस्यागमनं प्रतीक्षेथां युवामिह । तेनैव सह पश्चाच्च कौशाम्बीमागमिष्यथः ॥ ९
इत्युक्त्वा स्थापयामास स तत्रैव महीपतिः । श्वाशुरं तं प्रतीहारं स्वमित्रं च पुलिन्दकम् ॥ १०
ततोऽनुयातो नागेन्द्रैः स्रवद्भिर्मदनिर्झरान् । अनुरागागतैर्विन्ध्यप्राग्भारैरिव जङ्गमैः ॥ ११
तुरंगसैन्यसंघातखुराघातसशब्दया । स्तूयमान इवोत्क्रान्तबन्दिसंदर्भया भुवा ॥ १२
नभोविलङ्घिभिः सेनारजोराशिभिरुद्गतैः । सपक्षभूभृदुद्गामशङ्कां कुर्वञ्छतक्रतोः ॥ १३
स प्रतस्थे ततो देव्या सह वासवदत्तया । स्वपुरीं प्रति राजेन्द्रः प्रातरेवापरेऽहनि ॥ १४
ततश्च दिवसैर्द्वित्रैर्विषयं समवाप्य सः । विशश्राम निशामेकां रुमण्वन्मन्दिरे नृपः ॥ १५
अन्येद्युस्तां च कौशाम्बीं चिरात्प्राप्तमहोत्सवः । मार्गोन्मुखोन्मुखजनां प्रविवेश प्रियासखः ॥ १६
तदा च स्त्रीभिरारब्धमङ्गलस्नानमण्डना । चिरादुपागते पत्यौ बभौ नारीव सा पुरी ॥ १७
ददृशुश्चात्र पौरास्तं वत्सराजं वधूसखम् । प्रशान्तशोकाः शिखिनः सविद्युतमिवाम्बुदम् ॥ १८
हर्म्यप्रस्थाश्च विदधुः पौरनार्यो मुखैर्नभः । व्योमगङ्गातटोत्फुल्लहेमाम्बुरुहविभ्रमैः ॥ १९
ततः स्वं राजभवनं वत्सराजो विवेश सः । नृपश्रियेवापरया सह वासवदत्तया ॥ २०
सेवागतनृपाकीर्णं मागधोद्गीतमङ्गलम् । सुप्तप्रबुद्धमिव तद्रेजे राजगृहं तदा ॥ २१
अथ वासवदत्ताया भ्राता गोपालकोऽचिरात् । आययौ सह कृत्वा तौ प्रतीहारपुलिन्दकौ ॥ २२
कृतप्रत्युद्गमं राज्ञा तमानन्दमिवापरम् । प्राप वासवदत्ता सा प्रहर्षोत्फुल्ललोचना ॥ २३
अमुं भ्रातरमेतस्याः पश्यन्त्या मा स्म भूत्त्रपा । इत्येव तस्यास्तत्कालं रुरोधाश्रु विलोचने ॥ २४
पितृसंदेशवाक्यैश्च तेन प्रोत्साहिताथ सा । मेने कृतार्थमात्मानं स्वजनेन समागतम् ॥ २५
ततो यथावद्भूते तस्या वत्सेश्वरस्य च । व्यग्रो गोपालकोऽन्येद्युस्तत्रोद्वाहमहोत्सवे ॥ २६
रतिवल्लीनवोद्भिन्नमिव पल्लवमुज्ज्वलम् । पाणिं वासवदत्तायाः सोऽथ वत्सेश्वरोऽग्रहीत् ॥ २७
सापि प्रियकरस्पर्शसान्द्रानन्दनिमीलिता । सकम्पस्वेददिग्धाङ्गी गाढरोमाञ्चचर्चिता ॥ २८
सुसंमोहनवायव्यवारुणास्त्रैर्निरन्तरैः । विद्धेव पुष्पचापेन तत्क्षणं समलक्ष्यत ॥ २९
दृशि धूमाभिताम्रायां तस्या वह्निप्रदक्षिणे । मदिरा मदमाधुर्यसूत्रपातमिवाकरोत् ॥ ३०
गोपालकार्पितै रत्नै राज्ञां चोपायनैस्तदा । पूर्णकोषो दधौ सत्यां वत्सेशो राजराजताम् ॥ ३१
निर्वर्तितविवाहौ तावादौ लोकस्य चक्षुषि । वधूवरौ विविशतुः पश्चात्स्वे वासवेश्मनि ॥ ३२

अथ संमानयामास पट्टबन्धादिना स्वयम्। निजोत्सवे वत्सराजो गोपालकपुलिन्दकौ ॥
राज्ञां संमानननार्थं च पौराणां च यथोचितम्। यौगन्धरायणस्तेन रुमण्वांश्च न्ययुज्यत ॥
ततोऽब्रवीद्रुमण्वन्तमेवं यौगन्धरायणः। राज्ञा कष्टे नियुक्तौ स्वो लोकचित्तं हि दुर्ग्रहम् ॥
अरञ्जितश्च बालोऽपि रोषमुत्पादयेद्ध्रुवम्। तथा च शृण्विमां बाल विनष्टककथां सखे ॥
बभूव रुद्रशर्माख्यः कश्चन ब्राह्मणः पुरा। बभूवतुश्च तस्य द्वे गृहिण्यौ गृहमेधिनः ॥
एका सुतं प्रसूयैव तस्य पञ्चत्वमाययौ। तत्सुतोऽपरमातुश्च हस्ते तेनार्पितोऽथ सः ॥
सा च किंचिद्विवृद्धस्य रूक्षं तस्याशनं ददौ। सोऽपि तेनाभवद्बालो धूसराङ्गः पृथूदरः ॥
मातृहीनस्त्वयायं मे कथं शिशुरुपेक्षितः। इति तामपरां पत्नीं रुद्रशर्माथ सोऽभ्यधात् ॥
सेव्यमानोऽपि हि स्नेहैरीदृगेव किमप्यसौ। किं करोम्यहमस्येति साप्येवं पतिमब्रवीत् ॥
नूनमेवंस्वभावोऽयमिति मेने च स द्विजः। स्त्रीणामलीकमुग्धं हि वचः को मन्यते मृषा ॥
बाल एव विनष्टोऽयमिति बालविनष्टकः। नाम्ना स बालकस्तत्र संवृत्तोऽभूत्पितुर्गृहे ॥
असावपरमाता मां कदर्थयति सर्वदा। वरं प्रतिक्रियां कांचित्तदेतस्याः करोम्यहम् ॥
इति संचिन्तयामास सोऽथ बालविनष्टकः। व्यतीतपञ्चवर्षोऽपि वयसा बत बुद्धिमान् ॥
अथागतं राजकुलाज्जगाद पितरं रहः। तात द्वौ मम तातौ स्त इत्यविस्पष्टया गिरा ॥
एवं प्रत्यहमाह स्म स बालः सोऽपि तत्पिता। तां सोपपतिमाशङ्क्य भार्यां स्पर्शेऽप्यवर्जयत् ॥
सापि दध्यौ विना दोषं कस्मान्मे कुपितः पतिः। किंचिद्बालविनष्टेन कृतं किंचिद्भवेदिति ॥
सादरं स्नपयित्वा च दत्त्वा स्निग्धं च भोजनम्। कृत्वोत्सङ्गे च प्रपच्छ सा तं बालविनष्टकम् ॥
पुत्र किं रोषितस्तातो रुद्रशर्मा त्वया मयि। तच्छ्रुत्वैव स तां बालो जगादापरमातरम् ॥
अतोऽधिकं ते कर्तास्मि न चेदद्यापि शाम्यसि। स्वपुत्रपोषिणी कस्मात्त्वं मां क्लिश्नासि सर्वदा ॥
तच्छ्रुत्वा प्रणता सा तं बभाषे शपथोत्तरम्। पुनर्नैवं करिष्यामि तत्प्रसादय मे पतिम् ॥
ततः स बालोऽवादीत्तां तद्गृहायातस्य मत्पितुः। आदर्शं दर्शयत्वेका त्वच्चेटी वेद्म्यहं परम् ॥
तथेत्युक्त्वा तया चेटी नियुक्ता रुद्रशर्मणः। आगतस्य क्षणात्तस्य दर्शयामास दर्पणम् ॥
तत्र तस्यैव तत्कालं प्रतिबिम्बं स दर्शयन्। सोऽयं द्वितीयस्तातो मे तातेत्याह स्म बालकः ॥
तच्छ्रुत्वा विगताशङ्कस्तामकारणदूषिताम्। पत्नीं प्रति प्रसन्नोऽभूद्रुद्रशर्मा तदैव सः ॥
एवमुत्पादयेद्दोषं बालोऽपि विकृतिं गतः। तदयं रञ्जनीयो नः सम्यक्परिकरोऽखिलः ॥
इत्युक्त्वा सरुमण्वत्कः सोऽथ यौगन्धरायणः। सर्वं संमानयामास वत्सराजोत्सवे जनम् ॥
तथा च राजलोकं तौ रञ्जयामासतुर्यथा। मदेकप्रवणावेताविति सर्वोऽप्यमन्यत ॥
तौ चाप्यपूजयद्राजा सचिवौ स्वकरार्पितैः। वस्त्राङ्गरागाभरणैर्ग्रामैश्च सवसन्तकौ ॥
कृतोद्वाहोत्सवः सोऽथ युक्तो वत्सेश्वरस्तया। मनोरथफलान्येव मेने वासवदत्तया ॥
चिरादुन्मुद्रितः स्नेहात्कोऽप्यभूत्सततं तयोः। निशान्तक्लिष्टचक्राह्वरीतिहृद्यो रसक्रमः ॥
यथा यथा च दंपत्योः प्रौढिं परिचयो ययौ। तयोस्तथा तथा प्रेम नवीभावमिवाययौ ॥
गोपालकोऽथ वीवाहकर्तुः संदेशतः पितुः। प्रययौ शीघ्रमावृत्तिं वत्सराजेन याचितः ॥
सोऽपि वत्सेश्वरो जातु चपलः पूर्वसंगताम्। गुप्तं विरचितां नाम भेजेऽन्तःपुरचारिकाम् ॥
तद्गोत्रस्खलितो देवीं पादलग्नः प्रसादयन्। लेभे सुभगसाम्राज्यमभिषिक्तस्तदश्रुभिः ॥
किं च बन्धुमतीं नाम राजपुत्रीं भुजार्जिताम्। गोपालकेन प्रहितां कन्यां देव्या उपायनम् ॥
तया मञ्जुलिकेत्येव नाम्नान्येनैव गोपिताम्। अपरामिव लावण्यजलधेरुद्गतां श्रियम् ॥
वसन्तकसहायः सन्दृष्ट्वोद्यानलतागृहे। गान्धर्वविधिना गुप्तमुपयेमे स भूपतिः ॥
तच्च वासवदत्तास्य ददर्श निभृतस्थिता। प्रचुकोप च बद्ध्वा च सा निनाय वसन्तकम् ॥
ततः प्रव्राजिकां तस्याः सखीं पितृकुलागताम्। स सांकृत्यायनीं नाम शरणं शिश्रिये नृपः ॥

॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## लावाणको नाम तृतीयो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

### प्रथमस्तरङ्गः ।

निर्विघ्नविश्वनिर्माणसिद्धये यदनुग्रहम् । मन्ये स वव्रे धातापि तस्मै विघ्नजिते नमः ॥ १
आश्लिष्यमाणः प्रियया शंकरोऽपि यदाज्ञया । उत्कम्पते स भुवनं जयत्यसमसायकः ॥ २
एवं स राजा वत्सेशः क्रमेण सुतरामभूत् । प्राप्तवासवदत्तस्तत्सुखासक्तैकमानसः ॥ ३
यौगन्धरायणश्चास्य महामन्त्री दिवानिशम् । सेनापती रुमण्वांश्च राज्यभारमुदूहतुः ॥ ४
स कदाचिच्च चिन्तावानानीय रजनौ गृहम् । निजगाद रुमण्वन्तं मन्त्री यौगन्धरायणः ॥ ५
पाण्डवान्वयजातोऽयं वत्सेशोऽस्य च मेदिनी । कुलक्रमागता कृत्स्ना पुरं च गजसाह्वयम् ॥ ६
तत्सर्वमजिगीषेण त्यक्तमेतेन भूभृता । इहैव चास्य संजातं राज्यमेकत्र मण्डले ॥ ७
स्त्रीमद्यमृगयासक्तो निश्चिन्तो ह्येष तिष्ठति । अस्मासु राज्यचिन्ता च सर्वानेन समर्पिता ॥ ८
तदस्माभिः स्वबुद्ध्यैव तथा कार्यं यथैव तत् । समग्रपृथिवीराज्यं प्राप्नोत्येव क्रमागतम् ॥ ९
एवं कृते हि भक्तिश्च मन्त्रिता च कृता भवेत् । सर्वं च साध्यते बुद्ध्या तथा चैतां कथां शृणु ॥ १०
आसीत्कश्चिन्महासेन इति नाम्ना पुरा नृपः । स चान्येनाभियुक्तोऽभून्नृपेणातिबलीयसा ॥ ११
ततः समेत्य सचिवैः स्वकार्यभ्रंशरक्षिभिः । दापितः स महासेनो दण्डं तस्मै किल द्विषे ॥ १२
दत्तदण्डश्च राजासौ मानी भृशमतप्यत । किं मया विहितः शत्रोः प्रणाम इति चिन्तयन् ॥ १३
तेनैव चास्य गुल्मोऽन्तः शोकेन ह्युदपद्यत । गुल्माक्रान्तश्च शोकेन स मुमूर्षुरभून्नृपः ॥ १४
ततस्तदौषधासाध्यं मत्वैको मतिमान्भिषक् । मृता ते देव देवीति मिथ्या वक्ति स्म तं नृपम् ॥ १५
तच्छ्रुत्वा सहसा भूमौ पततस्तस्य भूपतेः । शोकावेगेन बलिना स गुल्मः स्वयमस्फुटत् ॥ १६
रोगोत्तीर्णश्चिरं देव्या तयैव च सहेप्सितान् । भोगान्स बुभुजे राजा जिगाय च रिपून्पुनः ॥ १७
तद्यथा स भिषग्बुद्ध्या चक्रे राजहितं तथा । वयं राजहितं कुर्मः साधयामोऽस्य मेदिनीम् ॥ १८
परिपन्थी च तत्रैकः प्रद्योतो मगधेश्वरः । पार्ष्णिग्राहः स हि सदा पश्चात्कोपं करोति नः ॥ १९
तत्तस्य कन्यकारत्नमस्ति पद्मावतीति यत् । तदस्य वत्सराजस्य कृते याचामहे वयम् ॥ २०
छन्नां वासवदत्तां च स्थापयित्वा स्वबुद्धितः । दत्त्वाग्निं वासके ब्रूमो देवी दग्धेति सर्वतः ॥ २१
नान्यथा तां सुतां राज्ञे ददाति मगधाधिपः । एतदर्थं स हि मया प्रार्थितः पूर्वमुक्तवान् ॥ २२
नाहं वत्सेश्वरायैतां दास्याम्यात्माधिकां सुताम् । तस्य वासवदत्तायां स्नेहो हि सुमहानिति ॥ २३
सत्यां देव्यां च वत्सेशो नैवान्यां परिणेष्यति । देवी दग्धेति जातायां ख्यातौ सर्वं तु सेत्स्यति ॥ २४
पद्मावत्यां च लब्धायां संबन्धी मगधाधिपः । पश्चात्कोपं न कुरुते सहायत्वं च गच्छति ॥ २५

र्वां दिशं जेतुं गच्छामोऽन्याश्च तत्क्रमात्। इत्थं वत्सेश्वरस्यैतां साधयामोऽखिलां भुवम्॥ २६
गेषु चास्मासु पृथिवीमेष भूपतिः। प्राप्नुयादेव पूर्वं हि दिव्या वागेवमब्रवीत्॥ २७
मन्त्रिवृषभाद्वचो यौगन्धरायणात्। साहसं चैतदाशङ्क्य रुमण्वांस्तमभाषत॥ २८
पद्मावतीहेतोः क्रियमाणः कदाचन। दोषायास्माकमेव स्यात्तथा ह्यत्र कथां शृणु॥ २९
ाकन्दिका नाम नगरी जाह्नवीतटे। तस्यां मौनव्रतः कश्चिदासीत्प्रव्राजकः पुरा॥ ३०
भिक्षाशनोऽनेकपरिव्राट्परिवारितः। आस्त देवकुलस्यान्तर्मठिकायां कृतस्थितिः॥ ३१
जातु भिक्षार्थमेकस्य वणिजो गृहे। स ददर्श शुभां कन्यां भिक्षामादाय निर्गताम्॥ ३२
द्भुतरूपां तां स कामवशगः शठः। हा हा कष्टमिति स्माह वणिजस्तस्य शृण्वतः॥ ३३
क्षश्च ततो जगाम निलयं निजम्। ततस्तं स वणिग्गत्वा रहः पप्रच्छ विस्मयात्॥ ३४
मकस्मात्त्वं मौनं त्यक्त्वोक्तवानिति। तच्छ्रुत्वा वणिजं तं च परिव्राडेवमब्रवीत्॥ ३५
ं कन्या ते विवाहोऽस्या यदा भवेत्। तदा ससुतदारस्य क्षयः स्यात्तव निश्चितम्॥ ३६
क्ष्य दुःखं मे जातं भक्तो हि मे भवान्। तेनैवमुक्तवानस्मि त्यक्त्वा मौनं भवत्कृते॥ ३७
न्यका नक्तं मञ्जूषायां निवेशिता। उपरि न्यस्तदीपायां गङ्गायां क्षिप्यतां त्वया॥ ३८
तिपद्यैतद्गत्वा सोऽथ वणिग्भयात्। नक्तं चक्रे तथा सर्वं निर्विमर्शा हि भीरवः॥ ३९
ऽपि तत्कालमुवाचानुचरान्निजान्। गङ्गां गच्छत तत्रान्तर्वहन्तीं यां च पश्यथ॥ ४०
ां मञ्जूषां गुप्तमानयतेह ताम्। उद्घाटनीया न च सा श्रुतेऽप्यन्तर्ध्वनाविति॥ ४१
गता यावद्गङ्गां न प्राप्नुवन्ति ते। राजपुत्रः किमप्येकस्तावत्तस्यामवातरत्॥ ४२
वणिजा क्षिप्तां मञ्जूषां वीक्ष्य दीपतः। भृत्यैरानाय्य सहसा कौतुकादुदघाटयत्॥ ४३
न्तः कन्यां तां हृदयोन्मादकारिणीम्। उपयेमे च गान्धर्वविधिना तां च तत्क्षणम्॥ ४४
ं च गङ्गायां तथैवोर्ध्वस्थदीपिकाम्। कृत्वा तत्याज निःक्षिप्य घोरं वानरमन्तरे॥ ४५
स्मिन्संप्राप्तकन्यारत्ने नृपात्मजे। आययुस्तस्य चिन्वन्तः शिष्याः प्रव्राजकस्य ते॥ ४६
च मञ्जूषां गृहीत्वा तस्य चान्तिकम्। निन्युः प्रव्राजकस्यैनां सोऽथ हृष्टो जगाद तान्॥ ४७
ाधये मन्त्रमादायैतामिहोपरि। अधस्तूष्णीं च युष्माभिः शयितव्यमिमां निशाम्॥ ४८
तां स मञ्जूषामारोप्य मठिकोपरि। स परिव्राड्विवृतवान्वणिक्कन्याभिलाषुकः॥ ४९
ा निर्गत्य वानरो भीषणाकृतिः। तमभ्यधावत्स्वकृतो मूर्तिमानिव दुर्नयः॥ ५०
शनैर्नासां नखैः कर्णौ च तत्क्षणम्। चिच्छेद पापस्य कपिर्निग्रहज्ञ इव क्रुधा॥ ५१
थ स ततः परिव्राडवतीर्णवान्। यत्नस्तम्भितहासाश्च शिष्यास्तं ददृशुस्तदा॥ ५२
व तत्सर्वं जहास सकलो जनः। ननन्द स वणिक्सा च तत्सुता प्राप्तसत्पतिः॥ ५३
ा हास्यत्वं गतः प्रव्राजकस्तथा। व्याजप्रयोगस्यासिद्धौ वयं गच्छेम जातुचित्॥ ५४
विरहो राज्ञो वासवदत्तया। एवं रुमण्वतोक्तः सन्नाह यौगन्धरायणः॥ ५५
ासिद्धिः स्यादनुद्योगे च निश्चितम्। राजनि व्यसनिन्येतन्नश्येदपि यथास्थितम्॥ ५६
त्रताख्यातिरस्माकं चान्यथा भवेत्। स्वामिसंभावनायाश्च भवेम व्यभिचारिणः॥ ५७
राज्ञो हि प्रज्ञोपकरणं मता। सचिवः को भवेत्तेषां कृते वाप्यथवाकृते॥ ५८
सेद्धेस्तु तत्प्रज्ञैवार्थसाधनम्। त एव चेन्निरुत्साहाः श्रियो दत्तो जलाञ्जलिः॥ ५९
ुश्चण्डमहासेनाद्विशङ्कसे। स सपुत्रश्च देवी च वचः कुरुत एव मे॥ ६०
धीशाणां धुर्यं यौगन्धरायणम्। प्रमादशङ्किहृदयो रुमण्वान्पुनरब्रवीत्॥ ६१
योगार्त्या सविवेकोऽपि बाध्यते। किं पुनर्वत्सराजोऽयमत्र चैतां कथां शृणु॥ ६२
ाख्यो राजा मतिमतां वरः। श्रावस्तीति पुरी तस्य राजधानी बभूव च॥ ६३
मिभवद्वणिगेको महाधनः। तस्योदपद्यतानन्यसदृशी दुहिता किल॥ ६४

यताधरदलं चलोर्णाचारुकेसरम् । मुखं दधानं साम्राज्यलक्ष्मीलीलाम्बुजोपमम् ॥ ६९
वान्यनृपश्रीभिर्भीत्येव निजलाञ्छनैः । उज्झितैरङ्कितं मूर्ध्नोः पदयोश्छत्रचामरैः ॥ ७०
हर्षभरापूरपीडनोत्फुल्लया दृशा । सास्रया स्रवतीवास्मिन्सुतस्नेहं महीपतौ ॥ ७१
स्स्वपि च यौगन्धरायणादिषु मन्त्रिषु । गगनादुच्चचारैवं काले तस्मिन्सरस्वती ॥ ७२
देवावतारोऽयं राजञ्जातस्तवात्मजः । नरवाहनदत्तं च जानीह्येनमिहाख्यया ॥ ७३
न भवितव्यं च दिव्यं कल्पमतन्द्रिणा । सर्वविद्याधरेन्द्राणामचिराच्चक्रवर्तिना ॥ ७४
क्त्वा विरतं वाचा तत्क्षणं नभसः क्रमात् । पुष्पवर्षैर्निपतितं प्रसृतं दुन्दुभिस्वनैः ॥ ७५
सुरकृतारम्भजनिताभ्यधिकादरम् । स राजा सुतरां हृष्टश्चकार परमुत्सवम् ॥ ७६
मुस्तूर्यनिनदा नभस्तो मन्दिरोद्गताः । विद्याधरेभ्यः सर्वेभ्यो राजजन्मेव शंसितुम् ॥ ७७
ग्रेष्वनिलोद्धूताः शोणरागाः स्वकान्तिभिः । पताका अपि सिन्दूरमन्योन्यमकिरन्निव ॥ ७८
साङ्गस्मरोत्पत्तितोषादिव सुराङ्गना । समागताः प्रतिपदं ननृतुर्वारयोषितः ॥ ७९
यत च सर्वा सा समानविभवा पुरी । राज्ञो बद्धोत्सवात्प्राप्तैर्नववस्त्रविभूषणैः ॥ ८०
ह्यर्थान्नृपे तस्मिन्वर्षत्यर्थ्यनुजीविषु । कोषादृते न तत्रत्यो दधौ कश्चन रिक्तताम् ॥ ८१
यपूर्वाः स्वाचारदक्षिणा नर्तितापराः । सत्प्राभृतोत्तरास्तैस्तैः सुरक्षिभिरधिष्ठिताः ॥ ८२
ातोद्यनिर्ह्लादाः साक्षाद्दिश इवाखिलाः । समन्तादाययुश्चात्र सामन्तान्तःपुराङ्गनाः ॥ ८३
नृत्तमयी तत्र पूर्णपात्रमयं वचः । व्यवहारो महात्यागमयस्तूर्यमयो ध्वनिः ॥ ८४
पेष्टमयो लोकश्चारणैकमयी च भूः । आनन्दमय्यां सर्वस्यामपि तस्यामभूत्पुरि ॥ ८५
महोत्सवस्तत्र भूरिवासरवर्धितः । निर्वर्तते स्म स समं पूर्णैः पौरमनोरथैः ॥ ८६

सोऽपि व्रजत्सु दिवसेष्वथ राजपुत्रो वृद्धिं शिशुः प्रतिपदिन्दुरिवाजगाम ।
पित्रा यथाविधिनिवेदितदिव्यवाणीनिर्दिष्टपूर्वनरवाहनदत्तनाम्ना ॥ ८७
यानि स्फुरन्मसृणमुग्धनखप्रभाणि द्वित्राणि यानि च खचद्दशनाङ्कुराणि ।
तानि स्खलन्ति ददतो वदतश्च तस्य दृष्ट्वा निशम्य च पदानि पिता तुतोष ॥ ८८

अथ तस्मै मन्त्रिवराः स्वसुतानानीय राजपुत्राय ।
शिशवे शिशून्महीपतिहृदयानन्दान्समर्पयामासुः ॥ ८९
यौगन्धरायणः प्राङ्मरुभूतिं हरिशिखं रुमण्वांश्च ।
गोमुखमित्यकनामा तपन्तकाख्यं वसन्तकश्च सुतम् ॥ ९०
शान्तिकरोऽपि पुरोधा भ्रातृसुतं शान्तिसोममपरं च ।
वैश्वानरमार्पितवान्पिङ्गलिकापुत्रकौ यमजौ ॥ ९१

तस्मिन्क्षणे च नभसो निपतात दिव्या नान्दीनिनादसुभगा सुरपुष्पवृष्टिः ।
राजा ननन्द च तदा महिषीसमेतः सत्कृत्य तत्र सचिवात्मजमण्डलं तत् ॥ ९२
बाल्येऽपि तैरभिमतैरथ मन्त्रिपुत्रैः षड्भिस्तदेकनिरतैश्च स राजपुत्रः ।
युक्तः सदैव नरवाहनदत्त आसीद्युक्तो गुणैरिव महोदयहेतुभूतैः ॥ ९३

तं च क्रीडाकलितललिताव्यक्तनर्माभिलाषं
यान्तं प्रीतिप्रवणमनसामङ्कतोऽङ्कं नृपाणाम् ।
पुत्रं स्मेराननसरसिजं सादरं पश्यतस्ते
बद्धानन्दाः किमपि दिवसा वत्सराजस्य जग्मुः ॥ ९४

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे नरवाहनदत्तजननलम्बके तृतीयस्तरङ्गः ।

समाप्तश्चायं नरवाहनदत्तजननलम्बकश्चतुर्थः ।

॥ श्रीः ॥

## महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## चतुर्दारिका नाम पञ्चमो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

प्रथमस्तरङ्गः ।

मदघूर्णितवक्त्रोत्थैः सिन्दूरैश्छुरयन्महीम् । हेरम्बः पातु वो विघ्नान्स्वतेजोभिर्दहन्निव ॥
एवं स देवीसहितस्तस्थौ वत्सेश्वरस्तदा । नरवाहनदत्तं तमेकपुत्रं विवर्धयन् ॥
तद्रक्षाकातरं तं च दृष्ट्वा राजानमेकदा । यौगन्धरायणो मन्त्री विजनस्थितमब्रवीत् ॥
राजन्न राजपुत्रस्य कृते चिन्ताधुना त्वया । नरवाहनदत्तस्य विधातव्या कदाचन ॥
असौ भगवता भावी भर्गेण हि भवद्गृहे । सर्वविद्याधराधीशचक्रवर्ती विनिर्मितः ॥
विद्याप्रभावादेतच्च बुद्ध्वा विद्याधराधिपाः । गताः पापेच्छवः क्षोभं हृदयैरसहिष्णवः ॥
तद्विदित्वा च देवेन रक्षार्थं शशिमौलिना । एतस्य स्तम्भको नाम गणेशः स्थापितो निजः ॥
स च तिष्ठत्यलक्ष्यः सन्रक्षन्नेतं सुतं तव । एतच्च क्षिप्रमभ्येत्य नारदो मे न्यवेदयत् ॥
इति तस्मिन्वदत्येव मन्त्रिणि व्योममध्यतः । किरीटी कुण्डली दिव्यः खड्गी चावातरत्पुमान् ॥
प्रणतं कल्पितातिथ्यं क्षणाद्वत्सेश्वरोऽथ तम् । कस्त्वं किमिह ते कार्यमित्यपृच्छत्सकौतुकम् ॥
सोऽप्यवादीदहं मर्त्यो भूत्वा विद्याधराधिपः । संपन्नः शक्तिवेगाख्यः प्रभूताश्च ममारयः ॥ १
सोऽहं प्रभावाद्विज्ञाय भाव्यस्मच्चक्रवर्तिनम् । भवतस्तनयं द्रष्टुमागतोऽस्म्यवनीपते ॥ १
इत्युक्तवन्तं तं दृष्टभविष्यच्चक्रवर्तिनम् । प्रीतं वत्सेश्वरो हृष्टः पुनः पप्रच्छ विस्मयात् ॥ १
विद्याधरत्वं प्राप्येत कथं कीदृग्विधं च तत् । त्वया च तत्कथं प्राप्तमेतत्कथय नः सखे ॥ १
तच्छ्रुत्वा वचनं राज्ञः स तदा विनयानतः । विद्याधरः शक्तिवेगस्तमेवं प्रत्यवोचत ॥ १
राजन्निहैव पूर्वे वा जन्मन्याराध्य शंकरम् । विद्याधरपदं धीरा लभन्ते तदनुग्रहात् ॥ १
तच्चानेकविधं विद्याखड्गमालादिसाधनम् । मया च तद्यथाप्राप्तं कथयामि तथा शृणु ॥ १
एवमुक्त्वा स्वसंबद्धां शक्तिवेगः स संनिधौ । देव्या वासवदत्ताया कथामाख्यातवानिमाम् ॥ १
अभवद्वर्धमानाख्ये पुरे भूतलभूषणे । नाम्ना परोपकारीति पुरा राजा परंतपः ॥ १
तस्योन्नतिमतश्चाभून्महिषी कनकप्रभा । विद्युद्धाराधरस्येव सा तु निर्मुक्तचापला ॥ २
तस्यां तस्य च कालेन देव्यामजनि कन्यका । रूपदर्पोपशान्त्यै या लक्ष्म्या धात्रेव निर्मिता ॥ २
अवर्धत शनैः सा च लोकलोचनचन्द्रिका । पित्रा कनकरेखेति मातृनाम्ना कृतात्मजा ॥ २
एकदा यौवनस्थायां तस्यां राजा स तत्पिता । विजनोपस्थितां देवीं जगाद कनकप्रभाम् ॥ २
वर्धमाना सहैवैतत्समानोद्वाहचिन्तया । एषा कनकरेखा मे हृदयं देवि बाधते ॥ २
स्थानप्राप्तिविहीना हि गीतिवत्कुलकन्यका । उद्वेजिनी परस्यापि श्रूयमाणैव कर्णयोः ॥ २

द्येव कन्यका मोहादपात्रे प्रतिपादिता । यशसे न न धर्माय जायेतानुशयाय तु ॥ २६
कस्मै दीयते ह्येषा मया नृपतये सुता । कोऽस्याः समः स्यादिति मे देवि चिन्ता गरीयसी ॥ २७
श्रुत्वा सा विहस्यैवं बभाषे कनकप्रभा । त्वमेवमात्थ कन्या तु नेच्छत्युद्वाहमेव सा ॥ २८
द्यैव नर्मणा सा हि कृतकृत्रिमपुत्रका । वत्से कदा विवाहं ते द्रक्ष्यामीत्युदिता मया ॥ २९
तच्छ्रुत्वैव साक्षेपमेवं मां प्रत्यवोचत । मा मैवमम्ब दातव्या नैव कस्मैचिदप्यहम् ॥ ३०
द्वियोगो न चादिष्टः कन्यैवास्मि सुशोभना । अन्यथा मां मृतां विद्धि किंचिदस्त्यत्र कारणम् ॥ ३१
ां तयोक्ता त्वत्पार्श्वं राजन्विग्नाहमागता । तन्निषिद्धविवाहायाः का वरस्य विचारणा ॥ ३२
ो राज्ञीमुखाच्छ्रुत्वा समुद्भ्रान्तः स भूपतिः । कन्यकान्तःपुरं गत्वा तामवादीत्तदा सुताम् ॥ ३३
र्थयन्तेऽपि तपसा यं सुरासुरकन्यकाः । भर्तृलाभः कथं वत्से स निषिद्धः किल त्वया ॥ ३४
ात्पितुर्वचः श्रुत्वा भूतलन्यस्तलोचना । तदा कनकरेखा सा निजगाद नृपात्मजा ॥ ३५
त नैवेप्सितस्तावद्विवाहो मम सांप्रतम् । तत्तातस्यापि किं तेन कार्यं कश्चात्र वो ग्रहः ॥ ३६
ुक्तः स तया राजा दुहित्रा धीमतां वरः । परोपकारी स पुनरेवमेतामभाषत ॥ ३७
यादानादृते पुत्रि किं स्यात्किल्बिषशान्तये । न च बन्धुपराधीना कन्या स्वातन्त्र्यमर्हति ॥ ३८
तैव हि परस्यार्थे कन्यका नाम रक्ष्यते । बाल्यादृते विना भर्तुः कीदृक्तस्याः पितुर्गृहम् ॥ ३९
ुमत्यां हि कन्यायां बान्धवा यान्त्यधोगतिम् । वृषली सा वरश्चास्या वृषलीपतिरुच्यते ॥ ४०
तेनोदिता पित्रा राजपुत्री मनोगताम् । वाचं कनकरेखा सा तत्क्षणं समुदैरयत् ॥ ४१
ेवं तात तद्येन विप्रेण क्षत्रियेण वा । दृष्टा कनकपुर्याख्या नगरी कृतिना किल ॥ ४२
ै त्वयाहं दातव्या स मे भर्ता भविष्यति । नान्यथा तात मिथ्यैव कर्तव्या मे कदर्थना ॥ ४३
तयोक्ते सुतया स राजा समचिन्तयत् । दिष्ट्योद्वाहस्य तत्तावत्प्रसङ्गोऽङ्गीकृतोऽनया ॥ ४४
च कारणोत्पन्ना देवीयं कापि मद्गृहे । इयत्कथं विजानाति बाला भूत्वान्यथा ह्यसौ ॥ ४५
संचिन्त्य तत्कालं तथेत्युक्त्वा च तां सुताम् । उत्थाय दिनकर्तव्यं स चकार महीपतिः ॥ ४६
येद्युरास्थानगतो जगाद स च पार्श्वगान् । दृष्टा कनकपुर्याख्या पुरी युष्मासु केनचित् ॥ ४७
दृष्टा च सा तस्मै विप्राय क्षत्रियाय वा । मया कनकरेखा च यौवराज्यं च दीयते ॥ ४८
ापि नैव सास्माभिर्दर्शने देव का कथा । इति ते चावदन्सर्वे अन्योन्याननदर्शिनः ॥ ४९
राजा प्रतीहारमानीयादिशति स्म सः । गच्छ भ्रमय कृत्स्नेऽत्र पुरे पटहघोषणाम् ॥ ५०
ीहि यदि केनापि दृष्टा सा नगरी न वा । इत्यादिष्टः प्रतीहारः स तथेति विनिर्ययौ ॥ ५१
ात्य च समादिश्य तत्क्षणं राजपूरुषान् । भ्रमयामास पटहं कृतश्रवणकौतुकम् ॥ ५२

विप्रः क्षत्रयुवा वा कनकपुरीं योऽत्र दृष्टवान्नगरीम् ।
वदतु स तस्मै राजा ददाति तनयां च यौवराज्यं च ॥ ५३

चेतस्ततस्तत्र नगरे दत्तविस्मयम् । उदघोष्यत सर्वत्र पटहानन्तरं वचः ॥ ५४
पुरेऽस्मिन्कनकपुरीनामाद्य घोष्यते । या वृद्धैरपि नास्माभिर्दृष्टा जातु न च श्रुता ॥ ५५
ं चावदन्पौराः श्रुत्वा तां तत्र घोषणाम् । न पुनः कश्चिदेकोऽपि मया दृष्टेत्यभाषत ॥ ५६
च तन्निवास्येकः शक्तिदेव इति द्विजः । बलदेवतनूजस्तामशृणोत्तत्र घोषणाम् ॥ ५७
ुवा व्यसनी सद्यो द्यूतेन विधनीकृतः । अचिन्तयद्राजसुताप्रदानाकर्णनोन्मनाः ॥ ५८
ृारितनिःशेषवित्तस्य मम नाधुना । प्रवेशोऽस्ति पितुर्गेहे नापि पण्याङ्गनागृहे ॥ ५९
ादगतिकस्तावद्वरं मिथ्या ब्रवीम्यहम् । मया सा नगरी दृष्टेत्येवं पटहघोषकान् ॥ ६०
मां प्रत्येत्यविज्ञानं केन दृष्टा कदाहि सा । स्यादेवं च कदाचिन्मे राजपुत्र्या समागमः ॥ ६१
संचिन्त्य गत्वा तान्स राजपुरुषांस्तदा । शक्तिदेवो मया दृष्टा सा पुरीत्यवदन्मृषा ॥ ६२
ा तर्हि प्रतीहारपार्श्वमेहीति तत्क्षणम् । उक्तवद्भिश्च तैः साकं स प्रतीहारमभ्यगात् ॥ ६३

तस्मै तथैव चाशंसत्तत्पुरीदर्शनं मृषा। तेनापि सत्कृत्य ततो राजान्तिकमनीयत॥
राजाग्रेऽप्यविकल्पः संस्तथैव च तदब्रवीत्। द्यूततान्तस्य किं नाम किलवस्य हि दुष्करम्॥
राजापि निश्चयं ज्ञातुं ब्राह्मणं तं विसृष्टवान्। तस्याः कनकरेखाया दुहितुर्निकटं तदा॥
तया च स प्रतीहारमुखाज्ज्ञात्वान्तिकागतः। कच्चित्त्वया सा कनकपुरी दृष्टेत्यपृच्छयत॥
बाढं मया सा नगरी दृष्टा विद्यार्थिना सता। भ्रमता भुवमित्येवं सोऽपि तां प्रत्यभाषत॥
केन मार्गेण तत्र त्वं गतवान्कीदृशी च सा। इति भूयस्तया पृष्टः स विप्रोऽप्येवमब्रवीत्॥
इतो हरपुरं नाम नगरं गतवानहम्। ततोऽपि प्राप्तवानस्मि पुरीं वाराणसीं क्रमात्॥
वाराणस्याश्च दिवसैर्नगरं पौण्ड्रवर्धनम्। तस्मात्कनकपुर्याख्यां नगरीं तां गतोऽभवम्॥
दृष्टा मया च सा भोगभूमिः सुकृतकर्मणाम्। अनिमेषेक्षणास्वाद्यशोभा शक्रपुरी यथा॥
तत्राधिगतविद्यश्च कालेनाहमिहागमम्। इति तेनास्मि गतवान्पथा सापि पुरीदृशी॥
एवं विरचितोक्तौ च धूर्ते तस्मिन्द्विजन्मनि। शक्तिदेवे सहासं सा व्याजहार नृपात्मजा॥
अहो सत्यं महाब्रह्मन्दृष्टा सा नगरी त्वया। ब्रूहि ब्रूहि पुनस्तावत्केनासि गतवान्पथा॥
तच्छ्रुत्वा स यदा धाष्ट्यं शक्तिदेवोऽकरोत्पुनः। तदा तं राजपुत्री सा चेटीभिर्निरवासयत्॥
निर्वासिते ययौ चास्मिन्पितुः पार्श्वं तदैव सा। किं सत्यमाह विप्रोऽसाविति पित्राप्यपृच्छयत॥
ततश्च सा राजसुता जनकं निजगाद तम्। तात राजापि भूत्वा त्वमविचार्यैव चेष्टसे॥
किं न जानासि धूर्ता यद्वञ्चयन्ते जनानृजून्। स हि मिथ्यैव विप्रो मां प्रतारयितुमीहते॥
न पुनर्नगरी तेन दृष्टा सालीकवादिना। धूर्तैरनेककाराश्च क्रियन्ते भुवि वञ्चनाः॥
शिवमाधववृत्तान्तं तथाहि शृणु वच्मि ते। इत्युक्त्वा राजकन्या सा व्याजहार कथामिमाम्॥
अस्ति रत्नपुरं नाम यथार्थं नगरोत्तमम्। शिवमाधवसंज्ञौ च धूर्तौ तत्र बभूवतुः॥
परिवारीकृतानेकधूर्तौ तौ चक्रतुश्चिरम्। मायाप्रयोगनिःशेषमुषिताढ्यजनं पुरम्॥
एकदा द्वौ च तावेवं मन्त्रं विदधतुर्मिथः। इदं नगरमावाभ्यां कृत्स्नं तावद्विलुण्ठितम्॥
अतः संप्रति गच्छामो वस्तुमुज्जयिनीं पुरीम्। तत्र तु श्रूयते राज्ञः पुरोधाः सुमहाधनः॥
शंकरस्वामिनामा च तस्माद्युक्त्या हृतैर्धनैः। मालवस्त्रीविलासानां यास्यामोऽत्र रसज्ञताम्॥
आस्कन्दी दक्षिणार्धस्य स तत्र भ्रुकुटीमुखः। सप्तकुम्भीनिधानो हि कीनाशो गीयते द्विजैः॥
कन्यारत्नं च तस्यास्ति विप्रस्यैकमिति श्रुतम्। तदप्येतत्प्रसङ्गेन ध्रुवं तस्मादवाप्स्यते॥
इति निश्चित्य कृत्वा च मिथः कर्तव्यसंविदम्। शिवमाधवधूर्तौ तु पुरात्प्रययतुस्ततः॥
शनैश्चोज्जयिनीं प्राप्य माधवः सपरिच्छदः। राजपुत्रस्य वेषेण तस्थौ ग्रामे कचिद्बहिः॥
शिवस्त्वविकलं कृत्वा वर्णिवेषं विवेश ताम्। नगरीमेक एवाग्रे बहुमायाविचक्षणः॥
तत्राध्युवास सिप्राया मठिकां तीरसीमनि। दृश्यस्थापितमृद्दर्भभिक्षाभाण्डमृगाजिनाम्॥
स च प्रभातकालेषु घनयाङ्गं मृदालिपत्। अवीचिकर्दमालेपसूत्रपातमिवाचरन्॥
सरित्तोये च स चिरं निमज्ज्यासीदवाङ्मुखः। कुकर्मजामिवाभ्यस्यन्भविष्यन्तीमधोगतिम्॥
स्नानोत्थितोऽर्काभिमुखस्तस्थावूर्ध्वं चिरं च सः। शूलाधिरोपणौचित्यमात्मनो दर्शयन्निव॥
ततो देवाग्रतो गत्वा कुशकूर्चकरो जपन्। आस्त पद्मासनासीनः सदम्भचतुराननः॥
अन्तरा हृदयानीव साधूनां कैतवेन सः। स्वच्छान्याहृत्य पुष्पाणि पुरारिं पर्यपूजयत्॥
कृतपूजश्च भूयोऽपि मिथ्या जपपरोऽभवत्। दत्तावधानः कुसृतिष्विव ध्यानं ततान सः॥
अपराह्णे च भिक्षार्थी कृष्णसाराजिनाम्बरः। पुरि तद्वञ्चनामायाकटाक्ष इव सोऽभ्रमत्॥
आदाय द्विजगेहेभ्यो मौनी भिक्षात्रयं ततः। सदण्डाजिनकश्चक्रे त्रिः सत्यमिव खण्डशः॥ १
भागं ददौ च काकेभ्यो भागमभ्यागताय च। भागेन दम्भबीजेन कुक्षिभस्त्रामपूरयत्॥ १
पुनः स सर्वपापानि निजानि गणयन्निव। जपन्नावर्तयामास चिरं मिथ्याक्षमालिकाम्॥ १

मद्वितीयश्च स तस्थौ मठिकान्तरे। अपि सूक्ष्माणि लोकस्य तर्कस्थानानि चिन्तयन्॥ १०३
तेदिनं कुर्वन्कष्टं व्याजमयं तपः। स तत्रावर्जयामास नगरीवासिनां मनः॥ १०४
पस्वी शान्तोऽयमिति ख्यातिश्च सर्वतः। उदपद्यत तत्रास्य भक्तिनम्रेऽखिले जने॥ १०५
स द्वितीयोऽस्य सखा चारमुखेन तम्। विज्ञाय माधवोऽप्येतन्नगरीं प्रविवेश ताम्॥ १०६
वसतिं चात्र दूरे देवकुलान्तरे। स राजपुत्रच्छद्मा सन्स्नातुं सिप्रातटं ययौ॥ १०७
सानुचरो दृष्ट्वा देवाग्रे जपतत्परम्। तं शिवं परमप्रह्वो निपपातास्य पादयोः॥ १०८
च जनस्याग्रे नास्तीदृक्तापसोऽपरः। असकृद्धि मया दृष्टस्तीर्थान्येष भ्रमन्निति॥ १०९
तं विलोक्यापि दम्भस्तम्भितकंधरः। तथैवासीत्ततः सोऽपि माधवो वसतिं ययौ॥ ११०
गलित्वा चैकत्र भुक्त्वा पीत्वा च तावुभौ। मन्त्रयामासतुः शेषं कर्तव्यं यदतः परम्॥ १११
पश्चिमे स्वैरमागात्स्वमठिकां शिवः। माधवोऽपि प्रभाते स्वं धूर्तमेकं समादिशत्॥ ११२
त्वा गच्छ त्वं वस्त्रयुग्ममुपायनम्। शंकरस्वामिनः पार्श्वमिह राजपुरोधसः॥ ११३
: पराभूतो माधवो नाम गोत्रजैः। पित्र्यं बहु गृहीत्वार्थमागतो दक्षिणापथात्॥ ११४
तिपयैरन्यै राजपुत्रैरनुद्रुतः। स चेह युष्मदीयस्य राज्ञः सेवां करिष्यति॥ ११५
र्शनायाहं प्रेषितो यशसां निधे। इति त्वया सविनयं स च वाच्यः पुरोहितः॥ ११६
माधवेनोक्त्वा धूर्तः संप्रेषितस्तदा। जगामोपायनकरो गृहं तस्य पुरोधसः॥ ११७
सरे दत्त्वा प्राभृतं विजने च तत्। तस्मै माधवसंदेशं शंसति स्म यथोचितम्॥ ११८
ायनलोभात्तच्छ्रद्दधे कल्पितायतिः। उपप्रदानं लिप्सूनामेकं ह्याकर्षणौषधम्॥ ११९
ागते तस्मिन्धूर्तेऽन्येद्युः स माधवः। लब्धावकाशस्तमगात्स्वयं द्रष्टुं पुरोहितम्॥ १२०
टेकाकारै राजपुत्रापदेशिभिः। वृतः पार्श्वचरैरात्तकाष्ठखण्डकलाञ्छनैः॥ १२१
देतश्चैनमभ्यगात्स पुरोहितम्। तेनाप्यभ्युद्गमानन्दस्वागतैरभ्यनन्द्यत॥ १२२
सह स्थित्वा कथालापैः क्षणं च सः। आययौ तदनुज्ञातो माधवो वसतिं निजाम्॥ १२३
ह्नि पुनः प्रेष्य प्राभृतं वस्त्रयोर्युगम्। भूयोऽपि तमुपागच्छत्पुरोहितमुवाच च॥ १२४
पुरोधेन किल सेवार्थिनो वयम्। तेन त्वमाश्रितोऽस्माभिरर्थमात्रास्ति नः पुनः॥ १२५
प्राप्तिमाशङ्क्य तस्मात्सोऽथ पुरोहितः। प्रतिशुश्राव तत्तस्मै माधवाय समीहितम्॥ १२६
त्वा राजानमेतदर्थं व्यजिज्ञपत्। तद्गौरवेण राजापि तत्तथा प्रत्यपद्यत॥ १२७
च नीत्वा तं माधवं सपरिच्छदम्। नृपायादर्शयत्तस्मै स पुरोधाः सगौरवम्॥ १२८
माधवं दृष्ट्वा राजपुत्रोपमाकृतिम्। आदरेणानुजग्राह वृत्तिं चास्य प्रदिष्टवान्॥ १२९
सेवमानस्तं नृपं तस्थौ स माधवः। रात्रौ रात्रौ च मन्त्राय शिवेन समगच्छत॥ १३०
मद्गेहे इति तेन पुरोधसा। सोऽर्थितश्चाभवल्लोभादुपचारोपजीविना॥ १३१
चरैः साकं तस्यैवाशिश्रियद्गृहम्। विनाशहेतुर्वासाय मद्गुः स्कन्धं तरोरिव॥ १३२
त्रिममाणिक्यमयैराभरणैर्भृतम्। भाण्डं च स्थापयामास तदीये कोषवेश्मनि॥ १३३
तदुद्घाट्य तैस्तैर्व्याजार्धदर्शितैः। जहाराभरणैस्तस्य शष्पैरिव पशोर्मनः॥ १३४
व ततस्तस्मिन्पुरोधसि चकार सः। मान्द्यमल्पतराहारकृशीकृततनुर्मृषा॥ १३५
पयाहे च तं शय्योपान्तवर्तिनम्। पुरोहितं स वक्ति स्म धूर्तराजोऽल्पया गिरा॥ १३६
च्छरीरेऽस्मिन्वर्तते विषमा दशा। तद्विप्रवर कंचित्त्वं ब्राह्मणोत्तममानय॥ १३७
ग्रामि सर्वस्वमिहामुत्र च शर्मणे। अस्थिरे जीविते ह्यास्था का धनेषु मनस्विनः॥ १३८
पुरोधाश्च तेन दानोपजीवकः। एवं करोमीत्याह स्म सोऽपतच्चास्य पादयोः॥ १३९
ाह्मणं यं यमानिनाय पुरोहितः। विशेषेच्छानिभात्तं तं श्रद्दधे न स माधवः॥ १४०

ाशहेतुर्वासोऽयमाखोः स्कन्धे तरोरिव' इति पाठान्तरम्.

तद्दृष्ट्वा तस्य पार्श्वस्थो धूर्त एकोऽब्रवीदिदम् । न तावदस्मै सामान्यो विप्रः प्रायेण रोचते ॥
तद्य एष शिवो नाम सिप्रातीरे महातपाः । स्थितः संप्रति भात्यस्य न वेत्येतन्निरूप्यताम् ॥
तच्छ्रुत्वा माधवोऽवादीत्कृतार्तिस्तं पुरोहितम् । हन्त प्रसीदानय तं विप्रो नान्यो हि तादृशः ॥
इत्युक्तस्तेन च ययौ स शिवस्यान्तिकं ततः । पुरोधास्तमपश्यच्च रचितध्याननिश्चलम् ॥
उपाविशच्च तस्याग्रे ततः कृत्वा प्रदक्षिणम् । तत्क्षणं सोऽपि धूर्तोऽभूच्छनैरुन्मीलितेक्षणः ॥
ततः प्रणम्य तं प्रह्वः स उवाच पुरोहितः । न चेत्कुप्यसि तत्किंचित्प्रभो विज्ञापयाम्यहम् ॥
तन्निशम्य च तेनोष्ठपुटोन्नमनसंज्ञया । अनुज्ञातः शिवेनैवं तमवादीत्पुरोहितः ॥
इह स्थितो दाक्षिणात्यो राजपुत्रो महाधनः । माधवाख्यः स चास्वस्थः सर्वस्वं दातुमुद्यतः ॥
मन्यसे यदि तत्तुभ्यं स सर्वं तत्प्रयच्छति । नानानर्घमहारत्नमयालंकरणोज्ज्वलम् ॥
तच्छ्रुत्वा स शनैर्मुक्तमौनः किल शिवोऽब्रवीत् । ब्रह्मन्भिक्षाशनस्यार्थैः कोऽर्थो मे ब्रह्मचारिणः ॥
ततः पुरोहितोऽप्येवं स तं पुनरभाषत । मैवं वादीर्महाब्रह्मन्किं न वेत्स्याश्रमक्रमम् ॥
कृतदारो गृहे कुर्वन्देवपित्रतिथिक्रियाः । धनैस्त्रिवर्गं प्राप्नोति गृही ह्याश्रमिणां वरः ॥
ततः सोऽपि शिवोऽवादीत्कुतो मे दारसंग्रहः । नह्यहं परिणेष्यामि कुलाद्यादृशतादृशात् ॥
तच्छ्रुत्वा सुखभोग्यं च मत्वा तस्य तथा धनम् । स प्राप्तावसरो लुब्धः पुरोधास्तमभाषत ॥
अस्ति तर्हि सुता कन्या विनयस्वामिनीति मे । अतिरूपवती सा च तां च तुभ्यं ददाम्यहम् ॥
यच्च प्रतिग्रहधनं तस्मात्प्राप्नोषि माधवात् । तदहं तव रक्षामि तद्भजस्व गृहाश्रमम् ॥
इत्याकर्ण्य स संपन्नयथेष्टार्थः शिवोऽब्रवीत् । ब्रह्मन्ग्रहस्तवायं चेत्तत्करोमि वचस्तव ॥
हेमरत्नस्वरूपे तु मुग्ध एवास्मि तापसः । त्वद्वाचैव प्रवर्तेऽहं यथा वेत्सि तथा कुरु ॥
एतच्छिववचः श्रुत्वा परितुष्टस्तथेति तम् । मूढो निनाय गेहं स्वं तथैव स पुरोहितः ॥
संनिवेश्य च तत्रैनं शिवाख्यमशिवं ततः । यथाकृतं शशंसैतन्माधवायाभिनन्दते ॥
तदैव च ददौ तस्मै सुतां क्लेशविवर्धिताम् । निजां शिवाय संपत्तिमिव मूढत्वहारिताम् ॥
कृतोद्वाहं तृतीयेऽह्नि प्रतिग्रहकृते च तम् । निनाय व्याजमन्दस्य माधवस्य ततोऽन्तिकम् ॥
अतर्क्यतपसं वन्दे त्वामित्यवितथं वदन् । माधवोऽप्यपतत्तस्य शिवस्योत्थाय पादयोः ॥
ददौ च तस्मै विधिवत्कोषागारात्तदाहृतम् । भूरिकृत्रिममाणिक्यमयाभरणभाण्डकम् ॥
शिवोऽपि प्रतिगृह्यैतत्तस्य हस्ते पुरोधसः । नाहं वेद्मि त्वमेवैतद्वेत्सीत्युक्त्वा समर्पयत् ॥
अङ्गीकृतमिदं पूर्वं मया चिन्ता तवात्र का । इत्युक्त्वा तच्च जग्राह तत्क्षणं स पुरोहितः ॥
कृताशिषि ततो याते स्ववधूवासकं शिवे । नीत्वा स स्थापयामास तन्निजे कोषवेश्मनि ॥
माधवोऽपि तदन्येद्युर्मान्द्यव्याजं शनैस्त्यजन् । रोगोपशान्तिं वक्ति स्म महादानप्रभावतः ॥
त्वया धर्मसहायेन समुत्तीर्णोऽहमापदः । इति चान्तिकमायान्तं प्रशशंस पुरोहितम् ॥
एतत्प्रभावादेतन्मे शरीरमिति कीर्तयन् । प्रकाशमेव चक्रे च शिवेन सह मित्रताम् ॥
शिवोऽपि यातेषु दिनेष्ववादीत्तं पुरोहितम् । एवमेव भवद्गेहे भोक्ष्यते च कियन्मया ॥
तत्किं त्वमेव मूल्येन गृह्णास्याभरणं न तत् । महार्घमिति चेन्मूल्यं यथासंभवि देहि मे ॥
तच्छ्रुत्वा तदनर्घं च मत्वा तन्निष्क्रयं ददौ । तथेति तस्मै सर्वस्वं शिवाय स पुरोहितः ॥
तदर्थं च स्वहस्तेन शिवं लेख्यमकारयत् । स्वयं चाप्यकरोद्बुद्ध्वा तद्धनं स्वधनाधिकम् ॥
अन्योन्यलिखितं हस्ते गृहीत्वा स पुरोहितः । पृथगासीत्पृथक्सोऽपि शिवो भेजे गृहस्थितिम् ॥
ततश्च स शिवः सोऽपि माधवः संगतावुभौ । पुरोहितार्थान्भुञ्जानौ यथेच्छं तत्र तस्थतुः ॥
गते काले च मूल्यार्थी स पुरोधाः किलापणे । ततोऽलंकरणादेकं विक्रेतुं कटकं ययौ ॥
तत्रैतद्रत्नतत्त्वज्ञाः परीक्ष्य वणिजोऽब्रुवन् । अहो कस्यास्ति विज्ञानं येनैतत्कृत्रिमं कृतम् ॥
काचस्फटिकखण्डा हि नानारागोपरञ्जिताः । रीतिबद्धा इमे नैते मणयो न च काञ्चनम् ॥

ङ्कत्वा विह्वलो गत्वा स पुरोधास्तदैव तत् । आनीयाभरणं गेहात्कृत्स्नं तेषामदर्शयत् ॥ १८०
दृष्ट्वा तद्वदेवास्य सर्वं कृत्रिममेव तत् । ऊचिरे च स तच्छ्रुत्वा वज्राहत इवाभवत् ॥ १८१
श्च गत्वा तत्कालं स मूढः शिवमभ्यधात् । गृह्णीष्व स्वानलंकारांस्तन्मे देहि निजं धनम् ॥ १८२
ो ममाद्यापि धनं तद्व्यशेषं गृहे मया । कालेन भुक्तमिति तं शिवोऽपि प्रत्यभाषत ॥ १८३
। विवदमानौ तौ पार्श्वावस्थितमाधवम् । पुरोधाश्च शिवश्चोभौ राजानमुपजग्मतुः ॥ १८४
नस्फटिकयोः खण्डै रीतिबद्धैः सुरञ्जितैः । रचितं देव तत्रैव व्याजालंकरणं महत् ॥ १८५
ान मम सर्वस्वमजानानस्य भक्षितम् । इति विज्ञापयामास नृपतिं स पुरोहितः ॥ १८६
: शिवोऽब्रवीद्राजन्ना बाल्यात्तापसोऽभवम् । अनेनैव तदभ्यर्थ्य ग्राहितोऽहं प्रतिग्रहम् ॥ १८७
ा भाषितं चास्य मुग्धेनापि सता मया । रत्नादिष्वनभिज्ञस्य प्रमाणं मे भवानिति ॥ १८८
स्थितस्तवात्रेति प्रत्यपद्यत चैष तत् । प्रतिगृह्य च तत्सर्वं हस्तेऽस्यैव मयार्पितम् ॥ १८९
ऽनेन गृहीतं तत्स्वेच्छं मूल्येन मे प्रभो । विद्यते चावयोरत्र स्वहस्तलिखितं मिथः ॥ १९०
नीं चैव साहाय्यं परं जानात्यतः प्रभुः । एवं शिवे समाप्तोक्तावुवाच स च माधवः ॥ १९१
ादिश मान्यस्त्वमपराधो ममात्र कः । न गृहीतं मया किंचिद्भवतो वा शिवस्य वा ॥ १९२
ं धनमन्यत्र चिरं न्यासीकृतं स्थितम् । तदा तदेव चानीतं मया दत्तं द्विजन्मने ॥ १९३
यदि न तत्स्वर्णं न च रत्नानि तानि तत् । रीतिस्फटिककाचानां प्रदानादस्तु मे फलम् ॥ १९४
र्जिह्मदयत्वेन दाने च प्रत्ययो मम । दृष्ट एवावतीर्णोऽस्मि यद्रोगमतिदुस्तरम् ॥ १९५
भेन्नमुखच्छायमुक्तवत्यत्र माधवे । जहास मन्त्रिसहितो राजा तस्मै तुतोष च ॥ १९६
ान्यायतः किंचिन्माधवस्य शिवस्य वा । इति तत्र सभासद्भिः सान्तर्हासमुदीरिते ॥ १९७
हेतः सोऽथ ययौ हारितार्थो विलज्जितः । कासां हि नापदां हेतुरतिलोभान्धबुद्धिता ॥ १९८
ा धूर्तौ ततस्तत्र तस्थतुः शिवमाधवौ । परितुष्टनृपावाप्तप्रसादसुखितौ चिरम् ॥ १९९
सूत्रशतैस्तैस्तैर्जिह्वाजालानि तन्वते । जालोपजीविनो धूर्ता धारायां धीवरा इव ॥ २००
त मिथ्या कनकपुरीं दृष्टामिव ब्रुवन् । एषोऽपि वञ्चयित्वा त्वां विप्रो मत्प्राप्तिमिच्छति ॥ २०१
संप्रति मा भूत्ते मद्विवाहकृते त्वरा । स्थितास्मि तावत्कन्यैव पश्यामो भवितात्र किम् ॥ २०२
ःः सुतया राजा तया कनकरेखया । परोपकारी स तदा तामेवं प्रत्यभाषत ॥ २०३
े कन्यकाभावश्चिरं पुत्रि न युज्यते । मिथ्या वदन्ति दोषं हि दुर्जना गुणमत्सराः ॥ २०४
ास्य विशेषेण कलङ्कोत्पादको जनः । हरस्वामिकथामत्र शृण्वेतां कथयामि ते ॥ २०५
नकण्ठे कुसुमपुरं नामास्ति यत्पुरम् । हरस्वामीति कोऽप्यासीत्तीर्थार्थी तत्र तापसः ॥ २०६
क्षवृत्तिर्विप्रोऽत्र गङ्गातीरकृतोटजः । तपःप्रकर्षाल्लोकस्य गौरवास्पदतां ययौ ॥ २०७
चेच्चात्र तं दृष्ट्वा दूराद्भिक्षाविनिर्गतम् । जनमध्ये जगादैकस्तद्गुणासहनः खलः ॥ २०८
जानीथ जातोऽयं कीदृक्कपटतापसः । अनेनैवार्भकाः सर्वे नगरेऽमुत्र भक्षिताः ॥ २०९
ुत्वा च द्वितीयोऽत्र तत्रावोचत तादृशः । सत्यं श्रुतं मयाप्येतदुच्यमानं जनैरिति ॥ २१०
तदिति स्माह तृतीयोऽपि समर्थयन् । बध्नात्यार्यपरीवादं खलसंवादशृङ्खला ॥ २११
च क्रमेणैष गतः कर्णपरम्पराम् । प्रवादो बहुलीभावं सर्वत्रात्र पुरे ययौ ॥ २१२
ध सर्वे गेहेभ्यो बलाद्बालान्न तत्यजुः । हरस्वामी शिशून्नीत्वा भक्षयत्यखिलानिति ॥ २१३
ब्राह्मणास्तत्र संततिक्षयभीरवः । संभूय मन्त्रयामासुः पुरात्तस्य प्रवासनम् ॥ २१४
कुपितः सोऽस्मानिति साक्षाद्भयान्न ते । यदा तस्याशकन्वक्तुं दूतान्विससृजुस्तदा ॥ २१५
गत्वा तदा दूता दूरादेव तमब्रुवन् । नगराद्गम्यतामस्मादित्याहुस्त्वां द्विजातयः ॥ २१६
ामित्तमिति प्रोक्ता विस्मितेनाथ तेन ते । पुनरूचुस्त्वमश्नासि बालदर्शमिहेति तम् ॥ २१७
वा स हरस्वामी स्वयं प्रत्यायनेच्छया । विप्राणां निकटं तेषां भीतिनश्यज्जनो ययौ ॥ २१८

विप्राश्चारुरुहुस्त्रासात्तं दृष्ट्वैव मठोपरि । प्रवादमोहितः प्रायो न विचारक्षमो जनः ॥
अथ द्विजान्हरस्वामी तानेकैकमधः स्थितः । नामग्राहं समाहूय स जगादोपरि स्थितान् ॥
कोऽयं मोहोऽद्य वो विप्रा नावेक्षध्वं परस्परम् । कियन्तो बालकाः कस्य मया कुत्र च भक्षिताः ॥
तच्छ्रुत्वा यावदन्योन्यं विप्राः परिमृशन्ति ते । तावत्सर्वेऽपि सर्वेषां जीवन्तो बालकाः स्थिताः ॥
क्रमान्नियुक्ताश्चान्येऽपि पौरास्तत्र तथैव तत् । प्रत्यपद्यन्त सर्वेऽपि सविप्रवणिजोऽब्रुवन् ॥
अहो विमूढैरस्माभिः साधुर्मिथ्यैव दूषितः । जीवन्ति बालाः सर्वेषां तत्कस्यानेन भक्षिताः ॥
इत्युक्तवत्सु सर्वेषु हरस्वामी तदैव सः । संपन्नशुद्धिर्नगराद्गन्तुं प्रववृते ततः ॥
दुर्जनोत्पादितावद्यविरक्तीकृतचेतसः । अविवेकिनि दुर्देशे रतिः का हि मनस्विनः ॥
ततो वणिग्भिर्विप्रैश्च प्रार्थितश्चरणानतैः । कथंचित्स हरस्वामी तत्र वस्तुममन्यत ॥

इत्थं सच्चरितावलोकनलसद्विद्वेषवाचालिता
मिथ्यादूषणमेवमेव ददति प्रायः सतां दुर्जनाः ।
किंचित्किं पुनराप्नुवन्ति यदि ते तत्रावकाशं मना-
ग्द्रष्टुं तज्ज्वलितेऽनले निपतितः प्राज्याज्यधारोत्करः ॥

तस्माद्विशल्ययितुमिच्छसि मां यदि त्वं वत्से तदुन्मिषति नूतनयौवनेऽस्मिन् ।
न स्वेच्छमर्हसि चिरं खलु कन्यकात्वमासेवितुं सुलभदुर्जनदुष्प्रवादम् ॥

इत्युक्ता नरपतिना पित्रा प्रायेण कनकरेखा सा ।
निजगाद राजतनया तमवस्थितनिश्चया भूयः ॥
दृष्टा कनकपुरी सा विप्रेण क्षत्रियेण वा येन ।
तर्हि तमाशु गवेषय तस्मै मां देहि भाषितं हि मया ॥

तच्छ्रुत्वा दृढनिश्चयां विगणयञ्जातिस्मरां तां सुतां
नास्याश्चान्यमभीष्टभर्तृघटने पश्यन्नुपायक्रमम् ।
देशे तत्र ततः प्रभृत्यनुदिनं प्रष्टुं नवागन्तुका-
न्भूयो भूमिपतिः स नित्यपटहप्रोद्घोषणामादिशत् ॥

यो विप्रः क्षत्रियो वा ननु कनकपुरीं दृष्टवान्सोऽभिधत्तां
तस्मै राजा किल स्वां वितरति तनयां यौवराज्येन साकम् ।
सर्वत्राघोष्यतैवं पुनरपि पटहानन्तरं चात्र शश्व-
न्न त्वेकः कोऽपि तावत्कृतकनकपुरीदर्शनो लभ्यते स्म ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे चतुर्दारिकालम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

अत्रान्तरे द्विजयुवा शक्तिदेवः स दुर्मनाः । अचिन्तयदभिप्रेतराजकन्यावमानितः ॥
मयेह मिथ्याकनकपुरीदर्शनवादिना । विमानना परं प्राप्ता न त्वसौ राजकन्यका ॥
तदेतत्प्राप्तये तावद्भ्रमणीया मही मया । यावत्सा नगरी दृष्टा प्राणैर्वापि गतं मम ॥
तां हि दृष्ट्वा पुरीमेत्य तत्पणोपार्जितां न चेत् । लभेय राजतनयामेनां किं जीवितेन तत् ॥
एवं कृतप्रतिज्ञः सन्वर्धमानपुरात्ततः । दक्षिणां दिशमालम्ब्य स प्रतस्थे तदा द्विजः ॥
क्रमेण गच्छंश्च प्राप सोऽथ विन्ध्यमहाटवीम् । विवेश च निजां वाञ्छामिव तां गहनायताम् ॥
तस्यां च मारुताधूतमृदुपादपपल्लवैः । वीजयन्त्यामिवात्मानं तप्तमर्ककरोत्करैः ॥
भूरिचौरपराभूतिदुःखादिव दिवानिशम् । क्रोशन्त्यां तीव्रसिंहादिहन्यमानमृगारवैः ॥
स्वच्छन्दोच्छलदुद्दाममहामरुमरीचिभिः । जिगीषन्त्यामिवात्युग्राण्यपि तेजांसि भास्वतः ॥

जलसंगतिहीनायामप्यहो सुलभापदि । सततोल्लङ्घ्यमानायामपि दूरीभवद्भुवि ॥ १०
दिवसैर्दूरमध्वानमतिक्रम्य ददर्श सः । एकान्ते शीतलस्वच्छसलिलं सुमहत्सरः ॥ ११
पुण्डरीकोच्छ्रितच्छत्रं प्रोल्लसद्धंसचामरम् । कुर्वाणमिव सर्वेषां सरसामधिराजताम् ॥ १२
तस्मिन्स्नानादि कृत्वा च तत्पार्श्वे पुनरुत्तरे । अपश्यदाश्रमपदं सफलस्निग्धपादपम् ॥ १३
तत्राश्वत्थतरोर्मूले निषण्णं तापसैर्वृतम् । स सूर्यतपसं नाम स्थविरं मुनिमैक्षत ॥ १४
स्ववयोब्दशतग्रन्थिसंख्ययेवाक्षमालया । जराधवलकर्णाग्रसंश्रयिण्या विराजितम् ॥ १५
प्रणामपूर्वकं तं च मुनिमभ्याजगाम सः । तेनाप्यतिथिसत्कारैर्मुनिना सोऽभ्यनन्द्यत ॥ १६
अपृच्छ्यत च तेनैव संविभज्य फलादिभिः । कुतः प्राप्तोऽसि गन्तासि क्व च भद्रोच्यतामिति ॥ १७
वर्धमानपुरात्तावद्भगवन्नहमागतः । गन्तुं प्रवृत्तः कनकपुरीमस्मि प्रतिज्ञया ॥ १८
न जाने क्व भवेत्सा तु भगवान्वक्तु वेत्ति चेत् । इति तं शक्तिदेवोऽपि स प्रह्वो मुनिमभ्यधात् ॥ १९
वत्स वर्षशतान्यष्टौ ममाश्रमपदे त्विह । अतिक्रान्तानि न च सा श्रुतापि नगरी मया ॥ २०
इति तेनापि मुनिना गदितः स विषादवान् । पुनरेवाब्रवीत्तर्हि मृतोऽस्मि क्ष्मां भ्रमन्निह ॥ २१
ततः क्रमेण ज्ञातार्थः स मुनिस्तमभाषत । यदि ते निश्चयस्तर्हि यदहं वच्मि तत्कुरु ॥ २२
अस्ति काम्पिल्यविषयो योजनानां शतेष्वितः । त्रिषु तत्रोत्तराख्यश्च गिरिस्तत्रापि चाश्रमः ॥ २३
तत्रार्योऽस्ति मम भ्राता ज्येष्ठो दीर्घतपा इति । तत्पार्श्वं व्रज जानीयात्स वृद्धो जातु तां पुरीम् ॥ २४
एतच्छ्रुत्वा तथेत्युक्त्वा जातास्थस्तत्र तां निशाम् । नीत्वा प्रतस्थे स प्रातः शक्तिदेवो द्रुतं ततः ॥ २५
क्लेशातिक्रान्तकान्तारशतश्चासाद्य तं चिरात् । काम्पिल्यविषयं तस्मिन्नारुरोहोत्तरे गिरौ ॥ २६
तत्र तं दीर्घतपसं मुनिमाश्रमवर्तिनम् । दृष्ट्वा प्रणम्य च प्रीतः कृतातिथ्यमुपाययौ ॥ २७
व्यजिज्ञपच्च कनकपुरीं राजसुतोदिताम् । प्रस्थितोऽहं न जानामि भगवन्क्वास्ति सा पुरी ॥ २८
सा च मेऽवश्यगन्तव्या ततस्तदुपलब्धये । ऋषिणा सूर्यतपसा प्रेषितोऽस्मि तवान्तिकम् ॥ २९
इत्युक्तवन्तं तं शक्तिदेवं सोऽप्यब्रवीन्मुनिः । इयता वयसा पुत्र पुरी साद्य श्रुता मया ॥ ३०
देशान्तरागतैः कैः कैर्जातः परिचयो न मे । न च तां श्रुतवानस्मि दूरे तद्दर्शनं पुनः ॥ ३१
जानाम्यहं च नियतं दवीयसि तया क्वचित् । भाव्यं द्वीपान्तरे वत्स तत्रोपायं च वच्मि ते ॥ ३२
अस्ति वारिनिधेर्मध्ये द्वीपमुत्स्थलसंज्ञकम् । तत्र सत्यव्रताख्योऽस्ति निषादाधिपतिर्धनी ॥ ३३
तस्य द्वीपान्तरेष्वस्ति सर्वेष्वपि गतागतम् । तेन सा नगरी जातु भवेद्दृष्टा श्रुतापि वा ॥ ३४
तस्मात्प्रयाहि जलधेरुपकण्ठप्रतिष्ठितम् । नगरं प्रथमं तावद्विटङ्कपुरसंज्ञकम् ॥ ३५
ततः केनापि वणिजा समं प्रवहणेन तत् । निषादस्यास्पदं गच्छ द्वीपं तस्येष्टसिद्धये ॥ ३६
इत्युक्तस्तेन मुनिना शक्तिदेवः स तत्क्षणम् । तथेत्युक्त्वा तमामन्त्र्य प्रयाति स्म तदाश्रमात् ॥ ३७
कालेन प्राप्य चोल्लङ्घ्य देशान्क्रोशान्बहूंश्च सः । वारिधेस्तीरतिलकं तद्विटङ्कपुरं पुरम् ॥ ३८
तस्मिन्समुद्रदत्ताख्यमुत्स्थलद्वीपयायिनम् । अन्विष्य वणिजं तेन सह सख्यं चकार सः ॥ ३९
तदीयं यानपात्रं च समं तेनाधिरुह्य सः । तत्प्रीतिपूर्णपाथेयः प्रतस्थेऽम्बुधिवर्त्मना ॥ ४०
ततोऽल्पदेशे गन्तव्ये समुत्तस्थावशङ्कितम् । कालो विद्युल्लताजिह्वो गर्जन्पर्जन्यराक्षसः ॥ ४१
लघूनुन्नमयन्भावान्गुरूनप्यवपातयन् । ववौ विधेरिवारम्भः प्रचण्डश्च प्रभञ्जनः ॥ ४२
वाताहताश्च जलधेरुदतिष्ठन्महोर्मयः । आश्रयाभिभवक्रोधादिव शैलाः सपक्षकाः ॥ ४३
ययौ च तत्प्रवहणं क्षणमूर्ध्वमधः क्षणम् । उच्छ्रायपातपर्यायं दर्शयद्धनिनामिव ॥ ४४
क्षणान्तरे च वणिजामाक्रन्दैस्तीव्रपूरितम् । भरादिव तदुत्पत्य वहनं समभज्यत ॥ ४५
भग्ने च तस्मिंस्तत्स्वामी स वणिक्पतितोऽम्बुधौ । तीर्णः फलहकारूढः प्राप्यान्यद्वहनं चिरात् ॥ ४६
शक्तिदेवं पतन्तं तु तं व्यात्तमुखकंदरः । अपरिक्षतसर्वाङ्गं महामत्स्यो निगीर्णवान् ॥ ४७
स च मत्स्योऽब्धिमध्येन तत्कालं स्वेच्छया चरन् । उत्स्थलद्वीपनिकटं जगाम विधियोगतः ॥ ४८

तत्र तस्यैव कैवर्तपतेः सत्यव्रतस्य सः । शफरग्राहिभिर्भृत्यैः प्राप्य दैवादगृह्यत ॥ ४९
ते च तं सुमहाकायं निन्युराकृष्य कौतुकात् । तदैव धीवरास्तस्य निजस्य स्वामिनोऽन्तिकम् ॥ ५०
सोऽपि तं तादृशं दृष्ट्वा तैरेव सकुतूहलः । पाठीनं पाटयामास भृत्यैः सत्यव्रतो निजैः ॥ ५१
पाटितस्योदराज्जीवञ्शक्तिदेवोऽथ तस्य सः । अनुभूतापराश्चर्यगर्भवासो विनिर्ययौ ॥ ५२
निर्यातं च कृतस्वस्तिकारं तं च सविस्मयः । युवानं वीक्ष्य पप्रच्छ दाशः सत्यव्रतस्ततः ॥ ५३
कस्त्वं कथं कुतश्चैषा शफरोदरशायिता । ब्रह्मंस्त्वयाप्ता कोऽयं ते वृत्तान्तोऽत्यन्तमद्भुतः ॥ ५४
तच्छ्रुत्वा शक्तिदेवस्तं दाशेन्द्रं प्रत्यभाषत । ब्राह्मणः शक्तिदेवाख्यो वर्धमानपुरादहम् ॥ ५५
अवश्यगम्या कनकपुरी च नगरी मया । अजानानश्च तां दूराक्रान्तोऽस्मि सुचिरं भुवम् ॥ ५६
ततो दीर्घतपोवाक्यात्संभाव्य द्वीपगां च ताम् । तज्ज्ञप्तये दाशपतेरुत्स्थलद्वीपवासिनः ॥ ५७
पार्श्वे सत्यव्रतस्याहं गच्छन्वहनभङ्गतः । मग्नोऽम्बुधौ निगीर्णोऽहं मत्स्येन प्रापितोऽधुना ॥ ५८
इत्युक्तवन्तं तं शक्तिदेवं सत्यव्रतोऽब्रवीत् । सत्यव्रतोऽहमेवैतद्द्वीपं तच्चेदमेव ते ॥ ५९
किं तु दृष्टा बहुद्वीपदृश्वनापि न सा मया । नगरी त्वदभिप्रेता द्वीपान्तेषु श्रुता पुनः ॥ ६०
इत्युक्त्वा शक्तिदेवं च विषण्णं वीक्ष्य तत्क्षणम् । पुनरभ्यागतप्रीत्या तं स सत्यव्रतोऽभ्यधात् ॥ ६१
ब्रह्मन्मा गा विषादं त्वमिहैवाद्य निशां वस । प्रातः कंचिदुपायं ते विधास्यामीष्टसिद्धये ॥ ६२
इत्याश्वास्य स तेनैव दाशेन प्रहितस्ततः । सुलभातिथिसत्कारं द्विजो विप्रमठं ययौ ॥ ६३
तत्र तद्वासिनैकेन कृताहारो द्विजन्मना । विष्णुदत्ताभिधानेन सह चक्रे कथाक्रमम् ॥ ६४
तत्प्रसङ्गाच्च तेनैव पृष्टस्तस्मै समासतः । निजं देशं कुलं कृत्स्नं वृत्तान्तं च शशंस सः ॥ ६५
तद्बुद्ध्वा परिरभ्यैनं विष्णुदत्तः स तत्क्षणम् । बभाषे हर्षबाष्पाम्बुवर्घराक्षरजर्जरम् ॥ ६६
दिष्ट्या मातुलपुत्रस्त्वमेकदेशभवश्च मे । अहं च बाल्य एव प्राक्तस्माद्देशादिहागतः ॥ ६७
तदिहैवास्व न चिरात्साधयिष्यति चात्र ते । इष्टं द्वीपान्तरागच्छद्वणिक्कर्णपरम्परा ॥ ६८
इत्युक्त्वान्वयमावेद्य विष्णुदत्तो यथोचितैः । तं शक्तिदेवं तत्कालमुपचारैरुपाचरत् ॥ ६९
शक्तिदेवोऽपि संप्राप विस्मृताध्वक्लमो मुदम् । विदेशे बन्धुलाभो हि मरावमृतनिर्झरः ॥ ७०
अमंस्त च निजाभीष्टसिद्धिमभ्यर्णवर्तिनीम् । अन्तरापाति हि श्रेयः कार्यसंपत्तिसूचकम् ॥ ७१
ततो रात्रावनिद्रस्य शयनीये निषेदुषः । अभिवाञ्छितसंप्राप्तिगतचित्तस्य तस्य सः ॥ ७२
शक्तिदेवस्य पार्श्वस्थो विष्णुदत्तः समर्थनम् । विनोदपूर्वकं कुर्वन्कथां कथितवानिमाम् ॥ ७३
पुराभूत्सुमहाविप्रो गोविन्दस्वामिसंज्ञकः । महाग्रहारे कालिन्द्या उपकण्ठनिवेशिनि ॥ ७४
जायेते स्म च तस्य द्वौ सदृशौ गुणशालिनः । अशोकदत्तो विजयदत्तश्चेति सुतौ क्रमात् ॥ ७५
कालेन तत्र वसतां तेषामजनि दारुणम् । दुर्भिक्षं तेन गोविन्दस्वामी भार्यामुवाच सः ॥ ७६
अयं दुर्भिक्षदोषेण देशस्तावद्विनाशितः । तन्न शक्नोम्यहं द्रष्टुं सुहृद्बान्धवदुर्गतिम् ॥ ७७
दीयते च कियत्कस्य तस्मादन्नं यदस्ति नः । तद्दत्त्वा मित्रबन्धुभ्यो व्रजामो विषयादितः ॥ ७८
वाराणसीं च वासाय सकुटुम्बाः श्रयामहे । इत्युक्तया सोऽनुमतो भार्ययान्नमदान्निजम् ॥ ७९
सदारसुतभृत्यश्च स देशात्प्रययौ ततः । उत्सहन्ते नहि द्रष्टुमुत्तमाः स्वजनापदम् ॥ ८०
गच्छंश्च मार्गे जटिलं भस्मपाण्डुं कपालिनम् । सार्धचन्द्रमिवेशानं महाव्रतिनमैक्षत ॥ ८१
उपेत्य ज्ञानिनं तं च नत्वा स्नेहेन पुत्रयोः । शुभाशुभं स पप्रच्छ सोऽथ योगी जगाद तम् ॥ ८२
पुत्रौ ते भाविकल्याणौ किं त्वेतेन कनीयसा । ब्रह्मन्विजयदत्तेन वियोगस्ते भविष्यति ॥ ८३
ततोऽस्याशोकदत्तस्य द्वितीयस्य प्रभावतः । एतेन सह युष्माकं भूयो भावी समागमः ॥ ८४
इत्युक्तस्तेन गोविन्दस्वामी स ज्ञानिना तदा । सुखदुःखाद्भुताक्रान्तस्तमामन्त्र्य ततो ययौ ॥ ८५
प्राप्य वाराणसीं तां च तद्बाह्ये चण्डिकागृहे । दिनं तत्रातिचक्राम देवीपूजादिकर्मणा ॥ ८६
सायं च तत्रैव बहिः सकुटुम्बस्तरोस्तले । समावसत्कार्पटिकैः सोऽन्यदेशागतैः सह ॥ ८७

रात्रौ च तत्र सुप्तेषु सर्वेष्वधिगताध्वसु । श्रान्तेष्वास्तीर्णपर्णादिपान्थशय्यानिषादिषु ॥ ८८
तदीयस्य विबुद्धस्य तस्याकस्मात्कनीयसः । सूनोर्विजयदत्तस्य महाञ्शीतज्वरोऽजनि ॥ ८९
स तेन सहसा भाविबन्धुविश्लेषहेतुना । भयेनेव ज्वरेणाभूदूर्ध्वरोमा सवेपथुः ॥ ९०
शीतार्तश्च प्रबोध्यैव पितरं स्वमुवाच तम् । बाधते तात तीव्रो मामिह शीतज्वरोऽधुना ॥ ९१
तन्मे समिधमानीय शीतघ्नं ज्वलयानलम् । नान्यथा मम शान्तिः स्यान्नयेयं न च यामिनीम् ॥ ९२
तच्छ्रुत्वा तं स गोविन्दस्वामी तद्वेदनाकुलः । तावत्कुतोऽधुना वह्निर्वत्सेति च समभ्यधात् ॥ ९३
नन्वयं निकटे तात दृश्यतेऽग्निर्ज्वलन्नितः । भूयिष्ठोऽत्रैव तद्गत्वा किं नाङ्गं तापयाम्यहम् ॥ ९४
तस्मात्सकम्पं हस्ते मां गृहीत्वा प्रापय द्रुतम् । इत्युक्तस्तेन पुत्रेण पुनर्विप्रोऽपि सोऽब्रवीत् ॥ ९५
श्मशानमेतदेषा च चिता ज्वलति तत्कथम् । गम्यतेऽत्र पिशाचादिभीषणे त्वं हि बालकः ॥ ९६
एतच्छ्रुत्वा पितुर्वाक्यं वत्सलस्य विहस्य सः । वीरो विजयदत्तस्तं सावष्टम्भमभाषत ॥ ९७
किं पिशाचादिभिस्तात वराकैः क्रियते मम । किमल्पसत्त्वः कोऽप्यस्मि तदशङ्कं नयात्र माम् ॥ ९८
इत्याग्रहाद्वदन्तं तं स पिता तत्र नीतवान् । सोऽप्यङ्गं तापयन्बालश्चितामुपससर्प ताम् ॥ ९९
ज्वलन्तीमनलज्वालाधूमव्याकुलमूर्धजाम् । नृमांसग्राहिणीं साक्षादिव रक्षोधिदेवताम् ॥ १००
क्षणात्तत्र समाश्वस्य सोऽर्भकः पितरं च तम् । चितान्तर्दृश्यते वृत्तं किमेतदिति पृष्टवान् ॥ १०१
कपालं मानुषस्यैतच्चितायां पुत्र दह्यते । इति तं प्रत्यवादीच्च सोऽपि पार्श्वस्थितः पिता ॥ १०२
ततः स्वसाहसेनेव दीप्ताग्रेण निहत्य तम् । कपालं स्फोटयामास काष्ठेनैकेन सोऽर्भकः ॥ १०३
नोच्चैः प्रसृता तस्मान्मुखे तस्यापतद्वसा । श्मशानवह्निना नक्तंचरीसिद्धिरिवार्पिता ॥ १०४
दास्वादेन बालश्च संपन्नोऽभूत्स राक्षसः । ऊर्ध्वकेशः शिखोत्खातखड्गो दंष्ट्राविशङ्कटः ॥ १०५
आकृष्य च कपालं तद्वसां पीत्वा लिलेह सः । अस्थिलग्नानलज्वालालोलया निजजिह्वया ॥ १०६
तस्त्यक्तकपालः सन्पितरं निजमेव तम् । गोविन्दस्वामिनं हन्तुमुद्यतासिरियेष सः ॥ १०७
पालस्फोट भो देव न हन्तव्यः पिता तव । इत एहीति तत्कालं श्मशानादुदभूद्वचः ॥ १०८
च्छ्रुत्वा नाम लब्ध्वा च कपालस्फोट इत्यदः । स बद्धः पितरं मुक्त्वा रक्षोभूतस्तिरोदधे ॥ १०९
पिता सोऽपि गोविन्दस्वामी हा पुत्र हा गुणिन् । हा हा विजयदत्तेति मुक्ताक्रन्दस्ततो ययौ ॥ ११०
त्य चण्डीगृहं तच्च प्रातः पत्न्यै सुताय च । ज्यायसेऽशोकदत्ताय यथावृत्तं शशंस सः ॥ १११
तस्ताभ्यां सहानभ्रविद्युदापातदारुणम् । तथा शोकानलावेशमाजगाम स तापसः ॥ ११२
था वाराणसीसंस्थो देवीसंदर्शनागतः । तत्रोपेत्य जनोऽप्यन्यो ययौ तत्समदुःखताम् ॥ ११३
वच्च देवीपूजार्थमागत्यैको महावणिक् । अपश्यदत्र गोविन्दस्वामिनं तं तथाविधम् ॥ ११४
मुद्रदत्तनामासावुपेत्याश्वास्य तं द्विजम् । तदैव स्वगृहं साधुर्नियाय सपरिच्छदम् ॥ ११५
नादिनोपचारेण तत्र चैनमुपाचरत् । निसर्गो ह्येष महतां यदापन्नानुकम्पनम् ॥ ११६
ऽपि जग्राह गोविन्दस्वामी पत्न्या समं धृतिम् । महाव्रतिवचः श्रुत्वा जातास्थः सुतसंगमे ॥ ११७
तः प्रभृति चैतस्यां वाराणस्यामुवास सः । अभ्यर्थितो महाढ्यस्य तस्यैव वणिजो गृहे ॥ ११८
त्रैवाधीतविद्योऽस्य स सुतः प्राप्तयौवनः । द्वितीयोऽशोकदत्ताख्यो बाहुयुद्धमशिक्षत ॥ ११९
मेण च ययौ तत्र प्रकर्षं स तथा यथा । अजीयत न केनापि प्रतिमल्लेन भूतले ॥ १२०
कदा देवयात्रायां तत्र मल्लसमागमे । आगादेको महामल्लः ख्यातिमान्दक्षिणापथात् ॥ १२१
नात्र निखिला मल्ला राज्ञो वाराणसीपतेः । प्रतापमुकुटाख्यस्य पुरतोऽन्ये पराजिताः ॥ १२२
ः स राजा मल्लस्य युद्धे तस्य समादिशत् । आनाय्याशोकदत्तं तं श्रुतं तस्माद्वणिग्वरात् ॥ १२३
ऽपि मल्लो भुजं हत्वा हस्तेनारभताहवम् । मल्लं चाशोकदत्तस्तु भुजं हत्वा न्यपातयत् ॥ १२४
स्तत्र महामल्लनिपातोत्थितशब्दया । युद्धभूम्यापि संतुष्य साधुवाद इवोदिते ॥ १२५
राजाशोकदत्तं तं तुष्टो रत्नैरपूरयत् । चकार चात्मनः पार्श्ववर्तिनं दृष्टविक्रमम् ॥ १२६

सोऽपि राज्ञः प्रियो भूत्वा दिनैः प्राप परां श्रियम्। शेवधिः शूरविद्यस्य विशेषज्ञो विशांपतिः॥
सोऽथ जातु ययौ राजा चतुर्दश्यां बहिः पुरे। सुप्रतिष्ठापितं दूरे देवमर्चयितुं शिवम्॥
कृतार्चनस्ततो नक्तं श्मशानस्यान्तिकेन सः। आगच्छन्नश्रृणोदेतां तन्मध्यादुद्गतां गिरम्॥
अहं दण्डाधिपेनेह मिथ्या वध्यानुकीर्तनात्। द्वेषेण विद्धः शूलायां तृतीयं दिवसं प्रभो॥
अद्यापि च न निर्यान्ति प्राणा मे पापकर्मणः। तद्देव तृषितोऽत्यर्थमहं दापय मे जलम्॥
तच्छ्रुत्वा कृपया राजा स पार्श्वस्थमुवाच तम्। अशोकदत्तमस्याम्भः प्रहिणोतु भवानिति॥
कोऽत्र रात्रौ व्रजेद्देव तद्गच्छाम्यहमात्मना। इत्युक्त्वाशोकदत्तः स गृहीत्वाम्भस्ततो ययौ॥
याते च स्वपुरीं राज्ञि स वीरो गहनान्तरम्। महत्तरेण तमसा सर्वतोऽन्तरधिष्ठितम्॥
शिवावकीर्णपिशितप्रत्तसंध्यामहाबलि। क्वचित्क्वचिच्चिताज्योतिर्दीप्रदीपप्रकाशितम्॥
लसदुत्तालवेतालतालवाद्यं विवेश तत्। श्मशानं कृष्णरजनीनिवासभवनोपमम्॥
केनाम्भो याचितं भूपादित्युच्चैस्तत्र स ब्रुवन्। मया याचितमित्येवमश्रृणोद्वाचमेकतः॥
गत्वा तदनुसारेण निकटस्थं चितानलम्। ददर्श तत्र शूलाग्रे विद्धं कंचित्स पूरुषम्॥
अधश्च तस्य रुदतीं सदलंकारभूषिताम्। अदृष्टपूर्वां सर्वाङ्गसुन्दरीं स्त्रियमैक्षत॥
कृष्णपक्षपरिक्षीणे गतेऽस्तं रजनीपतौ। चितारोहाय तद्रश्मिरम्यां रात्रिमिवागताम्॥
का त्वमम्ब कथं चेह रुदत्येवमवस्थिता। इति पृष्टा च सा तेन योषिदेवं तमब्रवीत्॥
अस्याहं शूलविद्धस्य भार्या विगतलक्षणा। निश्चिताशा स्थितास्मीह चितारोहे सहामुना॥
कंचित्कालं प्रतीक्षे च प्राणानामस्य निष्क्रमम्। तृतीयेऽह्नि गतेऽप्यद्य यान्त्येतस्य हि नासवः॥
याचते च मुहुस्तोयमानीतं च मयेह तत्। किं त्वहं नोन्नते शूले प्राप्नोम्यस्य मुखं सखे॥
इति तस्या वचः श्रुत्वा स प्रवीरोऽप्युवाच ताम्। इदं त्वस्य नृपेणापि हस्ते मे प्रेषितं जलम्॥
तन्मे पृष्ठे पदं दत्त्वा देह्येतस्यैतदानने। न परस्पर्शमात्रं हि स्त्रीणामापदि दूषणम्॥
एतच्छ्रुत्वा तथेत्यात्तजला दत्त्वा पदद्वयम्। शूलमूलावनम्रस्य पृष्ठे तस्यारुरोह सा॥
क्षणाद्भुवि स्वपृष्ठे च रक्तबिन्दुष्वशङ्कितम्। पतत्सु मुखमुन्नम्य स वीरो यावदीक्षते॥
तावत्स्त्रियमपश्यत्तां छित्त्वा छुरिकया मुहुः। खादन्तीं तस्य मांसानि पुंसः शूलाग्रवर्तिनः॥
ततस्तां विकृतिं मत्वा क्रोधादाकृष्य स क्षितौ। आस्फोटयिष्यञ्जग्राह पादे रणितनूपुरे॥
सापि तं तरसा पादमाक्षिप्यैव स्वमायया। क्षिप्रं गगनमुत्पत्य जगाम क्वाप्यदर्शनम्॥
तस्य चाशोकदत्तस्य तत्पादान्मणिनूपुरम्। तस्मादाकर्षणस्रस्तमवतस्थे करान्तरे॥
ततस्तां पेशलामादावधःकर्त्रीं च मध्यतः। अन्ते विकारघोरां च दुर्जनैरिव संगतिम्॥
नष्टां विचिन्तयन्पश्यन्हस्ते दिव्यं च नूपुरम्। सविस्मयः साभितापः सहर्षश्च बभूव सः॥
ततः श्मशानतस्तस्मात्स जगामात्तनूपुरः। निजगेहं प्रभाते च स्नातो राजकुलं ययौ॥
किं तस्य शूलविद्धस्य दत्तं वारीति पृच्छते। राज्ञे स च तथेत्युक्त्वा तं नूपुरमुपानयत्॥
एतत्कुत इति स्वैरं पृष्टस्तेन स भूभृता। तस्मै स्वरात्रिवृत्तान्तं शशंसाद्भुतभीषणम्॥
ततश्चानन्यसामान्यं सत्त्वं तस्यावधार्य सः। तुष्टोऽप्यन्यगुणोत्कर्षात्तुतोष सुतरां नृपः॥
गृहीत्वा नूपुरं तं च गत्वा देव्यै ददौ स्वयम्। हृष्टस्तत्प्राप्तिवृत्तान्तं तस्यै च समवर्णयत्॥
सा तद्बुद्ध्वा च दृष्ट्वा च तं दिव्यं मणिनूपुरम्। अशोकदत्तश्लाघैकतत्परा मुमुदे रहः॥
ततो जगाद तां राजा देवि जात्येव विद्यया। सत्येनेव च रूपेण महतामप्ययं महान्॥
अशोकदत्तो भव्याया भर्ता च दुहितुर्यदि। भवेन्मदनलेखायास्तद्भद्रमिति मे मतिः॥
वरस्यामी गुणाः प्रेक्ष्या न लक्ष्मीः क्षणभङ्गिनी। तदेतस्मै प्रवीराय ददाम्येतां सुतामहम्॥
इति भर्तुर्वचः श्रुत्वा देवी सा सादरावदत्। युक्तमेतदसौ ह्यस्या युवा भर्तानुरूपकः॥
सा च तेन मधूद्यानदृष्टेन हृतमानसा। शून्याशया दिनेष्वेषु न श्रृणोति न पश्यति॥

ीतश्च तद्बुद्ध्वा सचिन्ताहं निशाक्षये । सुप्ता जाने स्त्रिया स्वप्ने कयाप्युक्तास्मि दिव्यया ॥ १६६
मदनलेखेयं देयान्यस्मै न कन्यका । एषा ह्यशोकदत्तस्य भार्या जन्मान्तरार्जिता ॥ १६७
ुत्वा प्रबुध्यैव गत्वा प्रत्यूष एव च । स्वयं तत्प्रत्ययाद्वत्सां समाश्वासितवत्यहम् ॥ १६८
चार्यपुत्रेण स्वयमेव ममोदितम् । तस्मात्समेतु तेनासौ वृक्षेणेवार्तवी लता ॥ १६९
ः प्रियया प्रीतः स राजा रचितोत्सवः । आहूयाशोकदत्ताय तस्मै तां तनयां ददौ ॥ १७०
सोऽभूद्राजेन्द्रपुत्रीविप्रेन्द्रपुत्रयोः । संगमोऽन्योन्यशोभायै लक्ष्मीविनययोरिव ॥ १७१
कदाचिद्राजानं तं देवी वदति स्म सा । अशोकदत्तानीतं तदुद्दिश्य मणिनूपुरम् ॥ १७२
त्रायमेकाकी नूपुरो न विराजते । अनुरूपस्तदेतस्य द्वितीयः परिकल्प्यताम् ॥ १७३
ा हेमकारादीनादिदेश स भूपतिः । नूपुरस्यास्य सदृशो द्वितीयः क्रियतामिति ॥ १७४
िरूप्य जगदुर्नेदृशो देव शक्यते । अपरः कर्तुमेतद्धि दिव्यं शिल्पं न मानुषम् ॥ १७५
दृंशि भूयांसि न भवन्त्यत्र भूतले । तस्मादेष यतः प्राप्तस्तत्रैवान्यो गवेष्यताम् ॥ १७६
त्वा सदेवीके विषण्णे राज्ञि तत्क्षणम् । अशोकदत्तस्तत्रस्थस्तद्दृष्ट्वा सहसाब्रवीत् ॥ १७७
ानयाम्यस्य द्वितीयं नूपुरस्य ते । एवं कृतप्रतिज्ञश्च राज्ञा साहसशङ्किना ॥ १७८
िवार्यमाणोऽपि निश्चयान्न चचाल सः । गृहीत्वा नूपुरं तच्च श्मशानं स पुनर्ययौ ॥ १७९
कृष्णचतुर्दश्यां यत्रैव तमवाप्तवान् । प्रविश्य तत्र च प्राज्यचिताधूममलीमसैः ॥ १८०
ावेष्टितगलस्कन्धोल्लम्बितमानुषैः । पादपैरिव रक्षोभिराकीर्णे पितृकानने ॥ १८१
न्पूर्वदृष्टां तां स्त्रियं तन्नूपुराप्तये । उपायमेकं बुबुधे स महामांसविक्रयम् ॥ १८२
शाद्गृहीत्वाथ शवं बभ्राम तत्र सः । विक्रीणानो महामांसं गृह्यतामिति घोषयन् ॥ १८३
स्व गृहीत्वैतदेहि तावन्मया सह । इति क्षणाच्च जगदे स दूरादेकया स्त्रिया ॥ १८४
ा स तथैवैतामुपेत्यानुसरन्स्त्रियम् । आरात्तरुतले दिव्यरूपां योषितमैक्षत ॥ १८५
ृतामासनस्थां रत्नाभरणभासुराम् । असंभाव्यस्थितिं तत्र मरावम्भोजिनीमिव ॥ १८६
तयोपनीतश्च तामुपेत्य तथा स्थिताम् । नृमांसमस्मि विक्रीणे गृह्यतामित्युवाच सः ॥ १८७
ासस्त्व मूल्येन केनैतद्दीयते त्वया । इति सापि तदाह स्म दिव्यरूपा किलाङ्गना ॥ १८८
वीरो हस्तस्थं तमेकं मणिनूपुरम् । संदर्श्य स्कन्धपृष्ठस्थप्रेतकायो जगाद ताम् ॥ १८९
त्यस्य सदृशं द्वितीयं नूपुरस्य मे । मांसं तस्य ददाम्येतदस्त्यसौ यदि गृह्यताम् ॥ १९०
ा साप्यवादीत्तमस्त्यन्यो नूपुरो मम । असौ मदीय एवैको नूपुरो हि हृतस्त्वया ॥ १९१
या त्वया दृष्टा शूलविद्धस्य पार्श्वतः । कृतान्यरूपा भवता परिज्ञातास्मि नाधुना ॥ १९२
मांसेन यदहं वच्मि ते तत्करोषि चेत् । तद्द्वितीयं ददाम्यस्य तुल्यं तुभ्यं स्वनूपुरम् ॥ १९३
ः स तदा वीरः प्रतिपद्य तदब्रवीत् । यत्त्वं वदसि तत्सर्वं करोम्येव क्षणादिति ॥ १९४
ै जगादैवमा मूलात्सा मनीषितम् । अस्ति भद्र त्रिघण्टाख्यं हिमवच्छिखरे पुरम् ॥ १९५
ल्लम्बजिह्वाख्यः प्रवीरो राक्षसाधिपः । तस्य विद्युच्छिखानाम भार्याहं कामरूपिणी ॥ १९६
स्यां सुतायां मे जातायां दैवतः पतिः । प्रभोः कपालस्फोटस्य पुरतो निहतो रणे ॥ १९७
िजपुरं तन्मे प्रभुणा तेन तुष्यता । प्रदत्तं तेन च सुखं स्थितास्मि ससुताधुना ॥ १९८
मद्दुहितेदानीमारूढा नवयौवनम् । तत्प्रवीरवरप्राप्तिचिन्ता च मम मानसम् ॥ १९९
ा समं राज्ञा यान्तं त्वाममुना पथा । दृष्ट्वा नक्तं चतुर्दश्यामिहस्थाहमचिन्तयम् ॥ २००
न्यो युवा वीरो योग्यो मे दुहितुः पतिः । तदेतत्प्राप्तये कंचिदुपायं किं न कल्पये ॥ २०१
कल्प्य याचित्वा शूलविद्धवचोमिषात् । जलं मध्येश्मशानं त्वमानीतोऽभूर्मया मृषा ॥ २०२
र्शितरूपादिप्रपञ्चालीकवादिनी । विप्रलब्धवती चास्मि तत्र त्वां क्षणमात्रकम् ॥ २०३

---

ादपैरिव—' इत्यस्मात्पूर्वम् 'अन्तर्गतोल्काहुतभुक्प्रज्वलत्कोटराननैः' इत्यर्धश्लोकः पुस्तकान्तरेऽधिकः.

१४

आकर्षणाय भूयस्ते युक्त्या चैकं स्वनूपुरम् । संत्यज्य शृङ्खलापाशमिव याता ततोऽप्यहम् ॥
अद्य चेत्थं मया प्राप्तो भवांस्तद्गृहमेत्य नः । भजस्व मे सुतां किं च गृहाणापरनूपुरम् ॥
इत्युक्तः स निशाचर्या तथेत्युक्त्वा तया सह । वीरो गगनमार्गेण तत्सिद्ध्या तत्पुरं ययौ ॥
सौवर्णं तदपश्यच्च शृङ्गे हिमवतः पुरम् । नभोध्वखेदविश्रान्तमर्कबिम्बमिवाचलम् ॥
रक्षोधिपसुतां तत्र नाम्ना विद्युत्प्रभां स ताम् । स्वसाहसमहासिद्धिमिव मूर्तामवाप्तवान् ॥
तया च सह तत्रैव कंचित्कालमुवास सः । अशोकदत्तः प्रियया श्वश्रूविभवनिर्वृतः ॥
ततो जगाद तां श्वश्रूं मह्यं तद्देहि नूपुरम् । यतः संप्रति गन्तव्या पुरी वाराणसी मया ॥
तत्र ह्येतत्प्रतिज्ञातं स्वयं नरपतेः पुरः । एकत्वन्नूपुरस्पर्धिद्वितीयानयनं मया ॥
इत्युक्ता तेन सा श्वश्रूर्द्वितीयं तं स्वनूपुरम् । तस्मै दत्त्वा पुनश्चैकं सुवर्णकमलं ददौ ॥
प्राप्ताब्जनूपुरस्तस्मात्स पुरान्निर्ययौ ततः । अशोकदत्तो वचसा नियम्यागमनं पुनः ॥
तया श्वश्र्वैव चाकाशपथेन पुनरेव तम् । श्मशानं प्रापितः सोऽभून्निजसिद्धिप्रभावतः ॥
तरुमूले च तत्रैव स्थित्वा सा तं ततोऽब्रवीत् । सदा कृष्णचतुर्दश्यामिह रात्रावुपैम्यहम् ॥
तस्मान्निशि च भूयोऽपि त्वमेष्यसि यदा यदा । तदा तदा वटतरोर्मूलात्प्राप्स्यसि मामितः ॥
एतच्छ्रुत्वा तथेत्युक्त्वा तामामन्त्र्य निशाचरीम् । अशोकदत्तः स ततो ययौ तावत्पितुर्गृहम् ॥
कनीयःसुतविश्लेषदुःखद्वैगुण्यदायिना । तादृशा तत्प्रवासेन पितरौ तत्र दुःखितौ ॥
अतर्कितागतो यावदानन्दयति तत्क्षणात् । तावत्स बुद्ध्वा श्वशुरस्तत्रैवास्याययौ नृपः ॥
स तं साहसिकस्पर्शभीतैरिव सकण्टकैः । अङ्गैः प्रणतमालिङ्ग्य मुमुदे भूपतिश्चिरम् ॥
ततस्तेन समं राज्ञा विवेश नृपमन्दिरम् । अशोकदत्तः स तदा प्रमोदो मूर्तिमानिव ॥
ददौ राज्ञे स संयुक्तं तद्दिव्यं नूपुरद्वयम् । कुर्वाणमिव तद्वीर्यस्तुतिं झणझणारवैः ॥
अर्पयामास तच्चास्मै कान्तं कनकपङ्कजम् । रक्षःकोषश्रियो हस्ताल्लीलाम्बुजमिवाहृतम् ॥
पृष्टोऽथ कौतुकात्तेन राज्ञा देवीयुतेन सः । अवर्णयद्यथावृत्तं स्वं कर्णानन्ददायि तत् ॥
विचित्रचरितोल्लेखचमत्कारितचेतनम् । प्राप्यते किं यशः शुभ्रमनङ्गीकृत्य साहसम् ॥
एवं वदंस्ततस्तेन जामात्रा कृतकृत्यताम् । मेने स राजा देवी च प्राप्तनूपुरयुग्मका ॥
उत्सवातोद्यनिर्ह्रादि तदा राजगृहं च तत् । अशोकदत्तस्य गुणानुद्गायदिव निर्बभौ ॥
अन्येद्युश्च स राजा तत्स्वकृते सुरसद्मनि । हेमाब्जं स्थापयामास सद्रौप्यकलशोपरि ॥
उभौ कलशपद्मौ च शुशुभाते सितारुणौ । यशःप्रतापाविव तौ भूपालाशोकदत्तयोः ॥
तादृशौ च विलोक्यैतौ स हर्षोत्फुल्ललोचनः । राजा माहेश्वरो भक्तिरसावेशादभाषत ॥
अहो विभाति पद्मेन तुङ्गोऽयं कलशोऽमुना । भूतिशुभ्रः कपर्दीव जटाजूटेन बभ्रुणा ॥
अभविष्यद्द्वितीयं चेदीदृशं कनकाम्बुजम् । अस्थापयिष्यतामुष्मिन्द्वितीये कलशेऽपि तत् ॥
इति राजवचः श्रुत्वाशोकदत्तस्ततोऽब्रवीत् । आनेष्याम्यहमम्भोजं द्वितीयमपि देव ते ॥
तच्छ्रुत्वा न ममान्येन पङ्कजेन प्रयोजनम् । अलं ते साहसेनेति राजापि प्रत्युवाच तम् ॥
दिवसेष्वथ यातेषु हेमाब्जहरणैषिणि । अशोकदत्ते सा भूयोऽप्यागात्कृष्णचतुर्दशी ॥
तस्यां चास्य सुवर्णाब्जवाञ्छां बुद्ध्वा भयादिव । द्युसरःस्वर्णकमले यातेऽस्तशिखरं रवौ ॥
संध्यारुणाभ्रपिशितग्रासगर्वादिव क्षणात् । तमोरक्षःसु धावत्सु धूमधूम्रेषु सर्वतः ॥
स्फुरद्दीपावलीदन्तमालाभास्वरभीषणे । जृम्भमाणे महारौद्रे निशानक्तंचरीमुखे ॥
प्रसुप्तराजपुत्रीकात्स्वैरं निर्गत्य मन्दिरात् । अशोकदत्तः स ययौ श्मशानं पुनरेव तत् ॥
तत्र तस्मिन्वटतरोर्मूले तां पुनरागताम् । ददर्श राक्षसीं श्वश्रूं विहितस्वागतादराम् ॥
तया च सह भूयस्तदगमत्तन्निकेतनम् । स युवा हिमवच्छृङ्गं मार्गोन्मुखवधूजनम् ॥
कंचित्कालं समं वध्वा तत्र स्थित्वाब्रवीच्च ताम् । श्वश्रूं देहि द्वितीयं मे कुतश्चित्कनकाम्बुजम् ॥

तच्छ्रुत्वा साप्यवादीत्तं कुतोऽन्यत्पङ्कजं मम । एतत्कपालस्फोटस्य विद्यतेऽस्मत्प्रभोः सरः ॥ २४३
यत्रेदृशानि जायन्ते हेमाब्जानि समन्ततः । तस्मात्तदेकं मद्भर्त्रे प्रीत्या पद्मं स दत्तवान् ॥ २४४
एवं तयोक्ते सोऽवादीत्तर्हि तन्मां सरोवरम् । नय यावत्स्वयं तस्मादादास्ये कनकाम्बुजम् ॥ २४५
न शक्यमेतद्रक्षोभिर्दारुणैस्तद्धि रक्ष्यते । एवं निषिद्धोऽपि तया निर्बन्धं न स तं जहौ ॥ २४६
ततः कथंचिन्नीतश्च तया श्वश्र्वा ददर्श तम् । दूरात्सरोवरं दिव्यं तुङ्गाद्रिकटकाश्रितम् ॥ २४७
छन्नं निरन्तरोद्दण्डदीप्तहेमसरोरुहैः । सततोन्मुखतापीतसंक्रान्तार्कप्रभैरिव ॥ २४८
गत्वैव तत्र यावच्च पद्मान्यवचिनोति सः । तावत्तद्रक्षिणो घोरा रुरुधुस्तं निशाचराः ॥ २४९
सशस्त्रः सोऽवधीच्चैनानन्यानन्ये पलाय्य च । गत्वा कपालस्फोटाय स्वामिने तन्न्यवेदयन् ॥ २५०
स तद्बुद्ध्वैव कुपितस्तत्र रक्षःपतिः स्वयम् । आगत्याशोकदत्तं तमपश्यल्लुण्ठिताम्बुजम् ॥ २५१
कथं भ्राता ममाशोकदत्तः सोऽयमिहागतः । इति प्रत्यभ्यजानाच्च तत्क्षणं तं सविस्मयः ॥ २५२
ततः शस्त्रं समुत्सृज्य हर्षबाष्पाप्लुतेक्षणः । धावित्वा पादयोः सद्यः पतित्वा च जगाद तम् ॥ २५३
अहं विजयदत्ताख्यः सोदर्यः स तवानुजः । आवां द्विजवरस्योभौ गोविन्दस्वामिनः सुतौ ॥ २५४
इयच्चिरं च जातोऽहं दैवादीदृङ्निशाचरः । चिताकपालदलनात्कपालस्फोटनामकः ॥ २५५
त्वद्दर्शनादिदानीं च ब्राह्मण्यं तत्स्मृतं मया । गतं च राक्षसत्वं मे मोहाच्छादितचेतनम् ॥ २५६
एवं विजयदत्तस्य वदतः परिरभ्य सः । यावत्क्षालयतीवाङ्गं राक्षसीभावदूषितम् ॥ २५७
अशोकदत्तो बाष्पाम्बुपूरैस्तावदवातरत् । प्रज्ञप्तिकौशिको नाम विद्याधरगुरुर्दिवः ॥ २५८
स तौ द्वावप्युपेत्यैव भ्रातरौ गुरुरब्रवीत् । यूयं विद्याधराः सर्वे शापादेतां दशां गताः ॥ २५९
अधुना च स शापो वः सर्वेषां शान्तिमागतः । तद्गृह्णीत निजा विद्या बन्धुसाधारणीरिमाः ॥ २६०
व्रजतं च निजं धाम स्वीकृतस्वजनौ युवाम् । इत्युक्त्वा दत्तविद्योऽसौ तयोर्द्यामुद्ययौ गुरुः ॥ २६१
तौ च विद्याधरीभूतौ प्रबुद्धौ जग्मतुस्ततः । व्योम्ना तद्धिमवच्छृङ्गं गृहीतकनकाम्बुजौ ॥ २६२
तत्र चाशोकदत्तस्तां रक्षःपतिसुतां प्रियाम् । उपागात्साप्यभूत्क्षीणशापा विद्याधरी तदा ॥ २६३
तया च साकं सुदृशा भ्रातरौ तावुभावपि । वाराणसीं प्रययतुः क्षणाद्गगनगामिनौ ॥ २६४
तत्र चोपेत्य पितरौ विप्रयोगाग्नितापितौ । निरवापयतां सद्यो दर्शनामृतवर्षिणौ ॥ २६५
अदेहभेदेऽप्याक्रान्तचित्रजन्मान्तरौ च तौ । न पित्रोरेव लोकस्याप्युत्सवाय बभूवतुः ॥ २६६
चिराद्विजयदत्तश्च गाढमाश्लिष्यतः पितुः । भुजमध्यमिवात्यर्थं मनोरथमपूरयत् ॥ २६७
ततस्तत्रैव तद्बुद्ध्वा प्रतापमुकुटोऽपि सः । अशोकदत्तश्वशुरो राजा हर्षादुपाययौ ॥ २६८
तत्सत्कृतश्च तद्राजधानीं सोत्कस्थितप्रियाम् । अशोकदत्तः स्वजनैः सार्धं बद्धोत्सवामगात् ॥ २६९
ददौ च कनकाब्जानि राज्ञे तस्मै बहूनि सः । अभ्यर्थिताधिकप्राप्तिहृष्टः सोऽप्यभवन्नृपः ॥ २७०
ततो विजयदत्तं तं सर्वेष्वत्र स्थितेषु सः । पिता प्रपच्छ गोविन्दस्वामी साश्चर्यकौतुकः ॥ २७१
तदा श्मशाने यामिन्यां राक्षसत्वं गतस्य ते । अभवत्कीदृशो वत्स वृत्तान्तो वर्ण्यतामिति ॥ २७२
ततो विजयदत्तस्तं बभाषे तात चापलात् । प्रस्फोटितचितादीप्तकपालोऽहं विधेर्वशात् ॥ २७३
मुखप्रविष्टया सद्यस्तद्वसाछटया तदा । रक्षोभूतस्त्वया तावद्दृष्टो मायाविमोहितः ॥ २७४
कपालस्फोट इत्येवं नाम कृत्वा हि राक्षसैः । ततोऽन्यैरहमाहूतस्तन्मध्ये मिलितोऽभवम् ॥ २७५
तैश्च नीतो निजस्वामि पार्श्वं रक्षःपतेः क्रमात् । सोऽपि दृष्ट्वैव मां प्रीतः सेनापत्ये न्ययोजयत् ॥ २७६
ततः कदाचिद्गन्धर्वानभियोक्तुं मदेन सः । गतो रक्षःपतिस्तत्र सङ्ग्रामे निहतोऽरिभिः ॥ २७७
तदैव प्रतिपन्नं च तद्भृत्यैर्मम शासनम् । ततोऽहं रक्षसां राज्यमकार्षं तत्पुरे स्थितः ॥ २७८
तत्राकस्माच्च हेमाब्जहेतोः प्राप्तस्य दर्शनात् । आर्यस्याशोकदत्तस्य प्रशान्ता सा दशा मम ॥ २७९
अनन्तरं यथास्माभिः शापमोक्षवशान्निजाः । विद्याः प्राप्तास्तथार्यो वः कृत्स्नमावेदयिष्यति ॥ २८०
एवं विजयदत्तेन तेन तत्र निवेदिते । अशोकदत्तः स तदा तदामूलादवर्णयत् ॥ २८१

पुरा विद्याधरौ सन्तौ गगनाद्गालवाश्रमे । आवां स्नान्तीरपश्याव गङ्गायां मुनिकन्यकाः ॥
तुल्याभिलाषास्ताश्चात्र वाञ्छन्तौ सहसा रहः । बुद्ध्वा तद्बन्धुभिः क्रोधाच्छप्तौ स्वो दिव्यदृष्टिभिः ॥
पापाचारौ प्रजायेथां मर्त्ययोनौ युवामुभौ । तत्रापि विप्रयोगश्च विचित्रो वां भविष्यति ॥
मानुषागोचरे देशे विप्रकृष्टेऽप्युपागतम् । एकं दृष्ट्वा द्वितीयो वां यदा प्रज्ञानमाप्स्यति ॥
तदा विद्याधरगुरोर्विद्यां प्राप्य भविष्यथः । पुनर्विद्याधरौ युक्तौ शापमुक्तौ स्वबन्धुभिः ॥
एवं तैर्मुनिभिः शप्तौ जातावावामुभाविह । वियोगोऽत्र यथा भूतस्तत्सर्वं विदितं च वः ॥
इदानीं पद्महेतोश्च श्वश्रूसिद्धिप्रभावतः । रक्षःपतेः पुरं गत्वा प्राप्तोऽयं चानुजो मया ॥
तत्रैव च गुरोः प्राप्य विद्याः प्रज्ञप्तिकौशिकात् । सद्यो विद्याधरीभूय वयं क्षिप्रमिहागताः ॥

इत्युक्त्वा पितरौ च तौ प्रियतमां तां चात्मजां भूपतेः
सद्यः शापतमोविमोक्षमुदितो विद्याविशेषैर्निजैः ।
तैस्तैः संव्यभजद्विचित्रचरितः सोऽशोकदत्तस्तदा
येनैते सपदि प्रबुद्धमनसोऽजायन्त विद्याधराः ॥
ततस्तमामन्त्र्य नृपं स साकं मातापितृभ्यां दयिताद्वयेन ।
उत्पत्य धन्यो निजचक्रवर्तिधाम द्युमार्गेण जवी जगाम ॥
तत्रालोक्य तमाज्ञां प्राप्य च तस्मादशोकवेग इति ।
नाम स बिभ्रत्सोऽपि च तद्भ्राता विजयवेग इति ॥
विद्याधरवरतरुणौ स्वजनानुगतावुभौ निजनिवासम् ।
गोविन्दकूटसंज्ञकमचलवरं भ्रातरौ ययतुः ॥
सोऽप्याश्चर्यवशः प्रतापमुकुटो वाराणसीभूपतिः
स्वस्मिन्देवकुले द्वितीयकलशन्यस्तैकहेमाम्बुजः ।
तद्दत्तैरपरैः सुवर्णकमलैरभ्यर्चितत्र्यम्बक-
स्तत्संबन्धमहत्तया प्रमुदितो मेने कृतार्थं कुलम् ॥
एवं दिव्याः कारणेनावतीर्णा जायन्तेऽस्मिञ्जन्तवो जीवलोके ।
सत्त्वोत्साहौ स्वोचितौ ते दधाना दुष्प्रापामप्यर्थसिद्धिं लभन्ते ॥
तत्सत्त्वसागर भवानपि कोऽपि जाने देवांश एव भविता च यथेष्टसिद्धिः ।
प्रायः क्रियासु महतामपि दुष्करासु सोत्साहता कथयति प्रकृतेर्विशेषम् ॥
सापि त्वदीप्सिता ननु दिव्या राजात्मजा कनकरेखा ।
बालान्यथा हि वाञ्छति कनकपुरीदर्शिनं कथं हि पतिम् ॥
इति रहसि निशम्य विष्णुदत्तात्सरसकथाप्रकरं स शक्तिदेवः ।
हृदि कनकपुरीविलोकनैषी धृतिमवलम्ब्य निनाय च त्रियामाम् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे चतुर्दारिकालम्बके द्वितीयस्तरङ्गः ।

---

तृतीयस्तरङ्गः ।

ततस्तत्रोत्स्थलद्वीपे प्रभाते तं मठस्थितम् । शक्तिदेवं स दाशेन्द्रः सत्यव्रत उपाययौ ॥
स च प्राक्प्रतिपन्नः सन्नुपेत्यैनमभाषत । ब्रह्मंस्त्वदिष्टसिद्ध्यर्थमुपायश्चिन्तितो मया ॥
अस्ति द्वीपवरं मध्ये रत्नकूटाख्यमम्बुधेः । कृतप्रतिष्ठस्तत्रास्ते भगवान्हरिरब्धिना ॥
आषाढशुक्लद्वादश्यां तत्र यात्रोत्सवे सदा । आयान्ति सर्वद्वीपेभ्यः पूजार्थं यत्नतो जनाः ॥
तत्र ज्ञायेत कनकपुरी सा जातुचित्पुरी । तदेहि तत्र गच्छावः प्रत्यासन्ना हि सा तिथिः ॥
इति सत्यव्रतेनोक्तः शक्तिदेवस्तथेति सः । जग्राह हृष्टः पाथेयं विष्णुदत्तोपकल्पितम् ॥

ततोऽन्तःक्षिप्तमण्डूकं सपिधानं नवं घटम् । स्वैरमानाय्य राजा तं हरिशर्माणमब्रवीत् ॥ १३१
ब्रह्मन्यदस्मिन्घटके स्थितं जानासि तद्यदि । तदद्य ते करिष्यामि पूजां सुमहतीमहम् ॥ १३२
तच्छ्रुत्वा नाशकालं तं मत्वा स्मृत्वा ततो निजम् । पित्रा क्रीडाकृतं बाल्ये मण्डूक इति नाम सः ॥ १३३
विधातृप्रेरितः कुर्वस्तेनात्र परिदेवनम् । ब्राह्मणो हरिशर्मात्र सहसैवैवमब्रवीत् ॥ १३४
साधोरेव तु मण्डूक तवाकाण्डे घटोऽधुना । अवशस्य विनाशाय संजातोऽयं हठादिह ॥ १३५
तच्छ्रुत्वाहो महाज्ञानी भेकोऽपि विदितोऽमुना । इति जल्पन्ननन्दात्र प्रस्तुतार्थान्वयाज्जनः ॥ १३६
ततस्तत्प्रातिभज्ञानं मन्वानो हरिशर्मणे । तुष्टो राजा ददौ ग्रामान्सहेमच्छत्रवाहनान् ॥ १३७
क्षणाच्च हरिशर्मा स जज्ञे सामन्तसंनिभः । इत्थं दैवेन साध्यन्ते सदर्थाः शुभकर्मणाम् ॥ १३८
तत्सोमदत्तं सदृशं दैवेनैवाभिसारिता । निवार्यासदृशं राजंस्तव तेजस्वती सुता ॥ १३९
इति मन्त्रिमुखाच्छ्रुत्वा तस्मै राजसुताय ताम् । राजा विक्रमसेनोऽथ ददौ लक्ष्मीमिवात्मजाम् ॥ १४०
ततः श्वशुरसैन्येन गत्वा जित्वा रिपूंश्च सः । सोमदत्तः स्वराज्यस्थस्तस्थौ भार्यासखः सुखम् ॥ १४१

एवं विधेर्भवति सर्वमिदं विशेषात्त्वामीदृशीं घटयितुं क इह क्षमेत ।
वत्सेश्वरेण सदृशेन विनैव दैवं कुर्यामहं सखि किमत्र कलिङ्गसेने ॥ १४२
इत्थं कथां रहसि राजसुता निशम्य सोमप्रभावदनतोऽत्र कलिङ्गसेना ।
तत्प्रार्थिनी शिथिलबन्धुभयत्रपा सा वत्सेशसंगमसमुत्कमना बभूव ॥ १४३
अथास्तमुपयास्यति त्रिभुवनैकदीपे रवौ प्रभातसमयागमावधि कथंचिदामन्त्र्य ताम् ।
सखीमभिमतोद्यमस्थितमतिं खमार्गेण सा मयासुरसुता ययौ निजगृहाय सोमप्रभा ॥ १४४

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे मदनमञ्चुकालम्बके चतुर्थस्तरङ्गः ।

---

## पञ्चमस्तरङ्गः ।

ततोऽन्येद्युरुपेतां तां प्रातः सोमप्रभां सखीम् । कलिङ्गसेना विश्रम्भात्कथां कुर्वत्युवाच सा ॥ १
मां प्रसेनजिते राज्ञे तातो दास्यति निश्चितम् । एतच्छ्रुतं मयाम्बातो दृष्टो वृद्धः स च त्वया ॥ २
वत्सेशस्तु यथा रूपे त्वयैव कथितस्तथा । श्रुतिमार्गप्रविष्टेन हृतं तेन यथा मनः ॥ ३
तत्प्रसेनजितं पूर्वं प्रदर्श्य नय तत्र माम् । आस्ते वत्सेश्वरो यत्र किं तातेन किमम्बया ॥ ४
एवमुक्तवतीं तां च सोत्कां सोमप्रभाब्रवीत् । गन्तव्यं यदि तद्यामो यन्त्रेण व्योमगामिना ॥ ५
किं तु सर्वं गृहाण त्वं निजं परिकरं यतः । दृष्ट्वा वत्सेश्वरं भूयो नागन्तुमिह शक्ष्यसि ॥ ६
न च त्वं द्रक्ष्यसि पुनः पितरौ न स्मरिष्यसि । दूरस्थां प्राप्तदयिता विस्मरिष्यसि मामपि ॥ ७
नह्येवमहमेष्यामि भर्तृवेश्मनि ते सखि । तच्छ्रुत्वा राजकन्या सा रुदती तामभाषत ॥ ८
तर्हि वत्सेश्वरं तं त्वमिहैवानय मे सखि । नोत्सहे तत्र हि स्थातुं क्षणमेकं त्वया विना ॥ ९
नानिन्ये चानिरुद्धः किमुपायाच्चित्रलेखया । जानत्यपि तथा चैतां मत्तस्त्वं तत्कथां शृणु ॥ १०
बाणासुरस्य तनया बभूवोषेति विश्रुता । तस्याश्चाराधिता गौरी पतिप्राप्त्यै वरं ददौ ॥ ११
स्वप्ने प्राप्स्यसि यत्सङ्गं स ते भर्ता भवेदिति । ततो देवकुमाराभं कंचित्स्वप्ने ददर्श सा ॥ १२
गन्धर्वविधिना तेन परिणीता तथैव च । प्राप्ततत्सत्यसंभोगा प्राबुध्यत निशाक्षये ॥ १३
अदृष्ट्वा तं पतिं दृष्टं दृष्ट्वा संभोगलक्षणम् । स्मृत्वा गौरीवरं साभूत्सातङ्कभयविस्मया ॥ १४
ताम्यन्ती च ततः सा तं स्वप्ने दृष्टं प्रियं विना । पृच्छन्त्यै चित्रलेखायै सख्यै सर्वं शशंस तत् ॥ १५
सापि नामाद्यभिज्ञानं न किंचित्तस्य जानती । योगेश्वरी चित्रलेखा तामुषामेवमब्रवीत् ॥ १६
सखि देवीवरस्यायं प्रभावोऽत्र किमुच्यते । किं त्वभिज्ञानशून्यस्ते सोऽन्वेष्टव्यः प्रियः कथम् ॥ १७
परिजानासि चेत्तं ते ससुरासुरमानुषम् । जगल्लिखामि तन्मध्ये तं मे दर्शय येन सः ॥ १८
आनीयते मयेत्युक्ता सा तथेत्युदिते तया । चित्रलेखा क्रमाद्विश्वमलिखद्वर्णवर्तिभिः ॥ १९

तत्रोषा सोऽयमित्यस्या हृष्टाङ्गुल्या सकम्पया । द्वारवत्यां यदुकुलादनिरुद्धमदर्शयत् ॥
चित्रलेखा ततोऽवादीत्सखि धन्यासि यत्त्वया । भर्तानिरुद्धः प्राप्तोऽयं पौत्रो भगवतो हरेः ॥
योजनानां सहस्रेषु षष्टौ वसति स स्थितः । तच्छ्रुत्वा साधिकौत्सुक्यवशात्तामब्रवीदुषा ॥
नाद्य चेत्सखि तस्याङ्कं श्रये श्रीखण्डशीतलम् । तदत्युद्दामकामाग्निनिर्दग्धां विद्धि मां मृताम् ॥
श्रुत्वैतच्चित्रलेखा सा तामाश्वास्य प्रियां सखीम् । तदैवोत्पत्य नभसा ययौ द्वारवतीं पुरीम् ॥
ददर्श च पृथूत्तुङ्गैर्मन्दिरैरब्धिमध्यगाम् । कुर्वतीं तं पुनः क्षिप्तमन्थाद्रिशिखरभ्रमम् ॥
तस्यां सुप्तं निशि प्राप्य सानिरुद्धं विबोध्य च । उषानुरागं तं तस्मै शशंस स्वप्नदर्शनात् ॥
आदाय चात्ततद्रूपस्वप्नवृत्तान्तमेव तम् । सोत्कं सिद्धिप्रभावेण क्षणेनैवाययौ ततः ॥
एत्य चावेक्षमाणायास्तस्याः सख्याः खवर्त्मना । प्रावेशयदुषायास्तं गुप्तमन्तःपुरं प्रियम् ॥
सा दृष्ट्वैवानिरुद्धं तमुषा साक्षादुपागतम् । अमृतांशुमिवाम्भोधिवेला नाङ्गेष्ववर्तत ॥
ततस्तेन समं तस्थौ सखीदत्तेन तत्र सा । जीवितेनेव मूर्तेन वल्लभेन यथासुखम् ॥
तज्ज्ञानात्पितरं चास्याः क्रुद्धं बाणं जिगाय सः । अनिरुद्धः स्ववीर्येण पितामहबलेन च ॥
ततो द्वारवतीं गत्वा तावभिन्नतनू उभौ । उषानिरुद्धौ जज्ञाते गिरिजाशंकराविव ॥
इत्युषायाः प्रियोऽह्नैव मेलितश्चित्रलेखया । त्वं सप्रभावाप्यधिका ततोऽपि सखि मे मता ॥
तन्ममानय वत्सेशमिह मा स्म चिरं कृथाः । एवं कलिङ्गसेनातः श्रुत्वा सोमप्रभाब्रवीत् ॥
चित्रलेखा सुरस्त्री सा समुत्क्षिप्यानयत्परम् । मादृशी किं विदध्यात्तु परस्पर्शाद्यकुर्वती ॥
तत्त्वां नयामि तत्रैव यत्र वत्सेश्वरः सखि । प्राक्प्रसेनजितं तं ते दर्शयित्वा त्वदर्थिनम् ॥
इति सोमप्रभोक्ता सा तथेत्युक्त्वा तया सह । कलिङ्गसेना तत्क्लृप्तं मायायन्त्रविमानकम् ॥
तदैवारुह्य नभसा सकोषा सपरिच्छदा । कृतप्रास्थानिका प्रायात्पित्रोरविदिता ततः ॥
नहि पश्यति तुङ्गं वा श्वभ्रं वा स्त्रीजनोऽग्रतः । स्मरेण नीतः परमां धारां वाजीव सादिना ॥
श्रावस्तीं प्राप्य पूर्वं च तं प्रसेनजितं नृपम् । मृगयानिर्गतं दूराज्जरापाण्डुं ददर्श सा ॥
वृद्धाद्व्रजास्मादिति तां दूरादिव निषेधता । उद्धूयमानेन मुहुश्चामरेणोपलक्षितम् ॥
सोऽयं प्रसेनजिद्राजा पित्रास्मै त्वं प्रदित्सिता । पश्येति सोमप्रभया दर्शितं सोपहासया ॥
जरयायं वृतो राजा का वृणीतेऽपरा त्वमुम् । तदितः सखि शीघ्रं मां नय वत्सेश्वरं प्रति ॥
इति सोमप्रभां चोक्त्वा तत्क्षणं सा तया सह । कलिङ्गसेना व्योम्नैव कौशाम्बीं नगरीं ययौ ॥
तत्रोद्यानगतं सा तं वत्सेशं सख्युदीरितम् । ददर्श दूरात्सोत्कण्ठा चकोरीवामृतत्विषम् ॥
सा तदुत्फुल्लया दृष्ट्या हृन्न्यस्तेन च पाणिना । प्रविष्टोऽयं पथानेन मामत्रेत्यब्रवीदिव ॥
सखि संगमयाद्यैव वत्सराजेन मामिह । एनं विलोक्य हि स्थातुं न शक्ता क्षणमप्यहम् ॥
इति चोक्तवतीं तां सा सखी सोमप्रभाब्रवीत् । अद्याशुभं मया किंचिन्निमित्तमुपलक्षितम् ॥
तदिदं दिवसं तूष्णीमुद्यानेऽस्मिन्नलक्षिता । अधितिष्ठस्व मा कार्षीः सखि दूरं गतागतम् ॥
प्रातरागत्य युक्तिं वा घटयिष्यामि संगमे । अधुना गन्तुमिच्छामि भर्तुश्चित्तगृहे गृहम् ॥
इत्युक्त्वा तामवस्थाप्य ययौ सोमप्रभा ततः । वत्सराजोऽपि चोद्यानात्स्वमन्दिरमथाविशत् ॥
ततः कलिङ्गसेना सा तत्रस्था स्वमहत्तरम् । यथातत्त्वं स्वसंदेशं दत्त्वा वत्सेश्वरं प्रति ॥
प्राहिणोत्प्राङ्निषिद्धापि स्वसख्या शकुनज्ञया । स्वतन्त्रोऽभिनवारूढो युवतीनां मनोभवः ॥
स च गत्वा प्रतीहारमुखेनावेद्य तत्क्षणम् । महत्तरः प्रविश्यैवं वत्सराजं व्यजिज्ञपत् ॥
राजन्कलिङ्गदत्तस्य राज्ञस्तक्षशिलापतेः । सुता कलिङ्गसेनाख्या श्रुत्वा त्वां रूपवत्तरम् ॥
स्वयंवरार्थमिह ते संप्राप्ता त्यक्तबान्धवा । मायायन्त्रविमानेन सानुगा व्योमगामिना ॥
आनीता गुह्यचारिण्या सख्या सोमप्रभाख्यया । मयासुरस्यात्मजया नडकूबरभार्यया ॥
तया विज्ञापनायाहं प्रेषितः स्वीकुरुष्व ताम् । युवयोरस्तु योगोऽयं कौमुदीचन्द्रयोरिव ॥

एवं महत्तराच्छ्रुत्वा तं तथेत्यभिनन्द्य च । प्रहृष्टो हेमवस्त्राद्यैर्वत्सराजोऽभ्यपूजयत् ॥ ५९
आहूय चाब्रवीन्मन्त्रिमुख्यं यौगन्धरायणम् । राज्ञः कलिङ्गदत्तस्य ख्यातरूपा क्षितौ सुता ॥ ६०
स्वयं कलिङ्गसेनाख्या वरणाय ममागता । तद्ब्रूहि शीघ्रमस्याश्यां कदा परिणयामि ताम् ॥ ६१
इत्युक्तो वत्सराजेन मन्त्री यौगन्धरायणः । अस्यायतिहितापेक्षी क्षणमेवमचिन्तयत् ॥ ६२
कलिङ्गसेना सा तावत्ख्यातरूपा जगत्त्रये । नास्त्यन्या तादृशी तस्यै स्पृहयन्ति सुरा अपि ॥ ६३
तां लब्ध्वा वत्सराजोऽयं सर्वमन्यत्परित्यजेत् । देवी वासवदत्ता च ततः प्राणैर्वियुज्यते ॥ ६४
नरवाहनदत्तोऽपि नश्येद्राजसुतस्ततः । पद्मावत्यपि तत्स्नेहाद्देवी जीवति दुष्करम् ॥ ६५
ततश्चण्डमहासेनप्रद्योतौ पितरौ द्वयोः । देव्योर्विमुञ्चतः प्राणान्विकृतिं वापि गच्छतः ॥ ६६
एवं च सर्वनाशः स्यान्न च युक्तं निषेधनम् । राज्ञोऽस्य व्यसनं यस्माद्वारितस्याधिकीभवेत् ॥ ६७
तस्मादनुप्रवेशस्य सिद्धयै कालं हराम्यहम् । इत्यालोच्य स वत्सेशं प्राह यौगन्धरायणः ॥ ६८
देव धन्योऽसि यस्यैषा स्वयं ते गृहमागता । कलिङ्गसेना भृत्यत्वं प्राप्तश्चैतत्पिता नृपः ॥ ६९
तत्त्वया गणकान्पृष्ट्वा सुलग्नेऽस्या यथाविधि । कार्यः पाणिग्रहो राज्ञो बृहतो दुहिता ह्यसौ ॥ ७०
अद्यास्या दीयतां तावद्योग्यं वासगृहं पृथक् । दासीदासा विसृज्यन्तां वस्त्राण्याभरणानि च ॥ ७१
इत्युक्तो मन्त्रिमुख्येण वत्सराजस्तथेति तत् । प्रहृष्टहृदयः सर्वं सविशेषं चकार सः ॥ ७२
कलिङ्गसेना च ततः प्रविष्टा वासवेश्म तत् । स्वमनोरथमासन्नं मत्वा प्राप परां मुदम् ॥ ७३
यौगन्धरायणः सोऽपि क्षणाद्राजकुलात्ततः । निर्गत्य स्वगृहं गत्वा धीमानेवमचिन्तयत् ॥ ७४
प्रायोऽशुभस्य कार्यस्य कालहारः प्रतिक्रिया । तथा च वृत्रशत्रौ प्राग्ब्रह्महत्यापलायिते ॥ ७५
देवराज्यमवाप्तेन नहुषेणाभिवाञ्छिता । रक्षिता देवगुरुणा शची शरणमाश्रिता ॥ ७६
अद्य प्रातरुपैति त्वामित्युक्त्वा कालहारतः । यावत्स नष्टो नहुषो हुंकाराद्ब्रह्मशापतः ॥ ७७
प्राप्तश्च पूर्ववच्छक्रः स पुनर्देवराजताम् । एवं कलिङ्गसेनार्थे कालः क्षेप्यो मया प्रभोः ॥ ७८
इति संचिन्त्य सर्वेषां गणकानां स संविदम् । दूरलग्नप्रदानाय मन्त्री गुप्तं व्यधात्तदा ॥ ७९
अथ विज्ञाय वृत्तान्तं देव्या वासवदत्तया । आहूय स महामन्त्री स्वमन्दिरमनीयत ॥ ८०
तत्र प्रविष्टं प्रणतं रुदती सा जगाद तम् । आर्य पूर्वं त्वयोक्तं मे यथा देवि मयि स्थिते ॥ ८१
पद्मावत्या ऋते नान्या सपत्नी ते भविष्यति । कलिङ्गसेनाप्यद्यैषा पश्येह परिणेष्यते ॥ ८२
सा च रूपवती तस्यामार्यपुत्रश्च रज्यति । अतो वितथवादी त्वं जातोऽहं च मृताधुना ॥ ८३
तच्छ्रुत्वा तामवोचत्स मन्त्री यौगन्धरायणः । धीरा भव कथं ह्येतद्देवि स्यान्मम जीवतः ॥ ८४
त्वया तु नात्र कर्तव्या राज्ञोऽस्य प्रतिकूलता । प्रत्युतालम्ब्य धीरत्वं दर्शनीयानुकूलता ॥ ८५
नातुरः प्रतिकूलोक्तैर्वशे वैद्यस्य वर्तते । वर्तते त्वनुकूलोक्तैः साम्नैवाचरतः क्रियाम् ॥ ८६
प्रतीपं कृष्यमाणो हि नोत्तरेदुत्तरेन्नरः । वाह्यमानोऽनुकूलं तु नोद्योगाद्व्यसनात्तथा ॥ ८७
अतः समीपमायान्तं राजानं त्वमविक्रिया । उपचारैरुपचरेः संवृत्याकारमात्मनः ॥ ८८
कलिङ्गसेनास्वीकारं श्रद्दध्यास्तस्य सांप्रतम् । वृद्धिं ब्रुवाणा राज्यस्य सहाये तत्पितर्यपि ॥ ८९
एवं कृते च माहात्म्यगुणं दृष्ट्वा परं तव । प्रवृद्धस्नेहदाक्षिण्यो राजासौ भवति त्वयि ॥ ९०
मत्वा कलिङ्गसेनां च स्वाधीनां नोत्सुको भवेत् । वार्यमाणस्य वाञ्छा हि विषयेष्वभिवर्धते ॥ ९१
देवी पद्मावती चैतच्छिक्षणीया त्वयानघे । एवं स राजा कार्येऽस्मिन्कालक्षेपं सहेत नः ॥ ९२
अतः परं च जानेऽहं पश्येर्युक्तिबलं मम । संकटे हि परीक्ष्यन्ते प्राज्ञाः शूराश्च संगरे ॥ ९३
तद्देवि मा विषण्णा भूरिति देवीं प्रबोध्य ताम् । तयादृतोक्तिः स ययौ ततो यौगन्धरायणः ॥ ९४

वत्सेश्वरश्च तदहर्न दिवा न रात्रौ देव्योर्द्वयोरपि स वासगृहं जगाम ।
तादृक्स्वयंवररसोपनमत्कलिङ्गसेनासमाननवसंगमसोत्कचेताः ॥ ९५

रात्रिं च दुर्लभरसोत्सुकतातिगाढचिन्तामहोत्सवमयीमिव तां ततस्ते ।
निन्युः स्वसद्मसु पृथक्पृथगेव देवीवत्सेशतत्सचिवमुख्यकलिङ्गसेनाः ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे मदनमञ्चुकालम्बके पञ्चमस्तरङ्गः ।

---

षष्ठस्तरङ्गः ।

ततः प्रतीक्षमाणं तं वत्सराजमुपेत्य सः । यौगन्धरायणो धूर्तः प्रातर्मन्त्री व्यजिज्ञपत् ॥
लग्नः कलिङ्गसेनाया देवस्य च शुभावहः । विवाहमङ्गलायेह किं नाद्यैव विलोक्यते ॥
तच्छ्रुत्वा सोऽब्रवीद्राजा ममाप्येवं हृदि स्थितम् । तां विना हि मुहूर्तं मे स्थातुं न सहते मनः ॥
इत्युक्त्वैव स तत्कालं प्रतीहारं पुरःस्थितम् । आदिश्यानाययामास गणकान्सरलाशयः ॥
तेन पृष्टा महामन्त्रिपूर्वस्थापितसंविदः । ऊचुर्लग्नोऽनुकूलोऽस्ति राज्ञो मासेषु षट्स्वितः ॥
तच्छ्रुत्वैव मृषा कोपं कृत्वा यौगन्धरायणः । अज्ञा इमे धिगित्युक्त्वा राजानं निपुणोऽब्रवीत् ॥
योऽसौ ज्ञानीति देवेन पूजितो गणकः पुरा । स नागतोऽद्य तं पृष्ट्वा यथायुक्तं विधीयताम् ॥
एतन्मन्त्रिवचः श्रुत्वा वत्सेशो गणकं तदा । तमप्यानाययामास दोलारूढेन चेतसा ॥
सोऽप्यस्य कालहाराय स्थितसंवित्तथैव तम् । लग्नं पृष्टोऽब्रवीद्ध्यात्वा षण्मासान्ते व्यवस्थितम् ॥
ततो राजानमुद्विग्न इव यौगन्धरायणः । जगाद देव कर्तव्यं किमत्रादिश्यतामिति ॥
राजाप्युत्कः सुलग्नैषी स विमृश्य ततोऽभ्यधात् । कलिङ्गसेना प्रष्टव्या सा किमाहेत्यवेक्ष्यताम् ॥
तच्छ्रुत्वा स तथेत्युक्त्वा गृहीत्वा गणकद्वयम् । पार्श्वं कलिङ्गसेनाया ययौ यौगन्धरायणः ॥
तया कृतादरो दृष्ट्वा तद्रूपं स व्यचिन्तयत् । प्राप्येमां व्यसनाद्राजा सर्वं राज्यं त्यजेदिति ॥
उवाच चैनामुद्वाहलग्नं ते गणकैः सह । निश्चेतुमागतोऽस्म्येतैर्जन्मर्क्षं तन्निवेद्यताम् ॥
तच्छ्रुत्वा जन्मनक्षत्रं तस्याः परिजनोदितम् । गणकास्ते मृषा कृत्वा विचारं मन्त्रिसंविदा ॥
लग्नं तमेव तत्रापि मासषट्कान्तवर्तिनम् । नार्वागतः पुरोऽस्तीति वदन्तः पुनरभ्यधुः ॥
श्रुत्वा दूरतरं तं च लग्नमाविग्नचेतसि । ततः कलिङ्गसेनायां तन्महत्तरकोऽभ्यधात् ॥
प्रेक्ष्यो लग्नोऽनुकूलः प्राग्येन स्यादेतयोः शुभम् । यावत्कालं हि दंपत्योः किं चिरेणाचिरेण वा ॥
एतन्महत्तरवचः श्रुत्वा सर्वेऽपि तत्क्षणम् । सदुक्तमेवमेवैतदिति तत्र बभाषिरे ॥
यौगन्धरायणोऽप्याह हा कुलग्ने कृते च नः । कलिङ्गदत्तः संबन्धी राजा खेदं व्रजेदिति ॥
ततः कलिङ्गसेनापि सर्वांस्तानवशा सती । यथा भवन्तो जानन्तीत्युक्त्वा तूष्णीं बभूव सा ॥
तदेव च वचस्तस्या गृहीत्वामन्त्र्य तां ततः । यौगन्धरायणो राज्ञः पार्श्वं सगणको ययौ ॥
तत्र तस्मै तदावेद्य वत्सेशाय तथैव सः । युक्त्या च तमवस्थाप्य स जगाम निजं गृहम् ॥
सिद्धकालातिपातश्च कार्यशेषाय तत्र सः । योगेश्वराख्यं सुहृदं सस्मार ब्रह्मराक्षसम् ॥
स पूर्वप्रतिपन्नस्तं स्वैरं ध्यानादुपस्थितः । राक्षसो मन्त्रिणं नत्वा किं स्मृतोऽस्मीत्यवोचत ॥
ततः स मन्त्री तस्मै तं कृत्स्नं व्यसनदं प्रभोः । कलिङ्गसेनावृत्तान्तमुक्त्वा भूयो जगाद तम् ॥
कालो मया हृतो मित्र तन्मध्ये त्वं स्वयुक्तितः । वृत्तं कलिङ्गसेनायाः प्रच्छन्नोऽस्या निरूपयेः ॥
विद्याधरादयस्तां हि छन्नं वाञ्छन्ति निश्चितम् । यतोऽन्या तादृशी नास्ति रूपेणास्मिञ्जगत्त्रये ॥
अतः केनापि सिद्धेन सङ्गं विद्याधरेण वा । गच्छेत्सा यदि तच्च त्वं पश्येस्तद्भद्रकं भवेत् ॥
अन्यरूपागतश्चात्र लक्ष्यस्ते दिव्यकामुकः । स्वापकाले यतो दिव्याः सुप्ताः स्वे रूप आसते ॥
एवं त्वद्दृष्टितस्तस्या दोषोऽस्माभिर्विलोक्यते । तस्यां राजा विरज्येच्च तत्कार्यं निर्वहेच्च नः ॥
इत्युक्तो मन्त्रिणा तेन सोऽब्रवीद्ब्रह्मराक्षसः । युक्त्याहमेव किं नैतां ध्वंसयामि निहन्मि वा ॥

---

१. 'पुस्तकान्तरेऽस्माच्छ्लोकात्पूर्वं 'राजन्कलिङ्गदत्तस्य राज्ञस्तक्षशिलापतेः ।... ... ... ... ... ... ... ... ... अयं त्रुटितोत्तरार्धः श्लोको वर्तते.

तैव महामन्त्री तं स यौगन्धरायणः । उवाच नैतत्कर्तव्यमधर्मो हि महान्भवेत् ॥ ३३
धर्ममबाधित्वा स्वेन संसरते पथा । तस्योपयाति साहाय्यं स एवाभीष्टसिद्धिषु ॥ ३४
ाः स्वोत्थितो दोषः प्रेक्षणीयस्त्वया सखे । येनास्माभिर्भवन्मैत्र्या राजकार्यं कृतं भवेत् ॥ ३५
मन्त्रिवरादिष्टः स गत्वा ब्रह्मराक्षसः । गृहं कलिङ्गसेनायां योगच्छन्नः प्रविष्टवान् ॥ ३६
न्तरे सखी तस्याः सा मयासुरपुत्रिका । आगात्कलिङ्गसेनायाः पार्श्वं सोमप्रभा पुनः ॥ ३७
ृष्ट्वा रात्रिवार्तां तां युक्तबन्धुं मयात्मजा । राजपुत्रीमुवाचैवं तस्मिञ्शृण्वति राक्षसे ॥ ३८
पूर्वाह्ण एवाहं विचित्य त्वामिहागता । छन्ना त्वतिष्ठं त्वत्पार्श्वे दृष्ट्वा यौगन्धरायणम् ॥ ३९
युष्मदालापः सर्वं चावगतं मया । तत्किं त्वया ह्य एवैतदारब्धं मन्त्रिषिद्धया ॥ ४०
पोद्यानिमित्तं हि कार्यं यत्क्रियते सखि । तदनिष्टाय कल्पेत तथा चेमां कथां शृणु ॥ ४१
ग्रामभूत्पूर्वं वसुदत्त इति द्विजः । विष्णुदत्ताभिधानश्च पुत्रस्तस्योपपद्यत ॥ ४२
ष्णुदत्तो वयसा पूर्णषोडशवत्सरः । गन्तुं प्रववृते विद्याप्राप्तये वलभीं पुरीम् ॥ ४३
न्ते स्म च तस्यान्ये सप्त विप्रसुताः समाः । सप्तापि ते पुनर्मूर्खाः स विद्वान्सत्कुलोद्भतः ॥ ४४
न्योन्यपरित्यागशपथं तैः समं ततः । विष्णुदत्तः प्रतस्थे स पित्रोरविदितो निशि ॥ ४५
तश्चाग्रतोऽकस्मादनिमित्तमुपस्थितम् । दृष्ट्वा सोऽत्र वयस्यांस्तान्सहप्रस्थायिनोऽभ्यधात् ॥ ४६
मेत्तमिदं हन्त युक्तमद्य निवर्तितुम् । पुनरेव प्रयास्यामः सिद्धये शकुनान्विताः ॥ ४७
तैव सखायस्तं मूर्खाः सप्तापि तेऽब्रुवन् । मृषा मा जीगणः शङ्कां नह्यतो बिभिमो वयम् ॥ ४८
द्विभेषि तन्मा गा वयं यामोऽधुनैव तु । प्रातर्विदितवृत्तान्ता नास्मांस्त्यक्ष्यन्ति बान्धवाः ॥ ४९
च्छद्भिरज्ञैस्तैः साकं शपथयन्त्रितः । विष्णुदत्तो ययावेव स स्मृत्वाघहरं हरिम् ॥ ५०
न्ते च विलोक्यान्यदनिमित्तं पुनर्वदन् । मूर्खैस्तैः सखिभिः सर्वैः स एवं निरभर्त्स्यत ॥ ५१
ानिमित्तं नः किमन्येनाध्वभीलुक । यत्त्वमस्माभिरानीतः काकशङ्की पदे पदे ॥ ५२
दे भर्त्सनां कृत्वा गच्छद्भिस्तैः समं च सः । विवशः प्रययौ विष्णुदत्तस्तूष्णीं बभूव च ॥ ५३
शो विधातव्यो मूर्खस्य स्वाभिचारिणः । संस्कारोऽवस्करस्येव तिरस्कारकरो हि सः ॥ ५४
बहूनां मूर्खाणां मध्ये निपतितो बुधः । पद्मः पाथस्तरङ्गाणामिव विप्लवते ध्रुवम् ॥ ५५
देषां न वक्तव्यं मया भूयो हिताहितम् । तूष्णीमेव प्रयातव्यं विधिः श्रेयो विधास्यति ॥ ५६
द्याकलयन्मूर्खैः प्रक्रमंस्तैः समं पथि । विष्णुदत्तो दिनस्यान्ते शबरग्राममाप सः ॥ ५७
भ्रान्त्वा निशि प्राप तरुण्याधिष्ठितं स्त्रिया । गृहमेकं ययाचे च निवासं सोऽथ तां स्त्रियम् ॥ ५८
दत्तेऽपवरके सहान्यैस्तैर्विवेश सः । सखिभिस्ते च सप्तापि तत्र निद्रां क्षणं ययुः ॥ ५९
को जाग्रदेवासीदमनुष्यगृहाश्रयात् । स्वपन्त्यज्ञा हि निश्चेष्टाः कुतो निद्रा विवेकिनाम् ॥ ६०
तत्र पुरुषः कोऽप्येको निभृतं युवा । अभ्यन्तरगृहं तस्याः प्रविवेशान्तिकं स्त्रियाः ॥ ६१
साकं च सा रेमे चिरं गुप्ताभिभाषिणी । रतिश्रान्तौ च तौ दैवान्निद्रां द्वावपि जग्मतुः ॥ ६२
दीपप्रकाशेन सर्वं द्वारान्तरेण सः । विष्णुदत्तो विलोक्यैवं सनिर्वेदमचिन्तयत् ॥ ६३
कथं प्रविष्टाः स्मो दुश्चारिण्याः स्त्रिया गृहम् । ध्रुवं ज्ञातोऽयमेतस्या न कौमारः पतिः पुनः ॥ ६४
था हि भवत्येषा सशङ्कनिभृता गतिः । मया चपलचित्तेयमादावेव च लक्षिता ॥ ६५
ालाभात्प्रविष्टाः स्मः किं त्वत्रान्योन्यसाक्षिणः । इत्येवं चिन्तयञ्शब्दं जनानां सोऽशृणोद्बहिः ॥ ६६
प्रविशन्तं च स्वस्वस्थानस्थितानुगम् । युवानमभिपश्यन्तं सखड्गं शबराधिपम् ॥ ६७
यमिति पृच्छन्तं मत्वा गृहपतिं स तम् । भीतः पान्थाः स्म इत्याह विष्णुदत्तः पुलिन्दपम् ॥ ६८
ान्तः शबरो गत्वा दृष्ट्वा भार्यां तथास्थिताम् । चिच्छेद तस्य सुप्तस्य तज्जारस्यासिना शिरः ॥ ६९
तु निगृहीता न तेन सा नापि बोधिता । भुवि न्यस्तासिनान्यत्र पर्यङ्के सुप्तमेव तु ॥ ७०
ा सप्रदीपेऽत्र विष्णुदत्तो व्यचिन्तयत् । युक्तं स्त्रीति न यद्भार्या हता दारहरो हतः ॥ ७१

किं तु कुत्रेदृशं कर्म यदनेनात्र सुप्यते। विस्रब्धं तदहो चित्रं वीर्यमुद्रिक्तचेतसाम् ॥
इत्यत्र चिन्तयत्येव विष्णुदत्ते प्रबुध्य सा। कुस्त्री ददर्श जारं स्वं हतं सुप्तं च तं पतिम् ॥
उत्थाय च गृहीत्वा तत्स्कन्धे जारकबन्धकम्। हस्तेनैकेन चादाय तच्छिरः सा विनिर्ययौ ॥
गत्वा बहिश्च निक्षिप्य भस्मकूटान्तरे द्रुतम्। कबन्धं सशिरस्कं तमाययौ निभृतं ततः ॥
विष्णुदत्तश्च निर्गत्य सर्वं दूराद्विलोक्य तत्। मध्ये सखीनां सुप्तानां प्रविश्यासीत्तथैव सः ॥
सा चागत्य प्रविश्यान्तः पत्युः सुप्तस्य दुर्जनी। तेनैव तत्कृपाणेन तस्य मूर्धानमच्छिनत् ॥
निर्गत्य श्रावयन्ती च भृत्याञ्शब्दं चकार सा। हा हतास्मि हतो भर्ता ममैभिः पथिकैरिति ।
ततः परिजनाः श्रुत्वा प्रधाव्यालोक्य तं प्रभुम्। हतं तान्विष्णुदत्तादीनभ्यधावन्नुदायुधाः ॥
एतैश्चाहन्यमानेषु तेषु त्रस्तोत्थितेष्वथ। अन्येषु तत्सहायेषु विष्णुदत्तोऽब्रवीद्द्रुतम् ॥
अलं वो ब्रह्महत्याभिर्नैवास्माभिरिदं कृतम्। एतयैव कृतं ह्येतत्कुस्त्रियान्यप्रसक्तया ॥
मया चापावृतद्वारमार्गेणा मूलमीक्षितम्। निर्गत्य च बहिर्दृष्टं क्षमध्वं यदि वच्मि तत् ॥
इत्युक्त्वा तान्स शबरान्विष्णुदत्तो निवार्य च। तेभ्यो निःशेषमा मूलाद्वृत्तान्तं तमवर्णयत् ॥
नीत्वा चादर्शयत्तेषां कबन्धं तं शिरोन्वितम्। सद्यो हतं तया क्षिप्तं स्त्रिया तस्मिन्नवस्करे ॥
ततः स्वेन विवर्णेन मुखेनाङ्गीकृते तया। कुलटां तां तिरस्कृत्य सर्वे तत्रैवमब्रुवन् ॥
स्मराकृष्टा तनोत्येव या साहसमशङ्किता। सा परस्त्रीकृता कुस्त्री कृपाणीव न हन्ति कम् ॥
इत्युक्त्वा विष्णुदत्तादीन्सर्वांस्ते मुमुचुस्ततः। विष्णुदत्तं च सप्तान्ये सहायास्तेऽथ तुष्टुवुः ॥
रक्षारत्नप्रदीपस्त्वं जातो नः स्वपतां निशि। त्वत्प्रसादेन तीर्णाः स्मो मृत्युमद्यानिमित्तजम् ॥
स्तुत्वैवं विष्णुदत्तं तं शमयित्वा च दुर्वचः। प्रणतास्ते ययुः प्रातः स्वकार्यायैव तद्युताः ॥
इत्थं कलिङ्गसेनायाः कथयित्वा कथां मिथः। सोमप्रभा सा कौशाम्ब्यां सखीं पुनरुवाच ताम्
एवं कार्यप्रवृत्तानामनिमित्तमुपस्थितम्। विलम्बाद्यप्रतिहतं सख्यनिष्टं प्रयच्छति ॥
ततश्चात्रानुतप्यन्ते प्राज्ञवाक्यावमानिनः। प्रवर्तमाना रभसात्पर्यन्ते मन्दबुद्धयः ॥
अतोऽशुभे निमित्ते ह्यो वत्सेशं प्रति यत्त्वया। आत्मग्रहाय प्रहितो दूतो युक्तं न तत्कृतम् ॥
तदविघ्नं विवाहं च विदधातु विधिस्तव। कुलघ्नेनागता गेहाद्विवाहस्तेन दूरतः ॥
देवा अपि च लुभ्यन्ति त्वयि रक्ष्यमिदं ततः। चिन्त्यश्च नीतिनिपुणो मन्त्री यौगन्धरायणः ॥
राजव्यसनशङ्की सन्सोऽत्र विघ्नं समाचरेत्। विहितेऽपि विवाहे वा दोषमुत्पादयेत्तव ॥
धार्मिकः सन्न कुर्याद्वा दोषं तदपि ते सखि। सपत्नी सर्वथा चिन्त्या कथां वच्म्यत्र ते शृणु ॥
अस्तीहेक्षुमती नाम पुरी तस्याश्च पार्श्वतः। नदी तदभिधानैव विश्वामित्रकृते उभे ॥
तत्समीपे महच्चास्ति वनं तत्र कृताश्रमः। ऊर्ध्वपादस्तपश्चक्रे मुनिर्मङ्कणकाभिधः ॥
तपस्यता च तेनात्र गगनेनागताप्सराः। अदर्शि मेनका नाम वातेन चलिताम्बरा ॥
ततो लब्धावकाशेन कामेन क्षोभितात्मनः। नूतने कदलीगर्भे वीर्यं तस्यापतन्मुनेः ॥
जज्ञे ततश्च कन्या सा सद्यः सर्वाङ्गसुन्दरी। अमोघं हि महर्षीणां वीर्यं फलति तत्क्षणम् ॥
संभूता कदलीगर्भे यस्मात्तस्माच्चकार ताम्। नाम्ना स कदलीगर्भां पिता मङ्कणको मुनिः ॥
तस्याश्रमे सा ववृधे गौतमस्य कृपी यथा। द्रोणभार्या पुरा रम्भादर्शनच्युतवीर्यजा ॥
एकदा च विवेशैतमाश्रमं मृगयारसात्। दृढवर्मा हृतोऽश्वेन मध्यदेशभवो नृपः ॥
स तां ददर्श कदलीगर्भां प्रावृतवल्कलाम्। मुनिकन्योचितेनात्र वेषेणात्यन्तशोभिताम् ॥
सा च दृष्टास्य नृपतेः स्वीचक्रे हृदयं तथा। यथावकाशोऽपि हृतस्तत्रान्तःपुरयोषिताम् ॥
अपीमां प्राप्नुयां भार्यां कस्यापीह सुतामृषेः। दुष्यन्त इव कण्वस्य मुनेः कन्यां शकुन्तलाम् ॥
इति संचिन्तयन्नेव संगृहीतसमित्कुशम्। सोऽत्रापश्यत्तमायान्तं मुनिं मङ्कणकं नृपः ॥
ववन्दे चैतमभ्येत्य पादयोर्मुक्तवाहनः। पृष्टश्चात्मानमेतस्मै मुनये स न्यवेदयत् ॥

कदलीगर्भा मुनिरादिशति स्म ताम् । वत्से राज्ञोऽतिथेरस्य त्वयार्घ्यं कल्प्यतामिति ॥ १११
कल्पितातिथ्यस्तया राजा स नम्रया । ईदृक्कुतस्ते कन्येयमिति पप्रच्छ तं मुनिम् ॥ ११२
स ततस्तस्यास्तामुत्पत्तिं च नाम च । अन्वर्थं कदलीगर्भेत्यसौ राज्ञे न्यवेदयत् ॥ ११३
न मुनेः कन्यां मेनकाभावनोद्भवम् । मत्वाप्सरसमत्युत्को राजा तस्मादयाचत ॥ ११४
तां कदलीगर्भां ददौ तस्मै सुतामृषिः । दिव्यानुभावं पूर्वेषामविचार्यं हि चेष्टितम् ॥ ११५
द्धा प्रभावेण तत्राभ्येत्य सुराङ्गनाः । मेनकाप्रीतितस्तस्याश्चक्रुरुद्वाहमण्डनम् ॥ ११६
व सर्षपान्हस्ते जगदुस्तां तदैव ताः । यान्ती मार्गे वपस्वैतांस्त्वमभिज्ञानसिद्धये ॥ ११७
र्त्रा कृतावज्ञा कदाचित्त्वमिहैष्यसि । तज्जातैरेभिरायान्ती पन्थानं पुत्रि वेत्स्यसि ॥ ११८
ताभिरारोप्य कृतोद्वाहां स्ववाजिनि । स राजा कदलीगर्भां दृढवर्मा ययौ ततः ॥ ११९
ागतसैन्योऽथ वपन्त्या सर्षपान्पथि । वध्वा तया सह प्राप राजधानीं निजां च सः ॥ १२०
पत्नीविमुखः कदलीगर्भया तया । समं स तस्थावाख्याततद्वृत्तान्तः स्वमन्त्रिषु ॥ १२१
र महादेवी तदीयं मन्त्रिणं रहः । स्मारयित्वोपकारान्स्वाञ्जगादात्यन्तदुःखिता ॥ १२२
तनभार्यैकसक्तेनाद्याहमुज्झिता । तत्तथा कुरु येनैषा सपत्नी मे निवर्तते ॥ १२३
सोऽब्रवीन्मन्त्री देवि कर्तुं न युज्यते । मादृशानां प्रभोः पत्न्या विनाशोऽथ वियोजनम् ॥ १२४
ाजकस्त्रीणां विषयः कुहकादिषु । प्रयोगेष्वभियुक्तानां संगतानां तथाविधैः ॥ १२५
कैतवतापस्यः प्रविश्यैवानिवारिताः । गृहेषु मायाकुशलाः कर्म किं किं न कुर्वते ॥ १२६
तेन सा देवी विनतेवाह तं ह्रिया । अलं तर्हि ममानेन गर्हितेन सतामिति ॥ १२७
हृदि कृत्वा तु तं विसृज्य च मन्त्रिणम् । कांचित्प्रव्राजिकां चेटीमुखेनानयति स्म सा ॥ १२८
शशंस चा मूलात्तत्सर्वं स्वमनीषितम् । अङ्गीचकार दातुं च सिद्धे कार्ये धनं महत् ॥ १२९
लोभादार्ता तामित्युवाच कुतापसी । देवि किं नाम वस्त्वेतदहं ते साधयाम्यदः ॥ १३०
धान्हि जानामि प्रयोगान्सुबहूनहम् । एवमाश्वास्य तां देवीं साथ प्रव्राजिका ययौ ॥ १३१
प्राप्य च निजां भीतैवेत्थमचिन्तयत् । अहो अतीवभोगाशा कं नाम न विडम्बयेत् ॥ १३२
सहसा देव्याः प्रतिज्ञा पुरतः कृता । विज्ञानं चात्र तादृङ्मे सम्यक्किंचिन्न विद्यते ॥ १३३
र च न व्याजं कर्तुं राजगृहे क्षमम् । ज्ञात्वा जातु हि कुर्वीरन्निग्रहं प्रभविष्णवः ॥ १३४
ाभ्युपायः स्याद्यत्सुहृन्मेऽस्ति नापितः । ईदृग्विज्ञानकुशलः स चेत्कुर्यादिहोद्यमम् ॥ १३५
त्यैव सा तस्य नापितस्यान्तिकं ययौ । तस्मै मनीषितं सर्वं तच्छशंसार्थसिद्धिदम् ॥ १३६
नापितो वृद्धो धूर्तश्चैवमचिन्तयत् । उपस्थितमिदं दिष्ट्या लाभस्थानं ममाधुना ॥ १३७
्या नवा राजवधू रक्ष्या तु सा यतः । दिव्यदृष्टिः पिता तस्य सर्वं प्रख्यापयेदिदम् ॥ १३८
ेतां तु नृपतेर्देवीं संप्रति भुञ्ज्महे । कुरहस्यसहाये हि भृत्ये भृत्यायते प्रभुः ॥ १३९
काले राज्ञे च वाच्यमेतत्तथा मया । यथा स्यादुपजीव्यो मे राजा सा चर्षिकन्यका ॥ १४०
नातिपापं स्याद्भवेद्दीर्घा च जीविका । इत्यालोच्य स तां प्राह नापितः कूटतापसीम् ॥ १४१
र्वं करोम्येतत्किं तु योगबलेन चेत् । एषा राज्ञो नवा भार्या हन्यते तन्न युज्यते ॥ १४२
कदाचिद्राजा हि सर्वानस्मान्विनाशयेत् । स्त्रीहत्यापातकं च स्यात्तत्पिता च मुनिः शपेत् ॥ १४३
द्धिबलेनैषा राज्ञो विश्लेष्यते परम् । येन देवी सुखं तिष्ठेदर्थप्राप्तिर्भवेच्च नः ॥ १४४
। कियत्किं हि न बुद्ध्या साधयाम्यहम् । प्रज्ञानं मामकीनं च श्रूयतां वर्णयामि ते ॥ १४५
य पिता राज्ञो दुःशीलो दृढवर्मणः । अहं च दासस्तस्येह राज्ञः स्वोचितकर्मकृत् ॥ १४६
ाचिदिह भ्राम्यन्भार्यामैक्षत मामकीम् । तस्यां तस्य सुरूपायां तरुण्यां च मनो ययौ ॥ १४७
त्रीति चाबोधि पृष्ट्वा परिजनं स ताम् । किं नापितः करोतीति प्रविश्यैव स मे गृहम् ॥ १४८
ैव तां स्वेच्छं मद्भार्यां कुनृपो ययौ । अहं च तदहर्दैवाद्गृहादासं बहिः क्वचित् ॥ १४९

अन्येद्युश्च प्रविष्टेन दृष्टा सान्यादृशी मया। पृष्टा भार्या यथावृत्तं साभिमानेव मेऽभ्यधात् ॥
तत्क्रमेणैव तां भार्यामशक्तस्य निषेधने। नित्यमेवोपभुञ्जानः स ममोत्तब्धवान्नृपः ॥
कुतो गम्यमगम्यं वा कुशीलोन्मादिनः प्रभोः। वातोद्धूतस्य दावाग्नेः किं तृणं किं च काननम्
ततो यावद्गतिर्मेऽस्ति न काचित्तन्निवारणे। तावत्स्वल्पाशनक्षामो मान्द्यव्याजमशिश्रियम् ॥
तादृशश्च गतोऽभूवं राज्ञस्तस्याहमन्तिकम्। स्वव्यापारोपसेवार्थं निःश्वसन्कृशपाण्डुरः ॥
तत्र मन्दमिवालोक्य साभिप्रायः स मां नृपः। पप्रच्छ रे किमीदृक्त्वं संजातः कथ्यतामिति
निर्बन्धपृष्टस्तं चाहं विजने याचिताभयः। प्रत्यवोचं नृपं देव भार्यास्ति मम डाकिनी ॥
सा च सुप्तस्य मेऽन्त्राणि गुदेनाकृष्य चूषति। तथैव चान्तः क्षिपति तेनाहं क्षामतां गतः ॥
पोषणाय च मे नित्यं बृंहणं भोजनं कुतः। इत्युक्तः स मया राजा जाताशङ्को व्यचिन्तयत् ।
किं सत्यं डाकिनी सा स्यात्तेनाहं किं हृतस्तया। किंस्विदाहारपुष्टस्य चूषेदन्त्रं ममापि सा ॥
तदद्य तामहं युक्त्या जिज्ञासिष्ये स्वयं निशि। इति संचिन्त्य राजा मे सोऽन्नाहारमदापयत् ।
ततो गत्वा गृहं तस्या भार्यायाः संनिधावहम्। अश्रूण्यमुञ्चं पृष्टश्च तया तामेवमब्रवम् ॥
प्रिये न वाच्यं कस्यापि त्वया शृणु वदामि ते। अस्य राज्ञो गुदे जाता दन्ता वज्राग्निसंनिभा
तत्र भग्नोऽद्य जात्योऽपि क्षुरो मे कर्म कुर्वतः। एवं चात्र ममेदानीं क्षुरस्त्रुट्येत्पदे पदे ॥
तन्नवं नवमानेष्ये कुतो नित्यमहं क्षुरम्। अतो रोदिमि नष्टा हि जीविकेयं गृहे मम ॥
इत्युक्त्वा सा मया भार्या मतिमाधादुपैष्यतः। रात्रो राज्ञोऽस्य सुप्तस्य गुददन्ताद्भुतेक्षणे ॥
आ संसारादद्दृष्टं तदसत्यं न लबोधि सा। विदग्धा अपि वञ्चयन्ते विटवर्णनया स्त्रियः ॥
अथैत्य तां निशि स्वैरं मद्भार्यामुपभुज्य सः। राजा श्रमादिवालीकं सुप्तवान्मद्वचः स्मरन् ॥
मद्भार्याप्यथ तं सुप्तं मत्वा तस्य शनैः शनैः। हस्तं प्रसारयामास गुदे दन्तोपलब्धये ॥
गुदप्राप्ते च तत्पाणावुत्थाय सहसैव सः। डाकिनी डाकिनीत्युक्त्वा त्रस्तो राजा ततो ययौ ॥
ततः प्रभृति सा तेन भीत्या त्यक्ता नृपेण मे। भार्या गृहीतसंतोषा मदेकायत्ततां गता ॥
एवं पूर्वं नृपाद्बुद्ध्या गृहिणी मोचिता मया। इति तां तापसीमुक्त्वा नापितः सोऽब्रवीत्पुनः ।
तदेतत्प्रज्ञया कार्यमार्ये युष्मन्मनीषितम्। यथा च क्रियते मातस्तदिदं वच्मि ते शृणु ॥
कोऽप्यन्तःपुरवृद्धोऽत्र स्वीकार्यो यो ब्रवीत्यमुम्। जाया ते कदलीगर्भा डाकिनीति नृपं रहः ॥
आरण्यकाया नह्यस्याः कश्चित्परिजनः स्वकः। सर्वः परो भेदसहो लोभात्कुर्वीत किं न यत् ।
ततोऽस्मिन्राज्ञि साशङ्के श्रवणान्निशि यत्नतः। हस्तपादादि कदलीगर्भाधाम्नि निधीयते ॥
तत्प्रभाते विलोक्यैव राजा सत्यमवेत्य तत्। वृद्धोक्तं कदलीगर्भां भीतस्तां त्यक्ष्यति स्वयम् ॥
एवं सपत्नीविरहाद्देवी सुखमवाप्नुयात्। त्वां च सा बहु मन्येत लाभः कश्चिद्भवेच्च नः ॥
इत्युक्ता तापसी तेन नापितेन तथेति सा। गत्वा राज्ञो महादेव्यै यथावस्तु न्यवेदयत् ॥
देवी च तत्तथा चक्रे सा तद्युक्त्या नृपोऽपि ताम्। प्रत्यक्षं वीक्ष्य कदलीगर्भां दुष्टेति तां जहौ
तुष्टया च ततो देव्या तया गुप्तमदायि यत्। प्रव्राजिका तद्बुभुजे सा यथेष्टं सनापिता ॥
त्यक्ता च कदलीगर्भा सा तेन दृढवर्मणा। राज्ञाभिशापसंतप्ता निर्ययौ राजमन्दिरात् ॥
येनाजगाम तेनैव प्रययौ पितुराश्रमम्। पूर्वोप्तजातसिद्धार्थसाभिज्ञानेन सा पथा ॥
तत्र तामागतां दृष्ट्वा सोऽकस्मात्तत्पिता मुनिः। तस्या दुश्चरिताशङ्की तस्थौ मङ्कणकः क्षणम् ॥
प्रणिधानाच्च तं कृत्स्नं तद्वृत्तान्तमवेत्य सः। आश्वास्य च स्वयं स्नेहात्तामादाय ययौ ततः ॥
एत्य तस्मै तदाचख्यौ स्वयं प्रह्वाय भूभृते। देव्या सपत्नीदोषेण कृतं कपटनाटकम् ॥
तत्कालं स्वयमभ्येत्य राज्ञे तस्मै स नापितः। यथावृत्तं तदाचष्ट पुनरेवमुवाच च ॥
इत्थं विश्लेष्य कदलीगर्भा राज्ञी मया प्रभो। अभिचारवशाद्युक्त्या देवी संतोष्य रक्षिता ॥
तच्छ्रुत्वा निश्चयं दृष्ट्वा मुनीन्द्रवचनस्य सः। जग्राह कदलीगर्भां संजातप्रत्ययो नृपः ॥

मुनिं तं च संविभेजे स नापितम् । भक्तो ममायमित्यर्थैर्धूर्तैर्भोज्या बतेश्वराः ॥ १८९
समं तस्थौ कदलीगर्भेयैव सः । राजा स्वदेवीविमुखो दृढवर्मा सुनिर्वृतः ॥ १९०
विधान्विदधते सुबहून्सपत्न्यो दोषान्मृषाप्यनवमाङ्गि कलिङ्गसेने ।
कन्यका च चिरभाविविवाहलग्ना वाञ्छन्त्यचिन्त्यगतयश्च सुरा अपि त्वाम् ॥ १९१
तत्सर्वतः सांप्रतमात्मना त्वमात्मानमेकं जगदेकरत्नम् ।
वत्सेश्वरैकार्पितमत्र रक्षेर्वैरं तवायं हि निजः प्रकर्षः ॥ १९२
अहं हि नेष्यामि सखि त्वदन्तिकं स्थिताधुना त्वं पतिमन्दिरे यतः ।
सखीपतेः सद्म न यान्ति सित्स्त्रयः सुगात्रि भर्त्राद्य निवारितास्मि च ॥ १९३
न च गुप्तमिहागमः क्षमो मे त्वदतिस्नेहवशात्स दिव्यदृष्टिः ।
तदवैति हि मत्पतिः कथंचित्तमनुज्ञाप्य किलागताहमद्य ॥ १९४
इह नास्त्यधुना हि मामकीनं सखि कार्यं तव यामि तद्गृहाय ।
यदि मामनुमंस्यते च भर्ता तदिहैष्यामि पुनर्विलङ्घ्य लज्जाम् ॥ १९५
थं सबाष्पमभिधाय कलिङ्गसेनां तामश्रुधौतवदनां मनुजेन्द्रपुत्रीम् ।
श्वास्य चाह्नि विगलत्यसुरेन्द्रपुत्री सोमप्रभा स्वभवनं नभसा जगाम ॥ १९६

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे मदनमञ्चुकालम्बके षष्ठस्तरङ्गः ।

---

सप्तमस्तरङ्गः ।

प्रभां यातां स्मरन्ती तां प्रियां सखीम् । कलिङ्गसेना संत्यक्तनिजदेशस्वबान्धवा ॥ १
वितवत्सेशपाणिग्रहमहोत्सवा । नरेन्द्रकन्या कौशाम्ब्यां मृगीवासीद्वनच्युता ॥ २
नावीवाहविलम्बनविचक्षणान् । गणकान्प्रति सासूय इव वत्सेश्वरोऽपि च ॥ ३
विमनास्तस्मिन्दिने चेतो विनोदयन् । देव्या वासवदत्ताया निवासभवनं ययौ ॥ ४
ं पतिं देवी निर्विकारा विशेषतः । उपाचरत्स्वोपचारैः प्राज्ञमन्त्रिवरशिक्षिता ॥ ५
नावृत्तान्ते ख्यातेऽप्यविकृता कथम् । देवीयमिति स ध्यात्वा राजा जिज्ञासुराह ताम् ॥ ६
त्वया ज्ञातं स्वयंवरकृते मम । कलिङ्गसेनानामैषा राजपुत्री यदागता ॥ ७
विभिन्नेन मुखरागेण साब्रवीत् । ज्ञातं मयातिहर्षो मे लक्ष्मीः सा ह्यागतेह नः ॥ ८
महाराजे तत्प्राप्त्या तत्पितर्यपि । कलिङ्गदत्ते पृथ्वी ते सुतरां वर्तते वशे ॥ ९
वद्विभूत्यैव सुखिता त्वत्सुखेन च । आर्यपुत्र तवैतच्च विदितं प्रागपि स्थितम् ॥ १०
ास्मि किं यस्या मम भर्ता त्वमीदृशः । यं राजकन्या वाञ्छन्ति वाञ्छ्यमाना नृपान्तरैः ॥ ११
श्वरः प्रोक्तो देव्या वासवदत्तया । यौगन्धरायणप्रत्तशिक्षयान्तस्तुतोष सः ॥ १२
सहासेव्य पानं तद्वासके निशि । तस्यां सुष्वाप मध्ये च प्रबुद्धः समचिन्तयत् ॥ १३
हानुभावेत्थं देवी मामनुवर्तते । कलिङ्गसेनामपि यत्सपत्नीमनुमन्यते ॥ १४
शक्नुयादेतां सोढुं सैषा तपस्विनी । पद्मावतीविवाहेऽपि या दैवान्न जहावसून् ॥ १५
दनिष्टं स्यात्सर्वनाशस्ततो भवेत् । एतदालम्बनाः पुत्रश्वशुर्यश्वशुराश्च मे ॥ १६
च राज्यं च किमभ्यधिकमुच्यते । अतः कलिङ्गसेनैषा परिणेया कथं मया ॥ १७
व्य वत्सेशो निशान्ते निर्गतस्ततः । अपराह्णे ययौ देव्याः पद्मावत्याः स मन्दिरम् ॥ १८
ागतं दत्तशिक्षा वासवदत्तया । तथैवोपाचरत्तद्वत्पृष्टावोचत्तथैव च ॥ १९
गुस्तयोर्देव्योरेकं चित्तं वचश्च तत् । यौगन्धरायणायासौ शशंस विमृशन्नृपः ॥ २०
वीक्ष्य राजानं विचारपतितं शनैः । कालवेदी जगादैवं मन्त्री यौगन्धरायणः ॥ २१
नैतदेतावदभिप्रायोऽत्र दारुणः । देवीभ्यां जीवितत्यागदार्ढ्योदुक्तं हि तत्तथा ॥ २२

अन्यासक्ते गते च द्यां स्त्रियो मरणनिश्चिताः। भवन्त्यदैन्यगम्भीराः साध्व्यः सर्वत्र निःस्पृहा
असह्यं हि पुरंध्रीणां प्रेम्णो गाढस्य खण्डनम्। तथा च राजंस्तत्रैतां श्रुतसेनकथां शृणु ॥
अभूद्दक्षिणभूमौ प्राग्गोकर्णाख्ये पुरे नृपः। श्रुतसेन इति ख्यातः कुलभूषा श्रुतान्वितः ॥
तस्य चैकाभवच्चिन्ता राज्ञः संपूर्णसंपदः। आत्मानुरूपां भार्यां यत्स न तावदवाप्तवान् ॥
एकदा च नृपः कुर्वश्चिन्तां तां तत्कथान्तरे। अग्निशर्माभिधानेन जगदे सोऽग्रजन्मना ॥
आश्चर्ये द्वे मया दृष्टे ते राजन्वर्णये शृणु। तीर्थयात्रागतः पञ्चतीर्थीं तामहमाप्तवान् ॥
यस्यामप्सरसः पञ्च ग्राहत्वमृषिशापतः। प्राप्ताः सतीरुद्दहरत्तीर्थयात्रागतोऽर्जुनः ॥
तत्र तीर्थवरे स्नात्वा पञ्चरात्रोपवासिनाम्। नारायणानुचरतादायिनि स्नायिनां नृणाम् ॥
यावद्व्रजामि तावच्च लाङ्गलोल्लिखितावनिम्। गायन्तं कंचिदद्राक्षं कार्षिकं क्षेत्रमध्यगम् ॥
स पृष्टः कार्षिको मार्गं मार्गायातेन केनचित्। प्रव्राजकेन तद्वाक्यं नाशृणोद्गीततत्परः ॥
ततः स तस्मै चुक्रोध परिव्राड्विधुरं ब्रुवन्। सोऽपि गीतं विमुच्याथ कार्षिकस्तमभाषत ॥
अहो प्रव्राजकोऽसि त्वं धर्मस्यांशं न वेत्स्यसि। मूर्खेणापि मया ज्ञातं सारं धर्मस्य यत्पुनः ॥
तच्छ्रुत्वा किं त्वया ज्ञातमिति तेन च कौतुकात्। प्रव्राजकेन पृष्टः सन्कार्षिकः स जगाद तं
इहोपविश प्रच्छाये शृणु यावद्वदामि ते। अस्मिन्प्रदेशे विद्यन्ते ब्राह्मणा भ्रातरस्त्रयः ॥
ब्रह्मदत्तः सोमदत्तो विश्वदत्तश्च पुण्यकृत्। तेषां ज्येष्ठौ दारवन्तौ कनिष्ठस्त्वपरिग्रहः ॥
स तयोर्ज्येष्ठयोराज्ञां कुर्वन्कर्मकरो यथा। मया सहासीदक्रुध्यन्नहं तेषां हि कार्षिकः ॥
तौ च ज्येष्ठावबुध्येतां मृदुं तं बुद्धिवर्जितम्। साधुमत्यक्तसन्मार्गमृजुमायासवर्जितम्[1] ॥
एकदा भ्रातृजायाभ्यां सकामाभ्यां रहोऽर्थितः। कनिष्ठो विश्वदत्तोऽथ मातृवत्ते निराकरोत्
ततस्ते निजयोर्भर्त्रोरुभे गत्वा मृषोचतुः। वाञ्छत्यस्मान्रहस्येष कनीयान्युवयोरिति ॥
तेन तं प्रति तौ ज्येष्ठौ सान्तःकोपौ बभूवतुः। सदसद्वा न विदतुः कुस्त्रीवचनमोहितौ ॥
अथैतौ भ्रातरौ जातु विश्वदत्तं तमूचतुः। गच्छ त्वं क्षेत्रमध्यस्थं वल्मीकं तं समीकुरु ॥
तथेत्यागत्य वल्मीकं कुद्दालेनाखनत्स तम्। मा मैवं कृष्णसर्पोऽत्र वसतीत्युदितो मया ॥
तच्छ्रुत्वापि स वल्मीकमखनद्यद्भवत्विति। पापैषिणोरप्यादेशं ज्येष्ठभ्रात्रोरलङ्घयन् ॥
खन्यमानात्ततः प्राप कलशं हेमपूरितम्। न कृष्णसर्पं धर्मो हि सांनिध्यं कुरुते सताम् ॥
तं च नीत्वा स कलशं भ्रातृभ्यां सर्वमर्पयत्। निवार्यमाणोऽपि मया ज्येष्ठाभ्यां दृढभक्तित
तौ पुनस्तत एवांशं दत्त्वा प्रेर्य च घातकान्। तस्याच्छेदयतां पाणिपादं धनजिहीर्षया ॥
तथापि न स चुक्रोध निर्मन्युर्भ्रातरौ प्रति। तेन सत्येन तस्यात्र हस्तपादमजायत ॥
तदाप्रभृति तद्दृष्ट्वा त्यक्तः क्रोधोऽखिलो मया। त्वया तु तापसेनापि क्रोधोऽद्यापि न मुच्यते
अक्रोधेन जितः स्वर्गः पश्यैतदधुनैव भोः। इत्युक्त्वैव तनुं त्यक्त्वा कार्षिकः स दिवं गतः।
इत्याश्चर्यं मया दृष्टं द्वितीयं शृणु भूपते। इत्युक्त्वा श्रुतसेनं स नृपं विप्रोऽब्रवीत्पुनः ॥
ततोऽपि तीर्थयात्रार्थं पर्यटन्नम्बुधेस्तटे। अहं वसन्तसेनस्य राज्ञो राष्ट्रमवाप्तवान् ॥
तत्र भोक्तुं प्रविष्टं मां राजसत्रेऽब्रुवन्द्विजाः। ब्रह्मन्पथामुना मा गाः स्थिता ह्यत्र नृपात्मजा
विद्युद्द्योताभिधाना तां पश्येदपि मुनिर्यदि। स कामशरनिर्भिन्नः प्राप्योन्मादं न जीवति ॥
ततोऽहं प्रत्यवोचं तान्नैतच्चित्रं सदा ह्यहम्। पश्याम्यपरकन्दर्पं श्रुतसेनमहीपतिम् ॥
यात्रादौ निर्गते यस्मिन्रक्षिभिर्दृष्टिगोचरात्। उत्सार्यन्ते सतीवृत्तभङ्गभीत्या कुलाङ्गनाः ॥
इत्युक्तवन्तं विज्ञाय भावत्कं भोजनाय माम्। नृपान्तिकं नीतवन्तौ सत्राधिपपुरोहितौ ॥
तत्र सा राजतनया विद्युद्द्योता मयेक्षिता। कामस्येव जगन्मोहमन्त्रविद्या शरीरिणी ॥
चिरात्तद्दर्शनक्षोभं नियम्याहमचिन्तयम्। अस्मत्प्रभोश्चेद्भार्येयं भवेद्राज्यं स विस्मरेत् ॥

1. 'साधुं संत्यक्तसन्मार्गमृग्यजुःसामवर्जितम्' इति पुस्तकान्तरपाठः.

तथापि कथनीयोऽयमुदन्तः स्वामिने मया । उन्मादिनीदेवसेनवृत्तान्तो ह्यन्यथा भवेत् ॥ ६१
देवसेनस्य नृपतेः पुरा राष्ट्रे वणिक्सुता । उन्मादिनीत्यभूत्कन्या जगदुन्मादकारिणी ॥ ६२
आवेदितापि सा पित्रा न तेनात्ता महीभृता । विप्रैः कुलक्षणेत्युक्ता तस्य व्यसनरक्षिभिः ॥ ६३
परिणीता तदीयेन मन्त्रिमुख्येन सा ततः । वातायनाग्रादात्मानं राज्ञेऽस्मै जात्वदर्शयत् ॥ ६४
तया भुजंग्या राजेन्द्रो दूराद्दृष्टिविषाहतः । मुहुर्मुमूर्छ न रतिं लेभे नाहारमाहरत् ॥ ६५
प्रार्थितोऽपि च तद्भर्तृप्रमुखैः सोऽथ मन्त्रिभिः । धार्मिकस्तां न जग्राह तत्सक्तश्च जहावसून् ॥ ६६
तदीदृशे प्रामादेऽत्र वृत्ते द्रोहः कृतो भवेत् । इत्यालोच्य मयोक्तं ते चित्रमेत्य ततोऽद्य तत् ॥ ६७
श्रुत्वैतत्स द्विजात्तस्मान्मदनाज्ञानिभं वचः । विद्युद्द्योताहृतमनाः श्रुतसेननृपोऽभवत् ॥ ६८
तत्क्षणं च विसृज्यैव तत्र विप्रं तमेव सः । तथाकरोद्यथानीय शीघ्रं तां परिणीतवान् ॥ ६९
ततः सा नृपतेस्तस्य विद्युद्द्योता नृपात्मजा । शरीराव्यतिरिक्तासीद्भास्करस्य प्रभा यथा ॥ ७०
अथ स्वयंवरायागात्तं नृपं रूपगर्विता । कन्यका मातृदत्ताख्या महाधनवणिक्सुता ॥ ७१
अधर्मभीत्या जग्राह स राजा तां वणिक्सुताम् । विद्युद्द्योताथ तद्बुद्ध्वा हृत्स्फोटेन व्यपद्यत ॥ ७२
राजाप्यागत्य तां कान्तां पश्यन्नेव तथा गताम् । अङ्के कृत्वा स विलपन्सद्यः प्राणैर्व्ययुज्यत ॥ ७३
ततो वणिक्सुता वह्निं मातृदत्ता विवेश सा । इत्थं प्रणष्टं सर्वं तदपि राष्ट्रं सराजकम् ॥ ७४
अतो राजन्प्रकृष्टस्य भङ्गः प्रेम्णः सुदुःसहः । विशेषेण मनस्विन्या देव्या वासवदत्तया ॥ ७५
तस्मात्कलिङ्गसेनैषा परिणीता यदि त्वया । देवी वासवदत्ता तत्प्राणाञ्जह्यान्न संशयः ॥ ७६
देवी पद्मावती तद्वत्तयोरेकं हि जीवितम् । नरवाहनदत्तश्च पुत्रस्ते स्यात्कथं ततः ॥ ७७
तच्च देवस्य हृदयं सोढुं जाने न शक्नुयात् । एवमेकपदे सर्वमिदं नश्येन्महीपते ॥ ७८
देव्योर्यच्चोक्तिगाम्भीर्यं तदेव कथयत्यलम् । हृदयं जीवितत्यागगाढनिश्चितनिःस्पृहम् ॥ ७९
तत्स्वार्थो रक्षणीयस्ते तिर्यञ्चोऽपि हि जानते । स्वरक्षां किं पुनर्देव बुद्धिमन्तो भवादृशाः ॥ ८०
इति मन्त्रिवराच्छ्रुत्वा स्वैरं यौगन्धरायणात् । सम्यग्विवेकपदवीं प्राप्य वत्सेश्वरोऽब्रवीत् ॥ ८१
एवमेतन्न संदेहो नश्येत्सर्वमिदं मम । तस्मात्कलिङ्गसेनायाः कोऽर्थः परिणयेन मे ॥ ८२
उक्तो लग्नश्च दूरे यत्तद्युक्तं गणकैः कृतम् । स्वयंवरागतात्यागादधर्मो वा कियान्भवेत् ॥ ८३
इत्युक्तो वत्सराजेन हृष्टो यौगन्धरायणः । चिन्तयामास कार्यं नः सिद्धप्रायं यथेप्सितम् ॥ ८४
उपायरससंसिक्ता देशकालोपबृंहिता । सेयं नीतिमहावल्ली किं नाम न फलेत्फलम् ॥ ८५
इति संचिन्त्य स ध्यायन्देशकालौ प्रणम्य तम् । राजानं प्रययौ मन्त्री गृहं यौगन्धरायणः ॥ ८६
राजापि रचितातिथ्यगूढाकारामुपेत्य सः । देवीं वासवदत्तां तां सान्त्वयन्नेवमब्रवीत् ॥ ८७
किमर्थं वच्मि जानासि त्वमेव हरिणाक्षि यत् । वारि वारिरुहस्येव त्वत्प्रेम मम जीवितम् ॥ ८८
नामापि हि किमन्यस्या ग्रहीतुमहमुत्सहे । कलिङ्गसेना तु हठादुपायाता गृहं मम ॥ ८९
प्रसिद्धं चात्र यद्रम्भा तपःस्थेन निराकृता । पार्थेन षण्ढताशापं ददौ तस्मै हठागता ॥ ९०
स शापस्तिष्ठता तेन वर्षं वैराटवेश्मनि । स्त्रीवेषेण महाश्चर्यरूपेणाप्यतिवाहितः ॥ ९१
अतः कलिङ्गसेनैषा निषिद्धा न तदा मया । विना त्वदिच्छयाहं तु न किंचित्कर्तुमुत्सहे ॥ ९२
इत्याश्वास्योपलभ्याथ हृदयेनेव रागिणा । मुखार्पितेन मद्येन सत्यं क्रूरं तदाशयम् ॥ ९३
तयैव सह रात्रिं तां राज्ञा वासवदत्तया । मन्त्रिमुख्यमतिप्रौढितुष्टो वत्सेश्वरोऽवसत् ॥ ९४
अत्रान्तरे च यं पूर्वं दिवारात्रौ प्रयुक्तवान् । कलिङ्गसेनावृत्तान्तज्ञप्त्यै यौगन्धरायणः ॥ ९५
स ब्रह्मराक्षसोऽभ्येत्य सुहृद्योगेश्वराभिधः । तस्यामेव निशि स्वैरं तं मन्त्रिवरमभ्यधात् ॥ ९६
कलिङ्गसेनासदने स्थितोऽस्म्यन्तर्बहिः सदा । दिव्यानां मानुषाणां वा पश्यामि न तथागमम् ॥ ९७
अद्याव्यक्तो मया शब्दः श्रुतोऽकस्मान्नभस्तले । प्रच्छन्नेनात्र हर्म्याग्रसंनिकर्षे निशामुखे ॥ ९८
प्रभवं तस्य विज्ञातुं प्रयुक्तापि ततो मम । विद्या न प्राभवत्तेन विमृश्याहमचिन्तयम् ॥ ९९

नेश्रितम् । कलिङ्गसेनालावण्यलुब्धस्य भ्रमतोऽम्बरे ॥ १००
तरम् । न दुष्प्रापं परच्छिद्रं जाग्रद्भिर्निपुणैर्यतः ॥ १०१
ण च । सोमप्रभा सखी चास्या वदन्त्येतन्मया श्रुता ॥ १०२
तः । इदं प्रसङ्गात्पृच्छामि तन्मे तावत्त्वयोच्यताम् ॥ १०३
ते यत्त्वया । उक्तो राजा तदश्रौषं योगादहमलक्षितः ॥ १०४
गते । इति योगेश्वरेणोक्तः स्माह यौगन्धरायणः ॥ १०५
। ते शृणु । विदिशानगरीबाह्ये न्यग्रोधोऽभूत्पुरा महान् ॥ १०६
ातरौ । नकुलोलूकमार्जारमूषकाः पृथगालयाः ॥ १०७
ूषकौ । मार्जारो मध्यभागस्थे तरोर्महति कोटरे ॥ १०८
लये । मूषकोऽत्र त्रिभिर्वध्यो मार्जारेण त्रयोऽपरे ॥ १०९
था । स्वभावेनाप्युलूकश्च परिभ्रेमुर्निशि त्रयः ॥ ११०
त्यसौ । तत्रासन्ने यवक्षेत्रे सदा मूषकलिप्सया ॥ ११
न्नाभिवाञ्छया । एकदा लुब्धकस्तत्र चण्डालः कश्चिदाययौ ॥ ११
ानीम् । तद्वधायाभितः क्षेत्रं पाशान्दत्त्वा ततो ययौ ॥ ११
ांसया । एत्य प्रविष्टस्तत्पाशैः क्षेत्रे तस्मिन्नबध्यत ॥ ११
ातागतः । बद्धं तं वीक्ष्य मार्जारं जहर्ष च ननर्त च ॥ ११
ा । तत्र तौ तावदायातावुलूकनकुलावपि ॥ ११
ठताम् । मूषकोऽपि च तद्दृष्ट्वा दूराद्विग्नो व्यचिन्तयत् ॥ ११
। बद्धोऽप्येकप्रहारेण शत्रुर्मामेष मारयेत् ॥ ११
माम् । तच्छत्रुसंकटगतः क्व गच्छामि करोमि किम् ॥ ११
ायम् । आत्मत्राणाय मां रक्षेत्पाशच्छेदोपयोगिनम् ॥ १२
ोऽब्रवीत् । बद्धे त्वय्यतिदुःखं मे तत्ते पाशं छिनद्म्यहम् ॥ १२
ष्वपि । किं तु मे नास्ति विश्वासस्तव चित्तमजानतः ॥ १२
ां त्वया । अद्य प्रभृति मे मित्रं भवान्प्राणप्रदायकः ॥ १२
शश्रिये । तद्दृष्ट्वा नकुलोलूकौ निराशौ ययतुस्ततः ॥ १२
डितः । गतप्राया निशा मित्र तत्पाशांश्छिन्धि मे द्रुतम् ॥ १२
न्मुखः । मृषा कटकटायद्भिर्दशनैरकरोच्चिरम् ॥ १२
ागते । मार्जारेऽर्थयमाने द्राक्पाशांश्चिच्छेद मूषकः ॥ १२

तीर्थमभुञ्जानः प्राणांस्त्यक्तुमियेष च । बुद्ध्वा च सोऽन्नदातास्य वणिग
जगाद किं ब्रह्मन्वित्तहेतोर्मुमूर्षसि । अकालमेघवद्वित्तमकस्मादेति याति
ुक्तोऽपि तेनासौ न जहौ मरणग्रहम् । प्राणेभ्योऽप्यर्थमात्रा हि कृपणस
मृतये तीर्थं गच्छतोऽस्य द्विजन्मनः । स्वयं प्रसेनजिद्राजा तद्बुद्ध्वान्तिक
ष्ट चैनं किं किंचिदस्ति तत्रोपलक्षणम् । यत्र भूमौ निखातास्ते दीनारा
त्वा स द्विजोऽवादीदस्ति क्षुद्रोऽत्र पादपः । अटव्यां देव तन्मूले निखात
कर्ण्याब्रवीद्राजा दास्याम्यन्विष्य तत्तव । धनं स्वकोषादथवा मा त्यार्क्ष
त्वा मरणोद्योगान्निवार्य विनिधाय च । द्विजं तं वणिजो हस्ते स राजा
देश्य प्रतीहारं शिरोर्तिव्यपदेशतः । वैद्यानानायत्सर्वान्दत्त्वा पटहघोष
ास्ते कियन्तोऽत्र कस्यादाः किं त्वमौषधम् । इत्युपानीय पप्रच्छ तानेवै
तस्मै तदेकैकः सर्वमूचुर्महीपतेः । एकोऽथ वैद्यस्तन्मध्यात्क्रमपृष्टोऽब्रव
ो मातृदत्तस्य देव नागबला मया । अस्वस्थस्योपदिष्टाद्य द्वितीयं दिनम
त्वा स तमाहूय राजा वणिजमभ्यधात् । ननु नागबला केन तवानीतो
कर्मकरेणेति तेनोक्ते वणिजा तदा । क्षिप्रमानाय्य तं राजा स कर्मकरम
नागबलाहेतोः खनता शाखिनस्तलम् । दीनारजातं यल्लब्धं ब्रह्मस्वं तद
तो भूभृता भीतः प्रतिपद्यैव तत्क्षणम् । स तानानीय दीनारांस्तत्र कर्मक
ुपोषितायास्मै द्विजायाहूय तान्ददौ । दीनारान्हारितप्राप्तान्प्राणानिव
त लब्धवान्बुद्ध्या नीतं मूलतलात्तरोः । द्विजार्थे भूपतिर्जानन्नोषधिं तां
सर्वदा बुद्धेः प्राधान्यं जितपौरुषम् । ईदृशेषु च कार्येषु किं विदध्यात्प
ाश्वर कुर्वीथास्त्वमपि प्रज्ञया तथा । यथा कलिङ्गसेनाया दोषो ज्ञायेत
चैतद्यथा तस्यां लुभ्यन्तीह सुरासुराः । तथा च दिवि कस्यापि निशि
ऽथ दोषे तस्याश्च भवेदकुशलं न नः । नोपयच्छेत तां राजा न चाधर्म
ारधियः श्रुत्वा सर्वं यौगन्धरायणात् । योगेश्वरस्तं संतुष्य जगाद ब्रह्म
या सदृशो नीतावन्यो देवाद्बृहस्पतेः । अयं त्वमृतसेकोऽस्य त्वन्मन्त्रो
कलिङ्गसेनाया जिज्ञासिष्ये गतिं सदा । बुद्ध्या शक्त्यापि चेत्युक्त्वा
लं सा च हर्म्यादौ पर्यटन्तं स्वहर्म्यगा । कलिङ्गसेना वत्सेशं दृष्ट्वा दृष्ट्वा
ाः स्मरसंतप्ता मृणालाङ्गदहारिणी । सा श्रीखण्डाङ्गरागा च न लेभे
न्तरे स तां पूर्वं दृष्ट्वा विद्याधराधिपः । तस्थौ मदनवेगाख्यो गाढानङ्ग

छत्रध्वजाङ्कनिर्धूलिपादाब्जं दिव्यमानुषम्। स्वापान्तर्हिततद्विद्यावीतरूपविवर्तनम्॥
तत्र गत्वा यथादृष्टं निवेद्य परितोषवान्। योगेश्वरो जगादासौ हृष्टो यौगन्धरायणम्॥
न वेत्ति मादृशः किंचिद्वेत्सि त्वं नीतिचक्षुषा। तव मन्त्रेण दुःसाध्यं सिद्धं कार्यमिदं प्रभोः।
किं वा व्योम विनार्केण किं तोयेन विना सरः। किं मन्त्रेण विना राज्यं किं सत्येन विना व
इत्युक्तवन्तमामन्त्र्य प्रीतो योगेश्वरं ततः। प्रातर्वत्सेश्वरं द्रष्टुमागाद्यौगन्धरायणः॥
तमुपेत्य यथावच्च कथाप्रस्तावतोऽब्रवीत्। नृपं कलिङ्गसेनार्थे पृष्टकार्यविनिश्चयम्॥
स्वच्छन्दासौ न ते राजन्पाणिस्पर्शमिहार्हति। एषा हि स्वेच्छया द्रष्टुं प्रसेनजितमागता॥
विरक्ता वीक्ष्य तं वृद्धं त्वां प्राप्ता रूपलोभतः। तदन्यपुरुषासङ्गमपि स्वेच्छं करोत्यसौ॥
तच्छ्रुत्वा कुलकन्येयं कथमेवं समाचरेत्। शक्तिः कस्य प्रवेष्टुं वा मदीयान्तःपुरान्तरे॥
इति राज्ञोदितेऽवादीद्धीमान्यौगन्धरायणः। अद्यैव दर्शयाम्येतत्प्रत्यक्षं निशि देव ते॥
दिव्यास्तामभिवाञ्छन्ति सिद्धाद्या मानुषोऽत्र कः। दिव्यानां च गतीं रोद्धुं राजन्केनेह शक्य
तदेहि साक्षात्पश्येति वादिना तेन मन्त्रिणा। सह गन्तुं मतिं चक्रे तत्र रात्रौ स भूपतिः॥
पद्मावत्या ऋते राज्या न विवाह्यापरेति यत्। प्रोक्तं देवि प्रतिज्ञातं मया निर्व्यूढमद्य तत्॥
इत्यथाभ्येत्य तां देवीमुक्त्वा यौगन्धरायणः। कलिङ्गसेनावृत्तान्तं तं तस्यै सर्वमुक्तवान्॥
त्वदीयशिक्षानुष्ठानफलमेतन्ममेति सा। देवी वासवदत्तापि प्रणताभिननन्द तम्॥
ततो निशीथे संसुप्ते जने वत्सेश्वरो ययौ। गृहं कलिङ्गसेनायाः स च यौगन्धरायणः॥
अदृष्टश्च प्रविष्टोऽत्र तस्या निद्राजुषोऽन्तिके। सुप्तं मदनवेगं तं स्वरूपस्थं ददर्श सः॥
हन्तुमिच्छति यावच्च स तं साहसिकं नृपः। तावत्स विद्यया विद्याधरोऽभूत्प्रतिबोधितः॥
प्रबुद्धश्च स निर्गत्य झगित्युदपतन्नभः। क्षणात्कलिङ्गसेनापि सा प्रबुद्धाभवत्ततः॥
शून्यं शयनमालोक्य जगाद च कथं हि माम्। पूर्वं प्रबुध्य वत्सेशः सुप्तां मुक्त्वैव गच्छति
तदाकर्ण्य स वत्सेशमाह यौगन्धरायणः। एषा विध्वंसितानेन शृणु त्वद्रूपधारिणा॥
सैष योगबलाज्ज्ञात्वा साक्षात्ते दर्शितो मया। किं तु दिव्यप्रभावत्वादसौ हन्तुं न शक्यते॥
इत्युक्त्वा स च राजा च सह तामुपजग्मतुः। कलिङ्गसेना साप्येतौ दृष्ट्वा तस्थौ कृतादरा॥
अधुनैव क गत्वा त्वं रजन्प्राप्तः समन्त्रिकः। इति ब्रुवाणामवदत्तां स यौगन्धरायणः॥
कलिङ्गसेने केनापि मायावत्सेशरूपिणा। संमोह्य परिणीतासि न त्वं मत्स्वामिनामुना॥
तच्छ्रुत्वा सातिसंभ्रान्ता विद्धेव हृदि पत्रिणा। कलिङ्गसेना वत्सेशं जगादोदश्रुलोचना॥
गान्धर्वविधिनाहं ते परिणीतापि विस्मृता। किंस्विद्राजन्यथा पूर्वं दुष्यन्तस्य शकुन्तला॥
इत्युक्तः स तया राजा तामुवाचानताननः। सत्यं न परिणीतासि मयाद्यैवागतो ह्यहम्॥
इत्युक्तवन्तं वत्सेशं मन्त्री यौगन्धरायणः। एहीत्युक्त्वा ततः स्वैरमनैषीद्राजमन्दिरम्॥
ततः समन्त्रिके राज्ञि गते सात्र विदेशगा। मृगीव यूथविभ्रष्टा परित्यक्तस्वबान्धवा॥
संभोगविदलत्पत्रमुखाब्जा गजपीडिता। पद्मिनीव परिक्षिप्तकबरीभ्रमरावलिः॥
विनष्टकन्यकाभावा निरुपायक्रमा सती। कलिङ्गसेना गगनं वीक्षमाणेदमब्रवीत्॥
वत्सेशरूपिणा येन परिणीतास्मि केनचित्। प्रकाशः सोऽस्तु कौमारः स एव हि पतिर्मम।
एवं तयोक्ते गगनात्सोऽत्र विद्याधराधिपः। अवातरद्दिव्यरूपो हारकेयूरराजितः॥
को भवानिति पृष्टश्च तयैवं स जगाद ताम्। अहं मदनवेगाख्यस्तन्वि विद्याधराधिपः॥
मया च प्राग्विलोक्य त्वां पुरा पितृगृहे स्थिताम्। त्वत्प्राप्तिदस्तपः कृत्वा वरः प्राप्तो महेश्वरा
वत्सेश्वरानुरक्ता च तद्रूपेण मया द्रुतम्। अवृत्ततद्विवाहैव परिणीतासि युक्तितः॥
इति वाक्सुधया तस्य श्रुतिमार्गप्रविष्टया। किंचित्कलिङ्गसेनाभूदुच्छ्वासितहृदम्बुजा॥

अथ स मदनवेगस्तां समाश्वास्य कान्तां विहितधृतिवितीर्णस्वर्णराशिः स तस्यै ।
उचित इति तथान्तर्बद्धसद्भर्तृभक्तिः पुनरुपगमनाय द्यां तदैवोत्पपात ॥ २१६
दिव्यास्पदं स्वपतिसद्म न मर्त्यगम्यं कामासितुर्भवनमुज्झितमित्यवेक्ष्य ।
तत्रैव वस्तुमथ सापि कलिङ्गसेना चक्रे धृतिं मदनवेगकृताभ्यनुज्ञा ॥ २१७

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे मदनमञ्चुकालम्बके सप्तमस्तरङ्गः ।

अष्टमस्तरङ्गः ।

ततः कलिङ्गसेनायाः स्मरन्ननुपमं वपुः । एकदा मन्मथाविष्टो निशि वत्सेश्वरोऽभवत् ॥ १
उत्थाय खड्गहस्तः सन्गत्वैव प्रविवेश सः । एकाकी मन्दिरं तस्याः कृतातिथ्यादरस्तया ॥ २
तत्र प्रार्थयमानस्तां भार्यार्थे स महीपतिः । परपत्नी तवास्मीति प्रत्याख्यातस्तयाब्रवीत् ॥ ३
तृतीयं पुरुषं प्राप्ता यतस्त्वमसि बन्धकी । परदारगतौ दोषो न मे त्वद्गमने ततः ॥ ४
एवं कलिङ्गसेना सा राज्ञोक्ता प्रत्युवाच तम् । त्वद्दर्शनागता राजन्नहं विद्याधरेण हि ॥ ५
व्यूढा मदनवेगेन स्वैरं त्वद्रूपधारिणा । स एवैकश्च भर्ता मे तत्कस्मादस्मि बन्धकी ॥ ६
किं वानिकान्तबन्धूनां स्वेच्छाचारकृतात्मनाम् । इमास्ता विपदः स्त्रीणां कुमारीणां कथैव का ॥ ७
दृष्टाशकुनया सख्या निषिद्धापि व्यसर्जयम् । त्वत्पार्श्वे यदहं दूतं तस्य चेदं फलं मम ॥ ८
तत्प्रवक्ष्यसि बलान्मां चेत्प्राणांस्त्यक्ष्याम्यहं ततः । का नाम कुलजा हि स्त्री भर्तृद्रोहं करिष्यति ॥ ९
तथा च कथयाम्यत्र तव राजन्कथां शृणु । पुराभूदिन्द्रदत्ताख्यश्चेदिदेशमहीपतिः ॥ १०
स पापशोधने तीर्थे कीर्त्यै देवकुलं महत् । चक्रे यशःशरीरार्थी शरीरं वीक्ष्य भङ्गुरम् ॥ ११
तच्च भक्तिरसाच्छश्वद्वीक्षितुं स ययौ नृपः । यतिश्च तीर्थस्नानाय सदा तत्राययौ जनः ॥ १२
एकदा च ददर्शैकां तीर्थस्नानार्थमागताम् । स राजात्र वणिग्भार्यां प्रवासस्थितभर्तृकाम् ॥ १३
स्वच्छकान्तिसुधासिक्तां चित्ररूपविभूषणाम् । जङ्गमामिव कन्दर्पराजधानीं मनोरमाम् ॥ १४
जयाहं विजये बिभर्मीति प्रोक्तेव पादयोः । आश्लिष्टां पञ्चबाणस्य तूणीरद्वयशोभया ॥ १५
सा दृष्टैव मनस्तस्य जहार नृपतेस्तथा । यथाविश्य गृहं तस्याः स ययौ विवशो निशि ॥ १६
तां च प्रार्थयमानः सञ्जगदे स तया नृपः । रक्षिता त्वं न युक्तं ते परदाराभिसर्पणम् ॥ १७
हठात्स्पृशसि वा मां चेदधर्मस्ते महान्भवेत् । मरिष्यामि च सद्योऽहं न सहिष्ये च दूषणम् ॥ १८
इत्युक्तोऽपि तया तस्मिन्बलं राज्ञि निर्व्यापिनि । शीलभ्रंशभयात्तस्याः सद्यो हृदयमस्फुटत् ॥ १९
तद्दृष्ट्वा सपदि हीतः स गत्वैव यथागतम् । दिनैस्तेनानुतापेन राजा पञ्चत्वमाययौ ॥ २०
इत्याख्याय कथामेतां सभयप्रश्रयानता । भूयः कलिङ्गसेना सा वत्सेश्वरमभाषत ॥ २१
तस्मादधर्मे मत्प्राणहरणे मा मतिं कृथाः । हताश्रिताया वस्तुं मे देहि यास्यन्त्यतोऽन्यथा ॥ २२
एतत्कलिङ्गसेनातः श्रुत्वा वत्सेश्वरोऽथ सः । विचार्य विरतो भूत्वा धर्मज्ञस्तामभाषत ॥ २३
राजपुत्रि वस स्वच्छं भर्त्रा सममिहामुना । नाहं वक्ष्यामि ते किंचिदिदानीं मा भयं कृथाः ॥ २४
इत्युक्त्वैव गते तस्मिन्स्वैरं राज्ञि स्वमन्दिरम् । श्रुत्वा मदनवेगस्तन्नभसोऽवततार सः ॥ २५
प्रिये साधु कृतं नैवमकरिष्यः शुभे यदि । नाभविष्यच्छुभं यस्मान्नासहिष्यत तन्मया ॥ २६
इत्युक्त्वा सान्त्वयित्वा तां निशां नीत्वा तया सह । तत्रैव गच्छन्नागच्छन्नासीद्विद्याधरोऽथ सः ॥ २७
कलिङ्गसेनापि च सा पत्यौ विद्याधरेश्वरे । तत्रास्त मर्त्यभावेऽपि दिव्यभोगसुखान्विता ॥ २८
वत्सराजोऽपि तच्चिन्तां मुक्त्वा मन्त्रिवचः स्मरन् । ननन्द लब्धं मन्वानो देवीं राज्यं सुतं तथा ॥ २९
देवी वासवदत्ता च मन्त्री यौगन्धरायणः । अभूतां निर्वृतौ सिद्धे नीतिकल्पलताफले ॥ ३०
अथ गच्छत्सु दिवसेष्वापाण्डुमुखपङ्कजा । दध्रे कलिङ्गसेना सा गर्भमुत्पन्नदोहदा ॥ ३१
कुचौ विरेजतुस्तस्याः स्तनावाश्यामचूचुकौ । निधानकुम्भौ कामस्य मदमुद्राङ्किताविव ॥ ३२

मदनवेगस्तामुपेत्य पतिरभ्यधात् । कलिङ्गसेने दिव्यानामस्माकं समयोऽस्त्ययम् ॥
मानुषगर्भं यन्मुक्त्वा यामो विदूरतः । कण्वाश्रमे न तत्याज मेनका किं शकुन्तलाम् ॥
यद्यप्यप्सराः पूर्वं तदप्यविनयान्निजात् । शक्रशापेन संप्राप्ता मानुष्यं देवि सांप्रतम् ॥
च बन्धकीशब्दो जातः साध्व्या अपीह ते । तस्मादपत्यं रक्षेस्त्वं स्थानं यास्याम्यहं निजम् ॥
रिष्यसि यदा मां च संनिधास्ये तदा तव । एवं कलिङ्गसेनां तामुक्त्वा साश्रुविलोचनाम् ॥
ाश्वास्य च दत्त्वा च तस्यै सद्रत्नसंचयम् । तच्चित्तः समयाकृष्टो ययौ विद्याधरेश्वरः ॥
लिङ्गसेनाप्यत्रासीदपत्याशां सखीमिव । आलम्ब्य वत्सराजस्य भुजच्छायामुपाश्रिता ॥
ान्तरे कृतवतीं साङ्गभर्त्राप्तये तपः । आदिदेश रतिं भार्यामनङ्गस्याम्बिकापतिः ॥
सराजगृहे जातो दग्धपूर्वः स ते पतिः । नरवाहनदत्ताख्यो योनिजो मद्विलङ्घनात् ॥
ाराधनतस्त्वं तु मर्त्यलोकेऽप्ययोनिजा । जनिष्यसे ततस्तेन भर्त्रा साङ्गेन योक्ष्यसे ॥
मुक्त्वा रतिं शंभुः प्रजापतिमथादिशत् । कलिङ्गसेना तनयं सोष्यते दिव्यसंभवम् ॥
हृत्वा मायया तस्यास्तत्स्थाने त्वमिमां रतिम् । निर्माय मानुषीं कन्यां त्यक्तदिव्यतनुं क्षिपेः ॥
ीश्वराज्ञामादाय मूर्ध्नि वेधस्यथो गते । कलिङ्गसेना प्रसवं प्राप्ते काले चकार सा ॥
ासमात्रं सुतं तस्या हृत्वैवात्र स्वमायया । रतिं तां कन्यकां कृत्वा न्यधाद्विधिरलक्षितम् ॥
र्वेश्च तत्र तामेव कन्यां जातामलक्षत । दिवाप्यकाण्डप्रतिपच्चन्द्रलेखामिवोदिताम् ॥
ान्तिद्योतिततद्वासगृहां निर्जित्य कुर्वतीम् । रत्नदीपशिखाश्रेणीर्लज्जिता इव निष्प्रभाः ॥
लिङ्गसेना तां दृष्ट्वा जातामसदृशीं सुताम् । पुत्रजन्माधिकं तोषादुत्सवं विततान सा ॥
ाथ वत्सेश्वरो राजा सदेवीकः समन्त्रिकः । कन्यां कलिङ्गसेनाया जातां शुश्राव तादृशीम् ॥
ुत्वा च स नृपोऽकस्मादुवाचेश्वरचोदितः । देवीं वासवदत्तां तां स्थिते यौगन्धरायणे ॥
ाने कलिङ्गसेनैषा दिव्या स्त्री शापतश्च्युता । अस्यां जाता च कन्येयं दिव्यैवाश्चर्यरूपधृत् ॥
तदसौ कन्यका तुल्या रूपेण तनयस्य मे । नरवाहनदत्तस्य महादेवीत्वमर्हति ॥
तच्छ्रुत्वा जगदे राजा देव्या वासवदत्तया । महाराज किमेवं त्वमकस्मादद्य भाषसे ॥
कुलद्वयविशुद्धोऽयं क्व पुत्रस्ते बत क्व सा । कलिङ्गसेनातनया बन्धकीगर्भसंभवा ॥
श्रुत्वैतद्विमृशन्राजा सोऽब्रवीन्नह्यहं स्वतः । वदाम्येतत्प्रविश्यान्तः कोऽपि जल्पतीव माम् ॥
नरवाहनदत्तस्य कन्येयं पूर्वनिर्मिता । भार्येत्येवं वदन्तीं च शृणोमीव गिरं दिवः ॥
कलिङ्गसेना किं चासावेकपत्नी कुलोद्गता । पूर्वकर्मवशात्त्वस्या बन्धकीशब्दसंभवः ॥
इति राज्ञोदिते प्राह मन्त्री यौगन्धरायणः । श्रूयते देव यच्चक्रे रतिर्दग्धे स्मरे तपः ॥
मर्त्यलोकावतीर्णेन सशरीरेण संगमः । मर्त्यभावगतायास्ते स्वेन भर्त्रा भविष्यति ॥
इति चादाद्वरं शर्वो रत्यै स्वपतिमीप्सवे । कामावतारश्चोक्तः प्राग्दिव्यवाचा सुतस्तव ॥
रत्यावतरणीयं च मर्त्यभावे हराज्ञया । गर्भग्राहिकया चाद्य ममैवं वर्णितं रहः ॥
मया कलिङ्गसेनाया गर्भः प्राग्गर्भशय्यया । युक्तो दृष्टस्तदैवान्यदपश्यं तद्विवर्जितम् ॥
तदाश्चर्यं विलोक्याहं तवाख्यातुमिहागता । इति स्त्रिया तयोक्तं मे जातैषा प्रतिभापि ते ॥
तज्जाने मायया देवैः सैषा रतिरयोनिजा । कलिङ्गसेनातनया गर्भचौर्येण निर्मिता ॥
भार्या कामावतारस्य पुत्रस्य तव भूपते । तथा चात्र कथामेतां यक्षसंबन्धिनीं शृणु ॥
भृत्यो वैश्रवणस्याभूद्विरूपाक्ष इति श्रुतः । यक्षो निधानलक्षाणां प्रधानाध्यक्षतां गतः ॥
मथुरायां बहिः संस्थं निधानं स च रक्षितुम् । यक्षं नियुक्तवानेकं शिलास्तम्भमिवाचलम् ॥
तत्र तन्नगरीवासी कश्चित्पाशुपतो द्विजः । निधानान्वेषणायागात्खन्यवादी कदाचन ॥
स मानुषवसादीपहस्तो यावत्परीक्षते । स्थानं तत्तावदस्यात्र कराद्दीपः पपात सः ॥
लक्षणेन च तेनात्र स्थितं निधिमवेत्य सः । उद्घाटयितुमारेभे सहान्यैः सखिभिर्द्विजैः ॥

ग्णे विधायाशु भस्मना मण्डलं महत् । प्रविश्य चान्तरे तस्य प्रज्वाल्याग्निं सहेन्धनैः ॥ ६२
निश्चयदत्तः स ते महाव्रतिनस्तथा । मन्त्रं जपन्तो रक्षार्थं सर्व एवावतस्थिरे ॥ ६३
यौ वादयन्ती दूरात्कङ्कालकिंनरीम् । नृत्यन्ती यक्षिणी तत्र सा शृङ्गोत्पादिनी निशि ॥ ६४
तेषु चतुर्ष्वेकं सा महाव्रतिनं प्रति । दत्तदृङ्मन्त्रमपठत्सनृत्तं मण्डलाद्बहिः ॥ ६५
मन्त्रेण संजातशृङ्गो मोहित उत्थितः । नृत्यंस्तस्मिञ्ज्वलत्यग्नौ स महाव्रतिकोऽपतत् ॥ ६६
चार्धदग्धं तमाकृष्यैवाग्निमध्यतः । सा शृङ्गोत्पादिनी हृष्टा भक्षयामास यक्षिणी ॥ ६७
द्वितीये व्रतिनि न्यस्तदृष्टिस्तथैव सा । तं शृङ्गोत्पादनं मन्त्रं पपाठ च ननर्त च ॥ ६८
पे द्वितीयस्तन्मन्त्रजातशृङ्गः प्रनर्तितः । पतितोऽग्नौ तयाकृष्य पश्यत्स्वन्येष्वभक्ष्यत ॥ ६९
क्रमेण संमोह्य तान्महाव्रतिनो निशि । तयाभक्ष्यन्त यक्षिण्या चत्वारोऽपि सशृङ्गकाः ॥ ७०
भक्षयन्त्या च तया मांसासवमत्तया । स्वयं किंनरिकातोद्यं दैवाद्भूमौ न्यधीयत ॥ ७१
क्षिप्रमुत्थाय तद्गृहीत्वैव वादयन् । धीरो निश्चयदत्तोऽपि प्रनृत्यन्विहसन्भ्रमन् ॥ ७२
ङ्गोत्पादनं मन्त्रमसकृच्छ्रुतशिक्षितम् । पापठ्यते स्म यक्षिण्यास्तस्या न्यस्तेक्षणो मुखे ॥ ७३
ोगप्रभावेण विवशा मृत्युशङ्किनी । उत्थातुकामशृङ्गी सा प्रह्वा तं प्राह यक्षिणी ॥ ७४
ाधीस्त्वं महासत्त्व स्त्रियं मां कृपणामिमाम् । इदानीं शरणं त्वं मे मन्त्रपाठादि संहर ॥ ७५
मां वेद्म्यहं सर्वमीप्सितं साधयामि ते । अनुरागपरा यत्र तत्र त्वां प्रापयाम्यहम् ॥ ७६
सप्रत्ययं प्रोक्तस्तया धीरस्तथेति सः । चक्रे निश्चयदत्तोऽत्र मन्त्रपाठादिसंहृतिम् ॥ ७७
स तस्या यक्षिण्याः स्कन्धमारुह्य तद्गिरा । नीयमानस्तया व्योम्ना प्रतस्थे तां प्रियां प्रति ॥ ७८
तायां च रजनौ प्राप्यैकं गिरिकाननम् । नम्रा निश्चयदत्तं तं गुह्यकी सा व्यजिज्ञपत् ॥ ७९
दयेऽधुना गन्तुं शक्तिर्नास्ति ममोपरि । तदस्मिन्कानने कान्ते गमयेदं दिनं प्रभो ॥ ८०
ानि भुङ्क्ष्व स्वादूनि निर्झराम्भः शुभं पिब । अहं यामि निजं स्थानमेष्यामि च निशागमे ॥ ८१
ामि च तदैव त्वामनुरागपरान्तिकम् । मौलिमालां हिमगिरेर्नगरीं पुष्करावतीम् ॥ ८२
क्त्वा तदनुज्ञाता स्कन्धात्तत्रावतार्य तम् । यक्षिणी पुनरागन्तुं सत्यसंधा जगाम सा ॥ ८३
निश्चयदत्तोऽस्यां गतायामैक्षतात्र सः । अगाधमन्तः सविषं स्वच्छशीतं बहिः सरः ॥ ८४
ान्स्त्रीचित्तमेतादृगित्यर्केण निदर्शनम् । प्रसारितकरेणेव प्रकटीकृत्य दर्शितम् ॥ ८५
ाद्विषाक्तं गन्धेन बुद्ध्वा मानुषकृत्यतः । त्यक्त्वाम्भोर्थी तृषार्तः सन्दिव्ये तत्राभ्रमद्गिरौ ॥ ८६
ान्नुन्नतभूभागे पद्मरागमणी इव । स्फुरन्तौ द्वावपश्यच्च भुवं तां निचखान च ॥ ८७
ास्तमृत्तिकश्चास्य जीवतो मर्कटस्य सः । शिरो ददर्श ते चास्य पद्मरागाविवाक्षिणी ॥ ८८
विस्मयते यावत्किमेतदिति चिन्तयन् । तावन्मनुष्यवाचासौ मर्कटस्तमभाषत ॥ ८९
ुषो मर्कटीभूतो विप्रोऽहं मां समुद्धर । कथयिष्यामि ते साधो स्ववृत्तान्तं ततोऽखिलम् ॥ ९०
च्छ्रुत्वैव साश्चार्यो मृत्तिकामपनीय सः । भूमेर्निश्चयदत्तस्तमुज्जहाराथ मर्कटम् ॥ ९१
ुतः पादपतितस्तं भूयोऽपि स मर्कटः । उवाच दत्ताः प्राणा मे कृच्छ्रादुद्धरता त्वया ॥ ९२
हि यावच्छ्रान्तस्त्वमुपयुङ्क्ष्व फलाम्बुनी । त्वत्प्रसादादहं चापि करिष्ये पारणं चिरात् ॥ ९३
ुक्त्वा तमनैषीत्स दूरं गिरिनदीतटम् । कपिः स्वाधीनसुस्वादुफलसच्छायपादपम् ॥ ९४
स्नात्वोपभुक्ताम्बुफलः स कृतपारणम् । कपिं निश्चयदत्तस्तं प्रत्यागत्य ततोऽब्रवीत् ॥ ९५
ं त्वं मर्कटीभूतो मानुषोऽप्युच्यतामिति । ततः स मर्कटोऽवादीच्छृणुविदानीं वदाम्यदः ॥ ९६
द्रस्वामीति नाम्नास्ति वाराणस्यां द्विजोत्तमः । तस्य पत्न्यां सुवृत्तायां जातोऽस्म्येष सुतः सखे ॥ ९७
मस्वामीति पित्रा च कृतनामा क्रमादहम् । आरूढो मदनव्यालगजं मदनिरङ्कुशम् ॥ ९८
मां कदाचिदद्राक्षीद्दूराद्वातायनाग्रगा । श्रीगर्भाख्यस्य वणिजस्तत्पुरीवासिनः सुता ॥ ९९
ग्णी बन्धुदत्ताख्या माथुरस्य वणिक्पतेः । भार्या वराहदत्तस्य पितुर्वेश्मन्यवस्थिता ॥ १००

सा मदालोकसंजातमन्मथान्विष्य नाम मे। वयस्यां प्राहिणोदाप्तां मह्यं मत्संगमार्थिनी ॥
सा तद्वयस्या कामान्धामुपगम्य जनान्तिकम्। आख्याततदभिप्राया मामनैषीन्निजं गृहम् ॥
तत्र मां स्थापयित्वा च गत्वा गुप्तं तदैव सा। तां बन्धुदत्तामानैषीदौत्सुक्यागणितत्रपाम् ॥
आनीतैव च सा मेऽत्र कण्ठाश्लेषमुपागमत्। एकवीरो हि नारीणामतिभूमिं गतः स्मरः ॥
एवं दिने दिने स्वैरमागत्यात्र पितुर्गृहात्। अरंस्त बन्धुदत्ता सा मया सह सखीगृहे ॥
एकदा तां निजगृहं नेतुं तत्र चिरस्थिताम्। आगतः स पतिस्तस्या मथुरातो महावणिक् ॥
ततः पित्राभ्यनुज्ञाता पत्या तेन निनीषिता। रहस्यज्ञां द्वितीयां सा बन्धुदत्ताब्रवीत्सखीम् ॥
निश्चितं सखि नेतव्या भर्त्राहं मथुरां पुरीम्। न च जीवाम्यहं तत्र सोमस्वामिविनाकृता ॥
तदत्र कोऽभ्युपायो मे कथयेत्युदिता तया। सखी सुखशया नाम योगिनी तां जगाद सा ॥
द्वौ स्तो मन्त्रप्रयोगौ मे ययोरेकेन सूत्रके। कण्ठबद्धे झगित्येव मानुषो मर्कटो भवेत् ॥
द्वितीयेन च मुक्तेऽस्मिन्सूत्रके सैष मानुषः। पुनर्भवेत्कपित्वे च नास्य प्रज्ञा विलुप्यते ॥
तद्यदीच्छति सुश्रोणि सोमस्वामी प्रियः स ते। तदेतं मर्कटशिशुं संप्रत्येव करोम्यहम् ॥
ततः क्रीडानिभादेतं गृहीत्वा मथुरां व्रज। मन्त्रयुक्तिद्वयं चैतद्भवतीं शिक्षयाम्यहम् ॥
संविधास्यसि येनैनं पार्श्वस्थं मर्कटाकृतिम्। रहःस्थाने च पुरुषं प्रियं संपादयिष्यसि ॥
एवमुक्ता तया सख्या बन्धुदत्ता तथैव सा। रहस्यानाय्य सस्नेहं तदर्थं मामबोधयत् ॥
कृतानुज्ञं च मां बद्धमन्त्रसूत्रं गले क्षणात्। तत्सखी सा सुखशया व्यधान्मर्कटपोतकम् ॥
तद्रूपेण स्वभर्त्रे सा बन्धुदत्तोपनीय माम्। सख्या मह्यं विनोदाय दत्तोऽसावित्यदर्शयत् ॥
अतुष्यत्स च मां दृष्ट्वा क्रीडनीयं तदङ्कगम्। अहं च कपिरेवासं प्राज्ञोऽपि व्यक्तवागपि ॥
अहो स्त्रीचरितं चित्रमित्यन्तश्च हसन्नपि। तथातिष्ठमहं को हि कामेन न विडम्ब्यते ॥
सख्या शिक्षिततन्मन्त्रा बन्धुदत्ताह्न्यथापरे। मथुरां प्रति सा प्रायाद्भर्त्रा सह पितुर्गृहात् ॥
मां चाप्येकस्य भृत्यस्य स्कन्धमारोपयत्तदा। स भर्ता बन्धुदत्तायाः पथि तत्प्रियकाम्यया ॥
ततो वयं ते सर्वेऽपि यान्तो मध्ये पथि स्थितम्। दिनैर्द्वित्रैर्वनं प्राप्ता बहुमर्कटभीषणम् ॥
ततोऽभ्यधावन्दृष्ट्वा मां मर्कटा गणशोऽभितः। क्षिप्रं किलकिलारावैराह्वयन्तः परस्परम् ॥
आगत्य खादितुं ते च प्रारभन्त प्लवंगमाः। दुर्वारास्तं वणिग्भृत्यं यस्य स्कन्धेऽहमासितः ॥
स तेन विह्वलः स्कन्धात्त्यक्त्वैव भुवि मां भयात्। पलायितोऽभूदथ मामगृह्णंस्तेऽत्र मर्कटाः।
मत्स्नेहाद्बन्धुदत्ता च तद्भर्ता तस्य चानुगाः। पाषाणैर्लगुडैर्घ्नन्तो जेतुं तान्नाशकन्कपीन् ॥
ततस्ते मर्कटा मूढस्याङ्गेऽङ्गे लोम लोम मे। नखैर्व्यलुम्पन्दन्तैश्च कुकर्मकुपिता इव ॥
कण्ठसूत्रस्य माहात्म्याच्छंभोश्च स्मरणात्ततः। अहं लब्धबलस्तेभ्यो बन्धमुन्मुच्य विद्रुतः ॥
प्रविश्य गहने तेषां व्यतीतो दृष्टिगोचरात्। क्रमाद्वनाद्वनं गच्छन्निदं प्राप्तोऽस्मि काननम् ॥
भ्रष्टस्य बन्धुदत्ताया जन्मन्यत्रैव ते कथम्। मर्कटत्वफलो जातः परदारसमागमः ॥
इति दुःखतमोन्धस्य भ्रमतः प्रावृषीह मे। दुःखान्तरमपि प्रत्तमसंतुष्टेन वेधसा ॥
यन्मामकस्मादागत्य कराक्रान्तं करेणुका। मेघाम्भःप्लुतवल्मीककर्दमान्तर्न्यवेशयत् ॥
भवितव्यनियुक्ता च जाने सा कापि देवता। यद्यत्नान्नाशकं तस्मात्पङ्काच्चलितुमप्यलम् ॥
आश्वास्यमाने चैतस्मिन्न मृतोऽस्मि न केवलम्। यावज्ज्ञानं ममोत्पन्नमनिशं ध्यायतो हरम् ॥
तावत्कालं च नैवासीत्क्षुत्तृष्णा च सखे मम। यावद्यथोद्धृतः शुष्कपङ्ककूटादहं त्वया ॥
ज्ञाने प्राप्तेऽपि शक्तिर्मे तावती नैव विद्यते। मोचयेयं ययात्मानमितो मर्कटभावतः ॥
कण्ठसूत्रं यदा कापि तन्मन्त्रेणैव मोक्ष्यति। योगिनी मे तदा भूयो भवितास्मीह मानुषः ॥
इत्येष मम वृत्तान्तस्त्वं त्वगम्यमिदं वनम्। किमागतः कथं चेति ब्रूहीदानीं वयस्य मे ॥

१. ज्ञात्वा.

कैटरूपेण सोमस्वामिद्विजेन सः। उक्तो निश्चयदत्तः स्वं तस्मै वृत्तान्तमब्रवीत्॥ १३९
वेद्याधरीहेतोरुज्जयिन्याः समागतः। आनीतो धैर्यजितया यक्षिण्या च तया निशि॥ १४०
ुतत्तदाश्चर्यवृत्तान्तः कपिरूपधृत्। धीमान्निश्चयदत्तं तं सोमस्वामी जगाद सः॥ १४१
तं त्वया दुःखं मयेव स्वीकृते महत्। न च श्रियः स्त्रियश्चेह कदाचित्कस्यचित्स्थिराः॥ १४२
त्रत्क्षणरागिण्यो नदीवत्कुटिलाशयाः। भुजगीवदविश्वास्या विद्युद्वच्चपलाः स्त्रियः॥ १४३
विद्याधरी रक्ताप्यनुरागपरा क्षणात्। प्राप्य कंचित्स्वजातीयं विरज्येत्त्वयि मानुषे॥ १४४
स्त्रीनिमित्तेन प्रयासेनामुनाधुना। किंपाकफलतुल्येन विपाकविरसेन ते॥ १४५
ा विद्याधरपुरीं तां सखे पुष्करावतीम्। यक्षिणीस्कन्धमारुह्य तामेवोज्जयिनीं व्रज॥ १४६
तद्वचनं मित्र पूर्वं मित्रवचो मया। न कृतं रागिणा तेन परितप्येऽधुनाप्यहम्॥ १४७
त्तानुरक्तं हि सुस्निग्धो ब्राह्मणस्तदा। वारयन्भवशर्माख्यः सुहृन्मामेवमब्रवीत्॥ १४८
ः सखे वशं मा गाः स्त्रीचित्तं ह्यतिदुर्गमम्। तथा च मम यद्वृत्तं तदिदं वच्मि ते शृणु॥ १४९
गस्यामिहैवासीत्तरुणी रूपशालिनी। ब्राह्मणी सोमदा नाम चपला गुप्तयोगिनी॥ १५०
च सह मे दैवात्समभूत्संगमो रहः। तत्संगमक्रमात्तस्यां मम प्रीतिरवर्धत॥ १५१
ा तामहं स्वैरमीर्ष्याकोपादताडयम्। तच्चासहिष्ट सा क्रूरा कोपं प्रच्छाद्य तत्क्षणम्॥ १५२
ुः प्रणयक्रीडाव्याजाच्च मम सूत्रकम्। गलेऽबध्नादहं दान्तस्तत्क्षणं बलदोऽभवम्॥ १५३
हं बलदीभूतस्तया दान्तोष्ट्रजीविनः। एकस्य पुंसो विक्रीतो गृहीताभीष्टमूल्यया॥ १५४
ोपितभारं मां क्लिश्यमानमवैक्षत। बन्धमोचनिका नाम योगिन्यत्र कृपान्विता॥ १५५
ानतः सोमदया विदित्वा मां पशूकृतम्। मुमोच कण्ठात्सूत्रं मे मद्गोस्वामिन्यपश्यति॥ १५६
ऽहं मानुषीभूतः स च क्षिप्राद्विलोकयन्। पलायितं मां मन्वानो मत्स्वामी प्राभ्रमद्दिशः॥ १५७
च बन्धमोचिन्या तया सह ततो व्रजन्। दैवादागतया दूराद्दृष्टः सोमदया तया॥ १५८
क्रोधेन ज्वलन्ती तां ज्ञानिनीं बन्धमोचिनीम्। अवादीत्किमयं पापस्तिर्यक्त्वान्मोचितस्त्वया॥ १५९
प्राप्स्यसि दुराचारे फलमस्य कुकर्मणः। प्रातस्त्वां निहनिष्यामि सहितां पाप्मनामुना॥ १६०
क्त्वैव गतायां च तस्यां सा सिद्धयोगिनी। तत्प्रतीघातहेतोर्मामवोचद्बन्धमोचिनी॥ १६१
मां कृष्णतुरगीरूपेणैषाभ्युपैष्यति। मया च शोणवडवारूपमत्राश्रयिष्यते॥ १६२
युद्धे प्रवृत्ते नौ पृष्ठतः खड्गपाणिना। सोमदायां प्रहर्तव्यं त्वयास्यामप्रमादिना॥ १६३
मेतां हनिष्यावस्तत्प्रातस्त्वं गृहे मम। आगच्छेरित्युदित्वा सा गृहं मे स्वमदर्शयत्॥ १६४
तस्यां प्रविष्टायामहं निजगृहानगाम्। अनुभूताद्भुतानेकजन्मामुत्रैव जन्मनि॥ १६५
ः कृपाणपाणिश्च गतवानस्मि तद्गृहम्। अथागात्सोमदा सात्र कृष्णाश्वा रूपधारिणी॥ १६६
पे शोणहयारूपमकरोद्बन्धमोचिनी। खुरदन्तप्रहारैश्च ततो युद्धमभूत्तयोः॥ १६७
ा प्रदत्तनिस्त्रिंशप्रहारा क्षुद्रशाकिनी। निहता बन्धमोचिन्या तया सा सोमदा ततः॥ १६८
ाहं निर्भयीभूतस्तीर्णतिर्यक्त्वदुर्गतिः। न कुस्त्रीसंगमं भूयो मनसा समचिन्तयम्॥ १६९
त्ल साहसिकता शाकिनीशम्बरादयः। दोषाः स्त्रीणां त्रयः प्रायो लोकत्रयभयावहाः॥ १७०
छाकिनीसखीं बन्धुदत्तां किमनुधावसि। स्नेहो यस्या न पत्यौ स्वे तस्यास्तु त्वय्यसौ कुतः॥ १७१
मुक्तोऽप्यहं तेन मित्रेण भवशर्मणा। नाकार्षं वचनं तस्य प्राप्तोऽस्मीमां गतिं ततः॥ १७२
ास्त्वां वच्मि मा कार्षीरनुरागपरां प्रति। क्लेशं सा हि स्वजातीये प्राप्ते त्वां त्यक्ष्यति ध्रुवम्॥ १७३
ीव पुष्पं पुरुषं स्त्री वाञ्छति नवं नवम्। अतोऽनुतापो भविता ममेव भवतः सखे॥ १७४
ातत्कपिरूपस्थसोमस्वामिवचो हृदि। तस्य निश्चयदत्तस्य नाविशद्रागनिर्भरे॥ १७५
ाच स कपिं तं हि न सा व्यभिचरेन्मयि। विद्याधराधिपकुले शुद्धे जाता ह्यसाविति॥ १७६

१. बलदो वृषभः. दान्तो भग्नवृषणः.

पश्येह किंनरीगीतैः कोकिलानां च कूजितैः । रुतैरलीनां संगीतमृतुराजस्य तन्यते ॥
इत्यादि देवपुत्रास्ते ब्रुवाणास्तामदर्शयन् । नरवाहनदत्ताय तस्मै स्वोपवनावलीम् ॥
तत्पुरेष्वपि चिक्रीड पश्यन्वत्सेश्वरात्मजः । स वसन्तोत्सवोद्दामप्रनृत्यत्पौरचर्चरीः ॥
बुभुजे साप्सरस्कश्च भोगानत्रामरोचितान् । सुकृतो यत्र गच्छन्ति तत्रैषामृद्धयोऽग्रतः ॥
एवं स्थित्वा त्रिचतुरान्दिवसान्देवपुत्रकान् । नरवाहनदत्तस्तान्सुहृदो निजगाद सः ॥
गच्छाम्यहं स्वनगरीं तातसंदर्शनोत्सुकः । तद्यूयं तां पुरीमेत्य कृतार्थयत पश्यत ॥
तच्छ्रुत्वा तेऽब्रुवन्हृष्टः सारस्तस्याः पुरो भवान् । किमन्यत्प्राप्तविघेन स्मर्तव्यास्तु वयं त्वया ॥
इत्युक्त्वा प्रतिमुक्तस्तैरुपनीतेन्द्रसद्रथम् । नरवाहनदत्तोऽसौ मातलिं तमभाषत ॥
यत्र दिव्यसरस्तीरे स्थिता मे गोमुखादयः । तेन मार्गेण कौशाम्बीं पुरीं प्रापय मामिति ॥
ततस्तथेति तेनोक्तः साप्सरस्कः स तद्रथे । आरुह्य तत्सरः प्राप गोमुखादीन्ददर्श च ॥
आयात स्वपथा शीघ्रं सर्वे वक्ष्यामि वो गृहे । इत्युक्त्वा तांश्च कौशाम्बीं ययौ शक्ररथेन सः
तत्रावतीर्य नभसः पूजितं प्रेष्य मातलिम् । अप्सरोभिर्युतस्ताभिः स विवेश स्वमन्दिरम् ॥
स्थापयित्वा च तास्तत्र गत्वा वत्सेश्वरस्य सः । तदागमनहृष्टस्य ववन्दे चरणौ पितुः ॥
मातुर्वासवदत्तायाः पद्मावत्यास्तथैव च । अभ्यनन्दंश्च तेऽप्येनं दर्शनातृप्तचक्षुषः ॥
तावच्च स रथारूढो गोमुखोऽत्र ससारथिः । प्रलम्बबाहुना तेन विप्रेण सममाययौ ॥
अथ स्थिते मन्त्रिवर्गे पित्रा पृष्टः शशंस सः । नरवाहनदत्तस्तं स्ववृत्तान्तं महाद्भुतम् ॥
ददाति तस्य कल्याणमित्रसंयोगमीश्वरः । इच्छत्यनुग्रहं यस्य कर्तुं सुकृतकर्मणः ॥
इति शंसत्सु सर्वेषु राजा वत्सेश्वरोऽथ सः । चकार तुष्टस्तनयस्याच्युतानुग्रहोत्सवम् ॥
ददर्श पादपतनायानीता गोमुखेन च । हरिप्रसादलब्धास्ताः सदारोऽप्सरसः स्नुषाः ॥
देवरूपां देवरतिं देवमालां तथैव च । देवप्रियां चतुर्थीं च चेटीभिः पृष्टनामकाः ॥
काहं क मर्त्यप्सरसो दिष्ट्याहं राजसूनुना । नरवाहनदत्तेन भुवि स्वर्नगरी कृता ॥
इतीवावकिरन्ती सा सिन्दूरं विततोत्सवा । चलद्रक्तपताकाभिः कौशाम्बी ददृशे तदा ॥
नरवाहनदत्तश्च पित्रोर्दत्तोत्सवो दृशोः । अन्याः संभावयामास भार्या मार्गोन्मुखीर्निजाः ॥
ताश्चतुर्भिर्दिनैर्वर्षैरिव तं च कृशीकृताः । अनन्दयन्वर्णयन्त्यस्तां तां विरहवेदनाम् ॥
गोमुखो वनवासे च रक्षतो रथवाजिनः । प्रलम्बबाहोः सिंहादिवधशौर्यमवर्णयत् ॥
एवं श्रुतिसुखाञ्शृण्वन्कथालापानयन्त्रणान् । निर्वर्णयंश्च कान्तानां रूपं स नयनामृतम् ॥
कुर्वंश्चाटूनि च पिबन्मधूनि सचिवैर्युतः । नरवाहनदत्तोऽत्र तं कालमवसत्सुखी ॥
एकदान्तरलंकारवतीवासगृहे स्थितः । सवयस्यः स शुश्राव तूर्यकोलाहलं बहिः ॥
ततो हरिशिखं सेनापतिं निजमुवाच सः । अकस्मात्कुत एतस्यास्तूर्यनादो महानिह ॥
एतच्छ्रुत्वैव निर्गत्य प्रविश्य च स तं क्षणात् । व्यजिज्ञपद्धरिशिखो वत्सराजसुतं प्रभुम् ॥
रुद्रो नाम वणिग्देव नगर्यामिह विद्यते । इतः सुवर्णद्वीपं च स जगाम वणिज्यया ॥
आगच्छतो निजस्तस्य संप्राप्तोऽप्यर्थसंचयः । अब्धौ वहनभङ्गेन निमग्नो नाशमागतः ॥
उत्तीर्णश्चात्मनैवैको देव जीवन्स वारिधेः । प्राप्तश्चाद्य दिनं षष्ठमिहापन्नो निजं गृहम् ॥
दिनानि कतिचिद्यावदिह तिष्ठति दुःखितः । तावत्स्वारामतो दैवात्प्राप्तस्तेन निधिर्महान् ॥
तद्गोत्रजानां च मुखाज्ज्ञातं वत्सेश्वरेण तत् । ततोऽद्यागत्य तेनासौ विज्ञप्तो वणिजा प्रभुः ॥
सरत्नौघा मया लब्धाश्चतस्रो हेमकोटयः । तदादिशति देवश्चेदर्पयिष्यामि ता इति ॥

खनाक स्तुत्वा थामकता ।पतुः । नरवाहनदत्तः स्वान्साचवान्वास्सताऽब्रवात् ॥ ९५
ःत्यर्थास्तदन्वेव ददाति किम् । चित्रमुच्छ्रायपाताभ्यां क्रीडतीव विधिर्नृणाम् ॥ ९६
ामुखोऽवादीदीदृश्येव गतिर्विधेः । समुद्रशूरस्य कथा तथा चात्र निशम्यताम् ॥ ९७
ः पूर्वं नृपतेर्हर्षवर्मणः । स्फीतं हर्षपुरं नाम सौराज्यसुखितप्रजम् ॥ ९८
ःशूराख्यो नगरेऽभून्महावणिक् । कुलजो धार्मिको धीरसत्त्वो बहुधनेश्वरः ॥ ९९
वशाद्गच्छन्सुवर्णद्वीपमेकदा । आरुरोह प्रवहणं तटं प्राप्य महाम्बुधेः ॥ १००
त तेनाब्धौ किंचिच्छेषे तदध्वनि । घोरः समुदभून्मेघो वायुश्च क्षोभितार्णवः ॥ १०१
वेक्षिप्ते वहने मकराहते । भग्ने परिकरं बद्ध्वा सोऽम्बुधावपतद्वणिक् ॥ १०२
ःविक्षेपैर्वीरोऽत्र तरति क्षणम् । तावच्चिरमृतं प्राप पुरुषं पवनेरितम् ॥ १०३
बाहुभ्यां क्षिप्ताम्बुर्विधिनैव सः । नीतः सुवर्णद्वीपं तदनुकूलेन वायुना ॥ १०४
पुलिने स तस्मान्मृतमानुषात् । कटीनिबद्धं सग्रन्थिं तस्यावैक्षत शाटकम् ॥ १०५
क्षते यावच्छाटकं कटितोऽस्य तत् । तावत्तदन्तरादिव्यं रत्नाढ्यं प्राप कण्ठकम् ॥ १०६
मादाय कृतस्नानस्तुतोष सः । मन्वानोऽब्धौ विनष्टं तद्धनं तस्याग्रतस्तृणम् ॥ १०७
त कलशपुराख्यं नगरं क्रमात् । हस्तस्थकण्ठको देवकुलमेकं विवेश सः ॥ १०८
'पविष्टः स वारिव्यायामतो भृशम् । परिश्रान्तः शनैर्निद्रां ययौ विधिविमोहितः ॥ १०९
च्चाकस्मादागताः पुररक्षिणः । ददृशुस्तस्य हस्तस्थं कण्ठकं तमसंवृतम् ॥ ११०
ठको राजसुताया इह कण्ठतः । हारितश्चक्रसेनाया ध्रुवं चौरोऽयमेव सः ॥ १११
ः प्रबोध्यासौ निन्ये राजकुलं वणिक् । तत्र पृष्टः स्वयं राज्ञा स यथावृत्तमभ्यधात् ॥ ११२
त्येष चौरोऽयमिमं पश्यत कण्ठकम् । इति प्रसार्य तं राजा यावत्सभ्यान्ब्रवीति सः ॥ ११३
रं दृष्ट्वा निपत्य नभसो जवात् । गृध्रस्तं कण्ठकं हृत्वा जगाम काप्यदर्शनम् ॥ ११४
त वणिजः क्रन्दतः शरणं शिवम् । वधे राज्ञा क्रुधादिष्टे शुश्रुवे भारती दिवः ॥ ११५
तन्वधीरेनमसौ हर्षपुराद्वणिक् । साधुः समुद्रशूराख्यो विषयेऽभ्यागतस्तव ॥ ११६
न नीतोऽभूत्स चौरः पुररक्षिणाम् । भयेन विह्वलो नश्यन्निपत्याब्धौ मृतो निशि ॥ ११७
ग्र चौरस्य कायं प्राप्याधिरुह्य च । वणिग्भग्नप्रवहणस्तीर्त्वाम्भोधिमिहागतः ॥ ११८
कटीबद्धशाटकग्रन्थितोऽमुना । वणिजा कण्ठकः प्राप्तो न नीतोऽनेन वो गृहात् ॥ ११९
ं राजन्वणिजं मुञ्च धार्मिकम् । संमान्य प्रहिणुष्वैनमित्युक्त्वा विरराम वाक् ॥ १२०
स संतुष्य मुक्त्वा तं वणिजं वधात् । समुद्रशूरं संमान्य धनै राजा विसृष्टवान् ॥ १२१
ग्नः क्रीतभाण्डो भूयो भयंकरम् । स्वदेशमेष्यन्वहनेनोत्ततराम्बुधिं वणिक् ॥ १२२
' ततो गत्वा सार्थेन सह स क्रमात् । अटवीं प्रापदेकस्मिन्वासरे दिवसात्यये ॥ १२३
प्तते सार्थे रात्रौ तस्मिंश्च जाग्रति । समुद्रशूरे न्यपतच्चौरसेनात्र दुर्जया ॥ १२४
ाया सार्थे भाण्डांस्त्यक्त्वा पलाय्य सः । समुद्रशूरो न्यग्रोधमारूढोऽभूदलक्षितः ॥ १२५
ा याते चौरसैन्ये भयाकुलः । तत्रैव तां तरौ रात्रिं दुःखार्तश्च निनाय सः ॥ १२६
तरोः पृष्ठे गतदृष्टिः स दैवतः । दीपप्रभामिवापश्यत्स्फुरन्तीं पत्रमध्यगाम् ॥ १२७
त्र चारूढो गृध्रनीडमवैक्षत । अन्तःस्थभास्वरानर्घरत्नाभरणसंचयम् ॥ १२८
ात्सर्वं तत्तन्मध्ये प्राप कण्ठकम् । तं स यं प्राप्तवान्स्वर्णद्वीपे गृध्रोऽहरच्च यम् ॥ १२९
मितधनो न्यग्रोधादवरुह्य सः । हृष्टो गच्छन्क्रमात्प्राप निजं हर्षपुरं पुरम् ॥ १३०
वणिक्सोऽथ वीतान्यद्रविणस्पृहः । समुद्रशूरः स्वजनैः सह नन्दन्यथेच्छया ॥ १३१
ातनं सोऽर्थनाशस्तत्तरणं ततः । सा कण्ठकस्य च प्राप्तिस्तस्यैवापगमः स च ॥ १३२

तदेवमीदृशं देव विचित्रं चेष्टितं विधेः । सुकृती चानुभूयैव दुःखमप्यश्नुते सुखम् ॥
इति गोमुखतः श्रुत्वा श्रद्धायोत्थाय च व्यधात् । नरवाहनदत्तोऽत्र स्नानादिदिवसक्रियाम् ॥
अन्येद्युरेत्य चास्थानगतं तं बालसेवकः । शूरः समरतुङ्गाख्यो राजपुत्रो व्यजिज्ञपत् ॥
देव सङ्ग्रामवर्षेण नाशितो गोत्रजेन मे । देशश्चतुर्भिर्युक्तेन पुत्रैर्वीरजितादिभिः ॥
तदेष गत्वा पश्चापि बद्ध्वा तानानयाम्यहम् । प्रभोर्विदितमस्त्वेतदित्युक्त्वा तत्र सोऽगमत् ॥
तमल्पसैन्यं तानन्यान्भूरिसैन्यानवेक्ष्य सः । वत्सेश्वरसुतस्तस्य दिदेशानु बलं निजम् ॥
सोऽगृहीत्वैव तन्मानी गत्वा पश्चापि तान्रिपून् । स्वबाहुभ्यां रणे जित्वा संयम्यानीतवान्सम
तथा जयिनमायान्तं वीरं संमान्य स प्रभुः । नरवाहनदत्तस्तं प्रशशंस स्वसेवकम् ।
चित्रमाक्रान्तविषयान्सबलानिन्द्रियोपमान् । जित्वानेन रिपून्पश्च पुरुषार्थः प्रसाधितः ॥
तच्छ्रुत्वा गोमुखोऽवादीच्छुता चेद्देव नेदृशी । राज्ञश्चमरबालस्य कथा तच्छृणु वच्मि ताम् ॥
हस्तिनापुरमित्यस्ति नगरं तत्र चाभवत् । राजा चमरबालाख्यः कोषदुर्गबलान्वितः ॥
बभूवुस्तस्य समरबलाद्या भूम्यनन्तराः । राजानो गोत्रजास्ते च संभूयैवमचिन्तयन् ॥
अयं चमरबालोऽस्मानेकैकं बाधते सदा । तदेते मिलिताः सर्वे विदध्मोऽस्य पराभवम् ॥
इति संमन्त्र्य पश्चैते तज्जयाय यियासवः । प्रस्थानलग्नं क्षितिपाः पप्रच्छुर्गणकं रहः ॥
अपश्यन्स शुभं लग्नं पश्यन्नशकुनानि च । जगाद गणको नास्ति लग्नं संवत्सरेऽत्र वः ॥
यथा तथा च यातानां न युष्माकं भवेज्जयः । किं चात्र वोऽनुबन्धेन समृद्धिं तस्य पश्यताम्
भोगो नाम फलं लक्ष्म्याः स तस्मादधिकोऽस्ति वः । न चेच्छ्रुता श्रूयतां तत्कथात्र वणिजोर्द्व
बभूव कौतुकपुरं नामेह नगरं पुरा । तस्मिन्नन्वर्थनामाभूद्राजा बहुसुवर्णकः ॥
यशोवर्मेति तस्यासीत्सेवकः क्षत्रियो युवा । तस्मै दातापि स नृपो नादात्किंचित्कदाचन ॥
यदा यदा च नृपतिस्तेनार्त्या याच्यते स्म सः । आदित्यं दर्शयन्नेवं तमुवाच तदा तदा ॥
अहमिच्छामि ते दातुं किं पुनर्भगवानयम् । तुभ्यं नेच्छति मे दातुं किं करोम्युच्यतामिति ॥
ततः सोऽवसरं चिन्वन्यावत्तिष्ठति दुःखितः । सूर्योपरागसमयस्तावदत्रागतोऽभवत् ॥
तत्कालं स यशोवर्मा गत्वा सततसेवकः । नृपं भूरिमहादानप्रवृत्तं तं व्यजिज्ञपत् ॥
यो ददाति न ते तुभ्यं दातुं सैष रविः प्रभो । ग्रस्तोऽद्य वैरिणा यावत्तावत्किंचित्प्रयच्छ मे ।
तच्छ्रुत्वा स हसित्वा च दत्तदानो महीपतिः । ददौ वस्त्रहिरण्यादि तस्मै बहुसुवर्णकः ॥
क्रमात्तस्मिन्धने भुक्ते खिन्नः सोऽददति प्रभौ । मृतजानिर्यशोवर्मा प्रययौ विन्ध्यवासिनीम् ॥
किं निरर्थेन देहेन जीवतापि मृतेन मे । त्यक्ष्याम्येतं पुरो देव्या वरं प्राप्स्यामि वेप्सितम् ॥
इत्यग्रे विन्ध्यवासिन्याः संविष्टो दर्भसंस्तरे । तन्मनाः स निराहारस्तपो महदतप्यत ॥
आदिशत्तं च सा स्वप्ने देवी तुष्टास्मि पुत्र ते । ददाम्यर्थश्रियं किं ते किं वा भोगश्रियं वद ।
तच्छ्रुत्वा स यशोवर्मा देवीं तां प्रत्यभाषत । एतयोर्निपुणं वेद्मि नाहं भेदं श्रियोरिति ॥
ततस्तमवदद्देवी स्वदेशे तर्हि यौ तव । भोगवर्मार्थवर्माणौ विद्येते वणिजावुभौ ॥
तयोर्गत्वा श्रियं पश्य ततो यत्सदृशी च ते । रोचिष्यते तत्सदृशी त्वयागत्यार्थ्यतामिति ॥
एतच्छ्रुत्वा प्रबुध्यैव स प्रातः कृतपारणः । स्वदेशं कौतुकपुरं यशोवर्मा ततो ययौ ॥
तत्रागात्प्रथमं तावत्सगृहानर्थवर्मणः । असंख्यहेमरत्नादिव्यवहारार्जितश्रियः ॥
पश्यंस्तां संपदं तस्य यथावत्तमुपाययौ । कृतातिथ्यश्च तेनासौ भोजनाय न्यमन्त्र्यत ॥
ततोऽत्राभुङ्क्त सघृतं समांसव्यञ्जनं च सः । प्राघुणोचितमाहारं पार्श्वे तस्यार्थवर्मणः ॥

स यशोवर्मा विचिकित्सन्निनिन्द ताम् । हृदयेन श्रियं तस्य विफलामर्थवर्मणः ॥ १७
ागमे भक्तं क्षीरं चानाययत्पुनः । अर्थवर्मा वणिक्तस्य स यशोवर्मणः कृते ॥ १७
च भूयस्तद्यथाकाममभुङ्क्त सः । अर्थवर्मापि स तदा क्षीरस्यैकं पलं पपौ ॥ १७
कस्थाने तावास्तीर्णशयनावुभौ । यशोवर्मार्थवर्माणौ शनैर्निद्रामुपेयतुः ॥ १७
च यशोवर्मा स्वप्नेऽपश्यदशङ्कितम् । प्रविष्टानत्र पुरुषान्दण्डहस्तान्भयंकरान् ॥ १७
:यधिकः कर्षो घृतस्य किमिति त्वया । मांसौदनश्च भुक्तोऽद्य पीतं च पयसः पलम् ॥ १८
ाद्ब्रुवाणैस्तैराकृष्यैवाथ पादतः । पुरुषैरर्थवर्मा स लगुडैः पर्यताड्यत ॥ १८
योमांसभक्तमभ्यधिकं च यत् । भुक्तं तत्सर्वमुदरादाचकर्षुश्च तस्य ते ॥ १८
। यशोवर्मा प्रबुद्धो यावदीक्षते । तावत्तस्याययौ शूलं विबुद्धस्यार्थवर्मणः ॥ १८
दन्परिजनैर्मर्द्यमानोदरश्च सः । वमति स्मार्थवर्मा तदधिकं यत्स भुक्तवान् ॥ १८
ततस्तस्मिन्यशोवर्मा व्यचिन्तयत् । धिग्धिगर्थश्रियमिमां यस्या भोगोऽयमीदृशः ॥ १८
यमीदृश्या भूयादभवनिः श्रियः । इत्यन्तश्चिन्तयन्सोऽत्र रात्रिं तामत्यवाहयत् ॥ १८
र्थवर्माणमामन्त्र्य स ययौ ततः । यशोवर्मा गृहं तस्य वणिजो भोगवर्मणः ॥ १८
ाद्यथावत्तं तेनापि च कृतादरः । निमन्त्रितोऽभूद्वणिजा तदहर्भोजनाय सः ॥ १८
वणिजोऽपश्यत्स कांचिद्धनसंपदम् । अपश्यत्तु शुभं वेश्म वासांस्याभरणानि च ॥ १८
ते यशोवर्मण्यस्मिन्प्रावर्ततात्र सः । भोगवर्मा वणिक्कर्तुं व्यवहारं निजोचितम् ॥ १९
द्भाण्डमादाय ददावन्यस्य तत्क्षणम् । विनैव स्वधनं मध्यादीनारानुदपादयत् ॥ १९
ान्स दीनारान्भृत्यहस्ते विसृष्टवान् । स्वभार्यायै विचित्रान्नपानसंपादनाय च ॥ १९
ुहृदेकस्तस्मिन्नच्छाभरणनामकः । उपागत्यैव रभसाद्भोगवर्माणमभ्यधात् ॥ १९
जनमस्माकमुत्तिष्ठागच्छ भुञ्ज्महे । सुहृदो मिलिता ह्यन्ये त्वत्प्रतीक्षाः स्थिता इति ॥ १९
ागमिष्यामि प्राघुणोऽयं स्थितो हि मे । इति ब्रुवाणं पुनरप्येनं स सुहृदब्रवीत् ॥ १९
ममायातु तर्हि प्राघुणकोऽप्ययम् । एषोऽपि न किमस्माकं मित्रमुत्तिष्ठ सत्वरम् ॥ १९
द्भोगवर्मा नीतो मित्रेण तेन सः । यशोवर्मयुतो गत्वा भुङ्क्ते स्माहारमुत्तमम् ॥ १९
पानमागत्य सायं स स्वगृहे पुनः । सयशोवर्मको भेजे विचित्रं पानभोजनम् ॥ १९
निशि पप्रच्छ निजं परिजनं च सः । किमद्य रात्रिपर्याप्तमस्ति नः सरकं न वा ॥ १९
स्तीति तेनोक्तः स भेजे शयनं वणिक् । पास्यामोऽपररात्रेऽद्य कथं जलमिति ब्रुवन् ॥ २०
थ तत्पार्श्वे सुप्तः स्वप्नेऽत्र दृष्टवान् । प्रविष्टान्पुरुषान्द्वित्रानन्यांस्तेषां च पृष्ठतः ॥ २०
रात्रार्थे सरकं भोगवर्मणः । चिन्तितं नाद्य युष्माभिः क्व भवद्भिः स्थितं शठाः ॥ २०
ात्प्रविष्टास्ते पुरुषा दण्डपाणयः । पूर्वप्रविष्टान्क्रोधात्तान्दण्डाघातैरताडयन् ॥ २०
ऽयमेको नः क्षम्यतामिति वादिनः । दण्डाहतास्ते पुरुषास्ते चान्ये निरगुस्ततः ॥ २०
थ तद्दृष्ट्वा प्रबुद्धः समचिन्तयत् । अचिन्त्योपनतिः श्लाघ्या भोगश्रीर्भोगवर्मणः ॥ २०
। समृद्धापि नार्थश्रीरर्थवर्मणः । इति चिन्तयतस्तस्य सातिचक्राम यामिनी ॥ २०
। यशोवर्मा तमामन्त्र्य वणिग्वरम् । जगाम विन्ध्यवासिन्याः पादमूलं पुनस्ततः ॥ २०
स्वप्नदृष्टायास्तस्याः पूर्वोक्तयोर्द्वयोः । श्रियोर्भोगश्रियं तत्र वव्रे सास्मै ददौ च ताम् ॥ २०
यशोवर्मा गृहं देवीप्रसादतः । अचिन्तितोपगामिन्या तस्थौ भोगश्रिया सुखम् ॥ २०
गसंपन्ना श्रीरप्यल्पतरा वरम् । न पुनर्भोगरहिता सुविस्तीर्णाप्यपार्थका ॥ २१

इत्युक्ता अपि ते तेन पञ्च ज्यातावदा नृपाः । ययुश्चमरवालं ते नृपं [illegible] ॥
सीमाप्राप्तांश्च तान्बुद्ध्वा निर्यास्यन्समराय सः । राजा चमरवालः प्राक्स्नात्वा हरमपूजयत् ॥
अष्टषष्ट्युत्तमस्थाननियतैर्नामभिः शुभैः । यथावत्तं च तुष्टाव पापघ्नैः सर्वकामदैः ॥
राजन्युध्यस्व निःशङ्कः शत्रूञ्जेष्यसि संगरे । इत्युद्गतां च गगनात्सोऽथ शुश्राव भारतीम् ॥
ततः प्रहृष्टः संनह्य तेषां निजबलान्वितः । राजा चमरवालोऽग्रे युद्धाय निरगाद्द्विषाम् ॥
त्रिंशद्गजसहस्राणि त्रीणि लक्षाणि वाजिनाम् । कोटिः पादभटानां च तस्यासीद्वैरिणां बले ॥
स्वबले च पदातीनां तस्य लक्षाणि विंशतिः । दश दन्तिसहस्राणि हयानां लक्षमप्यभूत् ॥
प्रवृत्ते तु महायुद्धे तयोरुभयसेनयोः । यथार्थनाम्नि वीराख्ये प्रतीहारेऽग्रयायिनि ॥
स्वयं चमरवालोऽसौ राजा तत्समराङ्गणम् । महावराहो भगवान्महार्णवमिवाविशत् ॥
ममर्द चाल्पसैन्योऽपि परसैन्यं महत्तथा । यथाश्वगजपत्तीनां हयानां राशयोऽभवन् ॥
धावित्वा चात्र समरबलं तं संमुखागतम् । आहत्य शक्त्या राजानं पाशेनाकृष्य बद्धवान् ॥
ततः समरशूरं च हृदि बाणाहतं नृपम् । द्वितीयं तद्वदाकृष्य पाशेनैव बबन्ध सः ॥
तृतीयं चात्र समरजितं नाम महीपतिम् । वीराख्यस्तत्प्रतीहारो बद्ध्वा तत्पार्श्वमानयत् ॥
सेनापतिर्देवबलस्तस्यानीय समर्पयत् । नृपं प्रतापचन्द्राख्यं चतुर्थं सायकाहतम् ॥
ततः प्रतापसेनाख्यस्तद्दृष्ट्वा पञ्चमो नृपः । क्रोधाच्चमरवालं तं भूपमभ्यपतद्रणे ॥
स तु निर्धूय तद्बाणान्स्वशरौघेण विद्धवान् । राजा चमरवालस्तं ललाटे त्रिभिराशुगैः ॥
कण्ठक्षिप्तेन पाशेन तं च काल इवाथ सः । आकृष्य स्ववशे चक्रे शराघातविघूर्णितम् ॥
एवं राजसु बद्धेषु तेषु पञ्चस्वपि क्रमात् । हतशेषाणि सैन्यानि दिशस्तेषां प्रदुद्रुवुः ॥
अमितं हेमरत्नादि बहून्यन्तःपुराणि च । राज्ञा चमरवालेन प्राप्तान्येषां महीभुजाम् ॥
तन्मध्ये च महादेवी यशोलेखेति विश्रुता । राज्ञः प्रतापसेनस्य प्राप्ता तेनाङ्गनोत्तमा ॥
ततः प्रविश्य नगरं वीरदेवबलौ च सः । क्षत्तृसेनापती पट्टं बद्ध्वा रत्नैरपूरयत् ॥
प्रतापसेनमहिषीं क्षत्रधर्मजितेति ताम् । यशोलेखां स नृपतिः स्वावरोधवधूं व्यधात् ॥
भुजार्जिताहमस्येति सेहे सा चपलापि तम् । काममोहप्रवृत्तानां शबला धर्मवासना ॥
दिनैश्चाभ्यर्थितो राज्ञ्या स यशोलेखया तया । राजा चमरबालस्तान्बद्धान्पञ्चापि भूपतीन् ।
प्रतापसेनप्रभृतीन्गृहीतविनयान्नतान् । मुमोच निजराज्येषु सत्कृत्य विससर्ज च ॥

ततः स तदकण्टकं विजितशत्रु राज्यं निजं
समृद्धमशिषच्चिरं चमरबालपृथ्वीपतिः ।
अरंस्त च वराप्सरोभ्यधिकरूपलावण्यया
द्विषज्जयपताकया सह तया यशोलेखया ॥

एवं बहूनपि रिपून्रभसप्रवृत्तान्द्वेषाकुलानगणितस्वपरस्वरूपान् ।
एकोऽप्यनन्यसमपौरुषभग्नसारदर्पज्वराञ्जयति संयुगमूर्ध्नि धीरः ॥

इति गोमुखेन कथितामर्थ्यां श्रुत्वा कथां कृतश्लाघः ।
अकरोदथ नरवाहनदत्तः स्नानादि दिनकार्यम् ॥

निनाय संगीतरसाच्च तां तथा निशां स गायन्स्वयमङ्गनासखः ।
सरस्वती तस्य नभःस्थिता यथा ददौ प्रियाभिश्चिरसंस्तवं वरम् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरेऽलंकारवतीलम्बके चतुर्थस्तरङ्गः ।

---

पञ्चमस्तरङ्गः ।

तास्तु तत्पृष्ठे दीनाराः प्रतिवत्सरम् । पञ्चाशद्ये ममानेन तानेष न ददाति मे ॥
ान चैतेन चरणेनाहमाहतः । तेनोपविष्टः प्रायेऽहं सिंहद्वारेऽस्य तावके ॥
ति चेन्नात्र देवो मे तत्करोम्यहम् । अग्निप्रवेशमधिकं किं वच्म्येष हि मे प्रभुः ॥
। विरते तस्मिन्मरुभूतिरभाषत । देया मयास्मै दीनाराः सांप्रतं तु न सन्ति मे ॥
न्तं सर्वेषु प्रहसत्सु स्वमन्त्रिणम् । नरवाहनदत्तस्तं मरुभूतिमभाषत ॥
ूर्खभावस्ते नाधिकेयं मतिस्तव । उत्तिष्ठ दीनारशतं देह्यस्मा अविलम्बितम् ॥
वचः श्रुत्वा मरुभूतिर्विलज्जितः । तदैवानीय तत्तस्मै स दीनारशतं ददौ ॥
गोमुखोऽवादीन्न वाच्यो मरुभूतिकः । विचित्रचित्रवृत्तिर्यत्सर्गो देव प्रजापतेः ॥
रेषा किं चात्र चिरदातुर्महीपतेः । तत्सेवकस्य च कथा प्रसङ्गाख्यस्य न श्रुता ॥
त्यभूत्पूर्वं राजा चिरपुरेश्वरः । सुजनस्यापि तस्यासीत्परिवारोऽतिदुर्जनः ॥
ागतस्तस्य प्रसङ्गो नाम भूपतेः । मित्राभ्यां सहितो द्वाभ्यां बभूव किल सेवकः ॥
कुर्वतस्तस्य व्यतीतं वर्षपञ्चकम् । न स राजा ददौ किंचिन्निमित्तेऽप्युत्सवादिके ॥
स्य न संप्राप विज्ञप्त्यवसरं प्रभोः । परिवारस्य दौरात्म्यात्सख्योः प्रेरयतोः सदा ॥
ास्य राज्ञश्च बालः पुत्रो व्यपद्यत । दुःखितं चैत्य सर्वेऽपि भृत्यास्तं पर्यवारयन् ॥
च प्रसङ्गाख्यः शोकादेव स सेवकः । सखिभ्यां वार्यमाणोऽपि राजानं तं व्यजिज्ञपत् ॥
वयं देव सेवका न च नस्त्वया । दत्तं किंचित्तथापीह स्थिताः स्मस्त्वत्सुताशया ॥
दि न दत्तं तत्त्वत्पुत्रोऽस्मासु दास्यति । सोऽपि दैवेन नीतश्चेत्तन्नः किमिह सांप्रतम् ॥
इति जल्पित्वा पतित्वा सोऽस्य पादयोः । राज्ञः प्रसङ्गो निरगात्सखिद्वययुतस्ततः ॥
ऽपि बद्धास्थाः सेवका मे दृढा इमे । तदेते मम न त्याज्या इति संचिन्त्य तत्क्षणम् ॥
तान्प्रसङ्गादीनानाय्यैव तथा धनैः । अपूरयद्यथा भूयो नैतान्दारिद्र्यमस्पृशत् ॥
वत्रा दृश्यन्ते स्वभावा देव देहिनाम् । यत्काले स नृपो नादादकाले तु ददौ तथा ॥
य कथाख्यानपटुर्भूयः स गोमुखः । वत्सेश्वरसुतादेशादिमामकथयत्कथाम् ॥
ातटे पूर्वं पूतपौरं तदम्बुभिः । सौराज्यरम्यं कनकपुराख्यं नगरोत्तमम् ॥
ः कविगिरां छेदः पत्रेष्वदृश्यत । भङ्गोऽलकेषु नारीणां सस्यसंग्रहणे खलः ॥
किनागेन्द्रतनयात्प्रियदर्शनात् । जातो यशोधराख्यायां राजपुत्र्यां महायशाः ॥
नकवर्षाख्यो नगरे नृपतिः पुरा । कृत्स्नभूभारवोढापि योऽशेषगुणभूषितः ॥
शसि न त्वर्थे भीतः पापान्न शत्रुतः । मूर्खः परापवादेषु न च शास्त्रेषु योऽभवत् ।
यस्य कोपेऽभून्न प्रसादे महात्मनः । चापे च बद्धमुष्टित्वं न दाने धीरचेतसः ॥
तरूपेण रक्षता चाखिलं जगत् । मारव्यथाकुलश्चक्रे दृष्टैवाबलाजनः ॥
चेच्छरत्काले सोष्मण्युन्मदवारणे । राजहंसपरीवारे सोत्सवानन्दितप्रजे ॥
यगुणे रन्तुं चित्रप्रासादमाविशत् । आकृष्टकमलामोदवहन्मारुतशीतलम् ॥
र्णयन्यावत्तच्चित्रं स प्रशंसति । तावत्प्रविश्य भूपं तं प्रतीहारो व्यजिज्ञपत् ॥
विदर्भेभ्योऽपूर्वश्चित्रकरः प्रभो । अनन्यसममात्मानं चित्रकर्मण्युदाहरन् ॥
भिधानेन सिंहद्वारेऽत्र तेन च । एतदेवाभिलिख्याद्य चीरिकोल्लम्बिता किल ॥
ादराद्रूपेनादिष्टानयनं स तम् । आनिनाय प्रतीहारो गत्वा चित्रकरं क्षणात् ॥
य ददर्शात्र चित्रालोकनलीलया । स्थितं कनकवर्षं तं नृपं चित्रकरो रहः ॥
[illegible]

...मम ॥
ादिश्यतां च चित्रे किमालिखामीह रूपकम् । भवत्वेतत्कलाशिक्षायत्नो मे सफलः प्रभो ॥
ते चित्रकरेणोक्ते स राजा निजगाद तम् । उपाध्याय यथाकामं किंचिदालिख्यतां त्वया ॥
ादयामो वयं चक्षुर्भ्रान्तिस्त्वत्कौशले तु क्वा । इत्युक्ते तेन राज्ञात्र तत्पार्श्वस्था बभाषिरे ॥
जैवालिख्यतामन्यैर्विरूपैः किं प्रयोजनम् । तच्छ्रुत्वा चित्रकृत्तुष्टः स तं राजानमालिखत् ॥
ङ्गेन नासावंशेन दीर्घरक्तेन चक्षुषा । विपुलेन ललाटेन कुन्तलैः कुञ्चितासितैः ॥
स्तीर्णेनोरसा रूढबाणादिव्रणशोभिना । भुजयुग्मेन दिग्दन्तिकराकारेण हारिणा ॥
ध्येन मुष्टिमेयेन केसरीन्द्रकिशोरकैः ॥ उपायनीकृतेनेव पराक्रमपराजितैः ॥
वनद्विरदालाननिभेनोरुयुगेण च । अशोकपल्लवनिभेनाङ्घ्रियुग्मेण चारुणा ॥
द्वैव स्वानुरूपेण रूपेणालिखितं नृपम् । साधुवादं ददुः सर्वे तस्य चित्रकृतस्तदा ॥
ादुस्तं च नेच्छामो द्रष्टुमेकाकिनं प्रभुम् । चित्रभित्तौ तदेतस्यामेतास्वालिखितास्विह ॥
ज्ञीषु मध्यादेकां त्वं सुविचार्यानुरूपिकाम् । लिखोपाध्याय पार्श्वेऽस्य पूर्णो नेत्रोत्सवोऽस्तु नः ॥
छ्रुत्वा स विलोक्यात्र चित्रं चित्रकरोऽब्रवीत् । भूयसीष्वपि नैतासु तुल्या राज्ञोऽस्ति काचन ॥
ने च पृथ्व्यामेवास्य तुल्यरूपास्ति नाङ्गना । अस्त्येका राजपुत्री तु शृणुताख्यामि तां च वः ॥
दर्भेष्वस्ति नगरं श्रीमत्कुण्डिनसंज्ञकम् । देवशक्तिरिति ख्यातस्तत्रास्ति च महीपतिः ॥
यानन्तवतीत्यस्ति राज्ञी प्राणाधिकप्रिया । तस्यां तस्य सुतोत्पन्ना नाम्ना मदनसुन्दरी ॥
या वर्णयितुं रूपमेकया जिह्वयानया । मादृशः कः प्रगल्भेत किं त्वेतावद्वदाम्यहम् ॥
निर्माय विधिर्मन्ये संजातेच्छोऽपि तद्रसात् । निर्मातुमन्यां तद्रूपां युगैरपि न वेत्स्यति ॥
ास्य राज्ञः सदृशी पृथिव्यां राजकन्यका । रूपलावण्यविनयैर्वयसा च कुलेन च ॥
तया हि तत्रस्थः कदाचित्प्रेष्य चेटिकाम् । आहूतोऽन्तःपुरं तस्या राजपुत्र्या गतोऽभवम् ॥
ापश्यमहं तां च चन्दनार्द्रविलेपनाम् । मृणालहारां बिसिनीपत्रशय्याविवर्तिनीम् ॥
लीपत्रपवनैर्वीज्यमानां सखीजनैः । पाण्डुक्षामामभिव्यक्तस्मरसंज्वरलक्षणाम् ॥
ख्यश्चन्दनालेपकदलीदलमारुतैः । कृतमेभिः किमेतेन विफलेन श्रमेण वः ॥
हि मन्दपुण्यां मां दहन्ति शिशिरा अपि । एवं निवारयन्तीं च सखीराश्वासनाकुलाः ॥
ोक्य तदवस्थां तां तद्वितर्कसमाकुलः । कृतप्रणामस्तस्याश्च पुरतोऽहमुपाविशम् ॥
ध्यायेदृगालिख्य चित्रे मे देहि रूपकम् । इत्युक्त्वा वेपमानेन पाणिना धृतवर्तिना ॥
रालिख्य सा भूमौ दर्शयन्ती नृपात्मजा । अलेखयन्मया कंचिद्युवानं रूपवत्तरम् ॥
लेख्य सुन्दरं तं च देव चिन्तितवानहम् । काम एवानया साक्षादयमालेखितो मया ॥
तु पुष्पमयश्चापो हस्ते यन्नास्य लेखितः । तेन जाने न कामोऽयं तद्रूपः कोऽप्यसौ युवा ॥
च नूनमनया दृष्टः क्वापि श्रुतोऽपि वा । एतन्निबन्धनं चेदमस्याः स्मरविजृम्भितम् ॥
तो मेऽपयातव्यमुग्रदण्डो ह्ययं नृपः । एतत्पिता देवशक्तिर्वुद्ध्वेदं न क्षमेत मे ॥
लोच्यैव नत्वा तामहं मदनसुन्दरीम् । राजकन्यां निरगमं तया संमानितस्ततः ॥
चात्र महाराज मया परिजनान्मिथः । स्वैरं कथयतो यत्सा सानुरागा श्रुते त्वयि ॥
श्चित्रपटे गुप्तं लिङ्गितां तां नृपात्मजाम् । आदायाहं भवत्पादमूलं त्वरितमागतः ॥
च देवस्याकारं निवृत्तः संशयो मम । देव एव तया चित्रे मद्धस्तेनाभिलेखितः ॥
चासकृन्न सदृशी शक्या लिखितुमित्यहम् । चित्रे देवस्य पार्श्वे तां न लिखामि समामपि ॥
क्तवन्तं तं रोलदेवं राजा जगाद सः । तर्हि त्वया सा तच्चित्रपटस्था दृश्यतामिति ॥

…न्म … तम् । … चित्रपटो विवशाभ्यन्तरं नृपः ॥
लावण्यदर्शनात्तृप्तलोचनः । त्यक्तसर्वक्रियस्तस्थौ तदेकमयमानसः ॥
र्यहारी तं निर्भिन्नलब्धान्तरः शरैः । रूपस्पर्धासमुद्भूतमात्सर्य इव मन्मथः ॥
रूपलुब्धानां स्मरार्तिस्तेन योषिताम् । फलितेव च सैवास्य शतशाखं महीक्षितः ॥
श्च विरहक्षामपाण्डुः शशंस सः । आप्तेभ्यः सचिवेभ्यस्तत्पृच्छद्भ्यः स्वं मनोगतम् ॥
। च तैः साकं कन्यां मदनसुन्दरीम् । याचितुं प्राहिणोद्दूतं स राज्ञे देवशक्तये ॥
मिनामानं कालज्ञं कार्यवेदिनम् । विप्रमाप्तं कुलीनं च मधुरोदात्तभाषिणम् ॥
सुमहार्हेण विप्रः परिकरेण तान् । विदर्भान्संगमस्वामी प्राविशत्कुण्डिनं पुरम् ॥
राजानं देवशक्तिं ददर्श तम् । स स्वामिनोऽर्थे तस्माच्च प्रार्थयामास तत्सुताम् ॥
न्मयान्यस्मै दुहितैषा स चोचितः । भूपः कनकवर्षोऽस्माद्दशोऽप्येतां च याचते ॥
ददाम्येनामिति संमन्त्र्य सोऽपि च । श्रद्दधे देवशक्तिस्तत्संगमस्वामिनो वचः ॥
स तस्मै च तस्या रूपमिवाद्भुतम् । नृत्तं मदनसुन्दर्याः सुतायाः स महीपतिः ॥
नप्रीतं संगमस्वामिनं स तम् । प्रतिपन्नसुतादानः संमान्य प्राहिणोन्नृपः ॥
लभ्रमुद्वाहहेतोरागम्यतामिह । संदिश्येति समं तेन प्रतिदूतं ससर्ज च ॥
ंगमस्वामी प्रतिदूतयुतोऽथ सः । राज्ञे कनकवर्षाय सिद्धं कार्यं न्यवेदयत् ॥
विनिश्चित्य प्रतिदूतं प्रपूज्य तम् । असक्तत्तां च विज्ञाय रक्तां मदनसुन्दरीम् ॥
य दुर्वारवीर्यो निःशङ्कमानसः । राजा कनकवर्षोऽसौ प्रायात्तत्कुण्डिनं पुरम् ॥
यारूढः प्रत्यन्तारण्यवासिनः । प्राणिप्राणहरान्निघ्नन्सिंहादीञ्शबरानिव ॥
ाप्य नगरं कुण्डिनं तद्विवेश सः । निर्गतेनाग्रतो राज्ञा सहितो देवशक्तिना ॥
रंध्रीणां विलब्धनयनोत्सवः । सज्जितोद्वाहसंभारं प्राविशद्राजमन्दिरम् ॥ १०
ते स्म तत्रैतत्स दिनं सपरिच्छदः । देवशक्तिनृपोदारकृताचारानुरञ्जितः ॥ १०
शक्तिस्तां तस्मै मदनसुन्दरीम् । सुतां राज्यैकशेषेण सर्वस्वेन समं ददौ ॥ १०
तत्र सप्ताहं स राजा नगरं निजम् । आगात्कनकवर्षोऽथ नववध्वा समं तया ॥ १०
ायुते तस्मिञ्जगदानन्ददायिनि । सकौमुदीके शशिनीवासीत्तत्सोत्सवं पुरम् ॥ १०
ाधिका तस्य राज्ञो मदनसुन्दरी । आसीद्बह्ववरोधस्याप्यच्युतस्येव रुक्मिणी ॥ १०
दनासक्तलोचनैः स्मरसायकैः । कीलिताविव तौ चास्तां दंपती चारुपक्ष्मभिः ॥ १०
जगामात्र विकसत्केसरावलिः । दलयन्मानिनीमानमातङ्गं मधुकेसरी ॥ १०
लामौर्विकाः पुष्पेषोः कुसुमाकरः । सज्जीचकार चोत्फुल्लचूतवल्लीधनुर्लताः ॥ १०
वनानीव चेतांस्यध्वगयोषिताम् । समुद्दीपितकामानि कम्पयन्मलयानिलः ॥ १०
ां पुष्पाणि तरूणां शशिनः कलाः । क्षीणानि पुनरायान्ति यौवनानि न देहिनाम् ॥ ११
ानकलहा रमध्वं दयितान्विताः । इतीव मधुरालापाः कोकिला जगदुर्जनान् ॥ ११
मधूद्यानं विहर्तुं प्रविवेश सः । राजा कनकवर्षोऽत्र सर्वैरन्तःपुरैः सह ॥ ११
प्रमशोकानां रक्तैः परिजनाम्बरैः । गीतैर्वराङ्गनानां च कोकिलभ्रमरध्वनिम् ॥ ११
नसुन्दर्या समं तत्र स भूपतिः । चिक्रीड सावरोधोऽपि कुसुमावचयादिभिः ॥ ११
त्र सुचिरं स्नातुं गोदावरीं नृपः । अवतीर्य जलक्रीडां सान्तःपुरजनो व्यधात् ॥ ११
ानि नयनैरुत्पलानि पयोधरैः । रथाङ्गनाम्नां युग्मानि नितम्बैः पुलिनस्थलीः ॥ ११

प्रवृद्धा सा कुपापास्य सख्या मदनसुन्दरी । कियत्क्षोभ्या नदीत्येव सोद्वेगेव जगाद च ॥
उत्तीर्य चाम्भसः प्रायादात्तवस्त्रान्तरा रुषा । प्रियापराधं शंसन्ती तं सखीभ्यः स्वमन्दिरम् ॥
ततो ज्ञाताशयस्तस्या जलक्रीडां विमुच्य सः । राजा कनकवर्षोऽपि तद्वासगृहमाययौ ॥
वार्यमाणो रुषा तत्र पञ्जरस्थैः शुकैरपि । प्रविश्य स ददर्शान्तर्देवीं तां मन्युपीडिताम् ॥
वामहस्ततलन्यस्तविषण्णवदनाम्बुजाम् । स्वच्छमुक्ताफलनिभैः पतद्भिर्बाष्पबिन्दुभिः ॥

'जइ विरहो ण सहिज्जइ माणो [ सुहा वि ] परिवज्जणीओ ते ।
विरहो हिअअ सहिज्जइ माणो [ एव्व ] परिवड्ढणीओ ते ॥
इअ जाणिऊण णिउणं चिट्ठसु ओलम्बिऊण इक्कदरम् ।
उहअतडदिण्णपाओ मज्झणिवडिओ धुवं विणिस्सिहसि ॥'

इतीमं द्विपदीखण्डं पठन्तीं साश्रुगद्गदम् । निर्यद्दन्तांशुहारिण्या गिरापभ्रंशमुग्धया ॥
विलोक्य च तथाभूतां तां कोपेऽपि मनोरमाम् । उपाययौ सलज्जश्च सभयश्च स भूपतिः ॥
पराङ्मुखीमथाश्लिष्य वचोभिः प्रीतिपेशलैः । प्रवृत्तोऽभूत्सविनयैस्तां प्रसादयितुं च सः ॥
वक्रोक्तिसूचितावद्ये परिवारे पपात च । तस्याश्चरणयोर्निन्दन्नात्मानमपराधिनम् ॥
ततस्तन्मन्युनेवाश्रुवारिणा गलितेन सा । सिञ्चन्ती कण्ठलग्नास्य प्रससाद महीपतेः ॥
अथैष हृष्टो नीत्वा तद्दिनं कुपिततुष्टया । राजा तया सहासेव्य रतं निद्रामगान्निशि ॥
सुप्तो ददर्श चाकस्मात्स्वप्ने विकृतया स्त्रिया । हृतामेकावलीं कण्ठाच्चूडारत्नं च मूर्धतः ॥
ततोऽप्यपश्यद्वेतालं नानाप्राण्यङ्गविग्रहम् । बाहुयुद्धे प्रवृत्तं च तं स भूमावपातयत् ॥
पृष्ठोपविष्टश्चोड्डीय पक्षिणेव विहायसा । नीत्वा तेन नृपोऽम्भोधौ वेतालेन स चिक्षिपे ॥
ततः कथंचिदुत्तीर्णः परमेकावलीं गले । चूडामणिं च तं मूर्ध्नि पूर्ववत्स्थितमैक्षत ॥
एतद्दृष्ट्वा प्रबुद्धः स प्रातः परिचयागतम् । अस्य क्षपणकं राजा फलं स्वप्नस्य पृष्टवान् ॥
................................ । न वाच्यमप्रियं किं तु कथं पृष्टो न वच्मि ये ॥
या त्वयैकावली दृष्टा हृता चूडामणिस्तथा । सैष देव्या वियोगस्ते पुत्रेण च भविष्यति ॥
प्राप्ते चैकावलीरत्ने यदुत्तीर्णाब्धिना त्वया । दुःखान्ते सोऽपि भावी ते देवीपुत्रसमागमः ॥
इति क्षपणकेनोक्ते विमृश्य स नृपोऽब्रवीत् । पुत्रो मेऽद्यापि नास्त्येव स तावज्जायतामिति ॥
अथोपयातादश्रौषीत्स रामायणपाठकात् । पुत्रार्थं विहितक्लेशं राजा दशरथं नृपम् ॥
तेनोद्भूतसुतप्राप्तिचिन्तः क्षपणके गते । राजा कनकवर्षस्तन्निनाय विमना दिनम् ॥
रात्रावकस्माच्चैकाकी विनिद्रः शयनस्थितः । द्वारेऽनुद्धाटितेऽप्यन्तः प्रविष्टां स्त्रियमैक्षत ॥
विनीता सौम्यरूपा च सा तं साश्चर्यमुत्थितम् । कृतप्रणामं दत्ताशीः क्षितीश्वरमभाषत ॥
पुत्र मां विद्धि तनयां नागराजस्य वासुकेः । त्वत्पितुर्भगिनीं ज्येष्ठां नाम्ना रत्नप्रभामिमाम् ॥
रक्षार्थं तेऽन्तिके शश्वददृष्टा च वसाम्यहम् । अद्य दृष्ट्वा सचिन्तं त्वामात्मा ते दर्शितो मया ।
न द्रष्टुमुत्सहे ग्लानिं तव तद्ब्रूहि कारणम् । इत्युक्तः स तया राजा पितृष्वस्रा जगाद ताम् ॥
धन्योऽहमम्ब यस्यैवं त्वं प्रसादं करोषि मे । अनिर्वृत्तिं च मे विद्धि पुत्रासंभवहेतुकाम् ॥
अपि राजर्षयो यत्र पुरा दशरथादयः । स्वर्गार्थमैच्छंस्तत्राम्ब कथं नेच्छन्तु मादृशाः ॥
एतत्कनकवर्षस्य नृपतेस्तस्य सा वचः । श्रुत्वा रत्नप्रभा नागी भ्रातुःपुत्रमुवाच तम् ॥
तर्हि पुत्र वदाम्येकं यमुपायं कुरुष्व तम् । गत्वा स्वामिकुमारं त्वमेतदर्थं प्रसादय ॥
कुमारधारां विघ्नाय पतन्तीं मूर्ध्नि दुःसहाम् । शरीरान्तःप्रविष्टायाः प्रभावान्मे सहिष्यसे ॥

---

१ यदि विरहो न सह्यते मानः [ सुखादपि ] परिवर्जनीयस्ते ।

... राजा दृष्टाविध्नपरक्षयाम् ॥ १५४
न्यस्य राज्यं पुत्राभिकाङ्क्षया । ययौ स्वामिकुमारस्य पादमूलं स भूपतिः ॥ १५५
ग्रके तमाराधयितुं प्रभुम् । तयार्पितबलो नाग्या शरीरान्तःप्रविष्टया ॥ १५६
। राज्ञः पतितुं तस्य मूर्धनि । कुमारवारिधारा सा प्रवृत्ताभूदनारतम् ॥ १५७
ोरान्तर्गतनागीबलेन ताम् । ततस्तस्याधिविघ्नार्थं हेरम्बं प्रैरयद्गुहः ॥ १५८
ात्र धारामध्ये महाविषम् । तस्याजगरमत्युग्रं न स तेनाप्यकम्पत ॥ १५९
साक्षाद्दन्ताघातानुरःस्थले । एत्य दातुं प्रववृते तस्याजय्यः सुरैरपि ॥ १६०
देवं सोऽथ स्तुतिभिरर्चितुम् । राजा कनकवर्षस्तद्विघ्नेशैवोपचक्रमे ॥ १६१
सिद्धिनिधिकुम्भोपमात्मने । लम्बोदराय विघ्नेश व्यालालंकरणाय ते ॥ १६२
घातविधुतासनपङ्कजम् । ब्रह्माणमपि सोत्कम्पं कुर्वञ्जय गजानन ॥ १६३
णामपि सन्ति न सिद्धयः । अतुष्टे त्वयि लोकैकशरण्ये शंकरप्रिय ॥ १६४
र्णो गणाध्यक्षो मदोत्कटः । पाशहस्तोऽम्बरीषश्च जम्बकस्त्रिशिखायुधः ॥ १६५
न्ते स्म पापघ्नैरष्टषष्टिभिः । तत्संख्यस्थाननियतैर्नामभिस्त्वां सुरोत्तमाः ॥ १६६
य त्वां विनश्यति भयं प्रभो । रणराजकुलद्यूतचौराग्निश्वापदादिजम् ॥ १६७
तैरन्यैर्बहुविधैश्च सः । नृपः कनकवर्षस्तं विघ्नेश्वरमपूजयत् ॥ १६८
रिष्यामि विघ्नं ते पुत्रमाप्नुहि । इत्युक्त्वान्तर्दधे तत्र राज्ञस्तस्य स विघ्नजित् ॥ १६९
ारस्तं तद्धाराधारिणं नृपम् । उवाच धीर तुष्टोऽस्मि तव याचस्व तद्वरम् ॥ १७०
ृष्टस्तं देवं राजा व्यजिज्ञपत् । त्वत्प्रसादेन मे नाथ सूनुरुत्पद्यतामिति ॥ १७१
भावी भवतो मद्गणांशजः । नाम्ना हिरण्यवर्षश्च भविष्यति स भूपते ॥ १७२
ाहान्तःप्रवेशाय तमाह्वयत् । सविशेषप्रसादेप्सुर्नृपतिं बर्हिवाहनः ॥ १७३
रगान्नागी देहान्नृपस्य सा । विशन्ति शापभीता हि न कुमारगृहं स्त्रियः ॥ १७४
ऽसौ स्वेन मानुषतेजसा । विवेश गर्भभवनं तस्य देवस्य पावकेः ॥ १७५
ष्ठानात्पूर्वतेजोविनाकृतम् । दृष्ट्वा नृपं किमेतत्स्यादिति देवोऽप्यचिन्तयत् ॥ १७६
ऽव्याजनिर्व्यूढविषमव्रतम् । प्रणिधानाच्च तं क्रुद्धः शशाप स नृपं गुहः ॥ १७७
तो यस्मादतो जातेन सूनुना । महादेव्या च दुर्दान्त वियोगस्ते भविष्यति ॥ १७८
ुत्वा शापमेतं स भूपतिः । सूक्तैस्तुष्टाव तं देवं मोहं मुक्त्वा महाकविः ॥ १७९
ोऽथ षण्मुखस्तमभाषत । राजंस्तुष्टोऽस्मि सूक्तैस्ते शापान्तं तव वच्मि तत् ॥ १८०
ः ते पत्नीपुत्रवियुक्तता । मुक्तोऽपमृत्युत्रितयात्तौ च प्राप्स्यस्यतः परम् ॥ १८१
ालापे षण्मुखे स प्रणम्य तम् । तत्प्रसादसुधातृप्तो राजा स्वपुरमाययौ ॥ १८२
न्दो ज्योत्स्नायामिव शीतगोः । देव्यां मदनसुन्दर्यां क्रमात्सूनुरजायत ॥ १८३
ोऽथ राजा राज्ञी च सा मुहुः । अत्यानन्दसमायुक्ते नावर्तेतां तदात्मनि ॥ १८४
चक्रे वसु वर्षन्स भूपतिः । निजां कनकवर्षाख्यां नयन्भुवि यथार्थताम् ॥ १८५
ष्ठ्यां रजनौ जातवेश्मनि । कृते रक्षाविधौ तत्र मेघोऽशङ्कितमागतः ॥ १८६
न तत्रावव्रे नभः क्रमात् । शत्रुणोपेक्षितेनेव राज्यं राज्ञः प्रमादिनः ॥ १८७
ारा वर्षस्योन्मूलितद्रुमः । ततो धावितुमारेभे वातमत्तमतङ्गजः ॥ १८८
ापि द्वारमुद्घाट्य भीषणा । स्त्री कापि क्षुरिकाहस्ता जातवेश्म विवेश तत् ॥ १८९
र्याः स्तनासक्तमुखं सुतम् । हृत्वा देव्याः प्रदुद्राव संमोह्यैव परिच्छदम् ॥ १९०

[illegible] । जातवेश्मनि चाक्रन्दः परिवारस्य शुश्रुवे ॥
राजा कनकवर्षोऽथ तच्छ्रुत्वा जातवासकम् । एत्य पुत्रप्रियाशून्यं दृष्ट्वा मोहं जगाम सः ॥
समाश्वस्य च हा देवि हा पुत्रक शिशो इति । विलपन्नथ सस्मार शापं तं वत्सरावधिम् ॥
भगवञ्छापसंपृक्तो मन्दपुण्यस्य मे वरः । कथं स्कन्द त्वया दत्तः सविषामृतसंनिभः ॥
हा हा युगसहस्राभं कथं नेष्यामि वत्सरम् । देव्या मदनसुन्दर्या जीविताधिकया विना ॥
इत्याक्रन्दंश्च स ज्ञातवृत्तान्तैर्मन्त्रिभिर्नृपः । बोध्यमानोऽपि न प्राप देव्या सह गतां धृतिम् ॥
क्रमाच्च मदनावेगविवशो निर्गतः पुरात् । विवेश विन्ध्यकान्तारमुन्मनीभूय स भ्रमन् ॥
तत्र बालमृगीनेत्रैः प्रियाया लोचनश्रियम् । कबरीभारसौन्दर्यं चमरीवालसंचयैः ॥
दृष्टैः करिकरेणूनां गतैर्मन्थरतां गतेः । स्मरतस्तस्य जज्वाल सुतरां मदनानलः ॥
भ्राम्यंस्तृष्णातपक्लान्तो विन्ध्यपादमवाप्य सः । पीतनिर्झरपानीयस्तरुमूल उपाविशत् ॥
तावद्गुहामुखाद्विन्ध्यस्याट्टहास इवोन्नदन् । सिंहः सटालो निर्गत्य हन्तुमभ्युत्पपात तम् ॥
तत्क्षणं गगनायातः कोऽपि विद्याधरो जवात् । निपत्यासिप्रहारेण सिंहं तमकरोद्द्विधा ॥
समीपमेत्य चापृच्छद्राजानं तं स खेचरः । राजन्कनकवर्षैवं प्राप्तोऽस्येतां कथं भुवम् ॥
तच्छ्रुत्वा संस्मृतिं लब्धा स राजा प्रत्युवाच तम् । विरहानलविक्षिप्तं कुतस्त्वं वेत्सि मामिति ।
ततो विद्याधरोऽवादीदहं प्रव्राजको भवन् । मानुषो बन्धुमित्राख्यस्त्वत्पुरे न्यवसं पुरा ॥
सेवया प्रार्थितेनात्र त्वया साहायके कृते । विद्याधरत्वं प्राप्तोऽस्मि वीर वेतालसाधनात् ॥
तेन त्वां प्रत्यभिज्ञाय कर्तुं ते प्रत्युपक्रियाम् । त्वज्जिघांसुरयं दृष्ट्वा सिंहो व्यापादितो मया ॥
नाम्ना बन्धुप्रभश्चाद्य संवृत्तोऽस्मीति वादिनम् । राजा कनकवर्षस्तं जातप्रीतिरभाषत ॥
हन्त स्मरामि सा चेह मैत्री निर्वाहिता त्वया । तद्ब्रूहि मे कदा भावी भार्यापुत्रसमागमः ॥
इति तस्य वचः श्रुत्वा बुद्ध्वा विद्याप्रभावतः । विद्याधरोऽब्रवीद्बन्धुप्रभस्तं स महीभृतम् ॥
दृष्टया विन्ध्यवासिन्या पत्नीपुत्रौ त्वमाप्स्यसि । तत्तत्र गच्छ सिद्ध्यै त्वं स्वलोकं च व्रजाम्यह
इत्युक्त्वा खं गते तस्मिन्राजा लब्धधृतिः शनैः । प्रायात्कनकवर्षोऽसौ द्रष्टुं तां विन्ध्यवासिनी
गच्छन्तमभ्यधावत्तं नृपं वन्यो महान्पथि । आधूतमस्तको मत्तः प्रसारितकरः करी ॥
तं दृष्ट्वा श्वभ्रमार्गेण स राजापासरत्तथा । यथानुधावन्स गजो विपेदे श्वभ्रपाततः ॥
ततः सोऽध्वश्रमायासक्लान्तो राजा व्रजन्क्रमात् । उद्दण्डपुण्डरीकाढ्यं प्रापदेकं महत्सरः ॥
तत्र स्नात्वा च पीत्वा च जलं जग्धमृणालकः । विश्रान्तः पादपतले क्षणं जह्रे स निद्रया ॥
तावच्च तेन मृगयानिवृत्ताः शबराः पथा । आगता ददृशुः सुप्तं तं राजानं सुलक्षणम् ॥
ते च देव्युपहारार्थं बद्ध्वा निन्युस्तदैव तम् । स्वस्य मुक्ताफलाख्यस्य पार्श्वं शबरभूभृतः ॥
सोऽप्येनं शबराधीशः प्रशस्तं वीक्ष्य नीतवान् । केतनं विन्ध्यवासिन्याः पशूकर्तुं नराधिपम् ॥
दृष्ट्वैव च स देवीं तां प्रणमंस्तदनुग्रहात् । राजा स्कन्दप्रसादाच्च बभूव स्रस्तबन्धनः ॥
तदालोक्याद्भुतं मत्वा तस्य तं देव्यनुग्रहम् । मुमोच तं स राजानं शबराधिपतिर्वधात् ॥
एवं कनकवर्षस्य तृतीयादपमृत्युतः । अतिक्रान्तस्य तस्याभूत्पूर्णं तच्छापवत्सरम् ॥
तावच्च तस्य सा नागी राज्ञो मदनसुन्दरीम् । देवीं सपुत्रामादाय तत्रैवागात्पितृष्वसा ॥
जगाद तं च भो राजञ्ज्ञातकौमारशापया । एतौ ते रक्षितौ युक्त्या नीत्वा स्वभवनं मया ॥
तस्मात्कनकवर्ष त्वौ गृहाणैतौ प्रियासुतौ । भुङ्क्ष्वेदं पृथिवीराज्यं क्षीणशापोऽधुना ह्यसि ॥
इत्युक्त्वा प्रणतं सा तं नृपं नागी तिरोदधे । नृपोऽपि स्वप्नमिव तन्मेने भार्यासुतागमम् ॥
ततोऽस्य राज्ञो राज्याश्च चिरादाश्लिष्टयोर्मिथः । अगलद्विरहक्लेशो हर्षबाष्पाम्बुभिः सह ॥

।न ।स्वता राजा दूतरानाययन्नृपम् । श्वशुरं देवशक्तिं त स्वसैन्यं च निजात्पुरात् ॥ २३
स्थितकरेणुकां मदनसुन्दरीं तां प्रियां सुतं च शरजन्मनोदितहिरण्यवर्षाभिधम् ।
य पुरतस्ततः श्वशुरवेश्मवासादितश्चचाल स तदन्वितः कनकवर्षपृथ्वीपतिः ॥ २३
। च स वासरैः कतिपयैर्गृहं श्वाशुरं विदर्भविषयाश्रितं तदथ कुण्डिनाख्यं पुरम् ।
द्वमति तत्र च श्वशुरसत्कृतः कानिचिद्दिनान्यभजत स्थितिं तनयदारसेनायुतः ॥ २३

प्रस्थाय ततश्च शनैः कनकपुरं प्राप्तवान्निजं नगरम् ।
पौरवधूजननयनैश्चिरोत्सुकैः पीयमान इव ॥ २३
अविशच्च राजधानीं सुतसहितो मदनसुन्दरीयुक्तः ।
उत्सव इव विग्रहवान्प्रमोदशोभान्वितः स नृपः ॥ २३
अभिषिच्य बद्धपट्टां तत्र च तां मदनसुन्दरीमकरोत् ।
सर्वान्तःपुरमुख्यामभ्युदये मानितप्रकृतिः ॥ २३

देव्या तया सह सुतेन च तेन बद्धनित्योत्सवः पुनरदृष्टवियोगदुःखः ।
निष्कण्टकं कनकवर्षनरेश्वरोऽथ भूमण्डलं सचतुरन्तमिदं शशास ॥ २३

इति गोमुखतः स्वमन्त्रिमुख्याद्रुचिरां तत्र कथामिमां निशम्य ।
नरवाहनदत्तराजपुत्रः सदलंकारवतीयुतस्तुतोष ॥ २३

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरेऽलंकारवतीलम्बके पञ्चमस्तरङ्गः ।

---

षष्ठस्तरङ्गः ।

ोमुखाख्यातकथातुष्टः प्रियासखः । दृष्ट्वा सकोपविकृतिं मरुभूतिं तदीर्ष्यया ॥ १
दत्तस्तं निजगादानुरञ्जयन् । मरुभूते त्वमप्येकां किं नाख्यासि कथामिति ॥ २
ाढमाख्यामीत्युक्त्वा तुष्टेन चेतसा । समाख्यातुं कथामेतां मरुभूतिः प्रचक्रमे ॥ ३
ोत्यभूत्पूर्वं राज्ञः कमलवर्मणः । नगरे देव कमलपुराख्ये ब्राह्मणोत्तमः ॥ ४
ीसरस्वत्योस्तृतीया विनयोज्वला । भार्या देवमतिर्नाम समाना सुमतेरभूत् ॥ ५
। च विप्रस्य पत्न्यां जज्ञे सुलक्षणः । पुत्रः स यस्य जातस्य वागेवमुदगाद्दिवः ॥ ६
न्महीपालो नाम्ना कार्यः सुतस्त्वया । राजा भूत्वा चिरं यस्मात्पालयिष्यत्ययं महीम् ॥ ७
वचः श्रुत्वा स महीपालमेव तम् । चन्द्रस्वामी सुतं नाम्ना चकार रचितोत्सवः ॥ ८
महीपालो विवृद्धो ग्राहितोऽभवत् । शस्त्रास्त्रवेदं विद्यासु समं सर्वासु शिक्षितः ॥ ९
ुवे तस्य सा चन्द्रस्वामिनः पुनः । भार्या देवमतिः कन्यां सर्वावयवसुन्दरीम् ॥ १०
द्रवती नाम महीपालः स च क्रमात् । भ्रातरौ ववृधाते तौ स्वपितुस्तस्य वेश्मनि ॥ ११
कृतस्तत्र देशे दुर्भिक्षविप्लवः । उदपद्यत दग्धेषु सस्येषु रविरश्मिभिः ॥ १२
। राजात्र प्रारेभे तस्करायितुम् । अधर्मेण प्रजाभ्योऽर्थमाकर्षन्मुक्तसत्पथः ॥ १३
दत्यर्थं देशे तस्मिन्नुवाच सा । भार्या देवमतिर्विप्रं चन्द्रस्वामिनमत्र तम् ॥ १४
ात्पितृगृहं व्रजामो नगरादितः । एते ह्यपत्ये नश्येतामावयोरिह जातुचित् ॥ १५
ां स वक्ति स्म चन्द्रस्वामी स्वगेहिनीम् । मैवं पापं महद्देहाद्दुर्भिक्षे हि पलायनम् ॥ १६
कावेतौ नीत्वा त्वत्पितृवेश्मनि । स्थापयामि त्वमास्वेह शीघ्रं चैष्याम्यहं पुनः ॥ १७
स्थापयित्वा तां तथेत्युक्तवतीं गृहे । भार्यां स चन्द्रस्वामी तौ गृहीत्वा तारकौ निजौ ॥ १८

तस्यां तृषाभिभूतौ तौ स्थापयित्वा स दारकौ । चन्द्रस्वामी ययौ दूरमन्वेष्टुं वारि तत्कृते ॥
तत्र तस्याययावग्रे सानुगः शबराधिपः । अकस्मात्सिंहदंष्ट्राख्यः कार्याय प्रस्थितः क्वचित् ॥
स तं दृष्ट्वात्र पृष्ट्वा च बुद्ध्वा भिल्लो जलार्थिनम् । संज्ञां कृत्वाब्रवीद्भृत्यान्नीत्वाम्भः प्राप्यतामयम्
तच्छ्रुत्वा तस्य भृत्यास्ते द्वित्रा लब्धाशया ऋजुम् । ते चन्द्रस्वामिनं पल्लीं नीत्वा बद्धमकुर्वत ॥
नरोपहारायात्मानं तेभ्यो बुद्ध्वा स संयतम् । चन्द्रस्वामी शुशोच स्वौ दारकावटवीगतौ ॥
हा महीपाल हा वत्से चन्द्रवत्यपदे कथम् । मयारण्ये युवां त्यक्त्वा सिंहव्याघ्रामिषीकृतौ ॥
आत्मा च घातितश्चौरैर्न चास्ति शरणं मम । इत्याक्रन्दन्स विप्रोऽर्कं व्योम्न्यपश्यदसंमदात् ॥
हन्त मोहं विहायैतं स्वं प्रभुं शरणं श्रये । इत्यालोच्य द्विजः सूर्यं स स्तोतुमुपचक्रमे ॥
तुभ्यं परापराकाशशायिने ज्योतिषे विभो । आभ्यन्तरं च बाह्यं च तमः प्रणुदते नमः ॥
त्वं विष्णुस्त्रिजगद्व्यापी त्वं शिवः श्रेयसां निधिः । सुप्तं विचेष्टयन्विश्वं परमस्त्वं प्रजापतिः ॥
अप्रकाशौ प्रकाशेतामेताविलयग्निचन्द्रयोः । न्यस्तात्मतेजा दययेवान्तर्धिं यासि यामिनीम् ॥
विद्रवन्त्यपि रक्षांसि प्रभवन्ति न दस्यवः । प्रमोदन्ते च गुणिनो भास्वन्नभ्युदिते त्वयि ॥
तद्रक्ष शरणापन्नं त्रैलोक्यैकप्रदीप माम् । इदं दुःखान्धकारं मे विदारय दयां कुरु ॥
इत्यादिभिस्तदा वाक्यैर्भक्तया स्तुतवतो रविम् । चन्द्रस्वामिद्विजस्यास्य गगनादुच्चचार वाक् ॥
तुष्टोऽस्मि चन्द्रस्वामिंस्ते न त्वं वधमवाप्स्यसि । मत्प्रसादाच्च पुत्रादिसंगमस्ते भविष्यति ॥
इत्युक्तो दिव्यया वाचा जातास्थस्तत्र तस्थिवान् । चन्द्रस्वामी स शबरोपाहृतस्नानभोजनः ॥
तावच्च तं महीपालं स्वस्रा युक्तमरण्यगम् । पितर्यनायत्याक्रन्दविधुरं शङ्किताशुभम् ॥
ददर्श तेन मार्गेण सार्थवाहः समागतः । महान्सार्थधरो नाम वृत्तान्तं पृच्छति स्म च ॥
स तमाश्वास्य कृपया शिशुं दृष्ट्वा सुलक्षणम् । सार्थवाहो निनाय स्वं देशं स्वसृसखं ततः ॥
तत्रासीत्स महीपालो बाल्येऽप्यग्निक्रियारतः । सदने तस्य वणिजः पुत्रस्नेहेन पश्यतः ॥
एकदा नृपतेर्मन्त्री तारापुरनिवासिनः । ताराधर्माभिधानस्य कार्यात्तेनागतः पथा ॥
विवेश सार्थवाहस्य तस्य मित्रं द्विजोत्तमः । गृहाननन्तस्वामीति सहस्त्यश्वपदातिकः ॥
स विश्रान्तोऽत्र तं दृष्ट्वा महीपालं शुभाकृतिम् । जपाग्निकार्यादिरतं वृत्तान्तं परिपृच्छ्य च ॥
अनपत्यो विदित्वा च सवर्णं सार्थवाहतः । तस्मादयाचेऽपत्यार्थी मन्त्री तद्भगिनीं च ताम् ॥
ततस्तौ तेन वैश्येन दत्तावादाय दारकौ । सार्थवाहेन सोऽनन्तस्वामी तारापुरं ययौ ॥
तत्र पुत्रीकृतस्तेन महीपालः स मन्त्रिणा । तस्थौ तद्भवनेऽप्यस्य विद्याविपुलसंपदि ॥
अत्रान्तरे च बद्धं तं चन्द्रस्वामिनमेत्य सः । भिल्लाधिपः सिंहदंष्ट्रः पल्ल्यां तस्यामभाषत ॥
ब्रह्मन्स्वप्नेऽहमादिष्टस्तथा देवेन भानुना । यथा संपूज्य मोक्तव्यो न हन्तव्यो मया भवान् ॥
तदुत्तिष्ठ व्रज स्वेच्छमित्युक्त्वा स मुमोच तम् । प्रत्तमुक्तामृगमदं कृप्तारण्यानुयात्रिकम् ॥
सोऽथ मुक्तस्ततश्चन्द्रस्वामी तमनुजायुतम् । अप्राप्यारण्यतः पुत्रं महीपालं गवेषयन् ॥
भ्रमन्नब्धेस्तटे प्राप्य नाम्ना जलपुरं पुरम् । प्रविवेशातिथिर्भूत्वा गृहं विप्रस्य कस्यचित् ॥
तत्र भुक्तोत्तराख्यातस्ववृत्तान्तं प्रसङ्गतः । तं स विप्रो गृहपतिश्चन्द्रस्वामिनमभ्यधात् ॥
वणिक्कनकवर्माख्योऽतीतेष्वागाद्दिनेष्विह । तेनाटव्यां स्वसृसखः प्राप्तो ब्राह्मणदारकः ॥
तौ चादायातिभव्यौ द्वौ दारकौ स इतो गतः । नारिकेलमहाद्वीपे नोक्तं तन्नाम तेन तु ॥
तच्छ्रुत्वा मामकावेव नूनं ताविति चिन्तयन् । चन्द्रस्वामी मतिं चक्रे गन्तुं द्वीपवरं स तम् ॥
नीत्वा च रात्रिमन्विष्य वणिजा विष्णुवर्मणा । स व्यधात्संगतिं द्वीपं नारिकेलं प्रयास्यता ॥

स ततः विप्रो वणिजो दानवर्मणा । पोतेन गच्छता साकं कटाहद्वीपमभ्यगात् ॥ ६०
स द्विजोऽश्रौषीद्गतं तं वणिजं ततः । द्वीपात्कनकवर्माणं द्वीपं कर्पूरसंज्ञकम् ॥ ६१
ग कर्पूरसुवर्णद्वीपसिंहलान् । वणिग्भिः सह गत्वापि तं प्राप वणिजं न सः ॥ ६२
ास्तु शुश्राव गतं तं वणिजं निजम् । देशं कनकवर्माणं चित्रकूटाभिधं पुरम् ॥ ६३
ीश्वराख्येन वणिजा स समं ययौ । चन्द्रस्वामी चित्रकूटं तत्पोतोत्तीर्णवारिधिः ॥ ६४
नकवर्माणं वणिजं तमवाप सः । आचख्यौ चाखिलं तस्मै स्वोदन्तं दारकोत्सुकः ॥ ६५
कवर्मा तौ ज्ञातार्तिः सोऽस्य दारकौ । दर्शयामास यौ तेन लब्ध्वा नीतावरण्यतः ॥ ६६
ी च तौ यावद्वीक्षते दारकावुभौ । तावन्नैव तदीयौ तौ तावन्यावेव कौचन ॥ ६७
ाष्पं शोकार्तो निराशो विललाप सः । इयद्भ्रान्त्वापि हा प्राप्तो न पुत्रो न सुता मया ॥ ६८
प्रभुणेवाशा दर्शिता मे न पूरिता । भ्रामितोऽस्मि च मिथ्यैव दूराद्दूरं दुरात्मना ॥ ६९
शोचन्वणिजा क्रमात्कनकवर्मणा । आश्वासितः स तेनाथ चन्द्रस्वामी शुचाब्रवीत् ॥ ७०
त्मजौ तौ चेन्न प्राप्स्यामि भुवं भ्रमन् । ततस्त्यक्ष्यामि तपसा गङ्गातीरे शरीरकम् ॥ ७१
तं तत्रस्थो ज्ञानी कोऽपि तमभ्यधात् । नारायण्याः प्रसादात्तौ प्राप्स्यस्येवात्मजौ व्रज ॥ ७२
स प्रहृष्टात्मा भास्करानुग्रहं स्मरम् । वणिग्भिः पूजितः प्रायाच्चन्द्रस्वामी पुरात्ततः ॥ ७३
ान्ग्रामांश्च चिन्वन्स नगराणि च । भ्रमन्प्रापैकदा सायं वनं प्रांशुबहुद्रुमम् ॥ ७४
येतुं रात्रिं कृत्वा वृत्तिं फलाम्बुभिः । स तस्थौ तरुमारुह्य सिंहव्याघ्रादिशङ्कया ॥ ७५
निशीथेऽत्र ददर्श स तरोरधः । महन्नारायणीमुख्यं मातृचक्रं समागतम् ॥ ७६
समाहृत्य नानारूपान्निजोचितान् । प्रतीक्षमाणं देवस्य भैरवस्य किलागमम् ॥ ७७
। किं देव इति तत्र च मातरः । नारायणीमथापृच्छन्सा जहास तु नाब्रवीत् ॥ ७८
धपृष्टा च ताभिस्ताः प्रत्युवाच सा । लज्जावहं यदप्येतत्सख्यस्तदपि वच्म्यहम् ॥ ७९
ुरसेनाख्यो राजा सुरपुरे पुरे । तस्य विद्याधरी नाम ख्यातरूपास्ति चात्मजा ॥ ८०
त्र तेनास्या राज्ञा रूपसमः श्रुतः । विमलाख्यस्य तनयो राज्ञो नाम्ना प्रभाकरः ॥ ८१
ताति तां तस्मिन्राज्ञि तेनापि सा श्रुता । विमलेन सुता तस्य निजपुत्रानुरूपिका ॥ ८२
विमलस्तस्मात्सुरसेनादयाचत । विद्याधरीं दूतमुखात्पुत्रार्थे तां तदात्मजाम् ॥ ८३
श्रुतसंपत्त्या तत्सुताय सुतामदात् । प्रभाकराय तस्मै तां सुरसेनो यथाविधि ॥ ८४
प्राप्य विमलपुराख्यं श्वाशुरं पुरम् । विद्याधरी समं भर्त्रा शयनीयमगान्निशि ॥ ८५
ासुप्तं सा पतिं सोत्का प्रभाकरम् । यावन्निरीक्षते तावत्तमपश्यन्नपुंसकम् ॥ ८६
म कथं षण्ढः पतिः प्राप्तो मयेति सा । शोचन्ती चेतसा रात्रिं राजपुत्री निनाय ताम् ॥ ८७
दत्ताहमनन्विष्य कथं त्वया । इति लेखं लिखित्वा च पित्रे सा प्राहिणोत्ततः ॥ ८८
ाचयित्वैव विमलेनास्मि वञ्चितः । छद्मनेत्यगमत्क्रोधं तत्पिता विमलं प्रति ॥ ८९
तकायाहं यद्व्याजाद्दापितस्त्वया । पुत्राय तत्फलं भुङ्क्ष्व पश्य त्वामेत्य हन्म्यहम् ॥ ९०
स लेखेन संदिदेश स भूपतिः । सुरसेनो बलोद्रिक्तो विमलाय महीक्षिते ॥ ९१
धेगत्यैतं तल्लेखार्थं समन्त्रिकः । विमृशन्दुर्जये तस्मिन्नोपायं कंचिदैक्षत ॥ ९२
ङ्गदत्ताख्यो मन्त्री विमलमभ्यधात् । एक एवास्त्युपायोऽत्र तं देव श्रेयसे कुरु ॥ ९३
ठशिरा नाम यक्षस्तस्य च वेद्म्यहम् । मन्त्रमाराधनं येन वरमिष्टं ददाति सः ॥ ९४
। मन्त्रेण यक्षमाराध्य संप्रति । लिङ्गं याचस्व पुत्रार्थं सद्यः शाम्यतु विग्रहः ॥ ९५
न्त्रिणा तस्मान्मन्त्रमादाय तं नृपः । सुतार्थं यक्षमाराध्य स तं लिङ्गमयाचत ॥ ९६

भ्रान्ताहं मद्दोषेण न मे भर्ता नपुंसकः । पुमानेवैष सुभगो नात्र कार्यान्यथा मतिः ॥
इत्यालोच्यैनमेवार्थं लिखित्वा लज्जिता पुनः । पित्रे सा प्राहिणोल्लेखं शमं भेजे च तेन सः ॥
एतं ज्ञात्वा च वृत्तान्तं भैरवेणाद्य कुप्यता । आनाय्य स स्थूलशिराः शप्तो देवेन गुह्यकः ॥
लिङ्गत्यागेन षण्ढत्वमाश्रितं यत्त्वया ततः । षण्ढ एव भवाजीवं पुमान्सोऽस्तु प्रभाकरः ॥
एवं नपुंसकीभूतो गुह्यकः सोऽद्य दुःखभाक् । प्रभाकरश्च पुरुषीभूतो भोगसुखाय सः ॥
तदेतेनाद्य कार्येण देवस्यागमने मनाक् । जातो विलम्बः क्षिप्राच्च जानीतागतमेव तम् ॥
इति नारायणी देवी मातॄर्यावद्ब्रवीति सा । देवश्चक्रेश्वरस्तावदाययौ सोऽत्र भैरवः ॥
संपूजितश्च सर्वाभिरुपहारैः स मातृभिः । ताण्डवेन क्षणं नृत्यन्नक्रीडद्योगिनीसखः ॥
तच्च सर्वं तरोः पृष्ठाच्चन्द्रस्वामी विलोकयन् । नारायण्या ददर्शैकां दासीं सापि तमैक्षत ॥
अन्योन्यसाभिलाषौ च दैवाद्द्वौ तौ बभूवतुः । सा च नारायणी देवी तथाभूतौ विवेद तौ ॥
गतेऽथ मातृसहिते भैरवे सा विलम्ब्य तम् । नारायणी पादपस्थं चन्द्रस्वामिनमाह्वयत् ॥
अवरुह्यागतं तं च स्वदासीं तां च सा ततः । पप्रच्छ कच्चिदन्योन्यमभिलाषोऽस्ति वामिति ॥
अस्ति देवीति विज्ञप्ता ताभ्यां तथ्यं ततश्च सा । देवी विमुक्तकोपा तं चन्द्रस्वामिनमभ्यधात् ॥
सत्येनोक्तेन तुष्टाहं युवयोर्न शपामि वाम् । ददाम्येतां तु दासीं ते भवतं निर्वृतौ युवाम् ॥
तच्छ्रुत्वा सोऽब्रवीद्विप्रो देवि यद्यपि चञ्चलम् । मनो रुणद्धि तदपि स्पृशामि न परस्त्रियम् ॥
मनसः प्रकृतिर्ह्येषा रक्ष्यं पापं तु कायिकम् । इत्यूचिवांसं तं धीरं विप्रं देवी जगाद सा ॥
प्रीतास्मि ते वरश्चायं पुत्रादीञ्शीघ्रमाप्स्यसि । इदं चोत्पलमम्लायि विषादिघ्नं गृहाण मे ॥
इत्युक्त्वा नीरजं दत्त्वा चन्द्रस्वामिद्विजस्य सा । नारायणी सदासीका देवी तस्य तिरोदधे ॥
स च प्राप्तोत्पलो रात्रौ क्षीणायां प्रस्थितस्ततः । तारापुरं तन्नगरं प्राप विप्रः परिभ्रमन् ॥
यत्रास्य स स्थितः पुत्रो महीपालः सुता च सा । अनन्तस्वामिनस्तस्य गृहे विप्रस्य मन्त्रिणः ॥
तत्र गत्वा स तस्यैव मन्त्रिणो भोजनेप्सया । द्वारे प्राध्ययनं चक्रे श्रुत्वा तमतिथिप्रियम् ॥
स च मन्त्री प्रतीहारैरावेद्यान्तः प्रवेशितम् । न्यमन्त्रयत दृष्ट्वैव विद्वांसं भोजनाय तम् ॥
निमन्त्रितोऽथ स श्रुत्वा तत्र पापहरं सरः । चन्द्रस्वामी ययौ स्नातुमनन्तह्रदसंज्ञकम् ॥
आगच्छति ततः स्नात्वा यावत्तावत्समन्ततः । हाकष्टशब्दं शुश्राव नगरे तत्र स द्विजः ॥
तत्कारणं च पृच्छन्तं तमेवमवदज्जनः । इह स्थितो महीपालो नाम ब्राह्मणपुत्रकः ॥
अटव्याः सार्थवाहेन प्राप्तः सार्थधरेण सः । तस्मात्सुलक्षणो दृष्ट्वा याचित्वा भगिनीसखः ॥
अनन्तस्वामिना यत्नादिहानीतः स मन्त्रिणा । पुत्रीकृतश्चापुत्रेण स तेन प्रियतां गतः ॥
तारावर्मनृपस्येह राष्ट्रस्यास्य च सद्गुणः । सोऽद्य कृष्णाहिना दष्टस्तेन हाहारवः पुरे ॥
एतच्छ्रुत्वा स एवैष मत्पुत्र इति चिन्तयन् । आययौ त्वरितश्चन्द्रस्वामी मन्त्रिगृहं स तत् ॥
तत्र सर्वैर्वृतं दृष्ट्वा परिज्ञाय च तं सुतम् । नन्दति स्म स हस्तस्थदेवीदत्तागदोत्पलः ॥
अढौकयच्च नासायां महीपालस्य तस्य तत् । नीलोत्पलं तदैवाभूत्तद्गन्धेन स निर्विषः ॥
उत्तस्थौ च महीपालो निद्रायुक्त इवास्त सः । पुरे चात्रोत्सवं चक्रे जनः सर्वः सराजकः ॥
चन्द्रस्वामी च स तदा देवांशः कोऽप्ययसाविति । अनन्तस्वामिना पौरै राज्ञा चार्थैरपूज्यत ॥
तस्थौ च तत्रैव सुखं मन्त्रिवेश्मनि सोऽर्चितः । पश्यन्पुत्रं महीपालं सुतां चन्द्रवतीं च ताम् ॥
परिज्ञायापि चान्योन्यं तूष्णीं तस्थुस्त्रयोऽपि ते । कुर्वन्त्यकालेऽभिव्यक्तिं न कार्यापेक्षिणो बुधा
अथ तस्मै महीपालायान्तः संतोषितो गुणैः । राजा बन्धुमतीं नाम तारावर्मा ददौ सुताम् ॥

१३८
ऱ्यां शप्तः सन्न जातु सुखमश्नुते । तथा चैतां पुरावृत्तां वणिक्पुत्रकथां शृणु ॥ १३९
। वणिक्पुत्रो धवलाख्येऽभवत्पुरे । सोऽनिच्छतोरगात्पित्रोः स्वर्णद्वीपं वणिज्यया ॥ १४०
ञ्चभिर्वर्षैरुपार्जितमहाधनः । आगच्छन्नारुरोहाब्धौ वहनं रत्नपूरितम् ॥ १४१
े गन्तव्ये वारिधौ तस्य चोन्नदन् । उदतिष्ठन्महावातवर्षवेगाकुलोऽम्बुदः ॥ १४२
मन्यैष किमायात इतीव तत् । क्रोधात्प्रवहणं तस्य निर्बभञ्जुर्महोर्मयः ॥ १४३
ऽपि हृतास्तोयैर्मकरैः केऽपि भक्षिताः । चक्रस्त्वायुर्बलान्नीत्वा तीरे क्षिप्तश्च वीचिभिः ॥ १४४
ःसहः स्वप्न इव रौद्रासिताकृतिम् । पाशहस्तं ददर्शैकं पुरुषं स वणिक्सुतः ॥ १४५
। च नीतोऽभूत्स चक्रः पाशवेष्टितः । दूरं सिंहासनस्थेन पुरुषेणाश्रितां सभाम् ॥ १४६
सनस्थस्य तेनैव स वणिग्युवा । नीत्वा पाशभृता लोहमये गेहे न्यवेश्यत ॥ १४७
ीड्यमानं स चक्रः पुरुषमैक्षत । मूर्ध्नि तप्तेन लौहेन चक्रेण भ्रमतानिशम् ॥ १४८
ाशुभेनेदं तव जीवस्यहो कथम् । इत्यपृच्छत्स चक्रस्तं सोऽप्येवं प्रत्युवाच तम् ॥ १४९
ऽहं वणिक्पुत्रः पित्रोर्यच्च वचो मया । न कृतं तेन संक्रुद्धौ तौ मामशपतां क्रुधा ॥ १५०
ाससंतप्तचक्राभौ नौ दुनोषि यत् । तदीदृश्येव ते पीडा दुराचार भविष्यति ॥ १५१
तौ विरम्योभौ रुदन्तं मामवोचताम् । मा रोदीरेकमेवास्तु मासं पीडा तवेदृशी ॥ १५२
शुचा नीत्वा तद्दिनं शयनाश्रितः । निशि स्वप्न इवाद्राक्षं भीमं पुरुषमागतम् ॥ १५३
बलेनाहमस्मिँल्लोहमये गृहे । क्षिप्तो न्यस्तं च मे मूर्ध्नि ज्वलच्चक्रमिदं भ्रमत् ॥ १५४
तृशापोऽयं तेन प्राणा न यान्ति मे । स च मासोऽद्य संपूर्णो न च मुच्ये तथाप्यहम् ॥ १५५
ां तं खड्गं स चक्रः सकृपोऽब्रवीत् । पित्रोः प्रवसतार्थार्थं मयापि न कृतं वचः ॥ १५६
ाति ते वित्तमिति मां शपतः स्म तौ । तेनाब्धौ मे धनं नष्टं कृत्स्नं द्वीपान्तरार्जितम् ॥ १५७
ां चान्यत्र तत्कोऽर्थो जीवितेन मे । देह्येतन्मूर्ध्नि मे चक्रं खड्ग शापोऽपयातु ते ॥ १५८
वदत्येव वाणी दिव्यात्र शुश्रुवे । खड्ग मुक्तोऽसि चक्रस्य मूर्ध्न्येतच्चक्रमर्पय ॥ १५९
ाक्रशिरसि न्यस्तचक्रस्तदैव सः । खड्गः केनाप्यदृश्येन निन्ये पितृगृहं ततः ॥ १६०
पुनः पित्रोरनुल्लङ्घितशासनः । चक्रस्त्वादाय तन्मूर्ध्नि चक्रं तत्रैवमभ्यधात् ॥ १६१
ऽपि मुच्यन्तां पृथ्व्यां तत्पातकैरपि । आ पापक्षयमेतन्मे चक्रं भ्राम्यतु मूर्धनि ॥ १६२
ां तं चक्रं धीरसत्त्वं नभःस्थिताः । पुष्पवृष्टिमुचो देवाः परितुष्यैवमब्रुवन् ॥ १६३
; महासत्त्व शान्तं करुणयानया । पापं ते व्रज वित्तं च तवाक्षय्यं भविष्यति ॥ १६४
् देवेषु चक्रस्य शिरसः क्षणात् । आयसं तस्य तच्चक्रं जगाम क्काप्यदर्शनम् ॥ १६५
बरादेको विद्याधरकुमारकः । तुष्टेन्द्रप्रेषितं दत्त्वा महार्घं रत्नसंचयम् ॥ १६६
ा तं चक्रं नगरं धवलाभिधम् । निजं तत्प्रापयामास जगाम च यथागतम् ॥ १६७
ोऽन्तिकं पित्रोः प्राप्यानन्दितबान्धवः । तस्थावाख्यातवृत्तान्तस्तत्र धर्मापरिच्युतः ॥ १६८
महीपालं चन्द्रस्वाम्यवदत्पुनः । ईदृक्पापफलं पुत्र मातापित्रोर्विरोधनम् ॥ १६९
् तद्भक्तिस्तत्राप्येतां कथां शृणु । आसीत्कोऽपि मुनिः पूर्वं वनचारी महातपाः ॥ १७०
पविष्टस्य तस्योपरि बलाकया । विष्ठा कदाचिन्मुक्ताभूत्सोऽथ क्रुद्धो ददर्श ताम् ॥ १७१
सा तेन बलाका भस्मसाद्भूत् । तपःप्रभावाहंकारं स च भेजे ततो मुनिः ॥ १७२
रे क्कापि स ब्राह्मणगृहं मुनिः । एकं प्रविश्य गृहिणीं तत्र भिक्षामयाचत ॥ १७३
यनाग्भर्तुः परिचर्यां समापये । इति तं सा च गृहिणी निजगाद पतिव्रता ॥ १७४

ततः कृत्वाग्निकार्यादेः शुश्रूषां भर्तुरत्र सा । साध्वी भिक्षां समादाय तस्यागादन्तिकं मुनेः ॥
सोऽथ बद्धाञ्जलिर्भूत्वा मुनिस्तामवदत्सतीम् । कथं बलाकावृत्तान्तः परोक्षोऽपि मम त्वया ॥
ज्ञात इत्यादितो ब्रूहि भिक्षां गृह्णाम्यहं ततः । इत्युक्तवन्तं तमृषिं सावोचत्पतिदेवता ॥
न भर्तृभक्तेरपरं धर्मं कंचन वेद्म्यहम् । तेन मे तत्प्रसादेन विज्ञानबलमीदृशम् ॥
किं चेह धर्मव्याधाख्यं मांसविक्रयजीविनम् । गत्वा पश्य ततः श्रेयो निरहंकारमाप्स्यसि ॥
एवं सर्वविदा प्रोक्तः स पतिव्रतया मुनिः । गृहीतातिथिभागस्तां प्रणम्य निरगात्ततः ॥
अन्येद्युः स मुनिर्धर्मव्याधमन्विष्य तत्र तम् । विपणिस्थमुपागच्छत्कुर्वाणं मांसविक्रयम् ॥
धर्मव्याधश्च दृष्ट्वैव स तं मुनिमभाषत । किं पतिव्रतया ब्रह्मन्निह त्वं प्रेषितस्तया ॥
तच्छ्रुत्वा विस्मितोऽवादीद्धर्मव्याधमृषिः स तम् । ईदृशं ते कथं ज्ञानं मांसविक्रयिणः सतः ।
इत्युक्तवन्तं तमृषिं धर्मव्याधो जगाद सः । मातापित्रोरहं भक्तस्तौ ममैकं परायणम् ॥
तयोः स्नपितयोः स्नामि भुञ्जे भोजितयोस्तयोः । शये शयितयोस्तेन ज्ञानमीदृग्विधं मम ॥
मांसं चान्यहतस्याहं मृगादेर्वृत्तये परम् । स्वधर्मनिरतो भूत्वा विक्रीणे नार्थगर्धतः ॥
ज्ञानविघ्नमहंकारमहं सा च पतिव्रता । नैव कुर्वो मुने तेन निर्बाधज्ञानमावयोः ॥
तस्मात्त्वमप्यहंकारं मुक्त्वा शुद्ध्यै मुनिव्रतः । स्वधर्मं चर येनाशु परं ज्योतिरवाप्स्यसि ॥
इति तेनानुशिष्टश्च धर्मव्याधेन तद्गृहान् । गत्वा दृष्ट्वा च तच्चर्यां मुनिस्तुष्टो वनं ययौ ॥
सिद्धस्तदुपदेशाच्च सोऽभूत्तावपि जग्मतुः । सिद्धिं पतिव्रताधर्मव्याधौ तद्धर्मचर्यया ॥
एष प्रभावो भक्तानां पत्यौ पितरि मातरि । तदेहि संभावय तां मातरं दर्शनोत्सुकाम् ॥
एवं पित्रा महीपालः स चन्द्रस्वामिनोदितः । प्रतिपेदे स्वदेशाय गन्तुं मात्रनुरोधतः ॥
अनन्तस्वामिने सर्वं धर्मपित्रे निवेद्य तत् । तेनात्तभारः स ततः प्रायात्पितृसखो निशि ॥
क्रमात्प्राप्य स्वदेशं च जननीं दर्शनेन ताम् । अनन्दयद्देवमतिं मधुः पिकवधूमिव ॥
कंचित्कालं महीपालस्तस्थौ बान्धवसत्कृतः । तत्र मातृयुतः पित्रा वृत्तान्ताख्यायिना सह ॥
तावत्तारापुरे तत्र तद्भार्या तु नृपात्मजा । निशाक्षये बन्धुमती सान्तः सुप्ता व्यबुध्यत ॥
बुद्ध्वा च तं पतिं क्वापि गतं विरहविक्लवा । न लेभे सा रतिं क्वापि प्रासादोपवनादिषु ॥
द्विगुणीकृतहारेण बाष्पेण रुदती परम् । आसीत्प्रलापैकमयी वाञ्छन्ती मृत्युना सुखम् ॥
यामि कार्येण केनापि शीघ्रमेष्यामि चेति मे । स्वैरमुक्त्वैव स गतस्तन्मा पुत्रि शुचं कृथाः
इत्याशादर्शिभिर्वाक्यैरनन्तस्वामिना ततः । मन्त्रिणाश्वासिताभ्येत्य कृच्छ्रात्सा धृतिमाददे ॥
ततः प्रवृत्तिज्ञानार्थं भर्तुर्देशान्तरागतान् । पूजयन्ती सदैवासीद्दानैः सा द्विजपुंगवान् ॥
तेन संगमदत्ताख्यं दीनं दानागतं द्विजम् । भर्तुः पप्रच्छ सा वार्तामुक्त्वाभिज्ञाननामनी ॥
ततस्तां स द्विजोऽवादीद्दृष्टो नैवंविधो मया । कश्चित्तथापि देव्यत्र कार्या नैवाधृतिस्त्वया ॥
चिरादवाप्यतेऽभीष्टसंयोगः शुभकर्मभिः । तथा च यन्मया दृष्टमाश्चर्यं वच्मि तच्छृणु ॥
तीर्थान्यटन्नहं प्राप्तं हिमाद्रौ मानसं सरः । तत्रादर्शमिवापश्यमन्तर्मणिमयं गृहम् ॥
ततोऽकस्माच्च निर्गत्य खड्गपाणिः पुमान्गृहात् । अध्यारोहत्सरस्तीरं दिव्यनारीगणान्वितः ।
तत्रोद्याने सह स्त्रीभिः सोऽक्रीडत्पानलीलया । दूरात्सकौतुकश्चाहं पश्यन्नासमलक्षितः ॥
तावत्कुतोऽपि तत्रागात्सुभगः पुरुषोऽपरः । मिलिताय च तत्तस्मै यथादृष्टं मयोदितम् ॥
दर्शितश्च स सस्त्रीकः पुमान्दूरात्कुतूहलात् । तद्दृष्ट्वैव स्ववृत्तान्तमेवमाख्यातवान्मम ॥
पुरे त्रिभुवनाख्येऽहं राजा त्रिभुवनाभिधः । तत्र मे सुचिरं सेवामेकः पाशुपतो व्यधात् ॥

पूर्व त्व खड्ग प्राप्य च मामपि । प्रवेशयस्त्वं निगत्य समयं चात्र मे कुरु ॥ २१६
तस्याहं कृत्वा समयमाशु तत् । प्रविश्य विवरं प्रापमेकं रत्नमयं गृहम् ॥ २१७
। मां चैका प्रधानासुरकन्यका । अन्तः प्रावेशयत्प्रेम्णा प्रादात्खड्गं च सात्र मे ॥ २१८
दमिमं खड्गं खगतिदायिनम् । रक्षेरित्युक्तवत्याहं तया तत्रावसं सह ॥ २१९
ड्गहस्तोऽहं निर्गत्य विवरेण तम् । प्रावेशयं पाशुपतं तस्मिन्नसुरमन्दिरे ॥ २२०
या साकं तया सपरिवारया । सोऽपि द्वितीयया साकमासीदसुरकन्यया ॥ २२१
मत्तस्य स मे पाशुपतश्छलात् । हृत्वा पार्श्वस्थितं खड्गमकरोन्निजहस्तगम् ॥ २२२
स्थिते लब्धमहासिद्धिः स पाणितः । मामादायैव निष्काल्य विवरात्प्राक्षिपद्बहिः ॥ २२३
वर्षाणि मया बिलमुखेषु सः । गवेषितः कदाचित्तं निर्गतं प्राप्नुयामिति ॥ २२४
: मे दृष्टिपथे निपतितः शठः । मदीययैतया साकं क्रीडन्नसुरकन्यया ॥ २२५
भुवनः स राजा देवि वक्ति माम् । तावत्पानमदान्निद्रामगात्पाशुपतोऽत्र सः ॥ २२६
। गत्वैव पार्श्वात्खड्गं तमग्रहीत् । स राजा तेन भूयश्च प्रभावं दिव्यमाप्तवान् ॥ २२७
तं पादप्रहारेण प्रबोध्य तम् । निरभर्त्सयदापन्नं स वीरो नावधीत्पुनः ॥ २२८
रपुरं सपरिच्छदया तया । प्राप्तया स स्वया साकं सिद्धश्चैवासुरकन्यया ॥ २२९
ततः सिद्धिभ्रष्टः कष्टमगात्परम् । कृतघ्नाश्चिरसिद्धार्था अपि भ्रश्यन्ति हि ध्रुवम् ॥ २३०
द्वैलोक्याहमिह प्राप्तः परिभ्रमन् । तद्देवि प्रियसंयोगस्तव भावी चिरादपि ॥ २३१
निस्याभूच्छुभकृन्नहि सीदति । इति तस्माद्द्विजाच्छ्रुत्वा तोषं बन्धुमती ययौ ॥ २३२
कृतार्थं तं विप्रं दत्त्वा धनं बहु । अन्येद्युश्च द्विजोऽपूर्वस्तत्रागाद्दूरदेशजः ॥ २३३
मती सोत्का प्रोक्ताभिज्ञाननामका । भर्तुर्वार्तामपृच्छत्सा सोऽथ तां ब्राह्मणोऽभ्यधात् ॥ २३४
मया दृष्टस्त्वद्भर्ता कापि किं त्वहम् । अन्वर्थः सुमनोनामा तवाद्य गृहमागतः ॥ २३५
निस्यं ते भावीत्याख्याति मे मनः । भवत्येव च संयोगश्चिरविश्लेषिणामपि ॥ २३६
थयाम्येतामत्र देवि कथां शृणु । निषधाधिपती राजा नलो नामाभवत्पुरा ॥ २३७
विजितः कामो मन्येऽवमानतः । कोपितत्रिपुराराातिनेत्राग्नावजुहोत्तनुम् ॥ २३८
सदृशी भार्याश्चावि विचिन्वता । दमयन्तीति भीमस्य विदर्भाधिपतेः सुता ॥ २३९
वेचित्य क्ष्मां ददृशे तेन राजसु । न नलादपरो राजा तुल्यः स्वदुहितुः पतिः ॥ २४०
वनगरे दमयन्ती सरोवरम् । भीमात्मजा जलक्रीडाहेतोरवततार सा ॥ २४१
हंसं सा दृष्ट्वा दष्टोत्पलाम्बुजम् । बबन्ध क्रीडया बाला युक्तिक्षिप्तोत्तरीयका ॥ २४२
व्यहंसस्तामुवाच व्यक्तया गिरा । राजपुत्र्युपकारं ते करिष्यामि विमुञ्च माम् ॥ २४३
नलो नाम राजा हृदि वहन्ति यम् । सद्गुणैर्गुम्फितं हारमिव दिव्याङ्गना अपि ॥ २४४
दृशी भार्या भर्ता स सदृशस्तव । तदत्र तुल्यसंयोगे कामदूतो भवामि वाम् ॥ २४५
व्यहंसं सा मत्वा सत्याभिभाषिणम् । मुमोच दमयन्ती तमेवमस्त्विति वादिनी ॥ २४६
णीयोऽन्यो नलादिति जगाद च । श्रुतिमार्गप्रविष्टेन तेनापहृतमानसा ॥ २४७
ततो गत्वा निषधेष्वाशु शिश्रिये । जलक्रीडाप्रवृत्तेन नलेनाध्यासितं सरः ॥ २४८
जा दृष्ट्वा तं राजहंसं मनोरमम् । बबन्ध स्वोत्तरीयेण लीलाक्षिप्तेन कौतुकात् ॥ २४९
ऽब्रवीन्मुञ्च नृपते मामहं यतः । इह त्वदुपकारार्थमागतः शृणु वच्मि ते ॥ २५०
: भीमस्य राज्ञः क्षितितिलोत्तमा । दमयन्तीति दुहिता स्पृहणीया सुरैरपि ॥ २५१
दाख्यातगुणो बद्धानुरागया । तया भर्ता वृतस्त्वञ्च त्वदर्थं तत्कृतागतः ॥ २५२

इत्युक्त्वा तेन मुक्तः स हंसो गत्वा शशंस तत् । दमयन्त्यै यथावस्तु यथाकाम जगाम च ।
दमयन्ती च सोत्कण्ठा युक्त्या मातृमुखेन सा । पितुः स्वात्प्रार्थयामास नलप्राप्त्यै स्वयंवरम्
अनुमन्य स तस्याश्च स्वयंवरकृते पिता । भीमः पृथिव्यां सर्वेषां राज्ञां दूतान्विसृष्टवान् ॥
प्राप्तदूताश्च निखिला विदर्भान्प्रति भूमिपाः । व्रजन्ति स्म नलोऽप्युत्को रथारूढश्चचाल सः
ततश्च दमयन्त्यास्तौ नलप्रेमस्वयंवरौ । इन्द्रादयो लोकपालाः शुश्रुवुर्नारदान्मुनेः ॥
तेषां च बलभिद्वायुयमाग्निवरुणास्ततः । संमन्त्र्य दमयन्त्युक्त्वा नलस्यैवान्तिकं ययुः ॥
ऊचुश्च प्राप्य तं प्रह्वं विदर्भान्प्रस्थितं पथि । गत्वास्मद्वचनाद्ब्रूहि दमयन्तीमिदं नृप ॥
पञ्चानां वरयैकं नः किं मर्त्येन नलेन ते । मर्त्या मरणधर्माणस्त्रिदशास्त्वमरा इति ॥
अस्मद्वराच्च तत्पार्श्वमदृष्टोऽन्यैः प्रवेक्ष्यसि । तथेत्येतां च देवाज्ञां प्रतिपेदे नलोऽथ सः ॥
गत्वा चान्तःपुरं तस्याः प्रविश्यादृष्ट एव च । दमयन्त्याः शशंसैव देवादेशं तथैव तम् ॥
सा तं श्रुत्वाब्रवीत्साध्वी देवास्ते सन्तु तादृशाः । तथापि मे नलो भर्ता न कार्यं त्रिदशैर्मम
इति सम्यग्वचस्तस्याः श्रुत्वात्मानं प्रकाश्य च । नलो गत्वा तथैवैतदिन्द्रादिभ्यः शशंस सः
वश्या वयमिदानीं ते स्मृतमात्रोपगामिनः । तथ्यवादिन्निति च ते तुष्टास्तस्मै ददुर्वरान् ॥
ततो हृष्टे नले याते विदर्भान्वञ्चनेप्सुभिः । दमयन्त्याः सुरेशाद्यैर्नलरूपमकारि तैः ॥
गत्वा च भीमस्य सभां मर्त्यधर्मानुपाश्रिताः । स्वयंवरे प्रस्तुते ते नलान्तिक उपाविशन् ॥
अथैत्य दमयन्ती सा भ्रात्रा स्वेनैकशो नृपान् । आवेद्यमानानुज्झन्ती क्रमात्प्राप नलान्तिक
दृष्ट्वा छायानिमेषादिगुणांस्तत्र च षण्नलान् । सा भ्रातरि समुद्भ्रान्ते व्याकुला समचिन्तय
नूनं मे लोकपालैस्तैर्मायेयं पञ्चभिः कृता । षष्ठं मन्ये नलं त्वत्र न चान्यत्रास्ति मे गतिः
इत्यालोच्यैव साध्वी सा नलैकासक्तमानसा । आदित्याभिमुखी भूत्वा दमयन्त्येवमब्रवीत् ॥
भो लोकपालाः स्वप्नेऽपि नलादन्यत्र चेन्न मे । मनस्तत्तेन सत्येन स्वं दर्शयत मे वपुः ॥
वरात्पूर्ववृताच्चान्ये कन्यायाः परपूरुषाः । परदाराश्च सा तेषां तत्कथं मोह एष वः ॥
श्रुत्वैतत्पञ्च शक्राद्याः स्वेन रूपेण तेऽभवन् । षष्ठः सत्यनलश्चाभूत्स्वरूपस्थः स भूपतिः
तस्मिन्सा दमयन्ती तां फुल्लेन्दीवरसुन्दरीम् । दृशं वरणमालां च हृष्टा राज्ञि नले न्यधात्
पपात पुष्पवृष्टिश्च नभोमध्यात्ततो नृपः । विवाहमङ्गलं भीमश्चक्रे तस्या नलस्य च ॥
विहितोचितपूजाश्च तेन वैदर्भभूभृता । नृपा यथागतं जग्मुर्देवाः शक्रादयश्च ते ॥
शक्रादयस्तु ददृशुर्द्वौ कलिद्वापरौ पथि । बुद्ध्वा च दमयन्त्यर्थमागतौ तौ च तेऽब्रुवन् ॥
न गन्तव्यं विदर्भेषु तत एवागता वयम् । वृत्तः स्वयंवरो राजा दमयन्त्या नलो वृतः ॥
तच्छ्रुत्वैवोचतुः पापौ तौ कलिद्वापरौ रुषा । देवान्भवादृशांस्त्यक्त्वा यत्स मर्त्यो वृतस्तया
तदवश्यं करिष्यामो वियोगमुभयोस्तयोः । एवं कृतप्रतिज्ञौ तौ निवर्त्य ययतुस्ततः ॥
नलश्च सप्त दिवसान्स्थित्वा श्वशुरवेश्मनि । दमयन्त्या समं वध्वा कृतार्थो निषधानगात्
तत्रासीत्प्रेम दंपत्योर्गौरीशर्वाधिकं तयोः । शर्वस्य गौरी देहार्धं तस्य त्वात्मैव साभवत् ॥
कालेन चेन्द्रसेनाख्यं दमयन्ती नलात्सुतम् । प्रसूते स्म तदन्वेकामिन्द्रसेनां च कन्यका
तावच्च स कलिश्छिद्रं तस्यानुच्छास्त्रवर्तिनः । नलस्यासीच्चिरं चिन्वन्प्रतिज्ञातार्थनिश्चितः
अथैकदानुपास्यैव संध्यामक्षालिताङ्घ्रिकः । स सुष्वाप नलः पानमदेन मुषितस्मृतिः ॥
छिद्रमेतदवाप्यैव दत्तदृष्टिर्दिवानिशम् । कलिस्तस्य शरीरान्तर्नलस्य प्रविवेश सः ॥
तेन देहप्रविष्टेन कलिना स नलो नृपः । विहाय धर्म्यमाचारमाचचार यथारुचि ॥

ाज्यस्य द्वयो तस्यानुजस्य स. । नलो ददशश दान्ताख्य सुन्दर धवल वृषम् ॥ २९४
ानाय तं तस्मै ज्यायसे न सः । द्वापरग्रस्ततद्भक्तिः पुष्कराख्यो वृषं ददौ ॥ २९५
यद्यस्ति वाञ्छास्मिन्वृषभे तव । तद्द्यूतेन विजित्यैनं मत्तः स्वीकुरु मा चिरम् ॥ २९६
ालो मोहात्प्रतिपेदे तथेति तत् । ततः प्रववृते द्यूतं तयोर्भ्रात्रोः परस्परम् ॥ २९७
स वृषो नलस्येभादयः पणाः । जिगाय पुष्कराख्यश्च नलो मुहुरजीयत ॥ २९८
कोषे हारितेऽपि दुरोदरात् । न नलो वार्यमाणोऽपि चचाल कलिविप्लुतः ॥ २९९
ं राज्यं दमयन्ती निजौ शिशू । रथोत्तमं समारोप्य प्राहिणोत्स्वपितुर्गृहम् ॥ ३००
ज्यं स्वं समग्रमपि हारितम् । ततः स पुष्कराख्येन जगदे जितकाशिना ॥ ३०१
तं सर्वं तत्तस्योक्षणः पणस्य मे । दमयन्तीमिदानीं त्वं द्यूते प्रतिपणं कुरु ॥ ३०२
ा तस्य नलोऽनल इव ज्वलन् । न चाकालेऽब्रवीत्किंचिन्न च चक्रे पणक्रियाम् ॥ ३०३
राख्यस्तमवादीन्न करोषि चेत् । भार्यां पणं तदस्मान्मे देशान्निर्याहि तत्सखः ॥ ३०४
ो देशाद्दमयन्त्या समं ततः । निरगाद्राजपुरुषैरा सीमान्तं प्रवासितः ॥ ३०५
यत्रेदृगवस्था कलिना कृता । तत्रोच्यतां किमन्येषां क्रिमीणामिव देहिनाम् ॥ ३०६
निःस्नेहं राजर्षीणामपीदृशाम् । विपदामास्पदं द्यूतं कलिद्वापरजीवितम् ॥ ३०७
ैश्वर्यो विदेशं स नलो व्रजन् । दमयन्त्या सह प्राप क्षुधाक्रान्तो वनान्तरम् ॥ ३०८
या दर्भभिन्नपेशलपादया । स विश्रान्तः सरस्तीरे हंसौ द्वावैक्षतागतौ ॥ ३०९
स तयोर्ग्रहणायोत्तरीयकम् । चिक्षेप तच्च हृत्वैव हंसौ तौ तस्य जग्मतुः ॥ ३१०
विताबक्षौ वासोऽप्युपेत्य ते । हृत्वा गताविति नलः स वाचं चाशृणोद्दिवः ॥ ३११
खोऽथ स युक्तया विमना नृपः । पन्थानं दर्शयामास दमयन्त्याः पितुर्गृहे ॥ ३१२
वेदर्भेषु प्रिये पितृगृहे तव । अयमङ्गेषु मार्गोऽयमपरः कोशलेषु च ॥ ३१३
मन्ती सा शङ्कितेवाभवत्तदा । त्यक्ष्यन्निवार्यपुत्रो मे मार्गं किं वक्त्यसाविति ॥ ३१४
मूलान्नौ वने तत्र निशागमे । श्रान्तौ संविशतः स्मोभौ दंपती कुशसंस्तरे ॥ ३१५
नैर्निद्रामध्वखिन्ना जगाम सा । नलो गन्तुमनास्त्वासीदनिद्रः कलिमोहितः ॥ ३१६
वस्त्रां तां दमयन्तीं विमुच्य सः । छिन्नं तदुत्तरीयार्धं प्रावृत्य च ततो ययौ ॥ ३१७
रात्र्यन्ते प्रबुद्धा तं पतिं वने । अपश्यन्ती गतं त्यक्त्वा विललाप विचिन्त्य सा ॥ ३१८
ासत्त्व रिपावपि कृपापर । हा मद्वत्सल केनासि मयि निष्करुणीकृतः ॥ ३१९
कथं पद्भ्यामटवीषु प्रयास्यसि । कस्ते श्रमापनोदाय परिचर्यां करिष्यति ॥ ३२०
रागेण रञ्जितौ यौ महीभुजाम् । तौ ते पथि कथं पादौ धूलिः कलुषयिष्यति ॥ ३२१
ूर्णेनाप्यालिप्तं सहते न यत् । अङ्गं सहिष्यते तत्ते मध्याह्नार्कातपं कथम् ॥ ३२२
न पुत्रेण किं दुहित्रा किमात्मना । तवैकस्य शिवं देवाः कुर्वतां यद्यहं सती ॥ ३२३
ोचन्ती दमयन्ती नलं तदा । तत्पूर्वदर्शितेनैव प्रतस्थे सा ततः पथा ॥ ३२४
ाचक्राम नदीशैलवनाटवीः । नातिचक्राम भक्तिं तु सा भर्तरि कथंचन ॥ ३२५
मार्गे तामरक्षद्येन लुब्धकः । भस्मीकृतोऽहेस्त्रातायां तस्यां गतमनाः क्षणात् ॥ ३२६
णिक्सार्थेनान्तरामिलितेन सा । सह गत्वा पुरं प्राप सुबाह्वाख्यस्य भूपतेः ॥ ३२७
जसुतया दूराद्दृष्ट्वैव हर्म्यतः । सौन्दर्यप्रीतयानाय्य स्वमात्रे प्राभृतीकृता ॥ ३२८
ं महादेव्या सा तस्थौ च तदादृता । त्यक्त्वा गतो मां भर्तेति पृष्टा चैतावदब्रवीत् ॥ ३२९
पता भीमो नलोदन्तमवेत्य तम् । तयोरन्वेषणायाप्तान्नरान्दिक्षु विसृष्टवान् ॥ ३३०
...। सुवाहो राजधानीं तां प्राप ब्राह्मणरूपभृत् ॥ ३३१

अन्योन्यं प्रत्यभिज्ञाय समेत्य रुदतः स्म ता। तथा यथात्र राज्ञा सा सुबाहुस्तदबुध्यत ॥
यावच्चानाय्य सा देवी तौ यथावस्तु पृच्छति। बुबुधे दमयन्तीं तां तावत्स्वभगिनीसुताम् ॥
ततः सा भर्तुरावेद्य तां संमान्य पितुर्गृहम्। रथेऽधिरोप्य व्यसृजत्ससुषेणां ससैनिकाम् ॥
तत्र सा दमयन्त्यासीत्प्राप्तापत्यद्वया ततः। पित्रापि दृश्यमाना सा भर्तुर्वार्तां विचिन्वती ॥
तत्पिता व्यसृजच्चारानन्वेष्टुं तं च तत्पतिम्। सूदस्यन्दनविद्याभ्यां दिव्याभ्यामुपलक्षितम् ॥

बालां वने प्रसुप्तां नृशंस संत्यज्य कुमुदिनीकान्ताम्।
प्राप्यैवाम्बरखण्डं चन्द्रादृश्यः क यातोऽसि ॥

एवं भवद्भिर्वक्तव्यं स्थितः शङ्क्येत यत्र सः। इत्यादिदेश चारांस्तान्स च भीमो महीपतिः ॥
अत्रान्तरे स राजा च नलस्तस्मिन्वने निशि। प्रावृतार्धपटो दूरं गत्वा दावाग्निमैक्षत ॥
भो महासत्त्व यावन्न दह्येऽहमबलोऽमुना। अपसारय मां तावद्दावाग्नेर्निकटादितः ॥
इत्यत्र तद्वचः श्रुत्वा दत्तदृष्टिर्ददर्श सः। आबद्धमण्डलं नागं नलो दावानलान्तिके ॥
फणारत्नप्रभाजालजटिलं वनवह्निना। गृहीतमिव तेनोग्रहेतिहस्तेन मूर्धनि ॥
उपेत्य कृपयांसे तं कृत्वा नीत्वा च दूरतः। त्यक्तुमिच्छति यावत्स तावन्नागोऽब्रवीत्स तम् ॥
गणयित्वा दशान्यानि पदानि नय मामितः। ततः स प्रययावेवं पदानि गणयन्नलः ॥
एकं द्वे त्रीणि चत्वारि पञ्च षट् सप्त शृण्वहे। अष्टौ नव दशेत्युक्तवन्तमुक्तिच्छलेन तम् ॥
नलं स्कन्धस्थितो नागो ललाटान्ते ददंश सः। तेन ह्रस्वभुजः कृष्णो विरूपः सोऽभवन्नृपः ॥
ततोऽवतार्य स्कन्धात्तं स राजा पृष्टवानहिम्। को भवान्का कृता चेयं त्वया मे प्रत्युपक्रिया
एतन्नलवचः श्रुत्वा स नागः प्रत्युवाच तम्। राजन्कार्कोटनामानं नागराजमवेहि माम् ॥
दंशो गुणाय च मया दत्तस्ते तच्च वेत्स्यसि। गूढवासे च वैरूप्यं महतां कार्यसिद्धये ॥
गृहाण चाग्निशौचाख्यमिदं वस्त्रयुगं मम। अनेन प्रावृतेनैव स्वं रूपं प्रतिपत्स्यसे ॥
इत्युक्त्वा दत्ततद्वस्त्रयुगे कार्कोटके गते। नलस्तस्माद्वनाद्गत्वा क्रमेण प्राप कोशलान् ॥
कोशलाधिपतेस्तत्र ऋतुपर्णस्य भूपतेः। स ह्रस्वबाहुनामा सन्सूदत्वं शिश्रिये गृहे ॥
भोजनानि च यत्तस्य चक्रे दिव्यरसानि सः। तेन प्रसिद्धिं प्रापात्र रथविज्ञानतस्तथा ॥
तत्रस्थे ह्रस्वबाह्वाख्ये नले तस्मिन्कदाचन। विदर्भराजचारेषु तेष्वेकोऽत्र किलाययौ ॥
ह्रस्वबाहुरितीहास्ति स्वविद्यारथविद्ययोः। नलतुल्यो नवः सूद इति चारोऽत्र सोऽशृणोत् ॥
नलं संभाव्य तं बुद्ध्वा चास्थाने नृपतेः स्थितम्। युक्त्या स तत्र गत्वैतां पपाठार्यां प्रभूदिता

बालां वने प्रसुप्तां नृशंस संत्यज्य कुमुदिनीकान्ताम्।
प्राप्यैवाम्बरखण्डं चन्द्रादृश्यः क यातोऽसि ॥

तच्छ्रुत्वोन्मत्तवाक्याभं तत्रस्था अवजज्ञिरे। सूदच्छद्मस्थितस्त्वत्र स नलः प्रत्युवाच तम् ॥

क्षीणोऽम्बरैकदेशं चन्द्रः प्राप्यान्यमण्डलं प्रविशन्।
कुमुदिन्या यददृश्यो जातस्तत्का नृशंसता तस्य ॥

एतत्तदुत्तरं श्रुत्वा सत्यं संभाव्य तं नलम्। विपदुद्भूतवैरूप्यं चारः सोऽथ ययौ ततः ॥
विदर्भान्प्राप्य भीमाय राज्ञे भार्यायुताय सः। दमयन्त्यै च तत्सर्वं दृष्टश्रुतमवर्णयत् ॥
ततोऽत्र दमयन्ती सा पितरं स्वैरमब्रवीत्। निःसंदेहं स एवार्यपुत्रः सूदमिषं श्रितः ॥
तत्तदानयने युक्तिर्मन्मता क्रियतामिह। ऋतुपर्णस्य नृपतेस्तस्य दूतो विसृज्यताम् ॥
प्राप्तमात्रश्च तं भूपमेवं तत्र ब्रवीतु सः। गतः क्वापि नलो राजा प्रवृत्तिर्नास्य बुध्यते ॥
[illegible] अतोऽचैव निर्गत्य शीघ्रमागम्यतामिति ॥

॥ गत्वा स तथवाक्तः समुत्सुकः । जगाद सूदरूपं तं प्रणयात्पार्श्वगं नलम् ॥ २९
ो रथज्ञानं ममास्तीत्यवदद्भवान् । तत्प्रापय विदर्भान्मामद्यैवोत्सहसे यदि ॥ ३७
ा नलो बाढं प्रापयामीत्युदीर्य सः । गत्वा वराश्वान्संयोज्य सज्जं चक्रे रथोत्तमम् ॥ ३७
स्वादोऽयं जाने मत्प्राप्तये तया । कुतो न दमयन्ती तु सा स्वप्नेऽपीदृशी भवेत् ॥ ३७
ावद्गच्छामि पश्यामीति विचिन्त्य सः । राज्ञस्तस्यर्तुपर्णस्य सज्जं रथमुपानयत् ॥ ३७
च नृपे तस्मिंस्तं संवाहयितुं रथम् । नलः प्रववृते तार्क्ष्यजवजैत्रेण रंहसा ॥ ३७
च्युतं वस्त्रं प्राप्तुं रथविधारणम् । ब्रुवाणमथ मार्गे तमृतुपर्णं नलोऽब्रवीत् ॥ ३७
तव तद्वस्त्रमनेनैव क्षणेन हि । बहूनि योजनान्येष व्यतिक्रान्तो रथस्तव ॥ ३७
तुपर्णस्तमवादीदङ्ग देहि मे । रथज्ञानमिदं तुभ्यमक्षज्ञानं ददाम्यहम् ॥ ३७
या भवन्त्यक्षाः संख्याज्ञानं च जायते । संप्रत्येव च पश्यात्र वदामि प्रत्ययं तव ॥ ३७
ग्रे तरुर्योऽयं संख्यामेतस्य तेऽधुना । वच्म्यहं फलपर्णानां गणयित्वा च पश्य ताम् ॥ ३७
ा फलपर्णानि यावन्त्येव जगाद सः । नलेन गणितान्यासंस्तावन्त्येवात्र शाखिनः ॥ ३८
ो रथज्ञानमृतुपर्णाय तद्ददौ । ऋतुपर्णोऽप्यदादक्षज्ञानं तस्मै नलाय तत् ॥ ३८
स्म तज्ज्ञानं नलो गत्वापरे तरौ । सम्यक्क बुबुधे संख्या पत्रादिष्वत्र तेन सा ॥ ३८
ग्यति यावत्स तावत्तस्य शरीरतः । निरगात्पुरुषः कृष्णस्तं स कोऽसीति पृष्टवान् ॥ ३८
ले: शरीरान्तर्दमयन्तीवृतस्य ते । ईर्ष्यया प्राविशं तेन भ्रष्टा द्यूतेन ते श्रियः ॥ ३८
दशता तेन कार्कोटेन तदा वने । न दग्धस्त्वमहं त्वेष पश्य दग्धस्त्वयि स्थितः ॥ ३८
परापकारो हि कृतः स्यात्कस्य शर्मणे । तद्गच्छाम्यवकाशो हि नास्त्यन्येषु न वत्स मे ॥ ३८
ा स कलिस्तस्य तिरोऽभूत्सोऽपि तत्क्षणम् । जातधर्ममतिः प्राप्ततेजाः प्राग्वदभून्नलः ॥ ३८
चारुह्य रथं तस्मिन्नेवाह्नि तं जवात् । विदर्भानृतुपर्णं तं प्रापयामास भूपतिम् ॥ ३८
हस्यमानोऽत्र पृष्टागमनकारणैः । ऋतुपर्णो जनै राजगृहासन्ने समावसत् ॥ ३८
तत्र बुद्ध्वा सा श्रुताश्चर्यरथस्वना । दमयन्ती जहर्षान्तः संभावितनलागमा ॥ ३९
ाथ सा तत्त्वमन्वेष्टुं चेटिकां निजाम् । सा चान्विष्यागता चेटी तामुवाच प्रियोत्सुकाम् ॥ ३९
त्वा मयान्विष्टमेष यः कोशलेश्वरः । स्वयंवरप्रवादं ते मिथ्या श्रुत्वा किलागतः ॥ ३९
। रथवाहेन सूदेन ह्रस्वबाहुना । एकेनैव दिनेनाद्य रथविज्ञानशालिना ॥ ३९
ात्सूदशालायां गत्वा सूदो मयेक्षितः । कृष्णवर्णो विरूपश्च प्रभावः कोऽपि तस्य तु ॥ ३९
ेव यत्तस्य पानीयं चरुपूद्गतम् । काष्ठान्यनर्पिताग्नीनि स्वयं प्रज्वलितानि च ॥ ३९
भोजनैस्तैस्तैर्निष्पन्नं दिव्यमेव च । एतद्दृष्ट्वा महाश्चर्यं ततश्चाहमिहागता ॥ ३९
मुखाच्छ्रुत्वा दमयन्ती व्यचिन्तयत् । वह्न्याग्निवरुणः सूदो रथविद्यारहस्यवित् ॥ ३९
ो भवत्येष गतो वैरूप्यमन्यथा । जाने मद्विप्रयोगार्त जिज्ञासेऽहं तदप्यमुम् ॥ ३९
कल्प्य युक्त्या स्वौ सह चेट्या तयैव सा । तस्यान्तिकं दर्शयितुं प्राहिणोद्दारकावुभौ ॥ ३९
निजशिशू दृष्ट्वा कृत्वा चाङ्के नलश्चिरम् । बद्धधाराप्रवाहेण तूष्णीमरुददश्रुणा ॥ ४०
ाव मे बालौ मातामहगृहे स्थितौ । जातं मे तत्स्मृतेर्दुःखमित्युवाच च चेटिकाम् ॥ ४०
शुभ्यां सहागत्य चेटी सर्वं शशंस तत् । दमयन्त्यै ततः सापि जातास्था सुतरामभूत् ॥ ४०
श्च तां प्रातः स्वचेटीमादिदेश सा । गत्वा तमृतुपर्णस्य सूदं मद्वचनाद्वद ॥ ४०
या यद्भवता तुल्यो नान्योऽस्ति सूपकृत् । तन्ममाद्य त्वयागत्य व्यञ्जनं साध्यतामिति ॥ ४०
स तदा गत्वा नलश्चेट्या तयार्थितः । ऋतुपर्णमनुज्ञाप्य दमयन्तीमुपाययौ ॥ ४०
। [illegible] मां [illegible]वाच सा ॥ ४०

स एवास्मि नलः सत्यं पापः कुलिशकर्कशः । त्वां संतापयता येन व्यामाह्लादनलायतम् ॥
इत्युक्तवान्स पृष्टोऽभूद्दमयन्त्या तया नलः । यद्येवं तर्ह्यरूपत्वं कथं प्राप्तो भवानिति ॥
ततः स तस्यै स्वोदन्तं नलः कृत्स्नमवर्णयत् । कार्कोटसख्यादारभ्य कलिनिर्गमनावधिम् ॥
तदैव चाग्निशौचं तद्दत्तं कार्कोटकेन सः । प्रावृत्य वस्त्रयुगलं रूपं स्वं प्रत्यपद्यत ॥

दृष्ट्वा नलं पुनरवाप्तनिजाभिरामरूपं तमाशु विकसद्वदनारविन्दा ।
नेत्राम्बुभिः शमितदुःखदवानलेव हर्षं कमप्यनुपमं दमयन्त्यवाप ॥
बुद्ध्वा च तत्परिजनात्प्रमदप्रवृत्तादागत्य तत्र सहसा स विदर्भराजः ।
भीमो नलं समभिनन्द्य कृतानुरूपपूजं महोत्सवमयं स्वपुरं चकार ॥

हसता हृदि भीमभूभुजा कृतसंवृत्त्युपचारसत्क्रियः ।
ऋतुपर्णनृपोऽपि तं नलं प्रतिपूज्याथ जगाम कोशलान् ॥
अथ निषधनरेश्वरो निजं कलिदौरात्म्यविजृम्भितं नलः ।
श्वशुराय स तत्र वर्णयन्नवसत्प्राणसमासखः सुखम् ॥
गत्वाल्पैश्च दिनैस्ततः स निषधान्सैन्यैः सह श्वाशुरै-
रक्षज्ञानजितं विधाय विनतं तं पुष्कराख्यं पुनः ।
धर्मात्मा कृतसंविभागमनुजं देहाद्गतद्वापरं
राज्यं स्वं दमयन्त्यवाप्तिसुखितो भेजे यथावन्नलः ॥
इति स व्याख्याय कथां नगरे तारापुरे द्विजः सुमनाः ।
राजसुतां बन्धुमतीं प्रोषितपतिकामुवाच तां भूयः ॥
एवं देवि महान्तो विषह्य दुःखं भजन्ति कल्याणम् ।
अनुभूयास्तमनं किल दिनकृत्प्रमुखा व्रजन्त्युदयम् ॥
तस्मात्त्वमपि तमाप्स्यसि पतिमनघे प्रोषितागतं न चिरात् ।
कुरु धृतिमरतिं परिहर विहर च पतिकामनालाभैः ॥

इति तं द्विजमुक्तयुक्तवाक्यं बहुनाभ्यर्च्य धनेन सद्गुणं सा ।
अवलम्ब्य धृतिं प्रतीक्षमाणा दयितं बन्धुमती स्वमत्र तस्थौ ॥

अल्पैरेव च तस्या दिनैः स पतिराययौ महीपालः ।
देशान्तरे स्थितां तां जननीमादाय पितृसहितः ॥
आगत्य चामृतांशुः पार्वण इव वारिराशिजललक्ष्मीम् ।
जननयनोत्सवदायी बन्धुमतीं नन्दयामास ॥
अथ तत्र तया सहितस्तत्पित्रा पूर्वदत्तराज्यधुरः ।
स महीपालो बुभुजे राजा सन्नीप्सितान्भोगान् ॥

इत्यात्ममन्त्रिमरुभूतिमुखान्निशम्य चित्रां कथामनुपमामनुरागरम्याम् ।
रामासखः स नरवाहनदत्तदेवो वत्सेश्वरस्य तनयो भृशमभ्यतुष्यत् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरेऽलंकारवतीलम्बके षष्ठस्तरङ्गः ।

**समाप्तश्चायमलंकारवतीलम्बको नवमः ।**

## महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।



### शक्तियशो नाम दशमो लम्बकः ।



इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

प्रथमस्तरङ्गः ।

यं रिपुभिर्वारणीयं करं नुमः । हेरम्बस्य ससिन्दूरमसिं दूरमघच्छिदम् ॥
पुरदाहाय शंभोः संदधतः शरम् । समं व्यग्रेषु नेत्रेषु तृतीयमधिकं स्फुरत् ॥
ा नृसिंहस्य कुटिला विद्विषो वधे । नखश्रेणी च दृष्टिश्च निहन्तुं दुरितानि वः ॥
ेश्वरसुतः कौशाम्ब्यां सचिवैः सह । नरवाहनदत्तः स तस्थौ भार्यासखः सुखी ॥
वास्थिते तस्मिन्नास्थानस्थस्य तत्पितुः । वत्सेश्वरस्य विज्ञप्त्यै तद्वासी वणिगाययौ ॥
त्तनामा तं प्रतीहारनिवेदितः । प्रविश्य नत्वा राजानं वणिगेवं व्यजिज्ञपत् ॥
सुधरो देव दरिद्रोऽस्तीह भारिकः । अकस्माच्च ददत्खादन्पिबंश्चाद्य स दृश्यते ॥
च गृहं नीत्वा यथेष्टं पानभोजनम् । दत्त्वा स क्षीबतां नीत्वा मया पृष्टोऽब्रवीदिदम् ॥
जकुलद्वारात्सरत्नं कटकं मया । उत्पाट्य रत्नमेकं च ततो विक्रीतवानहम् ॥
नारलक्षेण मूल्येन वणिजो मया । दत्तं हिरण्यगुप्तस्य तेनाद्याहं सुखं स्थितः ॥
ा दर्शितं तेन देवनामाङ्कितं मम । कटकं यत्ततो देव विज्ञप्तोऽद्य मया प्रभुः ॥
वा स वत्सेशस्तत्रानाययति स्म तौ । भारिकं तं सवलयं सरत्नं वाणिजं च तम् ॥
तं प्रकोष्ठान्मे भ्रष्टमेतत्पुरभ्रमे । इति तत्कटकं दृष्ट्वा स राजाभिदधे स्वयम् ॥
राजनामाङ्कं लब्ध्वा किं कटकं त्वया । इति पृष्टोऽथ सभ्यैः स राजाग्रे भारिकोऽभ्यधात् ॥
री कुतो वेद्मि राजनामाक्षराण्यहम् । दारिद्र्यदुःखदग्धेन लब्ध्वैतत्स्वीकृतं मया ॥
तेन रत्नार्थमाक्षिप्तः सोऽब्रवीद्वणिक् । प्रसह्य(?)मूल्येन मया गृहीतं रत्नमापणे ॥
राजाभिज्ञानमस्ति तन्मय(?)मुच्यते । मूल्यात्पञ्चसहस्री तु नीतानेन परं स्थितम् ॥
ण्यगुप्तस्य वचो यौगन्धरायणः । श्रुत्वा तत्र स्थितोऽवादीन्नात्र दोषोऽस्ति कस्यचित् ॥
ालिपिज्ञस्य भण्यतां भारिकस्य किम् । दारिद्र्यात्क्रियते चौर्यं लब्धं केनोज्झितं पुनः ॥
रत्नग्राही च न वाच्यो वणिगप्यसौ । एतन्महामन्त्रिवचो वत्सेशः श्रद्दधे तदा ॥
पञ्चसहस्रीं च भारिकेण व्ययीकृताम् । हिरण्यगुप्ताद्वणिजो रत्नं तस्मात्स्वमाददे ॥
चाकरोन्मुक्तं गृहीत्वा कटकं निजम् । मुक्तपञ्चसहस्रीको गतभीः सोऽप्यगाद्गृहम् ॥
ाघाती पापोऽयमिति चान्तर्द्विषन्नृपः । रत्नदत्तं स वणिजं कार्यार्थं तममानयत् ॥

गतेषु तेषु राजाग्रगतोऽवोचद्वसन्तकः । अहो देवाभिशप्तानां प्राप्तोऽप्यर्थः पलायते ॥
अस्य भद्रघटोदन्तः संवृत्तो भारिकस्य यत् । तथाहि कश्चिदासीत्प्राक्पुरे पाटलिपुत्रके ॥
शुभदत्तः स नाम्ना च प्रत्यहं काष्ठभारकम् । वनादानीय विक्रीय पुष्णाति स्म कुटुम्बकम् ॥
एकदा चागतो दूरं वनं दैवाद्ददर्श सः । तत्रस्थांश्चतुरो यक्षान्दिव्याभरणवाससः ॥
ते भीतं वीक्ष्य तं प्रीत्या सर्वे पृष्ट्वा यथातथम् । बुद्ध्वा दरिद्रमुत्पन्नकृपा यक्षा बभाषिरे ॥
इहास्मदन्तिके तिष्ठ भद्र कर्मकरो भवन् । अक्लेशं गृहनिर्वाहं करिष्यामो वयं तव ॥
इत्युक्तस्तैस्तथेत्यासीच्छुभदत्तस्तदन्तिके । स्नानादिपरिचर्यां च कृत्स्नां तेषां चकार सः ॥
संजाते भोजनस्थाने यक्षास्ते जगदुश्च तम् । आहारमस्मानमुतो देहि भद्रघटादिति ॥
अन्तःशून्यं स तं दृष्ट्वा घटं यावद्विलम्बते । तावत्ते गुह्यका भूयस्तमाहुः सस्मिताननाः ॥
शुभदत्त न वेत्सि त्वं क्षिप हस्तं घटान्तरे । यथेष्टं लप्स्यसे सर्वं घटः कामप्रदो ह्यसौ ॥
तच्छ्रुत्वा प्रक्षिपत्यन्तः पाणिं यावद्घटान्तरे । तावदाहारपानादि कामितं दृष्टवानसौ ॥
.................................... । शुभदत्तो ददौ तेभ्यो बुभुजे च स्वयं ततः ॥
एवं परिचरन्यक्षान्भक्त्या भीत्या च सोऽन्वहम् । तस्थौ कुटुम्बचिन्तार्तः शुभदत्तस्तदन्तिके ॥
तत्कुटुम्बं च दुःखार्तं स्वप्नादेशेन गुह्यकैः । आश्वासितं तत्प्रसादाद्रमते स्म ततश्च सः ॥
मासमात्रेण यक्षास्ते शुभदत्तं तमभ्यधुः । तुष्टाः स्मस्तेऽनया भक्त्या ब्रूहि किंचिद्ददाम ते ॥
तच्छ्रुत्वा स जगादैतांस्तुष्टाः स्थ यदि सत्यतः । एष भद्रघटस्तन्मे युष्माभिर्दीयतामिति ॥
ततस्तमूचुर्यक्षास्ते नैतं शक्ष्यसि रक्षितुम् । भङ्गे पलायते ह्येष तद्वृणीष्वापरं वरम् ॥
इत्युक्तोऽपि स यक्षैस्तैः शुभदत्तोऽपरं यदा । वरं नैच्छत्तदा तस्मै ते तं भद्रघटं ददुः ॥
ततः प्रणम्य तान्हृष्टो घटमादाय तं जवात् । गृहं स शुभदत्तः स्वं प्राप नन्दितबान्धवः ॥
तत्र तस्माद्घटाल्लब्ध्वा भोजनादि निवेश्य तत् । गुप्त्यर्थमन्यभाण्डेषु सोऽभुङ्क्त स्वजनैः सह ॥
भारमुक्तो भजन्भोगान्पानमत्तोऽथ जातु सः । कुतस्तवैषा भोगश्रीरित्यपृच्छ्यत बन्धुभिः ॥
स व्यक्तमब्रुवन्मूढो गर्वेणेप्सितकामदम् । गृहीत्वा घटकं स्कन्धे प्रारेभे बत नर्तितुम् ॥
नृत्यतस्तस्य च स्कन्धान्मदोद्रेकस्खलद्गतेः । स भद्रघटको यातः पतित्वा भुवि खण्डशः ॥
तदैव चाक्षतीभूय स जगाम यथागतम् । पूर्वावस्थां च स प्राप शुभदत्तो विषादवान् ॥
तदेवं पानदोषादिप्रमादाहतबुद्धयः । अभव्याः प्राप्तमप्यर्थं नैव जानन्ति रक्षितुम् ॥
इति भद्रघटाख्यानहासं श्रुत्वा वसन्तकात् । उत्थाय चक्रे वत्सेशः स्नानाहारादिकाः क्रियाः ॥
नरवाहनदत्तोऽपि स्नात्वा भुक्त्वान्तिके पितुः । दिनान्ते सखिभिः साकं जगाम भवनं निजम्
तत्र रात्रावनिद्रं तं शयनीयगतं सुहृत् । शृण्वत्सु सचिवेष्वेतेष्ववोचन्मरुभूतिकः ॥
दासीसङ्गेच्छया देव जाने नान्तःपुरं त्वया । आहूतं सापि नाहूता तेन निद्राद्य नास्ति ते ॥
तत्किमद्यापि वेश्यासु जानन्नप्यनुरज्यसे । नह्यासां चास्ति सद्भावस्तथा चैतां कथां शृणु ॥
अस्तीह चित्रकूटाख्यमृद्धिमन्नगरं महत् । तत्राभूद्रत्नवर्माख्यो महाधनपतिर्वणिक् ॥
ईश्वराराधनादेकस्तस्य सूनुरजायत । अतश्चेश्वरवर्माणं नाम्ना चक्रे स तं सुखम् ॥
अधीतविद्यमासन्नयौवनं वीक्ष्य तं च सः । एकपुत्रो वणिङ्मुख्यो रत्नवर्मा व्यचिन्तयत् ॥
रूपिणी कुसृतिः सृष्टा धनप्राणापहारिणी । आढ्यानां यौवनान्धानां वेश्या नामेह वेधसा ॥
तदर्पयामि कुट्टन्याः कस्याश्चिदमुमात्मजम् । वेश्याव्याजोपशिक्षार्थं येन ताभिर्न वञ्च्यते ॥
इत्यालोच्य स पुत्रेण सहैवेश्वरवर्मणा । यमजिह्वाभिधानायाः कुट्टन्याः सदनं ययौ ॥
तत्र स्थूलहनुं दीर्घदशनां भग्ननासिकाम् । शिक्षयन्तीं दुहितरं कुट्टनीं तां ददर्श सः ॥

न सा पूर्वं दुह्याद्रक्तं ततो धनम् । दुग्धार्थं च त्यजेदन्ते प्राप्तार्थं पुनराहरेत् ॥ ६
ने शिशौ वृद्धे विरूपे रूपवत्यपि । वेश्याजनो यो मुनिवत्स चार्थे परमश्रुते ॥ ६
णां दुहितुस्तामुपागात्स कुट्टनीम् । रत्नवर्मा कृतातिथ्यस्तया च समुपाविशत् ॥ ६
ं च पुत्रो मे त्वयार्ये शिक्ष्यतामयम् । वेशयोषित्कला येन वैदग्ध्यं प्राप्नुयादसौ ॥ ६
ां सहस्रं च निष्क्रयं ते ददाम्यहम् । तच्छ्रुत्वा तस्य कामं तं प्रतिपेदे तथेति सा ॥ ६
ीर्य दीनारान्पुत्रं तस्यै समर्प्य च । स तमीश्वरवर्माणं रत्नवर्मा ययौ गृहम् ॥ ६
रवर्मा स यमजिह्वागृहे कलाः । वर्षेणैकेन शिक्षित्वा पितुस्तस्य गृहं ययौ ॥ ६
शवर्षश्च पितरं तमुवाच सः । अर्थाद्धि धर्मकामौ नः पूजार्थादर्थतः प्रथा ॥ ७
त्रते तस्मै श्रद्धाय स तथेति तत् । पञ्चानां द्रव्यकोटीनां भाण्डं प्रीतो ददौ पिता ॥ ७
वणिक्पुत्रः ससार्थः स शुभेऽहनि । प्रायादीश्वरवर्माथ स्वर्णद्वीपाभिवाञ्छया ॥ ७
मात्पथि प्राप स काञ्चनपुराभिधम् । नगरं तत्र चासन्नबाह्योद्याने समावसत् ॥ ७
ानुलिप्तश्च प्रविश्य नगरेऽत्र सः । युवा प्रेक्षणकं द्रष्टुमेकं देवकुलं ययौ ॥ ७
त्र नृत्यन्तीं सुन्दरीं नाम लासिकीम् । तारुण्यवातोच्छलितां रूपाब्धेर्लहरीमिव ॥ ७
ं तदा सोऽभूत्तदेकगतमानसः । कुद्धेव कुट्टनीशिक्षा दूरे तस्याभवद्यथा ॥ ७
ष्य नृत्तान्ते प्रार्थयामास तां च सः । धन्यास्मीति वदन्ती च प्रह्वा साप्यन्वमन्यत ॥ ७
त्वा निवासे स्वे निपुणान्भाण्डरक्षिणः । तस्या ईश्वरवर्मासौ सुन्दर्या वसतिं ययौ ॥ ७
करकट्याख्या तन्माता तमुपागतम् । अमानयद्गृहाचारैस्तैस्तैस्तत्समयोचितैः ॥ ७
ने वासगृहं स्फुरद्रत्नवितानकम् । न्यस्तपर्यङ्कशयनं प्रावेशयत तया च सः ॥ ८
त सुन्दर्या तयानुमतया सह । विचित्रकरणे नृत्ते सुरते च विदग्धया ॥ ८
ातरागां तां पार्श्वादनपगामिनीम् । दृष्ट्वा द्वितीयेऽह्नि ततो निर्गन्तुं नाशकच्च सः ॥ ८
हेमरत्नादिलक्षाणां पञ्चविंशतिम् । तस्यै दिनद्वये तस्मिन्सुन्दर्यै स वणिग्युवा ॥
ा धनं भूरि नाहं प्राप्ता भवादृशम् । स एव चेन्मया प्राप्तः किं धनेन करोम्यहम् ॥
ानुबन्धेन सुन्दरीं तदगृह्णतीम् । माता मकरकट्येवमेकापत्यैव साह ताम् ॥
ास्मदीयं यत्तदस्यैव स्वकं धनम् । तन्मध्ये स्थापयित्वा तद्गृह्यतां पुत्रि का क्षतिः ॥
सुन्दरी मात्रा कृच्छ्रादिव तदग्रहीत् । मेने चेश्वरवर्मा तां मूढः सत्यानुरागिणीम् ॥
रूपेण नृत्तेन गीतेन च हृतात्मनः । वणिजोऽत्र स्थितस्याथ तस्य मासद्वयं ययौ ॥
तस्यै सुन्दर्यै कोट्यौ द्वे स ददौ क्रमात् । अथोपेत्यार्थदत्ताख्यः सखा स्वैरमुवाच तम् ॥
कुट्टनीशिक्षा सा यत्नोपार्जितापि ते । कातरस्यास्त्रविद्येव निष्फलावसरे गता ॥
मणि सद्भावो यदस्मिन्बुध्यते त्वया । सत्यं भवति किं जातु जलं मरुमरीचिषु ॥
क्षीयते यावदिहैव न धनं तव । तावद्व्रजामो बुद्ध्वा हि क्षमेतत्तैत्पिता न ते ॥
तेन मित्रेण वणिक्पुत्रो जगाद सः । सत्यं न वेश्यास्वाश्वासः सुन्दरी तु न तादृशी ॥
मामपश्यन्ती मुञ्चेत्प्राणानसौ सखे । तद्गत्वा बोधयस्वेतां गन्तव्यं यदि सर्वथा ॥
: स तेनार्थदत्तस्तस्यैव संनिधौ । मातुर्मकरकट्याश्च सुन्दरीमवदत्ततः ॥
वदसामान्या प्रीतिरीश्वरवर्मणि । गन्तव्यं चाधुनावश्यं स्वर्णद्वीपं वणिज्यया ॥
ास्यत्ययं लक्ष्मीं ययागत्य त्वदन्तिके । यावत्कालं सुखं स्थास्यत्यनुमन्यस्व तत्सखि ॥
ा साश्रुनयना पश्यन्तीश्वरवर्मणः । मुखं कृतविषादा सा सुन्दरी च तमभ्यधात् ॥
ानीत किमहं वच्म्यन्तमनवेक्ष्य कः । कस्य प्रत्येति तदलं यद्विधत्तां विधिर्मम ॥

इति माता किलाश्वास्य कृतसंवित्तया सह । मार्गाग्रे गुप्तमेकस्मिन्कूपे जालमकारयत् ॥
तदा चेश्वरवर्माभूत्तद्दोलारूढमानसः । शुचेवाल्पाल्पमाहारपानं चक्रे च सुन्दरी ॥
गीतवादित्रनृत्तेषु न बबन्ध रतिं च सा । आश्वास्यते स्म प्रणयैस्तैस्तैरीश्वरवर्मणा ॥
ततो दिने वयस्योक्ते सुन्दरीमन्दिरात्ततः । चचालेश्वरवर्मा स कुट्टनीकृतमङ्गलः ॥
अनुवव्राज सोदश्रुः सुन्दरी तं समातृका । नगराद्बहिरा कूपाद्गुप्तान्तर्जालकात्ततः ॥
ततो निवर्त्य यावच्च सुन्दरीं तां प्रयाति सः । तावदात्मा तया कूपे जालपृष्ठे निचिक्षिपे ॥
हा हा स्वामिनि हा पुत्रीत्याक्रन्दः सुमहांस्ततः । दासीनां भृत्यवर्गस्य तन्मातुश्चात्र शुश्रुवे ॥
तेन प्रतिनिवृत्त्यैव समित्रः स वणिक्सुतः । कूपे क्षिप्ततनुं कान्तां बुद्ध्वा मोहमगात्क्षणम् ॥
सप्रलापं च शोचन्ती तस्मिन्मकरकट्यथ । स्वानवातारयद्भृत्यान्कूपे स्निग्धान्ससंविदः ॥
रज्जुभिस्तेऽवतीर्यैव दिष्ट्या जीवति जीवति । इत्युक्त्वा तां ततः कूपादुत्क्षिपन्ति स्म सुन्दरीम् ॥
उत्क्षिप्ता मृतकल्पं सा कृत्वात्मानं निवेदितम् । प्रत्यागतं वणिक्पुत्रमालापं शनकैर्ददौ ॥
समाश्वस्तां समादाय हृष्टस्तां सानुगः प्रियाम् । आगादीश्वरवर्मासौ प्रत्यावृत्त्यैव तद्गृहम् ॥
निश्चित्य सुन्दरीप्रेमप्रत्ययं जन्मनः फलम् । तत्प्राप्तिमेव मत्वा स यात्राबुद्धिं पुनर्जहौ ॥
ततो बद्धस्थितिं तत्र सोऽर्थदत्तः सखा पुनः । तमभ्यधात्सखे मोहात्किमात्मा नाशितस्त्वया ।
मा भूत्ते सुन्दरीस्नेहप्रत्ययः कूपपाततः । अतर्क्या कुट्टनीकूटरचना हि विधेरपि ॥
पितुश्च क्षपितार्थः किं वक्ष्यसे यास्यसि क्व वा । तदितोऽद्यापि निर्याहि कल्याणे चेन्मतिस्तव
एतत्तस्य वचः सख्युरवधीर्य वणिग्युवा । मासेनान्यव्ययीचक्रे तत्र कोटित्रयं स तत् ॥
ततो हृतस्वो दत्तार्धचन्द्रकः सुन्दरीगृहात् । तया मकरकट्याथ कुट्टन्या निरवास्यत ॥
अर्थदत्तादयस्ते च गत्वा स्वनगरं द्रुतम् । तत्पित्रे तत्समाचख्युर्यथावृत्तमशेषतः ॥
स तत्पिता रत्नवर्मा तद्बुद्ध्वा दुःखितो भृशम् । कुट्टनीं यमजिह्वां तां गत्वावोचद्वणिक्पतिः ॥
गृहीत्वा मूल्यमीदृक्स त्वया मे शिक्षितः सुतः । हृतं मकरकट्या यत्सर्वस्वं तस्य हेलया ॥
इत्युक्त्वा पुत्रवृत्तान्तं तस्यै स तमवर्णयत् । ततः सा यमजिह्वा तं वृद्धकुट्टन्यभाषत ॥
आनाययेह पुत्रं ते करिष्यामि तथा यथा । तस्या मकरकट्यास्तत्सर्वस्वं स हरिष्यति ॥
एवं तया प्रतिज्ञाते कुट्टन्या यमजिह्वया । तदैव शीघ्रं संदिश्य वृत्त्या दानपुरःसरम् ॥
रत्नवर्मा ततस्तस्य पुत्रस्यानयनाय सः । तन्मित्रमर्थदत्तं च प्रजिघाय हितैषिणम् ॥
अर्थदत्तः स गत्वा च तत्काञ्चनपुरं पुरम् । तस्मै तं सर्वसंदेशं शशंसेश्वरवर्मणे ॥
पुनस्तं चाब्रवीन्मित्र नाकार्षीस्त्वं वचो हि मे । तदद्य वेश्यासद्भावो दृष्टः प्रत्यक्षतस्त्वया ॥
अर्धचन्द्रस्त्वया प्राप्तो दत्त्वा तत्कोटिपञ्चकम् । कः प्राज्ञो वाञ्छति स्नेहं वेश्यासु सिकतासु
किमुच्यते वा भवतो वस्तुधर्मोऽयमीदृशः । तावद्विदग्धो वीरश्च नरो भागी शुभस्य च ॥
यावत्पतति नैवासौ रामाविभ्रमभूमिषु । तदागच्छ पितुः पार्श्वं मन्युप्रतिकृतिं कुरु ॥
इत्युक्त्वा सोऽर्थदत्तेन तेनानीयत सत्वरम् । आश्वास्येश्वरवर्मासौ पितुः पार्श्वमुपागतः ॥
पित्रा चैकसुतस्नेहात्सान्त्वयित्वैव तेन सः । नीतोऽभूद्यमजिह्वायाः कुट्टन्या निकटं पुनः ॥
पृष्टश्चात्र तयाचख्यौ सोऽर्थदत्तमुखेन तम् । स्वोदन्तं सुन्दरीकूपनिपातान्तं धनक्षयम् ॥
यमजिह्वा ततोऽवादीदहमेवापराधिनी । यद्विस्मृत्य मया मायामेतामेष न शिक्षितः ॥
कूपे मकरकट्या हि जालमन्तर्न्यबध्यत । तत्पृष्ठे सुन्दरी देहमक्षिपत्तन्न ममार यत् ॥
तदत्रास्ति प्रतीकार इत्युक्त्वा सापि कुट्टनी । आनाययत्स्वदासीभिरालं नाम स्वमर्कटम् ॥

प्रदश्यता यमजिह्वाग्रवात्पुनः । गृहाणेश्वरवर्मस्त्वमेव मर्कटमाचितम् ॥ १४
दरीवेश्म प्राग्वद्गत्वा दिने दिने । एवं गुप्तनिगीर्णास्तान्मृगयस्वामुतो व्यये ॥ १४
तामणिप्रख्यं सैतमालं च सुन्दरी । दत्त्वा ते प्रार्थ्य सर्वस्वं कपिमेकं ग्रहीष्यति ॥ १४
नो दत्त्वा निगीर्णाहृद्व्यव्ययम् । इमं तस्यै ततो दूरं यायास्त्वमविलम्बितम् ॥ १४
यमजिह्वा तत्तस्मायीश्वरवर्मणे । मर्कटं तं ददौ भाण्डं पिता कोटिद्वयस्य च ॥ १४
। स प्रायात्तत्काञ्चनपुरं पुनः । सृष्टाग्रदूतः सुन्दर्या तद्गृहं प्रविवेश च ॥ १४
धनसर्वस्वं निर्बन्धमिव सुन्दरी । अभ्यनन्दत्तसुहृदं कण्ठाश्लेषादिसंभ्रमैः ॥ १४
रवर्माथ तत्समक्षं क्षणान्तरे । आलमानय गत्वेति सोऽर्थदत्तमभाषत ॥ १४
। गत्वा च समानीयत मर्कटः । निगीर्णपूर्वदीनारसहस्रं स जगाद तम् ॥ १४
प्रयच्छाद्य दीनाराणां शतत्रयम् । आहारपानस्य कृते ताम्बूलादिव्यये शतम् ॥ १४
कुट्ट्यै च देह्यम्बायै द्विजातिषु । शतं शेषं सहस्राद्यत्सुन्दर्यै तत्समर्पय ॥ १५
वर्मोक्तो मर्कटः स तथैव तान् । उद्गीर्योद्गीर्य दीनारान्प्राङ्निगीर्णान्व्ययेष्वदात् ॥ १५
ग्रानया नित्यं यावदीश्वरवर्मणा । आलो व्ययेषु दीनारान्दाप्यते पक्षमात्रकम् ॥ १५
रकुट्येवं सुन्दरी च व्यचिन्तयत् । अहो चिन्तामणिरयं सिद्धोऽस्य कपिरूपधृत् ॥ १५
सहस्रं यो दीनाराणां प्रयच्छति । एषोऽमुना चेदस्माकं दत्तः सिद्धं मनोरथैः ॥ १५
य समं मात्रा विजनेऽर्थयते स्म तम् । सुन्दरीश्वरवर्माणं भुक्तोत्तरसुखस्थितम् ॥ १५
यि सत्यं चेदालमेतं प्रयच्छ मे । तच्छ्रुत्वेश्वरवर्मा तं निजगाद हसन्निव ॥ १५
स्य सर्वस्वं तच्च दातुं न युज्यते । इत्यूचिवांसं च पुनः सुन्दरी तमुवाच सा ॥ १५
श्वकोटीर्वस्तदयं दीयतामिति । ततं ईश्वरवर्मा च निश्चित्यैव जगाद तम् ॥ १५
प्रदि सर्वस्वमिदं वा नगरं मम । तथापि युज्यते नैष दातुं किमिति कोटिभिः ॥ १५
न्दरी स्माह सर्वस्वं ते ददाम्यहम् । देह्येतं मर्कटं मह्यमम्बा कुप्यतु नाम मे ॥ १६
सुन्दरी पादौ जग्राहेश्वरवर्मणः । ऊचुस्ततोऽर्थदत्ताद्या दीयतां यद्भवत्विति ॥ १६
वर्मा तं तथा दातुममन्यत । अनयत्सह सुन्दर्या दिनं तच्च प्रहृष्टया ॥ १६
यर्थमानायै सुन्दर्यै मर्कटं स तम् । निगीर्णगुप्तदीनारसहस्रद्वितयं ददौ ॥ १६
गृहसर्वस्वं तस्याश्चादाय तत्क्षणम् । ततः प्रायाद्द्रुतं चागात्स्वर्णद्वीपं वणिज्यया ॥ १६
। प्रहृष्टायै ददावालो दिनद्वयम् । स सहस्रं सहस्रं तान्दीनारान्याचितः कपिः ॥ १६
यसकृत्प्रीत्या याच्यमानोऽप्यसौ यदा । नादात्किंचित्तदा मुष्ट्या सुन्दरी तमताडयत् ॥ १६
तः क्रुधोत्पत्य मर्कटो दशनैर्नखैः । सुन्दर्यास्तज्जनन्याश्च घ्नन्त्योः पाटितवान्मुखम् ॥ १६
ननी सा तं स्रवद्रक्तमुखी क्रुधा । लगुडैस्ताडयामास तेनालोऽत्र ममार सः ॥ १६
ीक्ष्य सर्वस्वं नष्टमालोच्य दुःखिता । प्राणत्यागोद्यता साभूज्जनन्या सह सुन्दरी ॥ १६
करकुट्या तत्कृता यस्य हृतं धनम् । आलं कृत्वाद्य तेनास्याः सर्वस्वं सुधिया हृतम् ॥ १७
य कृतं जालमालं ज्ञातं तु नात्मनः । इत्युवाचात्र विज्ञातवृत्तान्तो विहसञ्जनः ॥ १७
सुन्दरी कृच्छ्राद्देहत्यागान्न्यवर्त्यत । स्वजनैर्जननीयुक्ता नष्टार्था पाटितानना ॥ १७
तताधिकश्रीकः स्वर्णद्वीपात्ततोऽचिरात् । आगादीश्वरवर्मा तच्चित्रकूटे पितुर्गृहम् ॥ १७

तमुपागतमर्जितामितार्थं सुतमालोक्य पिता च रत्नवर्मा ।
अभिपूज्य स कुट्टनीं धनेन यमजिह्वां सुमहोत्सवं चकार ॥ १७
स च विदितातुलमायो विरक्तचेता विलासिनीसङ्गे ।
आसीदीश्वरवर्मा ततोऽत्र कृतदारसंग्रहः स्वगृहे ॥ १७

इति मरुभूतिवदनाच्छ्रुत्वा स यथावद्गोमुखकथाम् ।
नरवाहनदत्तस्तच्छ्लाघ्य जहास गोमुखादियुतः ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शक्तियशोलम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

सद्भावे कथिते मरुभूतिना । आचख्यौ गोमुखो धीमांस्तद्वत्कुमुदिकाकथाम् ॥
सिंहाख्यः प्रतिष्ठाने महीपतिः । व्यधायि विधिनान्वर्थो यः सिंह इव विक्रमे ॥
सुभगा नदीनप्रभवा प्रिया । अलंकारतनुर्देवी शशिलेखेति चाभवत् ॥
नगरे स्थितं संभूय गोत्रजाः । पञ्चषा गृहमागत्य राजानं पर्यवेष्टयन् ॥
रबाहुः सुबाहुः सुभटस्तथा । नृपः प्रतापादित्यश्च सर्वेऽप्येते महाबलाः ॥
ः युञ्जानं निराकृत्य स्वमन्त्रिणम् । राजा विक्रमसिंहोऽसौ युद्धायैषां विनिर्ययौ ॥
ंपाते स नृपः सैन्ययोर्द्वयोः । शौर्यदर्पाद्गजारूढः प्रविवेशाहवं स्वयम् ॥
दृष्ट्वा तं दलयन्तं द्विषच्चमूम् । महाभटाद्याः पञ्चापि राजानोऽभ्यपतन्समम् ॥
मं भूयस्यखिलेऽप्यभिधावति । बलं विक्रमसिंहस्य तदतुल्यमभज्यत ॥
णाख्यस्तं मन्त्री पार्श्वस्थितोऽब्रवीत् । भग्नमस्मद्बलं तावज्जयो नास्तीह सांप्रतम् ॥
कृतश्चायं बलवद्विग्रहस्त्वया । तच्छिवायाधुनापीदं मदीयं वचनं कुरु ॥
पादस्मादारुह्य च तुरङ्गमम् । एह्यन्यविषयं यावो जीवञ्जेतास्यरीन्पुनः ॥
ारा स्वैरमवतीर्य स वारणात् । हयारूढः समं तेन स्वबलान्निर्ययौ पुनः ॥
च्छन्नः सन्सहितस्तेन मन्त्रिणा । राजा विक्रमसिंहोऽसौ क्रमादुज्जयिनीं पुरीम् ॥
ेकाख्यायाः प्रख्यातवसुसंपदः । मन्त्रिद्वितीयो वसतिं विलासिन्या विवेश सः ॥
गृहायातं दृष्ट्वा सापि व्यचिन्तयत् । पुरुषातिशयः कोऽपि ममायं गृहमागतः ॥
णैश्चैष महान्राजेति सूच्यते । तन्मे यथेप्सितं सिध्येदीदृक्चेत्स्वीकृतो भवेत् ॥
तमुत्थाय स्वागतेनाभिनन्द्य च । चकार महदातिथ्यं राज्ञः कुमुदिकास्य सा ॥
जगादैनं राजानं सा क्षणान्तरे । धन्याहमद्य सुकृतं प्राक्तनं फलितं मम ॥
मागत्य यद्गृहं मे पवित्रितम् । तदनेन प्रसादेन क्रीता दासीयमस्मि ते ॥
हस्तिशतं हयानां द्वे तथायुते । मन्दिरं पूर्णरत्नं च तदायत्तमिदं तव ॥
सा कुमुदिका राजानं तमुपाचरत् । स्नानादिनोपचारेण महार्हेण समन्त्रिकम् ॥
ंदरे साकं तया तत्रार्पितस्वया । राजा विक्रमसिंहोऽसौ खिन्नस्तस्थौ यथासुखम् ॥
ाणं तस्या याचकेभ्यो ददौ च सः । न च सादर्शयत्तस्य विकारं तुष्यति स्म तु ॥
ानुरक्तेयमिति तुष्टं ततो नृपम् । तं सोऽनन्तगुणो मन्त्री रहोऽवादीत्सहस्थितः ॥
ेव सद्भावो नास्त्येव कुरुते पुनः । यत्ते कुमुदिका भक्तिं न जाने तत्र कारणम् ॥
वचः श्रुत्वा स राजा निजगाद तम् । मैवं कुमुदिका प्राणानपि मुञ्चति मत्कृते ॥
ापि तदहं प्रत्ययं दर्शयामि ते । इत्युक्त्वा तं स्वसचिवं राजा व्याजमिमं व्यधात् ।
ोकृत्य तनुं मितपानोऽल्पभोजनः । चकार मृतमात्मानं निश्चेष्टं लुठिताङ्गकम् ॥
ोप्य शिबिकां निन्ये परिजनेन सः । श्मशानं शोचतानन्तगुणे कृतकदुःखिते ॥
ाकात्कुमुदिका वार्यमाणापि बान्धवैः । आगत्य तेनैव समं समारोहच्चितोपरि ॥

...मानमस्यै येनैतदर्पितम् । बलं मित्रबलं चान्यत्प्राप्य हन्मो रिपून्रणे ॥ ३६
...व मन्त्रिण्यत्रायया पुनः । स गुप्तप्रहितश्चारः स च पृष्टोऽब्रवीदिदम् ॥ ३७
...यात्तः शशिलेखा तु लोकतः । देवी राज्ञो मृषा श्रुत्वा विपत्तिं वह्निमाविशत् ॥ ३८
...त्वा शोकाशनिहतस्तदा । हा देवि हा सतीत्यादि विललाप स भूपतिः ॥ ३९
...ज्ञाततत्त्वा कुमुदिकात्र सा । एत्य विक्रमसिंहं तमाश्वास्योवाच भूपतिम् ॥ ४०
...दिष्टं किं देवेनाधुनापि यत् । धनैर्मदीयैः सबलैः क्रियतामरिनिग्रहः ॥ ४१
... कृत्वा तद्धनैरधिकं बलम् । ययौ राजा स्वमित्रस्य राज्ञो बलवतोऽन्तिकम् ॥ ४२
...तैश्च सह गत्वा निहत्य तान् । पश्चाप्यरिनृपान्युद्धे तद्राज्यान्यप्यवाप सः ॥ ४३
...देकां सोऽब्रवीत्तां सह स्थिताम् । प्रीतोऽस्मि ते तवाभीष्टं किं करोम्युच्यतामिति ॥ ४४
...देका सत्यं तुष्टोऽसि चेत्प्रभो । तदुद्धरेदं हृच्छल्यमेकं मम चिरस्थितम् ॥ ४५
...जसुतं श्रीधरं नाम मे प्रियम् । राज्ञाल्पेनापराधेन बद्धं तस्माद्विमोचय ॥ ४६
...कल्याणमुत्तमै राजलक्षणैः । एतत्कार्यक्षमं देव भक्त्या सेवितवत्यहम् ॥ ४७
...ाश्यादारोहं त्वच्चितामपि । विफलं जीवितं मत्वा विना तं विप्रपुत्रकम् ॥ ४८
...ं स राजावोचद्विलासिनीम् । साधयिष्याम्यहं तत्ते धीरा सुवदने भव ॥ ४९
...वचनं संस्मृत्याचिन्तयच्च सः । सत्यं वेश्यास्वसद्भावः प्रोक्तोऽनन्तगुणेन मे ॥ ५०
...ैषा वराक्याः कामना मया । इति संकल्प्य सबलः स तामुज्जयिनीमगात् ॥ ५१
...त्वा तं दत्त्वा च द्रविणं बहु । व्यधात्कुमुदिकां तत्र प्रियसंगमसुस्थिताम् ॥ ५२
...नगरं मन्त्रिमन्त्रमलङ्घयन् । क्रमाद्विक्रमसिंहोऽसौ बुभुजे सकलां महीम् ॥ ५३
...प्रमगाधं वेशयोषिताम् । ............................ ॥ ५४
...थां तस्मिन्विरते तत्र गोमुखे । नरवाहनदत्ताग्रे जगादाथ तपन्तकः ॥ ५५
...स्त्रीषु चपलास्वखिलास्वपि । चिरण्टीष्वपि न ग्राह्यो वेशस्त्रीष्विव सर्वदा ॥ ५६
...दृष्टमाश्चर्यं वच्मि तच्छृणु । बलवर्माभिधानोऽभूदस्यामेव वणिक्पुरि ॥ ५७
...भार्याभूत्सा च वातायनाग्रतः । भव्यं शीलहरं नाम ददर्शैकं वणिक्सुतम् ॥ ५८
...नीय तन्मुखेनैव तत्क्षणम् । अरंस्त मदनाक्रान्ता तेन साकमलक्षिता ॥ ५९
... तेन यावत्सा रमते तथा । तावत्तत्सङ्गिनी ज्ञाता समग्रैर्भृत्यबान्धवैः ॥ ६०
...ि तां नाज्ञासीदसतीं पतिः । प्रायेण भार्यादौःशील्यं स्नेहान्धो नेक्षते जनः ॥ ६१
...स्तस्य समभूद्बलवर्मणः । तेन चान्त्यामवस्थां स क्रमात्संप्राप्तवान्वणिक् ॥ ६२
...स्मिंश्च तद्भार्या सा दिने दिने । अगादुपपतेस्तस्य निकटं स्वसखीगृहे ॥ ६३
...तिष्ठन्त्यामन्येद्युस्तत्पतिर्मृतः । अगच्छत्सा च तद्बुद्ध्वा तमापृच्छ्याशु कामुकम् ॥ ६४
... तेन पत्या सा तच्छुचा चिताम् । स्वजनैर्वार्यमाणापि शीलज्ञैः कृतनिश्चया ॥ ६५
...ैव स्त्रीचित्तस्य गतिः किल । अन्यासङ्गं च कुर्वन्ति म्रियन्ते च पतिं विना ॥ ६६
...ोक्ते क्रमाद्धरिशिखोऽभ्यधात् । अत्रापि देवदासस्य यद्वृत्तं तन्न किं श्रुतम् ॥ ६७
...साख्यो ग्रामे स ह्यभवत्पुरा । दुःशीलेति च तस्यासीन्नाम्नान्वर्थेन गेहिनी ॥ ६८
...ासक्तां विविदुः प्रातिवेशिकाः । एकदा देवदासोऽसौ कार्याद्राजकुलं ययौ ॥ ६९
...व तत्कालं तद्भार्या तद्वधैषिणी । गृहस्योपरिभूमौ तं निदधे परपूरुषम् ॥ ७०
...तस्तं सा देवदासं निजं पतिम् । निशीथे तेन जारेण भुक्तसुप्तमघातयत् ॥ ७१

इत्युक्त्वात्र स्थितं बालं पप्रच्छुस्तं तदात्मजम् । तातो हतस्ते केनेति ततः स स्पष्टमब्रवीत् ॥
पृष्ठभूमाविहारुह्य कोऽप्यासीद्दिवसे युवा । रात्रौ तेनावतीर्यैव तातो मे पश्यतो हतः ॥
अम्बा तु मां गृहीत्वादौ तातपार्श्वात्तदोत्थिता । इत्युक्ते शिशुना बुद्ध्वा भार्याजारेण तं हतम् ॥
जघ्नुस्तद्बन्धवोऽन्विष्य तज्जारं तं तदैव ते । स्वीकृत्य तं शिशुं तां च दुःशीलां निरवासयन् ॥
इत्यन्यरक्तचित्ता स्त्रीभुजंगी हन्त्यसंशयम् । एवं हरिशिखेनोक्ते बभाषे गोमुखः पुनः ॥
किमन्येनेह यद्वृत्तं वज्रसारस्य संप्रति । वत्सेशसेवकस्येह हास्यं तच्छ्रूयतामिदम् ॥
तस्य शूरस्य कान्तस्य सुरूपा मालवोद्भवा । वज्रसारस्य भार्याभूत्स्वशरीराधिकप्रिया ॥
एकदा तस्य भार्यायास्तस्याः पुत्रान्वितः पिता । निमन्त्रणाय मालव्यः सोत्कठोऽभ्याययौ स्वयं ॥
वज्रसारोऽथ सत्कृत्य तं स राज्ञे निवेद्य च । निमन्त्रितस्तेन समं सभार्यो मालवं ययौ ॥
मासमात्रं च विश्रम्य सोऽत्र श्वशुरवेश्मनि । इहागाद्राजसेवार्थं तद्भार्या त्वास्त तत्र सा ॥
ततो दिनेषु यातेषु वज्रसारमुपेत्य तम् । अकस्मात्क्रोधनो नाम सुहृदेवमभाषत ॥
भार्यां पितृगृहे त्यक्त्वा किं गृहं नाशितं त्वया । तत्रान्यपुरुषासङ्गः पापया हि कृतस्तया ॥
आगतेन ततोऽद्यैतदाप्तेन कथितं मम । मा मंस्था वितथं तस्मान्निगृह्यैतां वहापराम् ॥
इत्युक्त्वा क्रोधने याते स्थित्वा मूढ इव क्षणम् । अचिन्तयद्वज्रसारः शङ्के सत्यं भवेदिदम् ॥
आह्वायके विसृष्टेऽपि सान्यथा नागता कथम् । तदेतां स्वयमानेतुं यामि पश्यामि किं भवेत् ॥
इति संकल्प्य गत्वैव मालवं श्वशुरौ स तौ । अनुज्ञाप्य गृहीत्वैतां भार्यां प्रस्थितवांस्ततः ॥
गत्वा च दूरमध्वानं स युक्त्या वञ्चितानुगः । उत्पथेनाविशद्भार्यामादाय गहनं वनम् ॥
तत्रोपवेश्य मध्ये तां विजने वदति स्म सः । त्वमन्यपुरुषासक्तेत्याप्तान्मित्रान्मया श्रुतम् ॥
मया चात्र स्थितेनैव यदाहूतासि नागता । तत्सत्यं ब्रूहि नो चेद्वा करिष्ये निग्रहं तव ॥
तच्छ्रुत्वा तमवादीत्सा तवैष यदि निश्चयः । तत्किं पृच्छसि मां यत्ते रोचते तत्कुरुष्व मे ॥
इति सावज्ञमाकर्ण्य वचस्तस्याः स कोपतः । वज्रसारस्तरौ बद्ध्वा लताभिस्तामताडयत् ॥
वस्त्रं हरति यावच्च तस्यास्तावद्विलोक्य ताम् । नग्नां रिरंसा मूढस्य तस्याजायत रागिणः ॥
ततो निवेश्य बद्धां तां रन्तुमाश्लिष्यति स्म सः । नेच्छति स्म च सा तेन प्रार्थ्यमाना जगाद
लताभिस्ताडिता बद्ध्वा यथाहं भवता तथा । यद्यहं ताडयेयं त्वां तत इच्छामि नान्यथा ॥
तथेति प्रतिपेदे तत्स च व्यसनमोहितः । तृणसारीकृतश्चित्रं वज्रसारो मनोभुवा ॥
ततः सहस्तपादं तं सा बबन्ध दृढं तरौ । तच्छस्त्रेणैव बद्धस्य कर्णनासं चकर्त सा ॥
गृहीत्वा तस्य शस्त्रं च वासांसि च विधाय च । पापा पुरुषवेषं सा यथाकाममगात्ततः ॥
वज्रसारस्तु तत्रासीच्छिन्नश्रवणनासिकः । गलता शोणितौघेन मानेन च नताननः ॥
अथ तत्रागतः कश्चिदोषध्यर्थं वने भिषक् । दृष्ट्वा तं कृपयोन्मुच्य साधुः स्वं नीतवान्गृहम् ॥
तत्र चाश्वासितस्तेन शनैः स्वगृहमागमत् । स वज्रसारो न च तां चिन्वन्प्राप कुगेहिनीम् ॥
अवर्णयच्च तं तस्मै वृत्तान्तं क्रोधनाय सः । तेनापि वत्सराजाग्रे कथितं सर्वमेव तत् ॥
अयं निष्पौरुषामर्षः स्त्रीभूत इति भार्यया । पुंवेषोऽस्य हृतो नूनं निग्रहश्चोचितः कृतः ॥
इति राजकुले सर्वजनोपहसितोऽपि सः । वज्रसार इहैवास्ते वज्रसारेण चेतसा ॥
तदेवं कस्य विश्वासः स्त्रीषु देवेती गोमुखे । उक्तवत्यथ भूयोऽपि जगाद मरुभूतिकः ॥
अप्रतिष्ठं मनः स्त्रीणामत्रापि श्रूयतां कथा । पूर्वं सिंहबलो नाम राजाभूद्दक्षिणापथे ॥
तस्य कल्याणवत्याख्या सर्वान्तःपुरयोषिताम् । प्रिया मालवसामन्तसुता भार्या बभूव च ॥
तया सह स राज्यं स्वं शासन्नृपतिरेकदा । निष्कालितोऽभवद्बलिभिर्देशात्संभूय गोत्रजैः ॥

नाद्रूप च गजेन्तमायान्तं मण्डलैर्भ्रमन् । खड्गच्छिन्नकराग्रीकं मुक्तारटिमपातयत् ॥
काकी तस्करचमूर्विदलन्नवपङ्कजाः । ममाथारण्यविक्रान्तः करी कमलिनीरिव ॥
वं मार्गमतिक्रम्य दृष्टात्यद्भुतविक्रमाम् । मालवं प्राप्य देवीं स्वां सोऽब्रवीत्सत्वसागरः ॥
मार्गवृत्तमेतन्मे वाच्यं पितृगृहे त्वया । लज्जैषा देवि का श्लाघा क्षत्रियस्य हि विक्रमे ॥
त्युक्त्वा च तया साकं प्राविशत्तत्पितुर्गृहम् । संभ्रमात्तेन पृष्टश्च निजं वृत्तान्तमुक्तवान् ॥
मान्य दत्तहस्त्यश्वस्तेनैव श्वशुरेण सः । गजानीकाभिधस्यागाद्राज्ञोऽतिबलिनोऽन्तिकम् ॥
वीं तु कल्याणवतीं भार्यां तां पितृवेश्मनि । तत्रैव स्थापयामास विपक्षविजयोद्यतः ॥
स्मिन्प्रयाते यातेषु दिवसेष्वेकदात्र सा । देवी वातायनाग्रस्था कंचित्पुरुषमैक्षत ॥
दृष्ट एव रूपेण तस्याश्चित्तमपाहरत् । स्मरेणाकृष्यमाणा च तत्क्षणं सा व्यचिन्तयत् ॥
ानेऽहं नार्यपुत्राद्यत्सुरूपोऽन्यो न शौर्यवान् । धावत्येव तथाप्यस्मिन्पुरुषे बत मे मनः ॥
द्यदस्तु भजाम्येनमिति संचिन्त्य सा तदा । सख्यै रहस्यधारिण्यै स्वाभिप्रायं शशंस तम् ॥
यैवानाय्य नक्तं च वातायनपथेन सा । अन्तःपुरं तं पुरुषं रज्जूत्क्षिप्तं न्यवेशयत् ॥
प्रविष्टोऽत्र पुरुषो नैवाध्यासितुमोजसा । शशाक तस्याः पर्यङ्कं न्यषीदत्पृथगासने ॥
दृष्ट्वा बत नीचोऽयमिति यावद्विषीदति । राज्ञी सा तावदत्रागादुपरिष्टाद्भ्रमन्बहिः ॥
विलोक्य भियोत्थाय सहसा पुरुषोऽत्र सः । धनुरादाय भुजगं जघान विशिखेन तम् ॥
पन्नपतितं तं च गवाक्षेणाक्षिपद्बहिः । हर्षेण तद्भयोत्तीर्णो ननर्त स च कातरः ॥
त्यन्तं वीक्ष्य तं विम्ना सा कल्याणवती भृशम् । दध्यौ धिग्धिक्किमेतेन निःसत्त्वेनाधमेन मे ॥
ष्ट्वैव तद्विरक्तां तां चित्तज्ञा सा च तत्सखी । निर्गत्याशु प्रविश्यात्र जगाद कृतसंभ्रमा ॥
ागतस्ते पिता देवि तदयं यातु संप्रति । यथागतेनैव पथा स्वगृहं त्वरितं युवा ॥
वं तयोक्ते निर्यातो रज्ज्वा वातायनाद्बहिः । भयाकुलः स पतितो न दैवात्पञ्चतां गतः ॥
ते तस्मिन्नवोचत्तां सा कल्याणवती सखीम् । सखि सुष्ठु कृतं नीचो यत्त्वयैष बहिष्कृतः ॥
ातं त्वया मे हृदयं चेतो हि मम दूयते । भर्ता मे व्याघ्रसिंहादीन्निपात्यापह्नुते ह्रिया ॥
यं तु भुजगं हत्वा हीनसत्त्वः प्रनृत्यति । तत्तादृशं तं हित्वा किमस्मिन्मे प्राकृते रतिः ॥
दप्रतिष्ठितमतिं धिङ् मां धिगथवा स्त्रियः । या धावन्त्यशुचिं हित्वा कर्पूरं मक्षिका इव ॥
ते जातानुतापा सा राज्ञी नीत्वा निशां ततः । प्रतीक्षमाणा भर्तारमासीत्तत्र पितुर्गृहे ॥
ावत्स दत्तान्यबलो गजानीकेन भूभुजा । गत्वा तान्गोत्रजान्पञ्च पापान्सिंहबलोऽवधीत् ॥

ततः स संप्राप्य पुनः स्वराज्यमानीय भार्यां च पितुर्गृहात्ताम् ।
प्रपूर्य तं च श्वशुरं धनौघैर्निष्कण्टकां क्ष्मां सुचिरं शशास ॥
इति प्रवीरे सुभगे च सत्पतौ विवेकिनीनामपि देव योषिताम् ।
चलं मनो धावति यत्र कुत्रचिद्विशुद्धसत्त्वा विरलाः पुनः स्त्रियः ॥

इति मरुभूतिनिगदितामाकर्ण्य कथां स वत्सराजसुतः ।
नरवाहनदत्तस्तां सुखसुप्तो नीतवान्रजनीम् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शक्तियशोलम्बके द्वितीयस्तरङ्गः ।

---

तृतीयस्तरङ्गः ।

तः प्रातः कृतावश्यकार्यः स सचिवैः सह । नरवाहनदत्तः स्वमुद्यानं विहरन्ययौ ॥

रैस्त्रिवलीलतालंकृतमध्यमाम् । साक्षादिव स्मरोद्यानवापीशोभाधिदेवताम् ॥
ौवनीं तां च दृष्ट्वा सोत्कलिकामतः । चान्द्रीं मूर्तिमिवाम्भोधिश्चुक्षुभे स नृपात्मजः ॥
न्दरनिर्माणवैचित्री काप्यसौ विधेः । इति शंसन्स सचिवैः सहितस्तामुपाययौ ॥
मार्द्रया दृष्ट्या पश्यन्तीं तां च स क्रमात् । पप्रच्छ का त्वं कल्याणि किमिहागमनं च ते ॥
: साब्रवीत्कन्या शृणुतैतद्वदामि वः । अस्ति काञ्चनशृङ्गाख्यं पुरं हैमं हिमाचले ॥
नाम्ना स्फटिकयशा विद्याधरेश्वरः । धार्मिकः कृपणानाथशरणागतवत्सलः ॥
नप्रभादेव्यां जातां गौरीवरोद्भवाम् । मां शक्तियशसं नाम जानीहि तनयामिमाम् ॥
ाणप्रिया साहं पञ्चभ्रातृकनीयसी । अतोषयं तदादेशाद्व्रतैः स्तोत्रैश्च पार्वतीम् ॥
। सकला विद्या दत्त्वा मामेवमादिशत् । पितुर्दशगुणं पुत्रि भावि विद्याबलं तव ॥
नदत्तश्च भर्ता तव भविष्यति । वत्सराजसुतो भाविचक्रवर्ती द्युचारिणाम् ॥
ा शर्वपत्नी मे तिरोऽभूत्तत्प्रसादतः । लब्धविद्याबला चाहं संप्राप्ता यौवनं क्रमात् ॥
शश्च सा रात्रौ देवी मां दत्तदर्शना । प्रातः पुत्रि त्वया गत्वा द्रष्टव्यः स निजः पतिः ॥
व्यमिहैवाद्य मासेन हि पिता तव । चित्तस्थितैतत्संकल्पो विवाहं संविधास्यति ॥
श्य तिरोऽभूत्सा देवी याता च यामिनी । ततोऽहमार्यपुत्रैषा त्वामिह द्रष्टुमागता ॥
ते व्रजामीति गदित्वा ससखीजना । उत्पत्य खं शक्तियशाः सा जगाम पुरं पितुः ॥
नदत्तश्च तद्विवाहोत्सुकस्ततः । विवेशाभ्यन्तरं विघ्नः पश्यन्मासं युगोपमम् ॥
ष्ट्वा विमनसं सोऽथ तं गोमुखोऽब्रवीत् । शृणु देव कथामेकां तवाख्यामि विनोदिनीम् ॥
काञ्चनपुरीत्याख्यया नगरी पुरा । तस्यां च सुमना नाम महानासीन्महीपतिः ॥
तदुर्गकान्तारभूमिना येन चक्रिरे । चित्रं विराजमानेन तादृशा अपि शत्रवः ॥
ास्थानगतं प्रतीहारो व्यजिज्ञपत् । देव मुक्तालता नाम निषादाधिपकन्यका ॥
स्थितमादाय शुकं द्वारि बहिः स्थिता । वीरप्रभेणानुगता भ्रात्रा देवं दिदृक्षते ॥
त्विति राज्ञोक्ते प्रतीहारनिदेशतः । भिल्लकन्या नृपास्थानप्राङ्गणं प्रविवेश सा ॥
ुषीयं दिव्यस्त्री कापि नूनमसाविति । सर्वेऽप्यचिन्तयंस्तत्र दृष्ट्वा तद्रूपमद्भुतम् ॥
प्रणम्य राजानमेवं व्यज्ञापयत्तदा । देवायं शास्त्रगञ्जाख्यश्चतुर्वेदधरः शुकः ॥
कृत्स्नासु विद्यासु कलासु च विचक्षणः । मयेश्वरोपयोगित्वादिहानीतोऽद्य गृह्यताम् ॥
ास्तयादाय प्रतीहारेण कौतुकात् । नीतोऽग्रे नृपतेरेतं शुकः श्लोकं पपाठ सः ॥

राजन्युक्तमिदं सदैव यदयं देवस्य संधुक्ष्यते
धूमश्यामसुखो द्विषद्विरहिणीनिःश्वासवातोद्गमैः ।
एतत्त्वद्भुतमेव यत्परिभवाद्बाष्पाम्बुपूरप्लवै-
रासां प्रज्वलतीह दिक्षु दशसु प्राज्यः प्रतापानलः ॥

ठित्वा व्याख्याय शुकोऽवादीत्पुनश्च सः । किं प्रमेयं कुतः शास्त्राद्ब्रवीम्यादिश्यतामिति ॥
तेविस्मिते राज्ञि मन्त्री तस्याब्रवीदिदम् । शङ्के शापाच्छुकीभूतः पूर्वर्षिः कोऽप्ययं प्रभो ॥
श्वरो धर्मवशात्पुराधीतं स्मरत्यतः । इत्युक्ते मन्त्रिणा राजा स शुकं पृच्छति स्म तम् ॥
ः भद्र मे ब्रूहि स्ववृत्तान्तं क्व जन्म ते । शुकत्वे शास्त्रविज्ञानं कुतः को वा भवानिति ॥
स बाष्पमुत्सृज्य वदति स्म शुकः शनैः । अवाच्यमपि देवैतच्छृणु वच्मि त्वदाज्ञया ॥
न्निकटे राजन्नस्त्येको रोहिणीतरुः । आम्नाय इव दिग्व्यापिभूरिशाखाश्रितद्विजः ॥
[illegible] ॥

...फलानि च । अश्नन्मह्यं च वितरन्नथ तत्रास्ति मत्पिता ॥ ४०
र तूर्याभिध्मातगोश्रृङ्गनादिनी । आखेटकाय समगाद्भिल्लसेना भयंकरी ॥ ४१
णसाराक्षी धूलिव्यालुलितांशुका । संभ्रमोद्वेलचमरीविस्रस्तकबरीभरा ॥ ४२
कुलेवाभूत्सहसा सा महाटवी । पुलिन्दवृन्दे विविधप्राणिघाताय धावति ॥ ४३
डितं कृत्वा दिनमाखेटभूमिषु । आगाच्छबरसैन्यं तदात्तैः पिशितभारकैः ॥ ४४
द्धशबरस्तत्रानासादितामिषः । अद्राक्षीत्स तरुं सायं क्षुधितस्तमुपागमत् ॥ ४५
स तत्राशु शुकानन्यांश्च पक्षिणः । आकृष्याकृष्य नीडेभ्यो हत्वा हत्वा भुवि न्यधात् ॥ ४६
च निकटं यमकिंकरसंनिभम् । तं दृष्ट्वाहं भयाल्लीनः शनैः पक्षान्तरे पितुः ॥ ४७
त्कुलायं स प्राप्याकृष्यैव पातकी । तातं मे पीडितग्रीवं हत्वा तरुतलेऽक्षिपत् ॥ ४८
तेन समं पतित्वा तस्य पक्षतेः । निर्गत्य तृणपर्णान्तः सभयः प्राविशं शनैः ॥ ४९
र्य भिल्लोऽसावग्नौ भृष्टानभक्षयत् । शुकानन्यान्समादाय पापः पल्लीं निजामगात् ॥ ५०
तभयो दुःखदीर्घां नीत्वा निशामहम् । प्रातर्भूयिष्ठमुदिते जगच्चक्षुषि भास्वति ॥ ५१
क्षसंरुद्धवसुधः प्रस्खलन्मुहुः । तृषार्तः पद्मसरसस्तीरमासन्नवर्तिनः ॥ ५२
कृतस्नानमहं तत्सैकतस्थितम् । मुनिं मरीचिनामानं पूर्वपुण्यमिवात्मनः ॥ ५३
द्रा समाश्वास्य मुखक्षिप्तोदबिन्दुभिः । कृत्वा पत्रपुटेऽनैषीदाश्रमं कृपया मुनिः ॥ ५४
कुलपतिर्मां पुलस्त्यः किलाहसत् । तेनान्यमुनिभिः पृष्टो दिव्यदृष्टिरुवाच सः ॥ ५५
शुकं दृष्ट्वा दुःखेन हसितं मया । वक्ष्यामि चैतत्संबद्धां कथां वो विहिताह्निकः ॥ ५६
च्छ्रवणादेष प्राग्वृत्तं च स्मरिष्यति । इत्युक्त्वा स पुलस्त्यर्षिराह्निकायोत्थितोऽभवत् ॥ ५७
श्च मुनिभिः पुनरभ्यर्थितोऽत्र सः । मत्संबद्धां कथामेतां महामुनिरवर्णयत् ॥ ५८
तिष्प्रभो नाम राजा रत्नाकरे पुरे । आरत्नाकरमुर्वीं यः शशासोर्जितशासनः ॥ ५९
तपस्तुष्टगौरीपतिवरोद्भवः । हर्षवत्यभिधानायां पुत्रो देव्यामजायत ॥ ६०
प्रविष्टं यत्सोमं देवी ददर्श सा । तेन सोमप्रभं नाम्ना तं चक्रे स्वसुतं नृपः ॥ ६१
स तन्वानः प्रजानां नयनोत्सवम् । राजपुत्रोऽमृतमयैर्गुणैः सोमप्रभः क्रमात् ॥ ६२
क्षमं शूरं युवानं प्रकृतिप्रियम् । यौवराज्येऽभ्यषिञ्चत्तं प्रीतो ज्योतिष्प्रभः पिता ॥ ६३
भिधानस्य तनयं निजमन्त्रिणः । ददौ प्रियंकरं नाम मन्त्रित्वे चास्य सद्गुणम् ॥ ६४
म्बरादश्वं दिव्यमादाय मातलिः । अवतीर्णस्तमभ्येत्य सोमप्रभमभाषत ॥ ६५
सखा शक्रस्यावतीर्णो भवानिह । तेन चाशुश्रवा नाम शक्रेणोच्चैःश्रवःसुतः ॥ ६६
ते राजन्प्रहितस्तुरगोत्तमः । अत्राधिरूढः शत्रूणामजेयस्त्वं भविष्यसि ॥ ६७
वाजिरत्नं तद्दत्त्वा सोमप्रभाय सः । आत्तपूजः खमुत्पत्य ययौ वासवसारथिः ॥ ६८
वैव दिवसं तमुत्सवमनोरमम् । सोमप्रभस्तमन्येद्युरुवाच पितरं नृपम् ॥ ६९
क्षत्रियस्यैष धर्मो यदजिगीषुता । तदाज्ञां देहि मे यावद्दिग्जयाय व्रजाम्यहम् ॥ ७०
स पिता तुष्टस्तथेति प्रत्यभाषत । चक्रे ज्योतिष्प्रभस्तस्य यात्रासंविदमेव च ॥ ७१
म्य पितरं दिग्जयाय बलैः सह । प्रायाच्छक्रहयारूढः शुभे सोमप्रभोऽहनि ॥ ७२
सोऽश्वरत्नेन तेन दिक्षु महीपतीन् । आजहार च रत्नानि तेभ्यो दुर्वारविक्रमः ॥ ७३
धनुस्तेन विद्विषां च शिरः समम् । उन्नतिं तद्धनुः प्राप न तु तद्द्विषतां शिरः ॥ ७४
त्कृतकार्योऽथ हिमाद्रिनिकटे पथि । संनिविष्टबलश्चक्रे मृगयां स वनान्तरे ॥ ७५
...तत्रापश्यत्स किंनरम् । अभ्यधावच्च तं प्राप्तुं तेन शाक्रेण वाजिना ॥ ७६

श्रान्तः कथाचिदावृत्य स ददर्श महत्सरः । तत्तीरे तां निशां नेतुकामश्चाब्धिादवातरत् ॥
दत्त्वा तृणोदकं तस्मायाहृताम्बुफलोदकः । विश्रान्तश्चैकतोऽकस्मादशृणोद्गीतनिःस्वनम् ॥
गत्वा तदनुसारेण कौतुकान्नातिदूरतः । सोऽपश्यच्छिवलिङ्गाग्रे गायन्तीं दिव्यकन्यकाम् ॥
केयमद्भुतरूपा स्यादिति तं च सविस्मयम् । साप्युदाराकृतिं दृष्ट्वा कृत्वातिथ्यमवोचत ॥
कस्त्वं कथमिमां भूमिमेकः प्राप्तोऽसि दुर्गमाम् । एतच्छ्रुत्वा स्ववृत्तान्तमुक्त्वा पप्रच्छ सोऽपि
त्वं मे कथय कासि त्वं वनेऽस्मिन्का च ते स्थितिः । इति तं पृष्टवन्तं च दिव्यकन्या जगाद
कौतुकं चेन्महाभाग तद्वच्मि शृणु मत्कथाम् । इत्युक्त्वा सा लसद्बाष्पपूरा वक्तुं प्रचक्रमे ॥
अस्तीह काञ्चनाभाख्यं हिमाद्रिकटके पुरम् । पद्मकूटाभिधानोऽस्ति तत्र विद्याधरेश्वरः ॥
तस्य हेमप्रभादेव्यां राज्ञः पुत्राधिकप्रियाम् । मनोरथप्रभां नाम विद्धि मां तनयामिमाम् ॥
साहं विद्याप्रभावेण सखीभिः सममाश्रमान् । द्वीपानि कुलशैलांश्च वनान्युपवनानि च ॥
क्रीडित्वा प्रत्यहं चैवमाहारसमये पितुः । आगच्छामि स्वभवनं वासरप्रहरैस्त्रिभिः ॥
एकदाहमिह प्राप्ता विहरन्ती सरस्तटे । मुनिपुत्रकमद्राक्षं सवयस्यमिह स्थितम् ॥
तद्रूपशोभया कृष्टा दूत्येवाहं तमभ्यगाम् । सोऽपि साकूतया दृष्ट्यैवाकरोत्स्वागतं मम ॥
ततो ममोपविष्टायाः सखी ज्ञातोभयाशया । कस्त्वं ब्रूहि महाभागेत्यपृच्छत्तद्वयस्यकम् ॥
स चाब्रवीत्तद्वयस्यो नातिदूरमितः सखि । निवसत्याश्रमपदे मुनिर्दीधितिमानिति ॥
स ब्रह्मचारी सरसि स्नातुमत्र कदाचन । आगतो ददृशे देव्या तत्कालागतया श्रिया ॥
सा तं शरीरेणाप्राप्यं प्रशान्तं मनसैव यत् । सकामा चकमे तेन पुत्रं संप्राप मानसम् ॥
त्वद्दर्शनान्ममोत्पन्नः पुत्रोऽयं प्रतिगृह्यताम् । इति नीत्वैव तज्जातं सा दीधितिमतः सुतम् ॥
बालकं मुनये तस्मै समर्प्य श्रीस्तिरोदधे । सोऽप्यनायासलब्धं तं पुत्रं हृष्टोऽग्रहीन्मुनिः ॥
रश्मिमानिति नाम्ना च कृत्वा संवर्ध्य च क्रमात् । उपनीय समं सर्वा विद्याः स्नेहादशिक्षयत्
तं रश्मिमन्तं जानीतमेतं मुनिकुमारकम् । श्रियः सुतं मया साकं विहरन्तमिहागतम् ॥
इत्युक्त्वा तद्वयस्येन पृष्टा तेनापि मत्सखी । सा सनामान्वयं सर्वं मदुक्तं तं तदब्रवीत् ॥
ततोऽन्योन्यान्वयज्ञानान्नितरामनुरागिणौ । मुनिपुत्रः स चाहं च यावत्तत्र स्थितावुभौ ॥
तावदेत्य द्वितीया मां स्वगृहादवदत्सखी । उत्तिष्ठाहारभूमौ त्वां पिता मुग्धे प्रतीक्षते ॥
तच्छ्रुत्वा शीघ्रमेष्यामीत्युक्त्वावस्थाप्य चात्र तम् । मुनिपुत्रं गताभूवं भीत्याहं पितुरन्तिकम् ।
तत्र किंचित्कृताहारा यावच्चाहं विनिर्गता । तावदाद्या सखी सा मामागत्य स्वैरमब्रवीत् ॥
आगतो मुनिपुत्रस्य तस्येह स सखा सखि । स्थितश्च प्राङ्गणद्वारि सत्वरश्च ममावदत् ॥
मनोरथप्रभापार्श्वमहं रश्मिमताधुना । प्रेषितो व्योमगमनीं विद्यां दत्त्वैव पैतृकीम् ॥
प्राणेश्वरीं विना तां हि मदनेन स दारुणाम् । दशां नीतो न शक्नोति प्राणान्धारयितुं क्षणम् ।
तच्छ्रुत्वैवास्मि निर्गत्य तेन युक्ताग्रयायिना । मुनिपुत्रकमित्रेण सख्या चाहमिहागता ॥
प्राप्ता च तमिहाद्राक्षं मुनिपुत्रं विना मया । चन्द्रोद्गमेनैव समं वृत्तप्राणोद्गमान्मृतम् ॥
ततोऽहं तद्वियोगार्ता निन्दन्ती तनुमात्मनः । प्रवेष्टुमैच्छमनलं गृहीत्वा तत्कलेवरम् ॥
तावद्दिवोऽवतीर्यैव तेजःपुञ्जाकृतिः पुमान् । आदाय तच्छरीरं तदुत्पत्य गगनं ययौ ॥
अथाहं केवलैवाग्नौ पतितुं यावदुद्यता । तावदुच्चरति स्मैवं गगनादिह भारती ॥
मनोरथप्रभे मैवं कृथा भूयो भविष्यति । एतेन मुनिपुत्रेण तव कालेन संगमः ॥
एतच्छ्रुत्वा परावृत्त्य मरणात्तत्प्रतीक्षिणी । स्थितास्मीहैव बद्धाशा शंकरार्चनतत्परा ॥
मुनिपुत्रसुहृत्सोऽपि गतो मे [illegible]

ागसना कन्या मद्दुःखदुःखिता । तया सखी प्रेषिताभूद्वार्तां ज्ञातुमिहाद्य मे ॥ ११८
तत्सख्या समं सा प्रहिता निजा । सखी तदन्तिकं तेन स्थितास्म्येकैव संप्रति ॥ ११९
गगनादवतीर्णा तदैव ताम् । स्वसखीं दर्शयामास तस्मै सोमप्रभाय सा ॥ १२०
ीवार्ता पर्णशय्यामकारयत् । सोमप्रभस्य तद्वाहस्यापि घासमदापयत् ॥ १२१
निशां सर्वे तत्र ते प्रातरुत्थिताः । व्योम्नोऽवतीर्णं ददृशुर्विद्याधरमुपागतम् ॥ १२२
ारो देवजयो नाम कृतानतिः । मनोरथप्रभामेवमुपविश्य जगाद ताम् ॥ १२३
राजा वक्ति त्वां सिंहविक्रमः । यावत्तव न निष्पन्नो वरस्तावन्न मत्सुता ॥ १२४
ति स्नेहात्त्वत्सखी मकरन्दिका । तदेतां बोधयागत्य येनोद्वाहे प्रवर्तते ॥ १२५
खीस्नेहात्तां विद्याधरकन्यकाम् । गन्तुं प्रवृत्तां वक्ति स्म राजा सोमप्रभोऽथ सः ॥ १२६
लोकमनघे कौतुकं मम । तत्तत्र नय मामश्वो दत्तघासोऽत्र तिष्ठतु ॥ १२७
तथेत्युक्त्वा व्योम्ना सद्यः सखीयुता । तेन देवजयोत्सङ्गारोपितेन समं ययौ ॥ १२८
तातिथ्या मकरन्दिकया तया । दृष्ट्वा सोमप्रभं कोऽयमिति स्वैरमपृच्छयत ॥ १२९
ता च ततः सा मकरन्दिका । सोमप्रभेण तेनाभूत्सद्योऽपहृतमानसा ॥ १३०
ानसा प्राप्य लक्ष्मीं रूपवतीमिव । स तु कः सुकृती योऽस्या वरः स्यादित्यचिन्तयत् ॥ १३१
थालापे तामाह मकरन्दिकाम् । मनोरथप्रभा चण्डि कस्मान्नोद्वाहमिच्छसि ॥ १३२
्यवोचत्तां त्वयानङ्गीकृते वरे । कथं विवाहमिच्छेयं त्वं शरीराधिका हि मे ॥ १३३
प्रणयं मकरन्दिकयोदिते । मनोरथप्रभावादीद्वृतो मुग्धे मया वरः ॥ १३४
क्षा हि तिष्ठामीत्युदिते तया । करोमि तर्हि त्वद्वाक्यमित्याह मकरन्दिका ॥ १३५
साथ ज्ञातचित्ता जगाद ताम् । सखि सोमप्रभः पृथ्वीं भ्रान्त्वा प्राप्तोऽतिथिस्तव ॥ १३६
सत्कारः कर्तव्यः सुन्दरि त्वया । इत्याकर्ण्यैव जगदे मकरन्दिकया तया ॥ १३७
मया सर्वमिदमेतस्य सांप्रतम् । अर्घपात्रीकृतं कामं स्वीकरोतु यदीच्छति ॥ १३८
तत्प्रीतिं क्रमादावेद्य तत्पितुः । मनोरथप्रभा चक्रे तयोरुद्वाहनिश्चयम् ॥ १३९
भो लब्धधृतिस्तुष्टो जगाद ताम् । त्वदाश्रममहं यामि सांप्रतं तत्र जातु मे ॥ १४०
्वीं सैन्यमागच्छेन्मन्त्र्यधिष्ठितम् । मामप्राप्याहिताशङ्कि तच्च गच्छेत्पराङ्मुखम् ॥ १४१
ग्वृत्तान्तं बुद्ध्वागत्य ततः पुनः । निश्चित्य परिणेष्यामि शुभेऽह्नि मकरन्दिकाम् ॥ १४२
तथेत्युक्त्वा तमनैषीन्निजाश्रमम् । मनोरथप्रभा देवजयाङ्कारोपितं पुनः ॥ १४३
ो मन्त्री तस्य सोमप्रभस्य सः । विचिन्वानश्च पदवीं तत्रैवागात्ससैनिकः ॥ १४४
तस्तस्मै प्रहृष्टो निजमन्त्रिणे । सोमप्रभः स्ववृत्तान्तं यावत्सर्वं स शंसति ॥ १४५
ौ दूतः शीघ्रमागम्यतामिति । लेखे लिखित्वा संदेशमादाय पितुरन्तिकात् ॥ १४६
ामादाय सचिवानुमतेन सः । पित्राज्ञामनतिक्रामञ्जगाम नगरं निजम् ॥ १४७
ेष्यामि न चिरादित्युवाच च । मनोरथप्रभां तां च तं च देवजयं व्रजन् ॥ १४८
ायो गत्वा तत्सर्वं मकरन्दिकाम् । तथैवाबोधयत्तेन जज्ञे सा विरहातुरा ॥ १४९
रतिं लेभे न गीते न सखीजने । शुकानामपि शुश्राव न विनोदवतीर्गिरः ॥ १५०
सा भेजे का कथा मण्डनादिके । प्रयत्नैर्बोध्यमानापि पितृभ्यां नाग्रहीद्धृतिम् ॥ १५१
सिनीपत्रशयनं चाचिरेण सा । उन्मादिनीव बभ्राम पित्रोरुद्वेगदायिनी ॥ १५२
ापेदे सा समाश्वासयतोस्तयोः । वचस्तदा तौ कुपितौ पितरौ शपतः स्म ताम् ॥ १५३
न्निःश्रीके कंचित्कालं पतिष्यसि । अनेनैव शरीरेण स्वजातिस्मृतिवर्जिता ॥ १५४

च विद्याधरेन्द्रोऽभूत्प्रागपि सर्वशास्त्रवित् । कर्मापि प्राक्तनात्तु ... ॥
थैव तस्य भार्या च सा जातारण्यसूकरी । सोऽयं शुकः पुराधीतं वेत्ति चैव तपोबलात् ॥
थ कर्मगतिं चित्रां दृष्ट्वास्य हसितं मया । एतां राजसदस्युक्त्वा कथां चैष विमोक्ष्यते ॥
ोमप्रभश्च तामस्य सुतां द्युचरजन्मनि । प्राप्स्यत्येव निषादीत्वमागतां मकरन्दिकाम् ॥
नोरथप्रभा तं च जातं संप्रति भूमिपम् । रश्मिमन्तं मुनिसुतं तदैव पतिमाप्स्यति ॥
ोमप्रभोऽपि पितरं दृष्ट्वा गत्वा तदाश्रमे । सांप्रतं स प्रियाप्राप्त्यै शर्वमाराधयन्स्थितः ॥
ाख्याय कथां तत्र पुलस्त्यो व्यरमन्मुनिः । अहं च जातिमस्मार्षं हर्षशोकपरिप्लुतः ॥
तो येनाहमभवं नीतस्तत्कृपयाश्रमम् । स मरीचिमुनिस्तत्र गृहीत्वा मामवर्धयत् ॥
ातपक्षश्च पक्षित्वसुलभाच्चापलादहम् । इतस्ततः परिभ्राम्यन्विद्याश्चर्यं प्रदर्शयन् ॥
ाषादहस्ते पतितः क्रमात्प्राप्तस्त्वदन्तिकम् । इदानीं च मम क्षीणं दुष्कृतं पक्षियोनिजम् ॥

इति सदसि कथामुदीर्य तस्मिन्विदुषि शुके विरते विचित्रवाचि ।
सपदि स सुमनोमहीभृदासीत्प्रमदतरङ्गितविस्मृतान्तरात्मा ॥
अत्रान्तरे तं परितुष्य शंभुः स्वप्ने च सोमप्रभमादिदेश ।
उत्तिष्ठ राजन्सुमनोनृपस्य पार्श्वं व्रज प्राप्स्यसि तत्र कान्ताम् ॥
मुक्तालताख्या पितृशापतो हि भूत्वा निषादी मकरन्दिकाख्या ।
आदाय तं स्वं पितरं गतास्य राज्ञोऽन्तिकं सा शुकतामवाप्तम् ॥
स्मरिष्यति त्वां तु विलोक्य जातिं विद्याधरी सा विनिवृत्तशापा ।
अन्योन्यविज्ञानविवृद्धहर्षशोभी भविष्यत्यथ संगमो वाम् ॥
इति भूमिपतिं निगद्य तं गिरिशः स्वाश्रमगां तथैव ताम् ।
अपरां स मनोरथप्रभां भगवान्भक्तकृपालुरब्रवीत् ॥
यो रश्मिमान्मुनिसुतोऽभिमतो वरस्ते जातः स संप्रति पुनः सुमनोभिधानः ।
तत्तत्र गच्छ तमवाप्नुहि स स्वजातिं सद्यः स्मरिष्यति शुभे तव दर्शनेन ॥
एवं ते सोमप्रभविद्याधरकन्यके पृथग्विभुना ।
स्वप्नादिष्टे नृपतेस्तस्य सदः सुमनसस्तदा ययतुः ॥
सोमप्रभं तत्र च तं विलोक्य संस्मृत्य जातिं मकरन्दिका स्वाम् ।
दिव्यं प्रपद्यैव निजं वपुस्तज्जग्राह कण्ठे चिरशापमुक्ता ॥
सोऽपि प्रसादाद्गिरिजापतेस्तां संप्राप्य विद्याधरराजपुत्रीम् ।
सोमप्रभः साकृतिदिव्यभोगलक्ष्मीमिवाश्लिष्य कृती बभूव ॥
स चापि दृष्ट्वैव मनोरथप्रभां स्मृतस्वजातिः सुमनोमहीपतिः ।
प्रविश्य पूर्वां नभसश्च्युतां तनुं मुनीन्द्रपुत्रश्च बभूव रश्मिमान् ॥
तया च संगम्य पुनः स्वकान्तया चिरोत्सुकः स प्रययौ स्वमाश्रमम् ।
ययौ स सोमप्रभभूपतिश्च तां प्रियां समादाय निजां निजं पुरम् ॥
शुकोऽपि मुक्त्वैव स वैहगीं तनुं जगाम धाम स्वतपोभिरर्जितम् ।
इतीह दूरान्तरितोऽपि देहिनां भवत्यवश्यं विहितः समागमः ॥
इति नरवाहनदत्तो निजसचिवाद्गोमुखात्कथां श्रुत्वा ।
अद्भुतविचित्ररुचिरां शक्तियशः सोत्सुकस्तुतोष तदा ॥

द्याधरीयुग्मकथामाख्याय गोमुखः । नरवाहनदत्तं तमुवाच सचिवाग्रणीः ॥
। सहन्तेऽत्र लोकद्वयहितैषिणः । सामान्या अपि कामादेरावेगं कृतबुद्धयः ॥
शूरवर्माख्यो बभूव कुलपुत्रकः । राज्ञः कुलधराख्यस्य सेवकः ख्यातपौरुषः ॥
ादागतो जातु प्रविष्टोऽशङ्कितं गृहे । भार्यां स्वेनैव मित्रेण ददर्श स्वैरसंगताम् ॥
यस्य स क्रोधं चिन्तयामास धैर्यतः । किं मित्रद्रोहिणैतेन पशुना निहतेन मे ॥
ायानया वापि पापया निगृहीतया । किं करोम्यहमप्येनमात्मानं पापभागिनम् ॥
ाय परित्यज्य तावुभावप्युवाच सः । हन्यामहं तं युवयोर्यं पश्येयं पुनः पुनः ॥
ायमितो भूयो मम लोचनगोचरम् । इत्युक्त्वा तेन मुक्तौ तौ ययतुः क्वापि दूरतः ॥
ां परिणीयाभूच्छूरवर्मा सुनिर्वृतः । एवं देव जितक्रोधो न दुःखस्यास्पदीभवेत् ॥
ध विपदा देव जातु न बाध्यते । तिरश्चामपि हि प्रज्ञा श्रेयसे न पराक्रमः ॥ १
शृण्विमां सिंहवृषभादिगतां कथाम् । आसीत्कोऽपि वणिक्पुत्रो धनवान्नगरे क्वचित् ॥ १
। वणिज्यार्थं गच्छतो मथुरां पुरीम् । भारवोढा युगं कर्षन्भरेण युगभङ्गतः ॥ १
रवणोद्भूतकर्दमे स्खलितः पथि । संजीवकाख्यो वृषभः पपाताङ्गैर्विचूर्णितैः ॥ १
ातनिश्चेष्टमसिद्धोत्थापनक्रमः । निराशस्तं चिरात्त्यक्त्वा वणिक्पुत्रो जगाम सः ॥ १
ंजीवको दैवात्समाश्वस्तो वृषः शनैः । उत्थाय शष्पान्सुमृदूनश्नन्प्रकृतिमाप्तवान् ॥ १
' यमुनातीरं हरितानि तृणानि सः । खादन्स्वच्छन्दचारी सन्पुष्टाङ्गो बलवानभूत् ॥ १
ीनककुदो माद्यन्हरवृषोपमः । शृङ्गोत्पाटितवल्मीकः स च तत्रोन्नदन्मुहुः ॥ १
चाभवत्तत्र नातिदूरे वनान्तरे । सिंहः पिङ्गलको नाम विक्रमाक्रान्तकाननः ॥ १
स्य तस्यास्तां मन्त्रिणौ जम्बुकावुभौ । एको दमनको नाम तथा करटकोऽपरः ॥ १
ो जातु तोयार्थमागच्छन्यमुनातटम् । तस्याराान्नादमश्रौषीत्संजीवककक्कुद्मतः ॥ २
ाश्रुतपूर्वं तं तन्नादं दिक्षु मूर्छितम् । स सिंहोऽचिन्तयत्कस्य बत नादोऽयमीदृशः ॥ २
महत्सत्त्वं किंचित्तिष्ठत्यवैमि तत् । तद्धि दृष्ट्वैव मां हन्याद्वनाद्वापि प्रवासयेत् ॥ २
ऽपीतपानीय एव गत्वा वनं द्रुतम् । भीतः सिंहो निगूह्यासीदाकारमनुयायिषु ॥ २
ज्ञो दमनकः स मन्त्री तस्य जम्बुकः । तमवोचत्करटकं द्वितीयं मन्त्रिणं रहः ॥ २
ामी पयः पातुं गतोऽपीत्वैव तत्कथम् । आगतस्त्वरितं भद्र प्रष्टव्योऽत्रैष कारणम् ॥ २
रटकोऽवादीद्व्यापारोऽस्माकमेष कः । श्रुतस्त्वया न वृत्तान्तः किं कीलोत्पाटिनः कपेः ॥ २
ापि केनापि वणिजा देवतागृहम् । कर्तुं प्रारब्धमभवद्भूरिसंभृतदारुकम् ॥ २
र्मकराः काष्ठं क्रकचोर्ध्वार्धताटितम् । दत्तान्तःकीलयत्रं ते स्थापयित्वा गृहं ययुः ॥ २
ात्य तत्रैको वानरश्चापलोत्प्लुतः । कीलव्यस्तविभागेऽपि काष्ठे तस्मिन्नुपाविशत् ॥ २
तरे मुखे मृत्योरिव तत्रोपविश्य च । कीलमुत्पाटयामास हस्ताभ्यां निष्प्रयोजनम् ॥ ३
खातकीलेन सह काष्ठेन तेन च । तद्भागद्वयसंघट्टपीडिताङ्गो ममार सः ॥ ३
यस्य यत्कर्म स तत्कुर्वन्विनश्यति । तस्मात्किं मृगराजस्य विज्ञातेनाशयेन नः ॥ ३
टकाच्छ्रुत्वा धीरो दमनकोऽब्रवीत् । अन्तर्भूय प्रभोः प्राप्यो विशेषः सर्वदा बुधैः ॥ ३
नाम न कुर्वीत केवलोदरपूरणम् । एवं दमनकेनोक्ते साधुः करटकोऽब्रवीत् ॥ ३
ातिप्रवेशो यो न धर्मः सेवकस्य सः । इति चोक्तः करटकेनेदं दमनकोऽभ्यधात् ॥ ३
मानुरूपं हि फलं सर्वोऽपि वाञ्छति । श्वा तुष्यत्यस्थिमात्रेण केसरी धावति द्विपे ॥ ३
त्वा करटकोऽवादीदेवं कृते यदि । कुप्यति प्रत्युत स्वामी तद्विशेषफलं कुतः ॥ ३

ग्रोपविष्टश्च सिंहं पिङ्गलकं स तम् । स्वामिनं कृतसत्कारं क्षणादेवं व्यजिज्ञपत् ॥
समागतस्तावद्देव भृत्यो हितस्तव । हितः परोऽपि स्वीकार्यो हेयः स्वोऽप्यहितः पुनः ॥
न्यतोऽपि मूल्येन मार्जारः पोष्यते हितः । अहितो हन्यते यत्नाद्गृहजातोऽपि मूषकः ॥
यं च हितैषिभ्यो भृत्येभ्यो भूतिमिच्छता । अपृष्टैरपि कर्तव्यं तैश्च काले हितं प्रभोः ॥
सिषि चेद्देव न कुप्यसि न निह्नुषे । पृच्छामि तदहं किंचिन्नचोद्वेगं करोषि चेत् ॥
मनकेनोक्तः सिंहः पिङ्गलकोऽब्रवीत् । विश्वासार्होऽसि भक्तोऽसि तन्निःशङ्कं त्वयोच्यताम् ।
ङ्गलकेनोक्तेऽवोचद्दमनकोऽथ सः । देव पानीयपानार्थं तृषितो गतवानसि ॥
ाजलः किं त्वमागतो विमना इव । एतत्तद्वचनं श्रुत्वा स मृगेन्द्रो व्यचिन्तयत् ॥
ऽस्म्यमुना तत्किं भक्तस्यास्य निगूह्यते । इत्यालोच्याब्रवीत्तं स शृणु गोप्यं न तेऽस्ति मे ॥
श्चगतेनात्र नादोऽपूर्वः श्रुतो मया । स चास्मदधिकस्योग्रो जाने सत्त्वस्य कस्यचित् ॥
शब्दानुरूपेण प्रायेण प्राणिना यतः । प्रजापतेर्विचित्रो हि प्राणिसर्गोऽधिकाधिकः ॥
ह् प्रविष्टेन न शरीरं न मे वनम् । तस्मादितो मयान्यत्र गन्तव्यं कानने क्वचित् ॥
ादिनमाह स्म सिंहं दमनकोऽथ तम् । शूरः सन्नियता देव किं वनं त्यक्तुमिच्छसि ॥
भज्यते सेतुः स्नेहः कर्णेजपेन तु । अरक्षणेन मन्त्रं च शब्दमात्रेण कातरः ॥
ःशब्दास्ते ते हि भवन्त्येव भयंकराः । परमार्थमविज्ञाय न भेतव्यमतः प्रभो ॥
त्र भेरीगोमायुकथेयं श्रूयतां त्वया । कोऽपि क्वापि वनोद्देशे गोमायुरभवत्पुरा ॥
ाहारार्थी भ्रमन्वृत्तयुद्धां प्राप्य भुवं ध्वनिम् । गम्भीरमेकतः श्रुत्वा भीतो दृष्टिं ततो ददौ ॥
ञ्चरां भेरीमपश्यत्पतितस्थिताम् । किमीदृशोऽयं प्राणी स्यात्कोऽप्येवंरूपशब्दकृत् ॥
ंचिन्तयन्दृष्ट्वा निःस्पन्दां तामुपागतः । यावत्पश्यति तावत्स नायं प्राणीत्यबुध्यत ॥
ञ्छरस्तम्बहतचर्मपुटोद्भवम् । शब्दं निरूप्य तस्यां च स गोमायुर्जहौ भयम् ॥
ञ्चिद्भक्ष्यमत्रान्तरित्युत्पाट्य स पुष्करम् । प्रविश्य वीक्षते यावत्केवले दारुचर्मणी ॥
शब्दमात्रेण किं बिभ्यति भवादृशाः । मन्यसे यदि तत्तत्र तद्विज्ञातुं व्रजाम्यहम् ॥
वान्दमनको गच्छ शक्तोऽसि चेदिति । गदितस्तेन सिंहेन स ययौ यमुनातटम् ॥
ब्दानुसारेण यावत्स्वैरं स गच्छति । तावत्तृणानि खादन्तं वृषभं तं ददर्श सः ॥
चान्तिकं तस्य कृत्वा तेन च संविदम् । गत्वा तस्मै स सिंहाय यथावस्तु शशंस तत् ॥
ः स त्वया दृष्टः संस्तवश्च कृतो यदि । तदिहानय तं युक्त्या तावत्पश्यामि कीदृशः ॥
वा स प्रहृष्टस्तं सिंहः पिङ्गलकस्ततः । वृषस्य प्राहिणोत्तस्य पार्श्वे दमनकं पुनः ॥
यति तुष्टस्त्वामस्मत्स्वामी मृगाधिपः । इति गत्वा दमनकेनोक्तः स वृषभो भयात् ॥
। प्रतिपेदे तत्तदा गत्वा पुनर्वनम् । तं निजस्वामिनं सिंहं तस्याभयमदापयत् ॥
येन चाश्वास्य ततः संजीवकं स तम् । वृषभं तं दमनकोऽनैषीत्केसरिणोऽन्तिकम् ॥
गतं तं प्रणतं दृष्ट्वा सिंहः कृतादरः । उवाचेहैव तिष्ठ त्वं मत्पार्श्वे निर्भयोऽधुना ॥
तेन तत्रस्थेनाहृतः स तथा क्रमात् । उक्ष्णा यथान्यविमुखस्तद्वशोऽभूत्स केसरी ॥
मनकोऽवादीत्खिन्नः करटकं रहः । पश्य संजीवकहृतः स्वामी नावामवेक्षते ॥
्वामिषं भुङ्क्ते न भागं नौ प्रयच्छति । मूढबुद्धिः प्रभुश्चायमुक्ष्णानेनाद्य शिक्ष्यते ॥
मयैव दोषोऽयं यदेतं वृषमानयम् । तत्तथाहं करिष्यामि यथोक्षायं विनङ्क्ष्यति ॥
व्यसनाच्चायं निवर्त्स्यति यथा प्रभुः । एतद्दमनकाच्छ्रुत्वा वचः करटकोऽथ सः ॥

नक. पूर्व मत्स्याढ्ये सरसि क्वचित् । मत्स्यास्तत्र पलायन्ते तस्य दृष्टिपथाद्भयात् ॥ ७९
ाया तान्स मत्स्यानब्रवीद्बकः । इहागतो मत्स्यघाती पुरुषः कोऽपि जालवान् ॥ ८०
ाद्युष्मान्गृहीत्वा निहनिष्यति । तत्कुरुध्वं मम वचो विश्वासो वोऽस्ति चेन्मयि ॥ ८१
ः स्वच्छमज्ञातमिह धीवरैः । एत तत्र निवासार्थं नीत्वैकैकं क्षिपामि वः ॥ ८२
रूचे मत्स्यैस्तैर्जडबुद्धिभिः । एवं कुरुष्व विश्वस्ता वयं त्वय्यखिला इति ॥ ८३
ैकं मत्स्यान्नीत्वा शिलातले । विन्यस्य भक्षयामास स बहून्विप्रलम्भकः ॥ ८४
न्तं तं मकरस्तत्सरोगतः । एको बकं तं पप्रच्छ नयसि क्व तिमीनिति ॥ ८५
ाह बको मत्स्यानुवाच यत् । तेन भीतो झषोऽवोचत्स मामपि नयेति तम् ॥ ८६
ागर्धान्धबुद्धिरादाय तं बकः । उत्पत्य प्रापयति तद्यावद्वध्यशिलातलम् ॥ ८७
ात्स्थिशकलान्यत्र वीक्ष्य सः । तं बुध्यते स्म मकरो बकं विश्वास्य भक्षकम् ॥ ८८
न्यस्तमात्रस्तस्य स तत्क्षणम् । बकस्य मकरो धीमांश्चकर्ताविह्वलः शिरः ॥ ८९
त्स्यानां यथावत्स शशंस तत् । ते चाप्यभिननन्दुस्तं तुष्टाः प्राणप्रदायिनम् ॥ ९०
तस्मान्निष्प्रज्ञस्य बलेन किम् । एतां च सिंहशशयोः कथामत्रापरां शृणु ॥ ९१
सिंह एकवीरोऽपराजितः । स च यं यं ददर्शात्र सत्त्वं तं तं न्यपातयत् ॥ ९२
ातः सर्वैः संभूयात्र मृगादिभिः । आहाराय तवैकैकं प्रेषयामो दिने दिने ॥ ९३
ृत्वा स्वार्थहानिं करोषि किम् । इति तद्वचनं सिंहः स तथेत्यन्वमन्यत ॥ ९४
ैकं तस्मिन्नन्वहमश्नति । एकदा शशकस्यागाद्वार एकस्य तत्कृते ॥ ९५
गच्छञ्शशो धीमानचिन्तयत् । स धीरो यो न संमोहमापत्कालेऽपि गच्छति ॥ ९६
त्यौ तद्युक्तिं तावत्करोम्यहम् । इत्यालोच्य स तं सिंहं विलम्ब्य शशकोऽभ्यगात् ॥ ९७
म्बेन केसरी निजगाद सः । अरे वेला व्यतिक्रान्ता ममाहारे कथं त्वया ॥ ९८
कें वा कर्तव्यं ते मया शठ । इत्युक्तवन्तं तं सिंहं प्रह्वः स शशकोऽब्रवीत् ॥ ९९
ोऽयं स्ववशो नाहमद्य यत् । मार्गे विधार्य सिंहेन द्वितीयेनोज्झितश्चिरात् ॥ १००
लाङ्गूलं सिंहः क्रोधारुणेक्षणः । सोऽब्रवीत्को द्वितीयोऽसौ सिंहो मे दर्श्यतां त्वया ॥ १०१
ं देवेत्युक्त्वा सोऽपि निनाय तम् । तथेत्यन्वागतं सिंहं दूरं कूपान्तिकं शशः ॥ १०२
ं पश्येत्युक्तस्तत्र च तेन सः । शशकेन क्रुधा गर्जन्सिंहोऽन्तः कूपमैक्षत ॥ १०३
तोये स्वं प्रतिबिम्बं निशम्य च । स्वगर्जितप्रतिरवं मत्वा तत्रातिगर्जितम् ॥ १०४
ोपेन तद्वधाय मृगाधिपः । आत्मानमक्षिपत्कूपे मूढोऽत्रैव व्यपादि च ॥ १०५
ोत्तीर्य मृत्योरुत्तार्य चाखिलान् । मृगान्गत्वा तदाख्याय स्ववृत्तंताननन्दयत् ॥ १०६
ं बलं न तु पराक्रमः । यत्प्रभावेण निहतः शशकेनापि केसरी ॥ १०७
येव प्रज्ञया स्वमभीप्सितम् । एवं दमनकेनोक्ते तूष्णीं करटकोऽभवत् ॥ १०८
ापि तस्य पिङ्गलकस्य सः । सिंहस्य स्वप्रभोरासीदन्तिके दुर्मना इव ॥ १०९
तेन तमुवाच जनान्तिकम् । बुद्धा न युज्यते तूष्णीं स्थातुं देव वदाम्यतः ॥ ११०
च ब्रूयाद्यदीच्छेत्स्वामिनो हितम् । तद्विहायान्यथाबुद्धिं मद्विज्ञप्तिमिमां शृणु ॥ १११
ऽयं त्वां हत्वा राज्यं चिकीर्षति । मन्त्रिणा हि सतानेन त्वं भीरुरिति निश्चितः ॥ ११२
ाघांसुश्च शृङ्गयुग्मं निजायुधम् । निर्भया जीवथ सुखं मयि राज्ञि तृणाशने ॥ ११३
त्वामुं मृगेन्द्रं मांसभोजनम् । आश्वास्योपजपत्येवं प्राणिनश्च वने वने ॥ ११४
तं ... ते । एवं दमनकेनोक्तः स तं पिङ्गलकोऽभ्यधात ॥ ११५

एतच्छ्रुत्वा दमनकः प्राह मा स्मैवमादिश । यस्तुल्यः क्रियते राज्ञा न तद्वच्छ्रीः प्रसर्पति ॥
द्वयोर्दत्तपदा सा च तयोरुच्छ्रितयोश्चला । न शक्नोति चिरं स्थातुं ध्रुवमेकं विमुञ्चति ॥
प्रभुश्च यो हितं द्वेष्टि सेवते चाहितं सदा । स वर्जनीयो विद्वद्भिर्वैद्यैर्दुष्टातुरो यथा ॥
अप्रियस्य प्रथमतः परिणामे हितस्य च । वक्ता श्रोता च यत्र स्यात्तत्र श्रीः कुरुते पदम् ॥
न शृणोति सतां मन्त्रमसतां च शृणोति यः । अचिरेण स संप्राप्य विपदं परितप्यते ॥
तदस्मिन्नुक्षिण कः स्नेहस्तव देव किमस्य वा । द्रुह्यतोऽभयदानं तच्छरणागतता च का ॥
किं चैतस्य भवत्पार्श्वे नित्यसंनिहितस्य गोः । देव कीटाः प्रजायन्ते ये तन्मूत्रपुरीषयोः ॥
ते चेद्विशन्ति मत्तेभदन्ताघातव्रणावृते । शरीरे भवतः किं न वृत्तः स्यात्तद्युक्तितो वधः ॥
दुर्जनश्चेत्स्वयं दोषं विपश्चिन्न करोति तत् । उत्पद्यते स तत्सङ्गादत्र च श्रूयतां कथा ॥
राज्ञः कस्यापि शयने चिरमासीदलक्षिता । यूका कुतश्चिदागत्य नाम्ना मन्दविसर्पिणी ॥
अकस्मात्तत्र चोपेत्य कुतोऽपि पवनेरितः । विवेश शयनीयं तट्टीटिभो नाम मत्कुणः ॥
मन्निवासमिमं कस्मादागतस्त्वं व्रजान्यतः । इति मन्दविसर्पिण्या स दृष्ट्वा जगदे तया ॥
अपीतपूर्वं पास्यामि राजासृक्तत्प्रसीद मे । देहीह वस्तुमिति तामवादीत्सोऽपि टीटिभः ॥
ततोऽनुरोधादाह स्म सा तं यद्येवमास्स्व तत् । किं त्वस्य राज्ञो नाकाले दंशो देयस्त्वया सखे
देयोऽस्य दंशः सुप्तस्य रतासक्तस्य वा लघु । तच्छ्रुत्वा टीटिभः सोऽत्र तथेत्युक्त्वा व्यतिष्ठत
नक्तं शय्याश्रितं तं च नृपमाशु ददंश सः । उत्तस्थौ च ततो राजा हा दष्टोऽस्मीति स ब्रुवन्
ततः पलायिते तस्मिंस्त्वरितं मत्कुणे शठे । विचित्य राजभृत्यैः सा लब्धा यूका व्यपाद्यत ॥
एवं टीटिभसंपर्कान्नष्टा मन्दविसर्पिणी । तत्संजीवकसङ्गस्ते न शिवाय भविष्यति ॥
न मे प्रत्येषि चेत्तत्त्वं स्वयं द्रक्ष्यस्युपागतम् । शिरो धुनानं दर्पेण शृङ्गयोः शूलशातयोः ॥
इत्युक्त्वा विकृतिं तेन नीतो दमनकेन सः । सिंहः पिङ्गलकश्चक्रे वध्यं संजीवकं हृदि ॥
लब्ध्वा तस्याशयं स्वैरं क्षणाद्दमनकस्ततः । तस्य संजीवकस्यागात्स विषण्ण इवान्तिकम् ॥
किमीदृगसि किं मित्र शरीरे कुशलं तव । इति पृष्टश्च तेनात्र वृषेण स जगाद तम् ॥
किं सेवकस्य कुशलं कश्च राज्ञां सदा प्रियः । कोऽर्थी न लाघवं यातः कः कालस्य न गोचः
इत्युक्तवन्तं पप्रच्छ तं स संजीवकः पुनः । किमुद्विग्न इवैवं त्वं वयस्याद्योच्यतामिति ॥
ततो दमनकोऽवादीच्छृणु प्रीत्या वदामि ते । मृगराजो विरुद्धोऽसौ जातः पिङ्गलकोऽद्य ते
निरपेक्षोऽस्थिरस्नेहो हत्वा त्वां भोक्तुमिच्छति । हिंस्रं परिच्छदं चास्य पश्यामि प्रेरकं सदा
वचो दमनकस्यैतत्स पूर्वप्रत्ययादृजुः । सत्यं विचिन्त्य वृषभो विमना निजगाद तम् ॥
धिक्सेवाप्रतिपन्नोऽपि क्षुद्रः क्षुद्रपरिग्रहः । प्रभुर्वैरित्वमेवैति तथा चेमां कथां शृणु ॥
आसीन्मदोत्कटो नाम सिंहः क्वापि वनान्तरे । त्रयस्तस्यानुगाश्चासन्द्वीपिवायसजम्बुकाः ।
स सिंहोऽत्र वनेऽद्राक्षीददृष्टचरमेकदा । करभं सार्थविभ्रष्टं प्रविष्टं हासनाकृतिम् ॥
कोऽयं प्राणीति साश्चर्यं वदत्यस्मिन्मृगाधिपे । उष्ट्रोऽयमिति वक्ति स्म देशद्रष्टात्र वायसः ॥
ततो दत्ताभयस्तेन सिंहेनानाय्य कौतुकात् । उष्ट्रः सोऽनुचरीकृत्य स्वान्तिके स्थापितोऽभव
एकदा व्रणितोऽस्वस्थः स सिंहो गजयुद्धतः । उपवासान्बहूंश्चक्रे स्वस्थैस्तैः सहितोऽनुगैः ॥
ततः क्लान्तः स भक्ष्यार्थं भ्रमन्सिंहोऽनवाप्य तत् । किं कार्यमित्यपृच्छत्तानुष्ट्रं मुक्त्वानुग
ते तमूचुः प्रभो वाच्यमस्माभिर्युक्तमापदि । उष्ट्रेण साकं किं सख्यं किं नासावेव भक्ष्यते
तृणाशी चायमस्माकं भक्ष्य एवामिषाशिनाम् । बहूनामामिषस्यार्थे किं चैकस्त्यज्यते न वि

ासौ प्रीयते त्वयि । इत्युक्तो वायसेनोष्ट्रः साधुस्तत्प्रत्यपद्यत ॥ १५६
: काकेन तेन सः । ततः काकोऽब्रवीदेव स्वायत्तं भुङ्क्ष्व मामिमम् ॥ १५७
:क्ते सिंहेन जम्बुकः । मां भुङ्क्ष्वेत्यवदत्तं च स तथैव निराकरोत् ॥ १५८
ङ्क्ष्वेति तमप्यसौ । नाभुङ्क्त हरिरुष्ट्रोऽथ बभाषे भुङ्क्ष्व मामिति ॥ १५९
। कृत्वा च खण्डशः । उष्ट्रस्तैर्भक्षितः सद्यः ससिंहैर्वायसादिभिः ॥ १६०
नेङ्गलको मयि । प्रेरितोऽकारणं राजा प्रमाणमधुना विधिः ॥ १६१
ाव्यो हंसपरिच्छदः । न गृध्रपरिवारस्तु हंसोऽपि किमुतापरः ॥ १६२
ाद्मनकोऽनृजुः । धैर्येण साध्यते सर्वं शृणु वच्म्यत्र ते कथाम् ॥ १६३
सभार्यो वारिधेस्तटे । धृतगर्भा सती भार्या टिट्टिभी निजगाद तम् ॥ १६४
प्रसूताया ममेह हि । हरेदपत्यान्यम्भोधिः कदाचिदयमूर्मिभिः ॥ १६५
ट्टिभः स जगाद ताम् । न शक्नोति मया साकं विरोधं कर्तुमम्बुधिः ॥ १६६
वं का ते तुलाब्धिना । हितोपदेशोऽनुष्ठेयो विनाशः प्राप्यतेऽन्यथा ॥ १६७
कूर्मः कापि सरस्यभूत् । तस्यास्तां सुहृदौ हंसौ नाम्ना विकटसंकटौ ॥ १६८
:सि तत्र तौ । हंसावन्यत्सरो गन्तुकामौ कूर्मो जगाद सः ॥ १६९
तं तत्र मामपि । तच्छ्रुत्वा तावुभौ हंसौ कूर्मं तं मित्रमूचतुः ॥ १७०
ं गन्तुमुद्यतौ । तत्रागन्तुं तवेच्छा चेत्कार्यमस्मद्वचस्त्वया ॥ १७१
र्यष्टिं दिवि व्रजन् । निरालापोऽवतिष्ठेथा भ्रष्टो व्यापत्स्यसेऽन्यथा ॥ १७२
ा सह तौ नभः । कूर्मेणोत्पेततुर्हंसौ प्रान्तयोरात्तयष्टिकौ ॥ १७३
ौ तौ कूर्महारिणौ । ददृशुस्तदधोवर्तिनगराश्रयिणो जनाः ॥ १७४
भ्यामिति तैर्जनैः । क्रियमाणं कलकलं स कूर्मश्चपलोऽशृणोत् ॥ १७५
ते वक्त्राद्विहाय ताम् । यष्टिं स पृच्छन्हंसौ तौ भ्रष्टो जघ्ने जनैर्भुवि ॥ १७६
र्मो यष्टिच्युतो यथा । इत्थं तयोक्तष्टिट्टिभ्या टिट्टिभः स जगाद ताम् ॥ १७७
प्येतां कथां शृणु । नद्यन्तःस्थे ह्रदेऽभूवन्कापि मत्स्याः पुरा त्रयः ॥ १७८
:पन्नमतिस्तथा । तृतीयो यद्भविष्यश्च त्रयस्ते सहचारिणः ॥ १७९
तेन मार्गेण गच्छताम् । अहो अस्मिन्ह्रदे मत्स्याः सन्तीति किल शुश्रुवः ॥ १८०
स्रोतः प्रविश्य सः । अनागतविधाताथ बुद्धिमानन्यतो ययौ ॥ १८१
तत्रैवाविकम्पितः । अहं प्रतिविधास्यामि भयं चेदापतेदिति ॥ १८२
द्भविष्यस्तु तत्र सः । अथागत्याक्षिपञ्जालं तत्र ते धीवरा ह्रदे ॥ १८३
प्रत्युत्पन्नमतिः सुधीः । कृत्वा निस्पन्दमात्मानं तिष्ठति स्म मृतो यथा ॥ १८४
न्नत्सु तिमिघातिषु । पतित्वा स नदीस्रोतस्यगच्छद्द्रुतमन्यतः ॥ १८५
द्वर्तनविवर्तने । कुर्वन्गृहीत्वा निहतो मन्दबुद्धिः स धीवरैः ॥ १८६
यास्याम्यम्बुधेर्भयात् । इत्युक्त्वा टिट्टिभो भार्यां तत्रैवासीत्स्वनीडके ॥ १८७
ईकारं महोदधिः । दिवसैश्च प्रसूता सा तद्भार्या तत्र टिट्टिभी ॥ १८८
तस्या जलधिरूर्मिणा । पश्यामि टिट्टिभोऽयं मे किं कुर्यादिति कौतुकात् ॥ १८९
ोक्तमभूत्तव । इत्याह रुदती सा तं टिट्टिभी टिट्टिभं पतिम् ॥ १९०
ां स्वभार्यामभाषत । पश्येह किं करोम्यस्य पापस्य जलधेरहम् ॥ १९१
[illegible] । गत्वा तैः सह चक्रन्द शरणं गरुडं प्रभुम् ॥ १९२

तस्मादत्यक्तधैर्येण भाव्यमापदि धीमता । उपस्थितमिदानीं तु युद्धं पिङ्गलकेन ते ॥
यदैवोत्क्षिप्तलाङ्गूलश्चतुर्भिश्चरणैः समम् । उत्थास्यति स ते विद्याः प्रजिहीर्षुं तदैव तम् ॥
सज्जो नतशिरा भूत्वा शृङ्गाभ्यामुदरे च तम् । हत्वाभिपतितं कुर्याः कीर्णान्त्रनिकरं रिपुम् ॥
एवमुक्त्वा दमनकः संजीवकवृषं स तम् । गत्वा करटकायोभौ सिद्धभेदौ शशंस तौ ॥
ततः संजीवकः प्रायाच्छनैः पिङ्गलकान्तिकम् । जिज्ञासुरिङ्गिताकारैश्चित्तं तस्य मृगप्रभोः ॥
ददर्शोत्क्षिप्तलाङ्गूलं युयुत्सुं तं समाङ्किकम् । सिंहं सिंहोऽप्यपश्यत्तं शङ्कोद्धूतस्वमस्तकम् ॥
ततः प्राहरदुत्पत्य स सिंहोऽस्मिन्वृषे नखैः । वृषोऽपि तस्मिञ्शृङ्गाभ्यां प्रावर्तिष्टाहवस्तयोः ॥
तच्च दृष्ट्वा दमनकं साधुः करटकोऽब्रवीत् । किं स्वार्थसिद्ध्यै व्यसनं प्रभोरुत्पादितं त्वया ॥
संपत्प्रजानुतापेन मैत्री शाठ्येन कामिनी । पारुष्येणाहृता मित्र न चिरस्थायिनी भवेत् ॥
अलं वा यो बहु ब्रूते हितवाक्यावमानिनः । स तस्माल्लभते दोषं कपेः सूचीमुखो यथा ॥
पूर्वमासन्वने क्वापि वानरा यूथचारिणः । ते शीते जातु खद्योतं दृष्ट्वाग्निरिति मेनिरे ॥
तस्मिंश्च तृणपर्णानि विन्यस्याङ्गमतापयन् । एकस्तु तेषां खद्योतमधमत्तं मुखानिलैः ॥
तद्दृष्ट्वा तत्र तं प्राह पक्षी सूचीमुखाभिधः । नैषोऽग्निरेष खद्योतो मा क्लेशमनुभूरिति ॥
तच्छ्रुत्वाप्यनिवृत्तं तं पक्षी सोऽभ्येत्य वृक्षतः । न्यवारयद्यन्निर्बन्धात्कपिस्तेन चुकोप सः ॥
क्षिप्तया शिलया तं च सूचीमुखमचूर्णयत् । तस्मान्न तस्य वक्तव्यं यः कुर्यान्न हितं वचः ॥
अतः किं वच्मि दोषाय भेदस्तावत्कृतस्त्वया । दुष्टया क्रियते यच्च बुद्ध्या तन्न शुभं भवेत् ॥
तथा चाभवतां पूर्वं भ्रातरौ द्वौ वणिक्सुतौ । धर्मबुद्धिस्तथा दुष्टबुद्धिः क्वचन पत्तने ॥
तावर्थार्थं पितुर्गेहाद्गत्वा देशान्तरं सह । कथंचित्स्वर्णदीनारसहस्रद्वयमापतुः ॥
तद्गृहीत्वा स्वनगरं पुनराजग्मतुश्च तौ । वृक्षमूले च दीनारान्भूतले तान्निचखनतुः ॥
शतमेकं गृहीत्वा च दीनाराणां विभज्य च । परस्परं समांशेन तस्थतुः पितृवेश्मनि ॥
एकदा दुष्टबुद्धिः स गत्वा तरुतलात्ततः । एक एवाग्रहीत्स्वैरं दीनारांस्तानसद्व्ययी ॥
मासमात्रे गते तं च धर्मबुद्धिमुवाच सः । एह्यार्य विभजावस्तान्दीनारानस्ति मे व्ययः ॥
तच्छ्रुत्वा धर्मबुद्धिस्तां गत्वा भूमिं तथेति सः । चखान तेनैव समं दीनारान्यत्र तान्न्यधात् ॥
संप्राप्ता न यदा ते च दीनाराः खातकात्ततः । तदा स दुष्टबुद्धिस्तं धर्मबुद्धिं शठोऽब्रवीत् ॥
नीतास्ते भवता तन्मे स्वमर्धं दीयतामिति । न ते नीता मया नीतास्त्वयेत्याह स्म तं च सः ॥
एवं प्रवृत्ते कलहे सोऽश्मनाताडयच्छिरः । दुष्टबुद्धी राजकुलं धर्मबुद्धिं निनाय च ॥
तत्रोक्तस्वस्वपक्षौ तावनासादितनिर्णयैः । स्थापितावा दिनच्छेदमुभौ राजाधिकारिभिः ॥
यस्य मूले न्यधीयन्त दीनारास्ते वनस्पतेः । स साक्षी वक्ति यन्नीतास्तेऽमुना धर्मबुद्धिना ॥
इत्युवाचाथ तान्दुष्टबुद्धी राजाधिकारिणः । प्रक्ष्यामस्तर्हि तं प्रातरित्यूचुस्तेऽतिविस्मिताः ॥
ततस्तैर्धर्मबुद्धिश्च दुष्टबुद्धिश्च तावुभौ । दत्तप्रतिभुवौ मुक्तौ विभिन्नौ जग्मतुर्गृहम् ॥
दुष्टबुद्धिस्तु वस्तूक्त्वा दत्त्वार्थं पितरं रहः । भव मे वृक्षगर्भान्तः स्थित्वा साक्षीत्यभाषत ॥
बाढमित्युक्तवन्तं च नीत्वा महति कोटरे । निवेश्य तं तरौ तत्र रात्रौ स गृहमाययौ ॥
प्रातश्च राजाधिकृतैः सह तौ भ्रातरौ तरुम् । गत्वा पप्रच्छतुः कस्तान्दीनारान्नीतवानिति ॥
दीनारान्धर्मबुद्धिस्तान्नीतवानिति स स्फुटम् । तद्वृक्षकोटरान्तःस्थस्ततोऽभाषत तत्पिता ॥
तदसंभाव्यमाकर्ण्य निश्चितं दुष्टबुद्धिना । अत्रान्तः स्थापितः कोऽपीत्युक्त्वाधिकृतकाश्च ते ॥
तरुगर्भे ददुर्धूमं येनाध्मातः स निःसरन् । निपत्याधोगतः क्ष्मायां दुष्टबुद्धिपिता मृतः ॥

' कस्यापि जातं जातमभक्षयत् । भुजगोऽपत्यमागत्य स संतेपे ततो बकः ॥ २३४
तेनाथ बकेन नकुलालयात् । आरुह्याहिबिलं यावन्मत्स्यमांसं व्यकीर्यत ॥ २३५
ुलस्तच्च खादंस्तदनुसारतः । दृष्ट्वा बिलं प्रविष्टस्तं सापत्यमवधीदहिम् ॥ २३६
ुपायेन कार्यमन्यच्च मे शृणु । आसीत्कोऽपि तुलाशेषः पित्र्यार्थात्प्राग्वणिक्सुतः ॥ २३७
हस्रेण घटितां तां तुलां च सः । कस्यापि वणिजो हस्ते न्यस्य देशान्तरं ययौ ॥ २३८
ततो यावत्तस्मान्मृगयते तुलाम् । आखुभिर्भक्षिता सेति तावत्तं सोऽब्रवीद्वणिक् ॥ २३९
ु तल्लोहं तेन जग्धं तदाखुभिः । इति सोऽपि तमाह स्म वणिक्पुत्रो हसन्हृदि ॥ २४०
ा च ततो वणिजोऽस्मात्स भोजनम् । सोऽपि संतुष्य तत्तस्मै प्रदातुं प्रत्यपद्यत ॥ २४१
ह कृत्वास्य वणिजः पुत्रमर्भकम् । स्नातुं वणिक्सुतः प्रायाद्दत्तामलकमात्रकम् ॥ २४२
' तं निक्षिप्य गुप्तं क्वापि सुहृद्गृहे । एक एवाययौ तस्य स धीमान्वणिजो गृहम् ॥ २४३
स इत्येवं पृच्छन्तं वणिजं च तम् । श्येनेन सोऽर्भको नीतः खान्निपत्येत्युवाच सः ॥ २४४
त्वया पुत्र इति क्रुद्धेन तेन च । नीतः स वणिजा राजकुलेऽप्याह स्म तत्तथा ॥ २४५
मिदं श्येनो नयेत्कथमिवार्भकम् । इति सभ्यैश्च तत्रोक्ते वणिक्पुत्रो जगाद सः ॥ २४६
ाते लौही देशे यत्र महातुला । तत्र द्विपमपि श्येनो नयेत्किं पुनरर्भकम् ॥ २४७
ौतुकात्पृष्टवृत्तान्तैस्तस्य दापिता । सभ्यैस्तुला सा तेनापि स आनीयार्पितोऽर्भकः ॥ २४८
घटयन्त्यभीष्टं बुद्धिशालिनः । त्वया तु साहसेनैव संदेहे प्रापितः प्रभुः ॥ २४९
ाच्छ्रुत्वावादीद्दमनको हसन् । मैवं किमुक्षयुद्धेऽस्ति सिंहस्य जयसंशयः ॥ २५०
ाघातघनव्रणविभूषणः । क्व केसरी क्व दान्तश्च प्रतोदक्षतविग्रहः ॥ २५१
ल्पतो यावज्जम्बुकौ तौ परस्परम् । तावत्संजीवकवृषं युद्धे पिङ्गलकोऽवधीत् ॥ २५२

तस्मिन्हते स किल पिङ्गलकस्य तस्य पार्श्वे समं करटकेन मृगाधिपस्य ।
तस्थौ ततो दमनको मुदितश्चिराय मन्त्रित्वमप्रतिहतं समवाप्य भूयः ॥ २५३

इति नरवाहनदत्तो नीतिमतो बुद्धिविभवसंपन्नाम् ।
मन्त्रिवराद्गोमुखतः श्रुत्वा चित्रां कथां जहर्ष भृशम् ॥ २५४

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शक्तियशोलम्बके चतुर्थस्तरङ्गः ।

---

पञ्चमस्तरङ्गः ।

ुयशःसोत्कं गोमुखः स विनोदयन् । नरवाहनदत्तं तं मन्त्री पुनरभाषत ॥ १
कथा देव त्वया मुग्धकथां शृणु । मुग्धबुद्धिरभूत्कश्चिदाढ्यस्य वणिजः सुतः ॥ २
' वणिज्यायै कटाहद्वीपमेकदा । भाण्डमध्ये च तस्याभून्महानगुरुसंचयः ॥ ३
रभाण्डस्य न तस्यागुरु तत्र तत् । कश्चिज्जग्राह तद्वासी जनो वेत्ति न तत्र तत् ॥ ४
ग्रस्ततोऽङ्गारान्दृष्ट्वापि क्रीणतो जनान् । स कालागुरु दग्ध्वा तदङ्गारानकरोज्जडः ॥ ५
ारमूल्येन तच्चागत्य ततो गृहम् । तदेव कौशलं शंसन्स ययौ लोकहास्यताम् ॥ ६
ुरुदाहेष श्रूयतां तिलकार्षिकः । बभूव कश्चिद्ग्रामीणो भूतप्रायः कृषीवलः ॥ ७
वत्तिलान्भृष्टान्भुक्त्वा स्वादूनवेत्य तान् । भृष्टानेवावपद्भूरींस्तादृशोत्पत्तिवाञ्छया ॥ ८
वजातेषु नष्टार्थं तं जनोऽहसत् । तिलकार्षिक उक्तोऽसौ जलेऽग्निक्षेपकं शृणु ॥ ९
रभूत्कश्चित्पुमान्निशि स चैकदा । प्रभाते देवतापूजां करिष्यन्नित्यचिन्तयत् ॥ १०

याभिकुम्भाख्यो नासिकारोपणं शृणु । बभूव कश्चित्पुरुषो मूर्खो मूढमतिः क्वचित् ॥
ां चिपिटघ्राणां गुरुं चोत्तुङ्गनासिकम् । दृष्ट्वा तस्य प्रसुप्तस्य नासां छित्त्वाग्रहीद्गुरोः ॥
ा नासिकां छित्त्वा भार्यायास्तामरोपयत् । गुरुनासां मुखे तस्या न च तत्रारुरोह सा ॥
र्यागुरू तेन च्छिन्ननासौ कृतावुभौ । अधुना वनवासी च पशुपालो निशाम्यताम् ॥
ो महामुग्धः कोऽप्यासीद्धनवान्वने । तस्य धूर्ताः समाश्रित्य मित्रत्वे बहवोऽमिलन् ॥
ागदुराढ्यस्य सुता नगरवासिनः । त्वत्कृते याचितास्माभिः सा च पित्रा प्रतिश्रुता ॥
। स ददौ तुष्टस्तेभ्योऽर्थं तं च ते पुनः । विवाहस्तव संपन्न इत्यूचुर्दिवसैर्गतैः ॥
सुतरां तुष्टस्तेभ्यो भूरि धनं ददौ । दिनैश्च तं वदन्ति स्म पुत्रो जातस्तवेति ते ॥
तेन सर्वं च मूढस्तेभ्यः समर्प्य सः । पुत्रं प्रत्युत्सुकोऽस्मीति प्रारोदीच्चापरेऽहनि ॥
:त्त लोकस्य हासं धूर्तैः स वञ्चितः । पशुभ्य इव संक्रान्तजडिमा पशुपालकः ॥
ः श्रुतो देव शृण्वलंकारलम्बकम् । ग्राम्यः कश्चित्खनन्भूमिं प्रापालंकरणं महत् ॥
राजकुलाच्चौरैर्नीत्वा तत्र निवेशितम् । यद्गृहीत्वा स तत्रैव भार्यां तेन व्यभूषयत् ॥
मेखलां मूर्ध्नि हारं च जघनस्थले । नूपुरौ करयोस्तस्याः कर्णयोरपि कङ्कणौ ॥
ख्यापितं लोकैर्बुद्ध्वा राजा जहार तत् । तस्मात्स्वाभरणं तं तु पशुप्रायं मुमोच सः ॥
ंकरणो देव श्रृणु वच्म्यथ तूलिकम् । मूर्खः कश्चित्पुमांस्तूलविक्रयायापणं ययौ ॥
ेति तत्तस्य न जग्राहात्र कश्चन । तावद्ददर्श तत्राग्नौ हेम निष्टप्तशोधितम् ॥
ेण विक्रीतं गृहीतं ग्राहकेण च । तद्दृष्ट्वापि स तत्तूलमिच्छञ्शोधयितुं जडः ॥
ाक्षेप दग्धे च तस्मिंल्लोको जहास तम् । श्रुतोऽयं तूलिको देव खर्जूरीछेदकं शृणु ॥
र्खाः समाहूय न्ययोज्यन्ताधिकारिभिः । ग्राम्या राजकुलादिष्टं खर्जूरानयनं प्रति ॥
ां सुखग्राह्यां खर्जूरपतितां स्वतः । खर्जूरीं तत्र खर्जूरीः सर्वा ग्रामे स्वकेऽच्छिनन् ॥
ताश्च कलिताशेषखर्जूरसंचयाः । उत्थाप्यारोपयामासुर्न चैषां सिद्ध्यति स्म तत् ॥
ीतखर्जूरा आदृतारोपणेन ते । खर्जूरीछेदनं बुद्ध्वा राज्ञा प्रत्युत दण्डिताः ॥
र्जूरहासोऽयं निध्यालोकनमुच्यते । निधानदर्शी केनापि कोऽप्याजह्रे महीभुजा ॥
क्वापि पलाय्यायमिति राजकुमन्त्रिणा । नेत्रे तस्योदपाट्येतां निधानस्थानदर्शिनः ॥
ान्यपश्यन्तं गतावप्यगतौ समम् । अन्धं दृष्ट्वा च तं मन्त्री स जडो जहसे जनैः ॥
लोकनं श्रुत्वा श्रूयतां लवणाशनम् । बभूव गह्वरो ग्रामवासी कोऽपि जडः पुमान् ॥
ण गृहं जातु नीतो नगरवासिना । भोजितो लवणस्वादून्यन्नानि व्यञ्जनानि च ॥
स्वादुतान्नादेरित्यपृच्छत्स गह्वरः । प्राधान्याल्लवणेनेति तेनोचे सुहृदा तदा ॥
र्हि भोक्तव्यमित्युक्त्वा लवणस्य सः । पिष्टस्य मुष्टिमादाय प्रक्षिप्याभक्षयन्मुखे ॥
ास्य दुर्बुद्धेरोष्ठौ श्मश्रूणि चालिपत् । हसतस्तु जनस्यात्र मुखं धवलतां ययौ ॥
ो श्रुतो देव त्वया गोदोहकं शृणु । ग्राम्यः कश्चिदभून्मुग्धो गौरेका तस्य चाभवत् ॥
ास्यान्वहं धेनुः पयःपलशतं ददौ । कदाचिच्चाभवत्तस्य प्रत्यासन्नः किलोत्सवः ॥
ग्रहीष्यामि पयोऽस्याः प्राज्यमुत्सवे । इति मूर्खः स नैवैतां मासमात्रं दुदोह गाम् ॥
वश्च यावत्तां दोग्धि तावत्पयोऽखिलम् । तत्तस्याश्छिन्नमच्छिन्नं लोकस्य हसितं त्वभूत् ॥
दोहको मूर्खः श्रूयतामपराविमौ । खलतिस्ताम्रकुम्भाभशिराः कश्चित्पुमानभूत् ॥
ापविष्टं तं तरुणः कश्चिदैक्षत । आगतोऽत्र कपित्थानि गृहीत्वा क्षुधितः पथा ॥

ाादुभिः किं न सहे घातानिति ब्रुवन् । स खल्वाटो गलद्रक्तशिरा मूर्खो ययौ गृहम् ॥ ५३
ज्यबद्धेन पट्टेनेव वृतं शिरः । रक्तेन तस्य तद्दृष्ट्वा हसति स्म न तत्र कः ॥ ५४
हास्यत्वं लोके गच्छन्त्यबुद्धयः । लभन्ते नार्थसिद्धिं च पूज्यन्ते तु सुबुद्धयः ॥ ५५
ग्रतः श्रुत्वा मुग्धहासकथा इमाः । नरवाहनदत्तः समुत्थाय व्यधिताह्निकम् ॥ ५६
पुनस्तेन नियुक्तश्चोत्सुकेन सः । गोमुखः कथयामास प्रज्ञानिष्ठामिमां कथाम् ॥ ५७
। वनोद्देशे महाञ्शाल्मलिपादपः । उवास लघुपातीति काकस्तत्र कृतालयः ॥ ५८
ात्स्वनीडस्थो ददर्शात्र तरोरधः । जालहस्तं सलगुडं रौद्रं पुरुषमागतम् ॥ ५९
ीक्षते यावत्काकस्तावद्वितत्य सः । जालं भुवि विकीर्यात्र व्रीहींश्छन्नोऽभवत्पुमान् ॥ ६०
त्रग्रीवाख्यः पारावतपतिर्भ्रमन् । तत्राजगाम नभसा पारावतशतैर्वृतः ॥ ६१
करं दृष्ट्वा जालेऽत्राहारलिप्सया । पतितः पाशनिकरैर्बद्धोऽभूत्सपरिच्छदः ॥ ६२
ानुगान्सर्वांश्चित्रग्रीवो जगाद सः । गृहीत्वा चञ्चुभिर्जालं खमुत्पतत वेगतः ॥ ६३
। ते जालमादायोत्पत्य वेगतः । कपोता नभसा गन्तुं भीताः प्रारेभिरेऽखिलाः ॥ ६४
ायोर्ध्वदृग्विघ्नो लुब्धकः संन्यवर्तत । निर्भयोऽथ जगादैतांश्चित्रग्रीवोऽनुयायिनः ॥ ६५
। हिरण्यस्य मूषकस्यान्तिकं द्रुतम् । व्रजामः स इमान्पाशांश्छित्त्वास्मान्मोचयिष्यति ॥ ६६
सोऽनुगैः साकं गत्वा तैर्जालकर्षिभिः । मूषकस्य बिलद्वारं प्राप्याकाशादवातरत् ॥ ६७
ःरण्य निर्याहि चित्रग्रीवोऽहमागतः । इत्याजुहाव तं तत्र मूषकं स कपोतराट् ॥ ६८
द्वारमार्गेण दृष्ट्वा तं चागतं तथा । सुहृदं निर्ययावाखुस्तस्माच्छतमुखाद्बिलात् ॥ ६९
ा वृत्तान्तं संभ्रमात्सोऽपि मूषकः । पारावतपतेः पाशान्सानुगस्याच्छिनत्सुहृत् ॥ ७०
स्तमामन्त्र्य मूषकं वचनैः प्रियैः । चित्रग्रीवः खमुत्पत्य ययौ सोऽनुचरैः सह ॥ ७१
ः स काकोऽत्र लघुपाती विलोक्य तत् । बिलप्रविष्टं तद्द्वारमागत्योवाच मूषकम् ॥ ७२
ते काकोऽहं दृष्ट्वा त्वां मित्रवत्सलम् । मित्रत्वाय वृणोमीदृग्विपदुद्धरणक्षमम् ॥ ७३
यन्तराद्दृष्ट्वा मूषकस्तं स वायसम् । जगाद गच्छ का मैत्री भक्ष्यभक्षकयोरिति ॥ ७४
ायसोऽवादीच्छान्तं भुक्ते मम त्वयि । तृप्तिः क्षणं स्यान्मित्रे तु शश्वज्जीवितरक्षणम् ॥ ७५
वा सशपथं कृत्वाश्वासं च तेन सः । निर्गतेनाकरोत्सख्यमाखुना सह वायसः ॥ ७६
ाशीरानैषीदाखुः शालिकणानपि । एकत्र सह भुञ्जानौ तस्थतुस्तावुभौ सुखम् ॥ ७७
। च काकस्तं मित्रं मूषकमब्रवीत् । इतोऽविदूरे मित्रास्ति वनमध्यगता नदी ॥ ७८
थरको नाम कूर्मश्चास्ति सुहृन्मम । तदर्थं यामि तत्स्थानं सुप्रापामिषभोजनम् ॥ ७९
ाप्य इहाहारो नित्यं व्याधभयं च मे । इत्युक्तवन्तं तं काकं मूषकोऽपि जगाद सः ॥ ८०
हं वत्स्यामो नय तत्रैव मामपि । ममाप्यस्तीह निर्वेदो वक्ष्ये तत्रैव तं च ते ॥ ८१
ःनमादाय चञ्च्वा तं स हिरण्यकम् । नभसा लघुपाती तद्ययौ वननदीतटम् ॥ ८२
सह कूर्मेण तत्र मन्थरकेण सः । कृतातिथ्येन मित्रेण स तस्थौ मूषकान्वितः ॥ ८३
च कूर्माय तस्मै स्वागमकारणम् । हिरण्यसख्यवृत्तान्तयुक्तं काकः शशंस सः ॥ ८४
कूर्मस्तं कृत्वा मित्रं वायससंस्तुतम् । देशनिर्वासनिर्वेदहेतुं पप्रच्छ मूषकम् ॥ ८५
ण्यः स तयोरुभयोः काककूर्मयोः । शृण्वतोर्निजवृत्तान्तकथामेतामवर्णयत् ॥ ८६
ाबिले तत्र नगरासन्नवर्तिनि । वसन्राजकुलाद्धारनामीयास्थापयं निशि ॥ ८७
ान हारेण तेन जातौजसं च माम् । समर्थमन्नाहरणे मूषकाः पर्यवारयन् ॥ ८८
· स नयासीत्कश्चित्तस्मातिलान्तिके । परिव्राण्मठिकां कृत्वा नानाभिक्षान्नवृत्तिकः ॥ ८९

ास्त्वयाग्निकुम्भाख्यो नासिकारोपणं शृणु । बभूव कश्चित्पुरुषो मूर्खो मूढमतिः क्वचित् ॥
भार्यां चिपिटघ्राणां गुरुं चोत्तुङ्गनासिकम् । दृष्ट्वा तस्य प्रसुप्तस्य नासां छित्त्वाग्रहीद्गुरोः ॥
वा च नासिकां छित्त्वा भार्यायास्तामरोपयत् । गुरुनासां मुखे तस्या न च तत्रारुरोह सा ॥
ां भार्यागुरू तेन च्छिन्ननासौ कृतावुभौ । अधुना वनवासी च पशुपालो निशाम्यताम् ॥
ुपालो महामुग्धः कोऽप्यासीद्धनवान्वने । तस्य धूर्ताः समाश्रित्य मित्रत्वे बहवोऽमिलन् ॥
तं जगदुराढ्यस्य सुता नगरवासिनः । त्वत्कृते याचितास्माभिः सा च पित्रा प्रतिश्रुता ॥
छ्रुत्वा स ददौ तुष्टस्तेभ्योऽर्थं तं च ते पुनः । विवाहस्तव संपन्न इत्यूचुर्दिवसैर्गतैः ॥
ः स सुतरां तुष्टस्तेभ्यो भूरि धनं ददौ । दिनैश्च तं वदन्ति स्म पुत्रो जातस्तवेति ते ॥
नन्द तेन सर्वं च मूढस्तेभ्यः समर्प्य सः । पुत्रं प्रत्युत्सुकोऽस्मीति प्रारोदीच्चापरेऽहनि ॥
ंश्चादत्त लोकस्य हासं धूर्तैः स वञ्चितः । पशुभ्य इव संक्रान्तजडिमा पशुपालकः ॥
ुपालः श्रुतो देव शृण्वलंकारलम्बकम् । ग्राम्यः कश्चित्खनन्भूमिं प्रापालंकरणं महत् ॥
त्रौ राजकुलाच्चौरैर्नीत्वा तत्र निवेशितम् । यद्गृहीत्वा स तत्रैव भार्यां तेन व्यभूषयत् ॥
ान्ध मेखलां मूर्ध्नि हारं च जघनस्थले । नूपुरौ करयोस्तस्याः कर्णयोरपि कङ्कणौ ॥
ाद्भिः ख्यापितं लोकैर्बुद्ध्वा राजा जहार तत् । तस्मात्स्वाभरणं तं तु पशुप्रायं मुमोच सः ॥
कोऽलंकरणो देव शृणु वच्म्यथ तूलिकम् । मूर्खः कश्चित्पुमांस्तूलविक्रयायापणं ययौ ॥
ाुद्धमिति तत्तस्य न जग्राहात्र कश्चन । तावद्ददर्श तत्राग्नौ हेम निष्टप्तशोधितम् ॥
र्णकारेण विक्रीतं गृहितं ग्राहकेण च । तद्दृष्ट्वापि स तत्तूलमिच्छञ्शोधयितुं जडः ॥
ग्नौ चिक्षेप दग्धे च तस्मिँल्लोको जहास तम् । श्रुतोऽयं तूलिको देव खर्जूरीछेदकं शृणु ॥
चेन्मूर्खाः समाहूय न्ययोज्यन्ताधिकारिभिः । ग्राम्या राजकुलादिष्टं खर्जूरानयनं प्रति ॥
दृष्ट्वैकां सुखग्राह्यां खर्जूरपतितां स्वतः । खर्जूरीं तत्र खर्जूरीः सर्वा ग्रामे खकेऽच्छिनन् ॥
ेतास्ताश्च कलिताशेषखर्जूरसंचयाः । उत्थाप्यारोपयामासुर्न चैषां सिद्ध्यति स्म तत् ॥
ाश्चानीतखर्जूरा आहृतारोपणेन ते । खर्जूरीछेदनं बुद्ध्वा राज्ञा प्रत्युत दण्डिताः ॥
कः खर्जूरहासोऽयं निध्यालोकनमुच्यते । निधानदर्शी केनापि कोऽप्याजह्रे महीभुजा ॥
गात्क्वापि पलाय्यायमिति राजकुमन्त्रिणा । नेत्रे तस्योदपाट्येतां निधानस्थानदर्शिनः ॥
ळक्षणान्यपश्यन्तं गतावप्यगतौ समम् । अन्धं दृष्ट्वा च तं मन्त्री स जडो जहसे जनैः ॥
धानालोकनं श्रुत्वा श्रूयतां लवणाशनम् । बभूव गह्वरो ग्रामवासी कोऽपि जडः पुमान् ॥
मित्रेण गृहं जातु नीतो नगरवासिना । भोजितो लवणस्वादून्यन्नानि व्यञ्जनानि च ॥
नेयं स्वादुतान्नादेरित्यपृच्छत्स गह्वरः । प्राधान्याल्लवणेनेति तेनोचे सुहृदा तदा ॥
ेव तर्हि भोक्तव्यमित्युक्त्वा लवणस्य सः । पिष्टस्य मुष्टिमादाय प्रक्षिप्याभक्षयन्मुखे ॥
ूर्णं तस्य दुर्बुद्धेरोष्ठौ श्मश्रूणि चालिपत् । हसतस्तु जनस्यात्र मुखं धवलतां ययौ ॥
णाशी श्रुतो देव त्वया गोदोहकं शृणु । ग्राम्यः कश्चिदभून्मुग्धो गौरेका तस्य चाभवत् ॥
च तस्यान्वहं धेनुः पयःपलशतं ददौ । कदाचिच्चाभवत्तस्य प्रत्यासन्नः किलोत्सवः ॥
कवारं ग्रहीष्यामि पयोऽस्याः प्राज्यमुत्सवे । इति मूर्खः स नैवैतां मासमात्रं दुदोह गाम् ॥
ोत्सवश्च यावत्तां दोग्धि तावत्पयोऽखिलम् । तत्तस्याश्छिन्नमच्छिन्नं लोकस्य हसितं त्वभूत् ॥
ो गोदोहको मूर्खः श्रूयतामपराविमौ । खलतिस्ताम्रकुम्भाभशिराः कश्चित्पुमानभूत् ॥
ुमूलोपविष्टं तं तरुणः कश्चिदैक्षत । आगतोऽत्र कपित्थानि गृहीत्वा क्षुधितः पथा ॥

ः स्वादुभिः किं न सहे घातानिति ब्रुवन् । स खल्वाटो गलद्रक्तशिरा मूर्खो ययौ गृहम् ॥
आज्यबद्धेन पट्टेनेव वृतं शिरः । रक्तेन तस्य तद्दृष्ट्वा हसति स्म न तत्र कः ॥
ोपहास्यत्वं लोके गच्छन्त्यबुद्धयः । लभन्ते नार्थसिद्धिं च पूज्यन्ते तु सुबुद्धयः ॥
ोमुखतः श्रुत्वा मुग्धहासकथा इमाः । नरवाहनदत्तः समुत्थाय व्यधिताह्निकम् ॥
मे पुनस्तेन नियुक्तश्चोत्सुकेन सः । गोमुखः कथयामास प्रज्ञानिष्ठामिमां कथाम् ॥
ापि वनोद्देशे महाञ्शाल्मलिपादपः । उवास लघुपातीति काकस्तत्र कृतालयः ॥
ाचित्स्वनीडस्थो ददर्शात्र तरोरधः । जालहस्तं सलगुडं रौद्रं पुरुषमागतम् ॥
ा वीक्षते यावत्काकस्तावद्वितत्य सः । जालं भुवि विकीर्यात्र व्रीहींश्छन्नोऽभवत्पुमान् ॥
चित्रग्रीवाख्यः पारावतपतिर्भ्रमन् । तत्राजगाम नभसा पारावतशतैर्वृतः ॥
हिप्रकरं दृष्ट्वा जालेऽत्राहारलिप्सया । पतितः पाशनिकरैर्बद्धोऽभूत्सपरिच्छदः ॥
चानुगान्सर्वांश्चित्रग्रीवो जगाद सः । गृहीत्वा चञ्चुभिर्जालं खमुत्पतत वेगतः ॥
ेति ते जालमादायोत्पत्य वेगतः । कपोता नभसा गन्तुं भीताः प्रारेभिरेऽखिलाः ॥
ुत्थायोर्ध्वदृग्विघ्नो लुब्धकः संन्यवर्तत । निर्भयोऽथ जगादैतांश्चित्रग्रीवोऽनुयायिनः ॥
ास्य हिरण्यस्य मूषकस्यान्तिकं द्रुतम् । व्रजामः स इमान्पाशांश्छित्त्वास्मान्मोचयिष्यति ॥
्वा सोऽनुगैः साकं गत्वा तैर्जालकर्षिभिः । मूषकस्य बिलद्वारं प्राप्याकाशादवातरत् ॥
हिरण्य निर्याहि चित्रग्रीवोऽहमागतः । इत्याजुहाव तं तत्र मूषकं स कपोतराट् ॥
ा द्वारमार्गेण दृष्ट्वा तं चागतं तथा । सुहृदं निर्ययावाखुस्तस्माच्छतमुखाद्बिलात् ॥
पृष्ट्वा वृत्तान्तं संभ्रमात्सोऽपि मूषकः । पारावतपतेः पाशान्सानुगस्याच्छिनत्सुहृत् ॥
शस्तमामन्त्र्य मूषकं वचनैः प्रियैः । चित्रग्रीवः खमुत्पत्य ययौ सोऽनुचरैः सह ॥
ातः स काकोऽत्र लघुपाती विलोक्य तत् । बिलप्रविष्टं तद्द्वारमागत्योवाच मूषकम् ॥
ीति काकोऽहं दृष्ट्वा त्वां मित्रवत्सलम् । मित्रत्वाय वृणोमीदृग्विपदुद्धरणक्षमम् ॥
ाभ्यन्तराद्दृष्ट्वा मूषकस्तं स वायसम् । जगाद गच्छ का मैत्री भक्ष्यभक्षकयोरिति ॥
ा वायसोऽवादीच्छान्तं भुक्ते मम त्वयि । तृप्तिः क्षणं स्यान्मित्रे तु शश्वज्जीवितरक्षणम् ॥
क्त्वा सशपथं कृत्वाश्वासं च तेन सः । निर्गतेनाकरोत्सख्यमाखुना सह वायसः ॥
सपेशीरानैषीदाखुः शालिकणानपि । एकत्र सह भुञ्जानौ तस्थतुस्तावुभौ सुखम् ॥
स च काकस्तं मित्रं मूषकमब्रवीत् । इतोऽविदूरे मित्रास्ति वनमध्यगता नदी ॥
मन्थरको नाम कूर्मश्चास्ति सुहृन्मम । तदर्थं यामि तत्स्थानं सुप्रापामिषभोजनम् ॥
त्प्राप्य इहाहारो नित्यं व्याधभयं च मे । इत्युक्तवन्तं तं काकं मूषकोऽपि जगाद सः ॥
तर्हि वत्स्यामो नय तत्रैव मामपि । ममाप्यस्तीह निर्वेदो वक्ष्ये तत्रैव तं च ते ॥
ादिनमादाय चञ्च्वा तं स हिरण्यकम् । नभसा लघुपाती तद्ययौ वननदीतटम् ॥
्रा सह कूर्मेण तत्र मन्थरकेण सः । कृतातिथ्येन मित्रेण स तस्थौ मूषकान्वितः ॥
ारे च कूर्माय तस्मै स्वागमकारणम् । हिरण्यसख्यवृत्तान्तयुक्तं काकः शशंस सः ॥
ः कूर्मस्तं कृत्वा मित्रं वायससंस्तुतम् । देशनिर्वासनिर्वेदहेतुं पप्रच्छ मूषकम् ॥
हिरण्यः स तयोरुभयोः काककूर्मयोः । शृण्वतोर्निजवृत्तान्तकथामेतामवर्णयत् ॥
ाहाबिले तत्र नगरासन्नवर्तिनि । वसन्राजकुलाद्धारनामीयास्थापयं निशि ॥
ानेन हारेण तेन जातौजसं च माम् । समर्थमन्नाहरणे मूषकाः पर्यवारयन् ॥
त्रे च [illegible] । परिव्राजक[illegible] कृत्वा नानाभिक्षान्नवर्त्तिकः ॥

अवधीत्पुरुषांस्तांश्च पापान्दारापहारिणः । प्राप साभरणां तां च सधनां निजयोषितम् ॥
द्वितीयेऽह्नि स च प्रातरेत्य नत्वा कृतस्थितिः । चकार व्याजसिद्धस्य तस्याहारनिमन्त्रणम् ॥
गृहप्रवेशानिच्छोश्च नक्तभोजित्ववादिनः । प्रदोषे हस्तिशालायां तस्याहारमकल्पयत् ॥
सोऽपि मन्त्रबलात्सर्पं वंशनाडीनिवेशितम् । गुप्तं गृहीत्वा गत्वात्र मन्त्री भुङ्क्ते स्म सानुगः ॥
ततो गते हस्तिपाले सुप्तेष्वन्येषु तत्र सः । हस्तिनो भद्रदन्तस्य वंशनाड्या निवेश्य तम् ॥
कर्णे सुप्तस्य भुजगं रात्रिं नीत्वैव तत्र ताम् । ययौ स्वदेशं मगधान्हस्ती तेन व्यपादि च ॥
हत्वा तं धर्मगोपस्य गजं दर्पमिवागते । तस्मिन्मन्त्रिवरे राजा भद्रबाहुर्ननन्द सः ॥
ततो वाराणसीं तस्मै धर्मगोपाय याचितुम् । अनङ्गलीलां कन्यां तां दूतं च विससर्ज सः ॥
सोऽपि तां प्रददौ तस्मै तद्गजाभावदुर्बलः । भजन्ति वैतसीं वृत्तिं राजानः कालवेदिनः ॥
तदेवं प्रज्ञया तस्य मन्त्रगुप्तस्य मन्त्रिणः । अनङ्गलीलां संप्राप भद्रबाहुः स भूपतिः ॥
तस्मान्मयापि बुद्ध्या सा भार्या प्राप्येति वादिनम् । मृगाङ्कदत्तं सचिवस्तं विचित्रकथोऽब्रवीत् ॥
सर्वं सेत्स्यति ते हारात्स्वप्रदृष्टादनुग्रहात् । अमोघो देवतानां च प्रसादः किं न साधयेत् ॥
तथा च शृणुतात्रैकां वर्ण्यमानां मया कथाम् । आसीत्तक्षशिलापुर्यां भद्राक्षो नाम भूपतिः ॥
स पुत्रकामः पद्मानां शतेनाष्टभिरेव च । सितानां पूजयामास खड्गे लक्ष्मीं दिने दिने ॥
एकदार्चयतस्तस्य राज्ञो मौनमभुञ्जतः । ऊनमेकमभूत्पद्मं दैवाद्गणयतो धिया ॥
स हृत्पद्मं विपाट्य स्वं ददौ देव्यै ततश्च सा । तुष्टा तस्मै ददौ सार्वभौमपुत्रप्रदं वरम् ॥
कृत्वा चाक्षतदेहं तं नृपं प्रायाददर्शनम् । अथ तस्य सुतो राज्ञो महादेव्यामजायत ॥
हृत्पुष्करप्रसादेन जातोऽयमिति तं च सः । पुष्कराक्षं नृपश्चक्रे नाम्ना पुत्रं सुलक्षणम् ॥
क्रमाच्च यौवनप्राप्तं तनयं तं गुणान्वितम् । राज्येऽभिषिच्य भद्राक्षः स राजा शिश्रिये वनम् ॥
पुष्कराक्षोऽपि संप्राप्य राज्यं प्रतिदिनं हरम् । पूजयन्नेकदाभ्यर्च्य भार्यां तस्मादयाचत ॥
सर्वं संपत्स्यते पुत्र यथाभिलषितं तव । इति शुश्राव स गिरं गगनादुद्गतां तदा ॥
ततः प्रहृष्टो जातास्थः स तिष्ठन्जातुचिन्नृपः । आखेटकविनोदाय जगाम मृगकाननम् ॥
तत्र संभोगसंसक्तभुजंगमिथुनाशने । प्रवृत्तं करभं दृष्ट्वा शोकाक्रान्तो न्यपातयत् ॥
स निपातितमात्रः सन्मुक्त्वा तां करभस्तनुम् । भूत्वा विद्याधरः प्रीतः पुष्कराक्षं तमब्रवीत् ॥
भवान्कृतोपकारो मे तत्ते यद्वच्मि तच्छृणु । रत्नमालीति नाम्नास्ति राजन्विद्याधरोत्तमः ॥
तं रूपलुब्धा तरुणं वव्रे दृष्ट्वानुरागिणी । स्वयं तारावली नाम विद्याधरवरात्मजा ॥
तस्याः पिता च स्वेच्छातस्तयोः कृतविवाहयोः । कोपादपातयच्छापं कंचित्कालं वियोगदम् ॥
ततस्तारावलीरत्नमालिनौ तौ विजह्रतुः । दंपती प्रसरत्प्रीती तासु तासु स्वभूमिषु ॥
कदाचित्तेन शापेन मिथो दृष्टिपथाच्युतौ । अन्योन्यविप्रयुक्तौ तौ जातौ क्वापि वनान्तरे ॥
ततस्तारावली सा तमन्विष्यन्ती पतिं क्रमात् । पश्चिमाम्भोधेरगात्पारे वनं सिद्धर्षिसेवितम् ॥
तत्र सापश्यदुत्फुल्लमेकं जम्बुमहातरुम् । आश्वासयन्तं प्रीत्येव मधुरैर्भ्रमरारवैः ॥
उपाविशच्च विश्रान्त्यै भृङ्गीरूपं विधाय सा । वृक्षे तस्मिन्नथैकस्मिन्कुसुमे मधुपायिनी ॥
क्षणाद्दैवात्तमत्रैव प्राप्तं दृष्ट्वा चिरात्पतिम् । हर्षच्युतेन वीर्येण सिक्तं पुष्पं तयाशु तत् ॥
अथत्वा भृङ्गीवपुर्गत्वा संगताभूच्च तेन सा । ज्योत्स्नेव शशिना भर्त्रा चिन्वता रत्नमालिना ॥
ततस्तेन समं तस्यां गतायां स्वनिकेतनम् । तद्वीर्यसिक्तात्तत्राभूज्जम्बुपुष्पात्ततः फलम् ॥
[illegible] कन्यका । सममूत्रहि दिव्यानां वीर्यं भजति मोघताम् ॥
[illegible] मुनिः । तत्रागाद्पतत्तच्च पक्वं जम्बुतरोः फलम् ॥
[illegible]

वृद्धिं प्राप्ता तस्याश्रमे मुनेः । दृष्टा विनयवत्येषा नभसा गच्छता मया ॥ १०४
ण मदनेन च मोहितः । उपेत्य तामनिच्छन्तीं हठाद्धर्तुं प्रवृत्तवान् ॥ १०५
: क्रुद्धः क्रन्दन्त्या श्रावितस्तया । विजितासुरुपागत्य शापं मह्यमदान्नृप ॥ १०६
ङ्गनिन्दितः करभो भव । पुष्कराक्षान्नृपात्प्राप्ते वधे शापाद्विमोक्ष्यसे ॥ १०७
श्च स एवास्या भविष्यति । इत्यहं मुनिना शप्तो जातोऽस्यां करभो भुवि ॥ १०८
शापान्तस्त्वत्तस्तत्पश्चिमाम्बुधेः । पारस्थं तद्वनं गच्छ नाम्ना सुरभिमारुतम् ॥ १०९
ं दिव्यां रूपदर्पहरां श्रियः । इत्युक्त्वा पुष्कराक्षं स दिवं विद्याधरो ययौ ॥ ११०
गत्वा स्वां पुरीं विन्यस्य मन्त्रिषु । राज्यं रात्रौ ततः प्रायादेकोऽश्वमधिरुह्य सः ॥ १११
प्राप्य पश्चिमाब्धेस्तटं पुनः । कथं तरेयमम्भोधिमिति तत्र व्यचिन्तयत् ॥ ११२
कं स शून्यं चण्डिकागृहम् । प्रविश्य च ततः स्नात्वा देवीं तां प्रणनाम च ॥ ११३
तत्र वीणामादाय सादरः । उपवीणयति स्मैतां देवीमत्र स्वगीतकैः ॥ ११४
च सुप्तं तत्रैव सा निशि । भूतग्रामेण तं स्वेन पारमब्धेरनाययत् ॥ ११५
द्धोऽब्धेस्तीरे राजा ददर्श सः । वनान्तःस्थितमात्मानं न तस्मिंश्चण्डिकागृहे ॥ ११६
श्चात्र भ्रमन्नाश्रममैक्षत । प्रणमन्तमिवातिथ्यात्फलभारानतैर्द्रुमैः ॥ ११७
नेव कणितेन पतत्रिणाम् । प्रविश्य तत्र चापश्यत्स्थितं शिष्यैर्वृतं मुनिम् ॥ ११८
तमृषिं राजा स पादयोः । सोऽप्येनं विहितातिथ्यो ज्ञानवान्मुनिरब्रवीत् ॥ ११९
त्वमागतः सा क्षणं गता । इध्मादिहेतोर्विनयवती तत्तिष्ठ संप्रति ॥ १२०
पूर्वभार्यामनैव भूपते । इत्युक्तो मुनिना सोऽपि पुष्कराक्षो व्यचिन्तयत् ॥ १२१
एवायं विजितासुस्तदेष च । वनमेतद्ध्रुवं देव्या तारितोऽहं महार्णवम् ॥ १२२
र्पा समोक्ता मुनिनामुना । इत्यालोच्यैव हृष्टस्तं स पप्रच्छ मुनिं नृपः ॥ १२३
कथं मे कथ्यतामिति । ततो जगाद स मुनिः श्रूयतां यदि कौतुकम् ॥ १२४
न्यस्ताम्रलिप्त्यां पुरा वणिक् । विद्युल्लेखेति नाम्ना च भार्या तस्याभवच्छुभा ॥ १२५
रैः शत्रैश्चाभ्याहतो वणिक् । मुमूर्षुर्निरगाद्वह्निं प्रवेष्टुं भार्यया सह ॥ १२६
श्च तावुभावपि दंपती । आकाशेनागतं हंसमिथुनं रुचिराकृति ॥ १२७
तौ प्रविश्य दहनं मृतौ । राजहंसौ समुत्पन्नौ पुनर्भार्यापती उभौ ॥ १२८
र्षासु रात्रौ खर्जूरपादपे । नीडस्थितौ तमुन्मूल्य तरुं वात्या व्ययूयुजत् ॥ १२९
हंसीं चिन्वञ्शान्ते प्रभञ्जने । सरःस्वथ दिगन्तेषु न कुतश्चिदवाप्तवान् ॥ १३०
यं हंसानां मानसं सरः । स्मरार्तः स ययौ हंस्या जनिताशोऽन्यया पथि ॥ १३१
तीं स्वां नीत्वा च जलदागमम् । गिरिशृङ्गं जगामैकं विहर्तुं स तया सह ॥ १३२
सी केनचिल्लुब्धकेन सा । तद्दृष्ट्वा भयशोकार्तः स हंसः प्राद्रवत्ततः ॥ १३३
हंसीं मृतामादाय वीक्ष्य च । दूरान्मार्गागतान्कांश्चित्पुरुषान्सायुधान्बहून् ॥ १३४
श्चैस्तामाच्छाद्य तृणैर्भुवि । हंसीं न्यगाद्रित्लोक्यैतां हरेयुर्जाल्मी इति ॥ १३५
प्रगम्य जिघृक्षतः । लुब्धकस्योदृततृणा हंसी सा तस्य पश्यतः ॥ १३६
या मृतसंजीवनौषधेः । रसेन जीवितं प्राप्य समुत्पत्य ततो ययौ ॥ १३७
तां गत्वैकस्मिन्सरस्तटे । मूढोऽपतद्धंसयूथे पश्यंस्तामेव तन्मनाः ॥ १३८
ोऽपि क्षिप्त्वा जालं निबध्य तान् । हंसान्सर्वानुपाविक्षदाहारार्थं किल क्षणात् ॥ १३९
सा हंसी चिन्वती पतिम् । ददर्श जालबद्धं तं दिग्भ्रान्तौ व्यलोकयन ॥ १४०
न केनाप्यत्र सरस्तटे । पुंसा नक्तोपरि न्यस्ता [illegible] ॥ १४१

गत्वा चापश्यतस्तस्य तां गृहीत्वैव कण्ठिकाम् । दाशाय दर्शयन्ती सा तस्मै व्योम्ना शनैः
दाशोऽपि सोऽन्वधावत्तां दृष्ट्वा च श्वात्तकण्ठिकाम् । हंसीं गृहीतलगुडः पक्षिजालं विहाय
हंसी च गत्वा शैलाग्रे दूरे तां कण्ठिकां न्यधात् । धीवरोऽपि स तल्लोभात्तत्रारोढुं प्रचक्र
तद्दृष्ट्वा सा द्रुतं गत्वा हंसी पत्युः समीपगे । बद्धस्य वृक्षे संसुप्तं कपिं चञ्च्वाक्ष्ण्यताडयत्
स कपिस्ताडितस्त्रस्तः पतित्वोपर्यपाटयत् । जालं तच्चेन निर्जग्मुर्हंसाः सर्वेऽपि ते ततः ॥
अथ तौ संगतावुक्तस्ववृत्तान्तौ परस्परम् । हंसौ भार्यापती हृष्टौ यथाकामं विजह्रतुः ॥
दाशं तं चागतं प्राप्तकण्ठिकं पक्षिलोभतः । लेभेऽत्र स पुमांश्छिन्वन्हृता सा यस्य कण्ठिक
स भीतिसूचितस्तस्य हस्तात्संप्राप्य कण्ठिकाम् । दाशस्य दक्षिणं पाणिं पुमांश्छुरिकयाच्छि
तौ चापि जातु हंसौ द्वौ छत्रीकृत्यैकमम्बुजम् । मध्याह्नकाले सरसः प्रोत्थाय व्योम्नि चेर
क्षणाच्च नद्याः कस्याश्चित्खगौ तौ तीरमापतुः । मुनिनाध्याखिलं केनाप्यर्चार्थ्यग्रेण धूर्जटे
तत्र व्याधेन केनापि यान्तौ तौ सह दंपती । हतावेकेन युगपच्छरेण भुवि पेततुः ॥
आतपत्राम्बुजं तच्च तदीयमपतत्तदा । मुनेरर्च्चयतस्तस्य शिवलिङ्गस्य मूर्धनि ॥
ततो व्याधः स दृष्ट्वा तौ हंसं स्वीकृत्य हंसिकाम् । तां ददौ मुनये तस्मै सोऽप्यानर्च शि
तल्लिङ्गमूर्ध्नि पतितस्य तस्याब्जस्य प्रभावतः । स पुष्कराक्ष हंसस्त्वं जातो राजान्वयेऽधुन
हंसी च सैषा विनयवती विद्याधरान्वये । जाता विशेषतो हास्या भांसैरभ्यर्चितो हरः ॥
इत्थं ते पूर्वभार्यासावित्युक्तो विजितासुना । मुनिना पुष्कराक्षः स राजा तं पुनरब्रवीत्
कथमग्निप्रवेशस्य तस्याबोधविघातिनः । पक्षियोनावभूज्जन्म भगवन्फलमावयोः ॥
इत्युक्तवन्तं राजानं तं स प्रत्यब्रवीन्मुनिः । यद्भावितात्मा म्रियते जन्तुस्तद्रूपमश्नुते ॥
तथा ह्युज्जयिनीपुर्यां नैष्ठिकी ब्रह्मचारिणी । लावण्यमञ्जरी नाम कुमारी ब्राह्मणी पुरा ॥
युवानं ब्राह्मणं दृष्ट्वा कमलोदयसंज्ञकम् । सहसा तद्गतस्वान्ता दह्यमाना स्मराग्निना ॥
अमुञ्चन्ती स्वनियमं तद्भोगध्यानभाविता । गत्वा गन्धवतीतीरं तीर्थे तत्याज जीवितम् ।
तया भावनया किं न जाताभूद्भोगसंगिनी । नगर्यामेकलव्यायां वेश्या रूपवतीति सा ॥
तीर्थव्रतप्रभावाच्च सैव जातिस्मरा सती । प्रसङ्गाच्चोडकर्णाय जापकाय द्विजन्मने ॥
स्वपूर्वजन्मवृत्तान्तरहस्यं तदवर्णयत् । जपकर्मैकचित्तत्वे कुर्वाणस्यानुशासनम् ॥
अन्ते च शुद्धसंकल्पा ययौ वेश्यापि सद्गतिम् । तद्राजन्योऽत्र यच्चित्तस्तन्मयत्वमुपैति स
एवमुक्त्वा स राजानं स्नानाय विससर्ज तम् । मुनिर्मध्याह्नसवनं स्वयं च निरवर्तयत् ।
राजा स पुष्कराक्षोऽपि गतो वननदीतटम् । तां ददर्शात्र विनयवतीं पुष्पाणि चिन्वतीम्
भासमानां स्ववपुषा प्रभामिव विवस्वतः । अदृष्टपूर्वं गहनं प्रविष्टां कौतुकाद्वनम् ॥
केयं स्यादिति यावच्च स चिन्तयति सोत्सुकः । तावत्कथां निषण्णा सा विस्रब्धाभवत्स
सखि विद्याधरो यो मां हर्तुमैच्छत्पुरा स मे । आगत्य शापमुक्तोऽद्य भर्तृप्राप्तिमिहोक्तवा
तच्छ्रुत्वा प्रत्यवोचत्तां सा सखी मुनिकन्यकाम् । अस्त्येतन्मयि शृण्वत्यां मुञ्जकेशोऽद्य
इत्थमुक्तो निजः शिष्यो मुनिना विजितासुना । गच्छ तारावलीरङ्कुमालिनावानय द्रुतम्
कामं विनयवत्या हि वत्सेह दुहितुस्तयोः । राज्ञश्च पुष्कराक्षस्य विवाहोऽद्य भविष्यति
इत्युक्तो गुरुणा मुञ्जकेशो यातस्तथेति सः । अत एह्याश्रमपदं गच्छावः सखि संप्रति ॥
एवं तयोक्ते विनयवती साथ ततो ययौ । पुष्कराक्षश्च शुश्राव स तद्दूरादलक्षितः ॥
ज्वलत्कामाग्निसंतापादिव नद्यां निमज्ज्य च । जगाम विजितासोस्तमाश्रमं स पुनर्नृपः
तत्र तारावलीरङ्कुमालिनौ तौ समागतौ । आनर्चतुस्तं प्रणतं परिवव्रुश्च तापसाः ॥
ततो वेद्यां स्वतेजोभिर्भासितायां महर्षिणा । द्वितीयेनेव मर्तेन वह्निना विजितासुना ॥

र्वीं प्रशाधि समभेतया । इत्येतस्मै वरं चादाद्विजितासुर्महामुनिः ॥ १८१

अथैष तदनुज्ञया नववधूमुपादाय तां
नृपो गगनगामिनं तमधिरुह्य दिव्यं रथम् ।
विलङ्घ्य च पयोनिधिं सपदि पुष्कराक्षस्ततो
जगाम नगरीं निजां प्रकृतिनेत्रचन्द्रोदयः ॥ १८२

तत्र च जित्वा पृथिवीं रथप्रभावादवाप्तसाम्राज्यः ।
आस्ते स्म विनयवत्या सहितो भोगांश्चिराय भुञ्जानः ॥ १८३

त्थं सुदुष्करमपि स्वरसेन कार्यं सिद्ध्यत्यनुग्रहवतीष्विह देवतासु ।
त्स्वप्रदृष्टगिरिजादयितप्रसादात्सेत्स्यत्यभीष्टमचिरेण तवापि देव ॥ १८४

तां निशम्य स विचित्रकथाममात्यादौत्सुक्यवानधिगमाय शशाङ्कवत्याः ।
जात्मजः स्वसचिवैः सममुज्जयिन्यां बुद्धिं बबन्ध गमनाय मृगाङ्कदत्तः ॥ १८५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके द्वितीयस्तरङ्गः ।

---

तृतीयस्तरङ्गः ।

त्र कर्मसेननृपात्मजाम् । तां शशाङ्कवतीं प्रामुकामो वेतालवर्णिताम् ॥ १
मं स्वनगर्यां निर्विर्गमम् । महाव्रतिकवेषेण सोऽमन्त्रयत मन्त्रिभिः ॥ २
ङ्गकपालादिसमाहृतौ । स राजपुत्रः सचिवं स्वैरं भीमपराक्रमम् ॥ ३
सेन्गृहे चारादबुध्यत । मृगाङ्कदत्तस्य पितुर्मन्त्री मुख्योऽत्र भूपतेः ॥ ४
ऽकस्मात्संचरन्हर्म्यपृष्ठतः । मृगाङ्कदत्तस्ताम्बूलनिष्ठीवनरसं जहौ ॥ ५
मूर्ध्नि दैवात्तत्पितृमन्त्रिणः । अदृष्टस्य किलाधस्तात्तेन मार्गेण गच्छतः ॥ ६
न मुक्तं निष्ठीवनं स तत् । मन्त्री परिभवक्रोधं कृतस्नानो हृदि न्यधात् ॥ ७
राज्ञो दैवाद्विषूचिका । मृगाङ्कदत्तजनकस्यान्येद्युरुदपद्यत ॥ ८
लब्ध्वा मन्त्री तं विजने नृपम् । सहसोद्भूतरोगार्तमवदद्दर्शिताभयः ॥ ९
भीमपराक्रमगृहे तव । मृगाङ्कदत्तेनारब्धः कर्तुं तेनासि पीडितः ॥ १०
गतं प्रत्यक्षं सच दृश्यते । तन्निराकुरु देशात्तं देहाद्व्याधिमिवात्मजम् ॥ ११
भ्रान्तः प्राहिणोत्तदवेक्षणे । निजं सेनापतिं भीमपराक्रमगृहं नृपः ॥ १२
दि लब्ध्वा सेनापतिस्ततः । आनीय तत्क्षणं तस्मै राज्ञे साक्षाददर्शयत् ॥ १३
त्रो मे द्रोही निर्वास्यतामितः । नगर्याः सहितोऽमात्यैस्त्वयाद्यैवाविलम्बितम् ॥ १४
द्धो राजा सेनापतिं ततः । आश्वस्तो वेत्ति कुसृतिं प्रभुः को हि स्वमन्त्रिणाम् ॥ १५
त्वा राजादेशं निवेद्य तम् । मृगाङ्कदत्तं सामात्यं नगर्या निरकालयत् ॥ १६
त्तेहृष्टोऽर्चितविनायकः । मृगाङ्कदत्तो मनसा प्रणम्य पितरौ ततः ॥ १७
त्य दूरं तान्सहयायिनः । प्रचण्डशक्तिप्रमुखानुवाच दश मन्त्रिणः ॥ १८
त किराताधिपतिर्महान् । सब्रह्मचारी विद्यासु स च बालसुहृन्मम ॥ १९
क्स हि पित्रात्ममुक्तये । नियमाय प्रतिनिधिस्तातस्येह समर्पित ॥ २०
मोत्रजः स्वबलेन सः । मद्विज्ञप्तेन तातेन पित्र्ये राज्येऽधिरोपितः ॥ २१
वद्गच्छामः सुहृदस्ततः । क्रमेणोज्जयिनीं यामस्तां शशाङ्कवतीं प्रति ॥ २२
च्छ्रिस्तैः सचिवैः सह । प्रययौ स सतः प्राप सायं चैकां महाटवीम् ॥ २३
यां कृच्छ्रादेकमवाप सः । तीरोपान्तप्ररूढैकशुष्कपादपकं सरः ॥ २४

रात्रौ च चन्द्रशुभ्रायां प्रबुद्धः स ददर्श तम् । शुष्कवृक्षं दलैः पुष्पैः फलैश्चापूरितं त्र
पक्वानि च फलान्यस्य पतन्त्यालोक्य तत्क्षणम् । प्रबोध्य दर्शयामास सचिवेभ्यस्तद्
ततस्तैर्विस्मयाविष्टैः क्षुधितैः सह तानि सः । फलानि तस्य सुस्वादुरसानि बुभुजे तरो
भुक्तवत्सु च तेष्वत्र पश्यत्स्वेवाखिलेषु सः । शुष्कवृक्षः क्षणाद्विप्रकुमारः समपद्यत ।
पृष्टो मृगाङ्कदत्तेन विस्मितेनाथ सोऽब्रवीत् । दमधिर्नाम कोऽप्यासीदयोध्यायां द्विजो
तस्याहं श्रुतधिर्नाम पुत्रः स च मया सह । दुर्भिक्षे मृतजानिः सन्भ्रमन्प्रापदिमां भुव
इह केनापि दत्तानि प्राप्य पञ्च फलानि सः । क्षुत्क्षामस्त्रीणि मे प्रादाद्द्वे चास्थापयदा
ततः स्नातुं सरस्तोयं गते तस्मिन्फलान्यहम् । तानीह भुक्त्वा निःशेषाण्यकार्षं व्याज
सोऽथ स्नात्वागतो बुद्ध्वा छद्मतः काष्ठवत्स्थितम् । मां शप्तवान्भवेहैव शुष्कवृक्षः सर
रात्रौ च ते पुष्पफलं चन्द्रवत्यां भविष्यति । तर्पयित्वातिथीञ्जातु फलैः शापाद्विमोक्ष्य
इति पित्राभिशप्तोऽहं सद्यः शुष्कद्रुमोऽभवम् । युष्मद्भुक्तफलश्चाद्य चिरान्मुक्तोऽस्मि श
इत्युक्तनिजवृत्तान्तं पृच्छन्तं श्रुतधिं ततः । मृगाङ्कदत्तोऽपि स तं स्ववृत्तान्तमबोधयत्
ततः सोऽबान्धवो नीतावधीती श्रुतधिर्द्विजः । मृगाङ्कदत्तमभ्रुतवान्वरं तदनुयायिताम् ।
ततो नीत्वा निशां प्रातस्तेन श्रुतधिना सह । मृगाङ्कदत्तः स ततः प्रतस्थे सचिवान्वित
गच्छंश्च स प्राप्य वनं करिमण्डितसंज्ञकम् । ददर्श पुरुषान्पञ्च भूरिकेशान्दुराकृतीन्
उपेत्य प्रश्रयात्तैश्च तमूचुर्जातविस्मयम् । काशिपुर्यां वयं जाता विप्रा धनूपजीविनः ॥
तेऽनग्रहपुष्टतृणात्ततो देशादिदं वनम् । आगताः स्मो बहुतृणं दुर्भिक्षे सह धेनुभिः ॥
इह च प्राप्तमस्माभिर्वापीवारि रसायनम् । तीररूढद्रुमभ्रश्यत्रिफलानित्यभावितम् ॥
पिबतां तत्सदास्माकमेषां क्षीरभुजां सताम् । पञ्च वर्षशतान्यस्मिन्व्यतीतान्यजने वने
तेनेदृशा वयं देव यूयं चातिथयोऽधुना । अस्माभिर्दैवतः प्राप्ता तदेतास्माकमाश्रमम् .
इति तैरर्थितो गत्वा सानुगः स तदाश्रमम् । मृगाङ्कदत्तः क्षीरादिभोजी तदनयद्दिनम्
प्रस्थितश्च ततः प्रातरन्यान्यपि विलोकयन् । कौतुकानि स संप्राप किरातविषयं क्रमात
प्राहिणोच्छ्रुतधिं चात्र स्वागमावेदनाय सः । तं किरातपतिं मित्रं शक्तिरक्षितकं प्रति ।
सोऽपि बुद्ध्वा किरातेशो निर्गत्याग्रे तमानतः । मृगाङ्कदत्तं सामात्यं पुरं प्रावेशयन्निजम
ततस्तेनोपचरितस्तस्थौ तत्र स कांश्चन । मृगाङ्कदत्तो दिवसानुक्तागमनकारणः ॥
स्वकार्ये प्राप्तकालं च साहाय्ये शक्तिरक्षितम् । स्थापयित्वात्र सज्जं तमामन्त्र्य च नृपात
प्रातिष्ठत स पुण्याहे पुनरुज्जयिनीं प्रति । शशाङ्कवत्या हृतधीरात्मना द्वादशस्ततः ॥
गच्छंश्च सोऽटवीं प्राप्य शून्यां तरुतलस्थितम् । तपस्विनं ददर्शैकं भस्माजिनजटाभृतम
निराश्रमपदेऽरण्ये किमेकाकीह तिष्ठसि । भगवन्नित्युपागम्य स तं पप्रच्छ सानुगः ॥
सोऽथ तं तापसोऽवादीदहं शिष्यो महागुरोः । शुद्धकीर्त्यभिधानस्य नानामन्त्रौघसिद्धिभ
सोऽहं कदाप्यकरवं स्वस्थावेशं प्रसङ्गतः । शुभलक्षणमासाद्य कंचित्क्षत्रकुमारकम् ॥
स कुमारः समाविष्टः पृष्टो नानाविधानि मे । सिद्धौषधिरसक्षेत्राण्युदीर्येदमथाब्रवीत् ॥
अस्तीहोत्तरदिग्भागे केवलः शिंशपातरुः । विन्ध्याटव्यामधश्चास्य नागेन्द्रभवनं महत्
तच्चार्द्रधूलिप्रच्छन्नजलं सदुपलक्ष्यते । मध्याह्ने हंसमिथुनैः क्रीडद्भिः साम्बुसारसैः ॥
तत्र पारावताख्योऽस्ति जात्या नागवरो बली । तस्य देवासुररणात्प्राप्तः खड्गोऽस्त्यनुत्तम
वैदूर्यकान्तिर्नाम्ना तं [illegible] भूत्वा विचरत्यपराजितः ।
स चासिः प्राप्यते दे[illegible]ष्ममथाकार्षं विसर्जनम् ॥
ततोऽन्यनिशुस्तः सहै[illegible]नप्राप्य खिन्नो मतुंसिहाग

...त्तेन सानुगेन समं ययौ । तस्य नागस्य भवनं पादलेपेन तापसः ॥ ६५
...मे मन्त्रबद्धासु दिक्षु च । रात्रौ मृगाङ्कदत्तादीन्स्थापयित्वाभिमन्त्रितैः ॥ ६६
...स्य क्षिप्तैस्तण्डुलितो जलात् । स नागदमनैर्मन्त्रैर्होमं कर्तुं प्रचक्रमे ॥ ६७
...ादीन्मन्त्रशक्त्या जिगाय सः । ततोऽत्र निर्ययौ तस्माद्दिव्या स्त्री शिंशपातरोः ॥ ६८
...ाव सा रत्नाभरणारवैः । उपेत्य तं क्षणाच्चक्रे कटाक्षक्षतमानसम् ॥ ६९
तस्य समालिङ्ग्य घनस्तनी । हस्तात्क्षिप्तमन्त्रस्य होमभाण्डमपातयत् ॥ ७०
...कालं स नागो भवनात्ततः । पारावताख्यः कल्पान्तघनाघन इवोदगात् ॥ ७१
...ालाघोरं गर्जितदारुणम् । स नष्टदिव्यनारीको हृत्स्फोटं प्राप तापसः ॥ ७२
...यात्र कृतसाहाय्यकांस्तु तान् । नागो मृगाङ्कदत्तादीनशपच्छान्तवैकृतः ॥ ७३
...तात्कृतं निष्कारणं यतः । विप्रयुक्तास्ततोऽन्योन्यं कंचित्कालं भविष्यथ ॥ ७४
नागे सर्वे ते तत्र तत्क्षणम् । ध्वान्तरुद्धदृशो ध्वस्तशब्दश्रवणशक्तयः ॥ ७५
...श्रा विप्रयुक्ता भवंस्ततः । शापप्रभावात्क्रोशन्तश्चिन्वन्तश्च परस्परम् ॥ ७६
...ः स गते रात्रिविभ्रमे । भ्राम्यन्नितस्ततोऽटव्यां तत्रासीत्सचिवैर्विना ॥ ७७
...पु द्वित्रेष्वथ तस्य सः । अकस्माच्छ्रुतधिर्विप्रो विचिन्वन्प्रापदन्तिकम् ॥ ७८
...ाश्रुः श्रुतधिस्तं कृतादरम् । स्वभक्तिनतं पृच्छन्तं समाश्वास्यैवमभ्यधात् ॥ ७९
किं तु जाने यास्यन्ति ते [illegible] ति हि वः ॥ ८०
न प्रेरितस्तद्युतोऽथ सः । [illegible] ते ॥ ८१
...देवसैर्मार्गेणाशङ्कितागतम् । [illegible] णम् ॥ ८२
...ं प्रणतं परिरभ्य सः । उपवेश्य च पप्रच्छ वार्तामितरमन्त्रिणाम् ॥ ८३
...स्तं भूतप्रियमुवाच सः । न जाने देव कस्तेषु क्व गतो नागशापतः ॥ ८४
...ीत्येतद्यथा जाने तथा शृणु । तदाहं नागशापेन दूराकृष्टः परिभ्रमन् ॥ ८५
...ागे क्रान्तः केनापि साधुना । आश्रमं प्रापितोऽभूवं महर्षेर्ब्रह्मदण्डिनः ॥ ८६
...तैः फलाम्भोभिर्गतक्लमः । पर्यटन्नाश्रमाद्दूरादद्राक्षं बृहतीं गुहाम् ॥ ८७
...स्यां दृष्ट्वान्तर्मणिमन्दिरम् । प्रवृत्तवानहं जालगवाक्षैस्तत्र वीक्षितुम् ॥ ८८
...े स्त्री भ्रमयन्ती सभृङ्गकम् । भृङ्गास्तेऽथाश्रिता भेदेनात्रस्थौ वृषगर्दभौ ॥ ८९
क्षीरासृक्फेनौ पीत्वा यथाक्रमम् । द्वये सितासिता भूत्वा जातास्ते जालकारकाः ॥ ९०
...श्च द्विविधैर्विविधाः कृताः । जालपाशाः सुपुष्पैश्च विषपुष्पैश्च संगताः ॥ ९१
...क्ता जालकारा यथासुखम् । श्वेतकृष्णोभयमुखेनैव दष्टा महाहिना ॥ ९२
...मारतया नार्यौ समुत्थिताः । पुनस्तथैव तानेव पाशान्श्लिष्टा यथातथम् ॥ ९३
...ःपजालस्थेष्वारटत्स्वथ । अन्येऽपि तेऽन्यजालस्थाः प्रवृत्ताः क्रन्दितुं तदा ॥ ९४
...न तत्रस्थेन कृपालुना । केनापि भाल्लो मुक्ता ततो ज्वाला सपन्निना ॥ ९५
...स्ते दण्डं सुषिरवैद्रुमम् । प्रविश्य [illegible] लीना ज्योतिषि भास्वरे ॥ ९६
...ा स्त्री सचक्रवृषगर्दभा । तद्दृष्ट्वा विस्मितो [illegible] तत्र पर्यटन् ॥ ९७
...श्चामपश्यं भृङ्गनादितैः । [illegible] ॥ ९८
...वीक्षे यावद्वनं महत् । जालान्तं [illegible] च ॥ ९९
सिंहपोतो विवर्ध्य च । अनायत्त इति क्रोधाद्बलात्तस्मात्प्रवासितः ॥ १००
...ाकर्ण्य सिंहाः शब्दं वनान्तरे । तत्र [illegible] कृतः ॥ १०१
...ः पुंस्कारोपितबाहुकः । संपादितः स [illegible] ॥ १०२

सभार्यमागतं तं च दृष्ट्वैव करिमर्दनम्। वनं समर्प्य तत्तस्मै लुब्धकः स ततो गतः॥
एतदप्यहमालोक्य गत्वाश्रमपदं ततः। उभयं तन्महाश्चर्यमवोचं ब्रह्मदण्डिने॥
सोऽथ प्रीत्या त्रिकालज्ञो मुनिर्मामेवमभ्यधात्। धन्योऽसि दर्शितं सर्वं प्रसन्नेनेश्वरेण ते॥
या दृष्टा स्त्री त्वया तत्र सा माया भ्रमितं च यत्। तया संसारचक्रं तद्ये भृङ्गास्ते च जन्तवः॥
वृषगर्दभरूपौ तौ धर्माधर्मौ पृथक्पृथक्। श्रितास्तद्वान्तदुग्धासृग्रूपे सुकृतदुष्कृते॥
स्वस्वाश्रयोत्थे संसेव्य भूत्वा च श्वेतकल्मषाः। द्विविधा जालकाराभा विष्टब्धा निजवीर्यतः॥
निर्माय द्विविधानेव जालपाशान्सुतादिकान्। सत्पुष्पविषपुष्पाभसुखदुःखानुषङ्गिणः॥
यथास्वं तेषु संसक्ताः कालेनोरगरूपिणा। शुभाशुभाभ्यां वक्त्राभ्यां हताः पुत्र यथोचितम्॥
ततो घटकरूपासु नानायोनिषु मायया। स्त्रीरूपया तया क्षिप्तास्तथैवोत्थाय ते पुनः॥
तुल्यासु पतिताः श्वेतकृष्णास्त्वाकृतिषु द्विधा। पुत्रादिजालपाशेषु सुखदुःखानुबन्धिषु॥
ततः कृष्णा निजैर्जालैर्बद्धा दुःखविषार्दिताः। प्रवृत्ताः क्रन्दितुं विघ्नाः शरणं परमेश्वरम्॥
तद्दृष्ट्वा जातवैराग्यास्ते श्वेता अपि जन्तवः। प्रारब्धा निजजालस्थास्तमेवाक्रन्दितुं प्रभुम्॥
ततः प्रबुध्य देवेन तेन तापसरूपिणा। ज्ञानाग्निज्वालया दग्धपाशाः सर्वेऽपि ते कृताः॥
तेन विद्रुमसद्दण्डरूपमादित्यमण्डलम्। प्रविश्य तत्तदूर्ध्वस्थं परमं धाम ते श्रिताः॥
नष्टा च चक्राकारेण संसारेण सहैव सा। माया वृषखराकारधर्माधर्मसमन्विताः॥
एवं भ्रमन्ति संसारे शुक्लकृष्णाः स्वकर्मभिः। ईश्वराराधनादेव विमुच्यन्ते च जन्तवः॥
इति ते मोहशान्त्यर्थमीश्वरेण प्रदर्शितम्। वापीजले च यद्दृष्टं भवता तदिदं शृणु॥
मृगाङ्कदत्तभाव्यर्थप्रदर्शनमिदं जले। प्रतिबिम्बमिवोत्पाद्य कृतं भगवता तव॥
स हि बालमृगारातिपोततुल्यो भुजोपमैः। सचिवैर्दशभिर्युक्तो वर्धितो वनसंनिभात्॥
देशाल्लुब्धकतुल्येन पित्रा कोपात्प्रवासितः। अवन्तिदेशादुद्भूतां ख्यातिमन्यवनोपमात्॥
शशाङ्कवत्यास्तत्सिंह्या इव श्रुत्वा प्रधावितः। नागशापेन वातेन भ्रष्टमन्त्रिभुजः कृतः॥
ततो विनायकेनात्र स लम्बोदररूपिणा। संघाटितामात्यभुजः प्रकृतिस्थः पुनः कृतः॥
ततो गत्वानुभूयातिक्लेशं प्राप्तां ततोऽन्यतः। तां शशाङ्कवतीं सिंहीमादायात्रागतश्च सः॥
ततश्च निकटं प्राप्तं विद्युताराविवारणम्। मृगाङ्कदत्तसिंहं तं दृष्ट्वा भार्यासमन्वितम्॥
तत्स्वदेशवनं तस्मै समर्प्य सकलं स्वतः। तत्पिता लुब्धकनिभः स प्रयातस्तपोवनम्॥
इति संपन्नवद्भावि दर्शितं विभुना तव। तद्युष्मान्मन्त्रिणो भार्यां राज्यं चाप्स्यति वः प्रभुः॥

इत्यहं मुनिवरेण बोधितस्तेन लब्धधृतिराश्रमात्ततः।
निर्गतोऽथ शनकैरुपाव्रजन्नद्य देव मिलितस्त्वया सह॥
तस्मादभिमतमाप्स्यसि सचिवांल्लब्ध्वा प्रचण्डशक्तिमुखान्।
प्रस्थानकालपूजाप्रसन्नविघ्नेश्वरो नियतम्॥
इति स्वसचिवात्क्षणं विमलबुद्धितः सोऽद्भुतं
निशम्य परितोषवानपि मृगाङ्कदत्तः पुनः।
विचार्य सह तेन तामपरमन्त्रयवाप्त्यै क्रमा-
दवन्तिनगरीं प्रति व्रजितवान्स्वकार्याय च॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके तृतीयस्तरङ्गः।

---

चतुर्थस्तरङ्गः।

ततः श्रुतविमुक्तेन सम विमलबुद्धिना। स शशाङ्कवतीहेतोरगच्छदुज्जयिनीं प्रति॥
मृगाङ्कदत्तः संप्रापदन्तरा नर्मदानदीम्। वीचिचञ्चलतुङ्गजलतां विलसत्फेनपाण्डुराम्॥

दिष्ट्या मिलद्दमात्योऽयं संवृत्त इति वीक्ष्य तम् । हर्षादिव प्रनृत्यन्तीं हसन्तीं चपलाशयाम् ॥ ३
तस्यां स्नानावतीर्णे च तस्मिन्कश्चिदुपाययौ । तत्र मायावटुर्नाम स्नातुं शबरभूपतिः ॥ ४
तं स्नान्तं सहसोत्थाय त्रयोऽत्र जलमानुषाः । युगपज्जगृहुर्भिल्लं भीतिनश्यत्परिच्छदम् ॥ ५
तद्दृष्ट्वाकृष्टखड्गोऽन्तः प्रविश्य जलमानुषान् । हत्वा मृगाङ्कदत्तस्तान्भिल्लेन्द्रं तममोचयत् ॥ ६
स तद्ग्राहभयान्मुक्तो भिल्लराजो जलोत्थितः । तं राजपुत्रं पप्रच्छ पतित्वा पादयोस्ततः ॥ ७
त्रात्रा कस्त्वमिहानीतः प्राणत्राणाय मे वद । कस्य चालंकृतो वंशस्त्वया सुकृतिनः पितुः ॥ ८
को वा कटाक्षितः पुण्यैर्देशो यत्र गमिष्यसि । इत्युक्त्वा श्रुतधेः श्रुत्वा तद्वृत्तान्तमशेषतः ॥ ९
सुतरां प्रणतस्तं स शबरेन्द्रोऽब्रवीत्पुनः । तर्ह्यहं ते यथादिष्टे सहायोऽत्राभिवाञ्छिते ॥ १०
तत्स्या दुर्गपिशाचेन मातङ्गपतिना सह । तत्प्रसादं कुरुष्वेहि गृहान्भृत्यस्य मे प्रभो ॥ ११
इति सप्रणयैस्तैस्तैर्वचोभिः प्रार्थ्य तं ततः । मृगाङ्कदत्तं पल्लीं स्वां शबरेन्द्रो निनाय सः ॥ १२
उपाचरच्च तं तत्र यथावत्स्वविभूतिभिः । राजपुत्रमशेषेण पल्लीलोकेन पूजितम् ॥ १३
तोऽपि मातङ्गराजोऽत्र समेत्याभिननन्द तम् । दासीभूय सुहृत्प्राणप्रदं न्यस्तशिरा भुवि ॥ १४
ततो मायावटोस्तस्य भिल्लेन्द्रस्यानुरोधतः । मृगाङ्कदत्तस्तत्रैव तस्थौ कांश्चित्स वासरान् ॥ १५
एकदा च स्थिते तस्मिन्द्यूतं स शबरेश्वरः । समं निजप्रतीहारेणारेभे चण्डकेतुना ॥ १६
तावन्नभसि मेघेषु गर्जत्सु गृहबर्हिणः । प्रनृत्तान्द्रष्टुमुत्तस्थौ स मायावटुभूपतिः ॥ १७
ततः स द्यूतरसिकः प्रतीहारस्तमभ्यधात् । किमेभिः प्रेक्षितैः [illegible] ॥ १८
स मयूरो गृहे मेऽस्ति नास्ति योऽन्यत्र भूतले । दर्शयिष्यामि [illegible] चेत् ॥ १९
एच्छ्रुत्वा दर्शनीयो मे सर्वथा स त्वयेति च । उक्त्वा स तं प्रतीहारं दिनकृत्यं व्यधान्नृपः ॥ २०
मृगाङ्कदत्तोऽप्याकर्ण्य सर्वं तत्तत्र सानुगः । तथैवोत्थाय विदधे स्नानाहारादिकाः क्रियाः ॥ २१
ततो रात्रावुपेतायामन्धे तमसि जृम्भिते । कस्तूरिकानुलिप्ताङ्गो वसानो नीलवाससी ॥ २२
स राजपुत्रः स्वोद्देशाद्वीरचर्यार्थमेककः । सुप्तानुगाद्वासगृहात्खड्गपाणिर्विनिर्ययौ ॥ २३
भ्रमंश्च तत्र केनापि पुंसा मार्गागतेन सः । अपश्यता ध्वान्तवशादंसेनांसेऽभ्यहन्यत ॥ २४
ततः सोऽभिभवक्रुद्धो युद्धायाह्वयति स्म तम् । स चाहुतः पुमान्प्रौढस्तत्कालोचितमभ्यधात् ॥ २५
किं ताम्यस्यविचार्यैव विचारयसि चेत्ततः । वाच्यो निशापतिर्येन निशैषा न प्रकाशिता ॥ २६
धाता वा येन पूर्णोऽस्य नाधिकारोऽत्र निर्मितः । येन [illegible] ॥ २७
तच्छ्रुत्वा सत्यमित्युक्त्वा तुष्टो नागरिकोक्तितः । मृगाङ्कदत्तः कोऽसीति स तं पप्रच्छ पूरुषम् ॥ २८
चौरोऽहमिति तेनोक्तः पुंसा सोऽप्यवदन्मृषा । हस्तमानय सब्रह्मचारी मम भवानिति ॥ २९
कृत्वा च सख्यं जिज्ञासुः स तेनैव सह व्रजन् । मृगाङ्कदत्तः संप्राप जीर्णकूपं तृणावृतम् ॥ ३०
तत्र तेन प्रविष्टेन पुंसा सह सुरुङ्गया । गत्वा मायावटोस्तस्य राज्ञोऽन्तःपुरमाप्तवान् ॥ ३१
तत्र दीपेन दृष्ट्वा तं परिजज्ञे स पूरुषम् । य[illegible] ॥ ३२
प्रतीहारस्तु न स तं मन्दालोकैककोणगम् । [illegible] ॥ ३३
राजवध्वा च स तया प्राप्त एवानुरक्तया । [illegible] ॥ ३४
उपवेश्य च पर्यङ्के स पृष्टोऽभूत्तया तदा । [illegible] ॥ ३५
इहन्समायं विश्वस्ता भवेत्युक्ता च तेन सा । प्रतीहारेण सोद्वेगा मञ्जुमेवमब्रवीत् ॥ ३६
ततो मे मन्दभाग्याया विश्वासो यदसौ नृपः । मृत्योर्मृगाङ्कदत्तेन सुखं प्राप्तोऽपि रक्षितः ॥ ३७
तच्छ्रुत्वा स प्रतीहारस्तामवादीदलं शुचा । नृपं मृगाङ्कदत्तं च हनिष्याम्यचिरात्प्रिये ॥ ३८
इत्युक्तवन्तं तं दैवात्साब्रवीत्किं विकत्थसे । आक्रान्तोऽभूद्यदा ग्राहैर्नृपोऽसौ नर्मदाम्भसि ॥ ३९
मृगाङ्कदत्त एवैकस्तदा तद्रक्षणोद्यतः । त्वया किं न हतस्तत्र [illegible] ॥ ४०
तूष्णीं भव मा कश्चिदेतच्छ्रोष्यति ते वचः । ततो मृगाङ्कद[illegible] ॥ ४१

एवमुक्तवतीं तां च जारः क्षत्ता न चक्षमे । पापे मृगाङ्कदत्ते त्वं बद्धभावाधुना ध्रुवम् ॥
तदस्यानुभवेदानीमधिक्षेपस्य मे फलम् । इत्युक्त्वा च स हन्तुं तामुत्तस्थौ सासिधेनुकः ॥
ततो रहस्यधारिण्या तत्र चेटिकयैकया । धावित्वा छुरिका तस्यावष्टब्धाभूत्करेण सा ॥
तावद्ययौ मञ्जुमती ततो निर्गत्य सान्यतः । क्षत्ता च तस्याश्चेट्यास्तां निकृत्ताङ्गुलितः करात् ॥
आक्षिप्य छुरिकां प्रायात्स्वगृहं स यथागतम् । मृगाङ्कदत्तेन सममाकुलो विस्मितात्मना ॥
गच्छाम्यहं भवान्प्राप्तो गृहानिति च तत्र तम् । मृगाङ्कदत्तः क्षत्तारं तमस्त्यप्रकटोऽब्रवीत् ॥
इह निद्रां भज क्षिप्रं परिश्रान्तो भृशं ह्यसि । इति सोऽपि प्रतीहारो राजपुत्रं तमभ्यधात् ॥
ततस्तथेति तेनोक्ते तच्चेष्टालोकनैषिणा । क्षत्ता स्वभृत्यमत्रैकं समाहूय जगाद सः ॥
स मयूरः स्थितो यत्र तत्रैनं नय वासकम् । पुरुषं विश्रमायास्मै शयनीयं प्रयच्छ च ॥
तथेति च स तद्भृत्यस्तस्मिन्प्रावेशयद्गृहे । नीत्वा मृगाङ्कदत्तं तं दत्तशय्यं सदीपके ॥
गते तस्मिन्बहिर्द्वारं बद्ध्वा शृङ्खलयात्र सः । मृगाङ्कदत्तोऽपश्यत्तं मयूरं पञ्जरस्थितम् ॥
सोऽयमुक्तोऽमुना क्षत्रा शिखीत्यालोक्य कौतुकात् । तस्य चोद्धाटयामास मयूरस्य स पञ्जरम् ॥
मयूरः स च निर्गत्य निपुणं वीक्ष्य पादयोः । मृगाङ्कदत्तस्य मुहुर्निपपात लुलोठ च ॥
लुठतस्तस्य दृष्ट्वा च कण्ठबद्धं स सूत्रकम् । राजपुत्रो मुमोचाशु मत्वा तं तेन पीडितम् ॥
स मुक्तकण्ठसूत्रश्च मयूरस्तस्य पश्यतः । संपन्नोऽभूत्तदा तस्य मन्त्री भीमपराक्रमः ॥
ततो मृगाङ्कदत्तस्तमाश्लिष्योत्सुकमानतम् । सखे कथय किं न्वेतदिति पप्रच्छ विस्मयात् ॥
अवोचदथ संहृष्टः स तं भीमपराक्रमः । शृणु देव स्ववृत्तान्तमा मूलात्कथयामि ते ॥
तदाहं नागशापेन विभ्रष्टो भवदन्तिकात् । भ्रमन्नटव्यां संप्रापमेकं शाल्मलिपादपम् ॥
तत्राग्निखातरूपां च गणेशप्रतिमामहम् । दृष्ट्वा प्रणम्य तन्मूले परिश्रान्त उपाविशम् ॥
अचिन्तयं च धिक्सर्वमिदं पापं मया कृतम् । [illegible] स्वामिने तदा ॥
तदिहैव त्यजाम्येतमात्मानमनाराधिप [illegible] स्थितोऽभूवमभोजनः ॥
गते कतिपयाहे च कोऽपि तत्रागतस्तथा । वृद्धपान्थस्तरोस्तस्य च्छायायां समुपाविशत् ॥
एवं म्लानमुखः पुत्र किं स्थितोऽसीह निर्जने । इति दृष्ट्वा च सोऽपृच्छत्साधुर्मामनुबन्धतः ॥
ततो मया स्ववृत्तान्ते यथावद्विनिवेदिते । स वृद्धपथिकः प्रीत्या धीरयन्मामभाषत ॥
आत्मानं हंसि वीरोऽपि कथं स्त्रीवत्क्रियोऽपि वा । धैर्यमापदि नोज्झन्ति तथा चेमां कथां शृणु ॥
नगर्यां कोशलाख्यायां विमलाकर इत्यभूत् । राजा तस्य च पुत्रोऽभूत्कमलाकरसंज्ञकः ॥
यस्तेजोरूपदातृत्वगुणैः श्लाघ्यो विनिर्ममे । धात्रेव [illegible]
तस्यैकदा कुमारस्य दिक्षु स्तुवत्स्य बन्दिभिः । गाथ[illegible] ॥

पद्मासादनसोत्सवनानामुखरद्विजालिपरिगीतम् ।
कमलाकरमप्राप्ता क रतिं हंसावली लभताम् ॥

एवं मुहुः पठन्पृष्टस्तेन बन्दी जगाद तम् । स मनोरथसिद्ध्याख्यः कुमारं कमलाकरम् ॥
देव भ्राम्यन्गतोऽभूवं गतोऽहं [illegible] । नगरीं विदिशां नाम लीलोद्यानभुवं श्रियः ॥
तत्र दर्दुरकाख्यस्य गीताचार्यस्य वेश्मनि । अहमासं स चैवं मां प्रसङ्गेनैकदाब्रवीत् ॥
इह हंसावली नाम दुहिता नृपतेः पुरः । [illegible] द्रक्ष्यसि ॥
तच्छ्रुत्वा कौतुकाद्युक्त्या समं तेनापरेऽहनि । अहं राजकुलं गत्वा प्राविशं रङ्गमण्डपम् ॥
तत्राहतमहातोद्ये तामपश्यं शुभाननाम् । हंसावलीं राजकन्यां नृत्यन्तीं पितुरग्रतः ॥
आलोलपुष्पाभरणां पाणिप्रेङ्खितपल्लवाम् । वल्लीमिव स्मरतरोर्यौवनानिलनर्तिताम् ॥
ततश्चाचिन्तयमहं नैवास्या हरिणीदृशः । वरोऽस्ति कश्चिद्योग्योऽन्यः कुमारात्कमलाकरात् ॥
तेन चेत्तादृशेनेयं युज्यते नेदृशी ततः । कामस्य किं कृते पुष्पकार्मुकारोपणश्रमः ॥

करोम्यत्र तावदित्यनुचिन्तयन् । प्रेक्षणान्ते [illegible] ॥ ८०
खलु योऽत्रास्ति चित्रकृत्सदृशो मया । अभिलिख्यैनं तत्राहं [illegible] ॥ ८१
[illegible] तत् । आहूय स्वसुतावासे [illegible] ॥ ८२
[illegible] । भित्तौ यथाभिलिखितस्तं देव [illegible] ॥ ८३
[illegible] । तदेतां राजतनयां युक्त्यैतद्बोधयाम्यहम् ॥ ८४
[illegible] । तत्रैकमहमुन्मत्तरूपं रूप्यमकारयम् ॥ ८५
[illegible] । आनाययत्त क्रीडनको राजपुत्रैर्निजान्तिकम् ॥ ८६
[illegible] । प्रवेशितश्च संपश्यन्स चित्रं त्वत्स्तुतिं व्यधात् ॥ ८७
दृष्टोऽब्जशङ्खाङ्कपाणिर्लक्ष्मीविलासभूः । सोऽयं हरिरिवानन्तगुणौघः कमलाकरः ॥ ८८
नृत्यतस्तस्माद्राजकन्या निशम्य सा । साभिप्रच्छत्किमाहार्यं [illegible] ॥ ८९
मनुबन्धेन पृच्छन्तीमहमुक्तवान् । दृष्टपूर्वोऽमुना नूनमुन्मत्तेनैष सुन्दरि ॥ ९०
मया योऽयं लिखितो रूपगौरवान् । इत्युक्त्वा त्वं मया तस्यै [illegible] ॥ ९१
र्जेद्रवत्प्रेमरसासेकाप्लुते हृदि । संभूतोऽभिनवस्तस्या [illegible] ॥ ९२
न राज्ञात्र पित्रा तस्या विलोक्य सः । नृत्यन्नुन्मत्तकोऽहं च [illegible] ततः ॥ ९३
र्ति चोत्का सा क्षीयमाणा दिने दिने । कृष्णपक्षेन्दुलेखेव याता [illegible] ॥ ९४
राजाच पापघ्नमाश्रित्यायतनं हरेः । विजनासेविनी युक्त्या [illegible] ॥ ९५
र्विनिद्रा च चन्द्रचन्द्रातपासहा । स्थिता निशावासरयोरत्र [illegible] ॥ ९६
पतनोद्देशात्प्रविष्टं मां विलोक्य सा । आहूय वस्त्राभरणैः [illegible] ॥ ९७
निर्गतश्चाहं तद्दत्तवसनाञ्चले । गाथामपश्यं लिखितां त्वत्कृते शृणु तां पुनः ॥ ९८

पद्मासादनसोत्सवानामुखरद्विजालिपरिगीतम् ।
कमलाकरमप्राप्ता क्व रतिं हंसावली लभताम् ॥ ९९

वाहयेतां च लब्धतच्चित्तनिश्चयः । त्वद्बोधनार्थमागत्य तवैषा [illegible] ॥ १००
च तस्यत्र गाथैषा लिखिता तया । इति वन्दिवचः श्रुत्वा गाथां तां [illegible] ॥ १०१
णोत नेत्रेण प्रविष्टामिव तां हृदि । तदा हंसावलीं ध्यायन्नभूत् [illegible] ॥ १०२
ायं यावच्च स चिन्तयति सोत्सुकः । तावत्पिता समाहूय राजा [illegible] ॥ १०३
पुत्र राजानो मन्त्रवद्धा इवोरगाः । नश्यन्त्यन्ये तु नष्टा अप्युद्गच्छन्ति [illegible] पुनः ॥ १०४
दृष्टा नाद्यापि जिगीषा सुखसङ्गिना । तदुन्मुक्तो भवाल्लक्ष्मीमुच्छ्रय [illegible] ॥ १०५
ाग्रतो गत्वा त्वमङ्गाधिपतिं रिपुम् । अस्मान्प्रति कृतारम्भं निजदेशाद्विनिर्गतम् ॥ १०६
वचो हृष्टः प्रतिपेदे तथेति सः । शूरः प्रियां प्रति च तां धियायुः [illegible] ॥ १०७
त्रा समादिष्टैः प्रतस्थे स बलैः सह । आकम्पयन्महीपृष्ठं हृदयानि च [illegible] ॥ १०८
णकैः कैश्चित्प्राप्याङ्गाधिपतेश्चमूम् । प्रलयक्षुब्धसमेन सहायुध्यत तेन सः ॥ १०९
भिवागस्त्यस्तेजस्वी तस्य च द्विपः । बलं पपौ स जग्राह जीवग्राहं च [illegible] ॥ ११०
च संयम्य पितुः पार्श्वममुं रिपुम् । प्रतीहारस्य धुर्यस्य हस्ते दत्त्वानुयायि[illegible] ॥ १११
न्रिपूञ्जेतुमितस्तात गतोऽधुना । इति श्रुत्वा गुर्वजनास्ये पित्रे संदिश्य [illegible] ॥ ११२
क्रमेणान्याश्रूपानुपचितो बलैः । स प्राप विदिशापुर्या निकटे कमलाकरः ॥ ११३
व्यसृजत्स दूतं मेघमालिने । राज्ञे हंसावलीपित्रे याचितुं तां [illegible] ॥ ११४
ुतादद्दुष्टं तं बुद्ध्वा कन्यार्थमागतम् । मेघमाली नृपः प्रीत्या तत्पार्श्वं [illegible] ॥ ११५
ोऽब्रवीच्चैनं राजपुत्रं कृतादरम् । स्वयं परिश्रमो दूतसाध्येऽर्थे किं कृतस्त्वया ॥ ११६
किलैतत्कारणं शृणु चात्र यत् । एतां हंसावलीं बाल्ये[illegible] ॥ ११७

मुक्तैस्तैः सक्तुभिश्छागी समपद्यत सा तदा । ततो नीत्वा मयामर्षाद्विक्रीता सौनिकस्य सा ॥
ततः सौनिकभार्या मामुपेत्यावोचत क्रुधा । मत्सखी विप्रलब्धेयं त्वया तत्प्राप्स्यसे फलम् ॥
इति तत्तर्जितो गत्वा ततो गुप्तं बहिः पुरः । श्रान्तः शयितवानस्मि मूले न्यग्रोधशाखिनः ॥
तथाभूतस्य मे तत्र तया सौनिकभार्यया । आगत्य दुष्टयोगिन्या गलेऽबध्यत सूत्रकम् ॥
तस्यां गतायां पापायां प्रबुद्धोऽहं च तत्क्षणम् । पश्यामि यावत्प्राप्तोऽस्मि मयूरत्वं स्थितस्मृतिः ।
ततो दिनानि कतिचिद्विप्रो भ्राम्यन्नितस्ततः । जीवञ्शाकुनिकेनाहं गृहीतोऽभूवमेकदा ॥
स चानीय ददाति स्म मामस्मै चण्डकेतवे । भिल्लराजप्रतीहारमुख्याय प्राभृतीकृतम् ॥
प्रतीहारोऽप्ययं प्रादात्स्वभार्यायै तदैव माम् । तयाहं स्थापितश्चास्मि मण्डपे क्रीडनीयकः ॥
अद्येह दैवानीतेन त्वया मे कण्ठसूत्रके । मुक्ते प्राप्तोऽस्मि तां देव पुनः स्वां मानुषाकृतिम् ॥
तदितो मङ्क्षु गच्छावः प्रतीहारो हि हन्त्यसौ । रात्रिचर्यासखीन्पापः प्रतिभेदभयात्सदा ॥
त्वं चानीतोऽमुना रात्रिचर्याद्रष्टाद्य तत्प्रभो । योगिनीनिर्मितं बद्ध्वा कण्ठे सूत्रमिदं भवान् ॥
मयूरीभूय निर्यातु गवाक्षेणामुना बहिः । ततः प्रसारितभुजः सूत्रं कण्ठात्तवोच्छ्रितात् ॥
मुक्त्वा बद्ध्वात्मनः कण्ठे तद्वन्निर्याम्यहं द्रुतम् । त्वयाथ मुक्ते मे सूत्रे भवावः प्रकृतिस्थितौ ॥
बहिरर्गलितेनास्ति द्वारेण न विनिर्गमः । एवमुक्तवति प्राज्ञे तस्मिन्भीमपराक्रमे ॥
मृगाङ्कदत्तस्तद्युक्तस्तथेति निरगात्ततः । जगाम च स्वनिलयं स्थितान्यसचिवद्वयम् ॥
तत्र सर्वेऽपि तेऽन्योन्यकृत्स्नवृत्तान्तवर्णनैः । निन्युर्मृगाङ्कदत्ताद्याः प्रहृष्टास्तां विभावरीम् ॥
प्रातर्मृगाङ्कदत्तस्य पार्श्वे तस्याजगाम सः । मायाबटुर्भिल्लराजस्तस्यां पल्ल्यामधीश्वरः ॥
स पृष्टरात्रिसौख्यस्तं राजपुत्रं विनोदयन् । अक्षैः क्रीडाम एहीति मायाबटुरभाषत ॥
ततस्तं सप्रतीहारं वीक्ष्य भिल्लं समागतम् । सखा मृगाङ्कदत्तस्य सोऽथ श्रुतधिरभ्यधात् ॥
किमक्षैर्विस्मृतं किं वा दृश्यमद्य हि वर्तते । प्रतीहारमयूरस्य नृत्यमुक्तं ह्य एव यत् ॥
श्रुत्वैतच्छ्रुतधेः स्मृत्वा कौतुकाच्छबरेश्वरः । प्राहिणोत्स प्रतीहारं मयूरानयनाय तम् ॥
कथं प्रमादाद्विस्मृत्य न स चौरो मया हतः । साक्षी रात्रिरहस्यस्य क्षिप्तोऽपि शिखिवेश्मनि ॥
तद्यामि शीघ्रमुभयं करोमीति विचिन्तयन् । स्मृत्वोद्घाताप्रतीहारः सोऽप्यगात्सत्वरं गृहम् ॥
तत्र यावत्प्रविश्यैव वीक्षते शिखिवेश्मनि । तावन्न चौरं नाप्यत्र स मयूरं ददर्श तम् ॥
अथ भीतविषण्णः स गत्वा स्वं नृपमब्रवीत् । निशि चौरेण मे नीतः स मयूरः प्रभो इति ॥
प्रसिद्धः स महाचौरो येन बर्ही हृतः स ते । इति तत्र स्मितमुखेनोक्ते श्रुतधिना ततः ॥
दृष्ट्वा मृगाङ्कदत्तादीन्हसतोऽन्योन्यदर्शिनः । मायाबटुस्तान्निर्बन्धात्किमेतदिति पृष्टवान् ॥
ततः क्षत्रा यथा तेन रात्रौ मेलो यथा च सः । राजपत्न्या गृहं कामी गत्वा शस्त्रकलिं व्यध
यथा क्षत्तृगृहप्राप्तिर्यथा भीमपराक्रमः । मोचितोऽत्र मयूरत्वान्निर्गमश्च यथा ततः ॥
तथा मृगाङ्कदत्तः स्वं क्षत्तुः संबन्धिनं च तम् । वृत्तान्तं शबरेन्द्राय तस्मै सर्वं शशंस सः ॥

तद्बुद्ध्वा छुरिकापरिक्षतकरामन्तःपुरे चेटिकां
दृष्ट्वा तामथ वीक्ष्य कण्ठरचिते तस्मिन्क्षणं सूत्रके ।
भूयो भीमपराक्रमस्य शिखितां शुद्धान्तविध्वंसिनं
क्षत्तारं शबरेश्वरः सपदि तं मायाबटुः सोऽवधीत् ॥
तां त्वविनीतां राज्ञीं मृगाङ्कदत्तेन रक्षितां वधतः ।
दूरस्थितां चकार स मञ्जुमतीं परिहृतस्पर्शाम् ॥
तत्पूजितः स च ततोऽत्र पुलिन्दपल्ल्यामासीद्दिनानि किल तानि मृगाङ्कदत्तः ।
बद्धोद्यमोऽप्यधिगमाय शशाङ्कवत्याः संप्राप्तशेषसखिसंगमसव्यपेक्षः ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके चतुर्थस्तरङ्गः ।

पञ्चमस्तरङ्गः।

ामलबुद्ध्यादियुतो यावत्स तिष्ठति। मृगाङ्कदत्तो भिल्लाधिपतेर्मायाबटोर्गृहे॥ १
त्संनिधावेत्य तमात्मीयश्चमूपतिः। एकदा शबराधीशं ससंरम्भो व्यजिज्ञपत्॥ २
शाद्विचिन्वद्भिर्भगवत्याः कृते प्रभो। उपहाराय पुरुषः प्राप्तोऽस्माभिः स तादृशः॥ ३
ाद्वीरयोधानां खण्डितं शतपञ्चकम्। आनीतश्च स भूयिष्ठप्रहारविवशीकृतः॥ ४
॥ स पुलिन्देन्द्रः सेनापतिमुवाच तम्। प्रवेश्यतामिहैवाशु सोऽस्माकं दर्श्यतामिति॥ ५
वेशितस्तेन यावत्सर्वैः स दृश्यते। शस्त्रक्षतोद्यद्रक्ताक्तरणधूलीकलङ्कितः॥ ६
न्दूरसंपृक्तस्रवद्दानाम्बुपङ्किलः। पाशैर्विवेष्टितो घूर्णन्मत्तो बद्ध इव द्विपः॥ ७
प्रत्यभिज्ञाय मन्त्रिणं स्वं गुणाकरम्। मृगाङ्कदत्तो धावित्वा कण्ठे प्ररुदितोऽग्रहीत्॥ ८
तत्सखिभ्यस्तं स भिल्लेन्द्रो गुणाकरम्। प्रह्वस्तमाश्वासितवान्पादलग्नं निजप्रभोः॥ ९
च गृहं स्नातं तं बद्धव्रणपट्टकम्। उपाचरद्भिषक्प्रोक्तैः स पथ्यैः पानभोजनैः॥ १०
ृगाङ्कदत्तस्तं समाश्वस्तं स्वमन्त्रिणम्। सखे कथय वृत्तान्तः कस्तवेति स पृष्टवान्॥ ११
र्वेषु शृण्वत्सु स जगाद गुणाकरः। श्रूयतां देव वृत्तान्तमात्मीयं कथयामि वः॥ १२
ागस्य शापेन भवद्भ्योऽहं वियोजितः। न किंचिदविदं मोहाद्दूरां तामटवीं भ्रमन्॥ १३
ंप्राप्तबुद्धिश्च दुःखितोऽहमचिन्तयम्। अहो दुःशिक्षितस्यैष विलासः कोऽपि वेधसः॥ १४
दत्तः खिद्येत स्थितो हर्म्यतलेऽपि यः। सोऽस्यामटव्यां संतप्तसिकतायां कथं भवेत्॥ १५
ते वयस्याः स्युरित्यन्तर्विमृशन्मुहुः। दैवात्संप्राप्तवानस्मि पर्यटन्विन्ध्यवासिनीम्॥ १६
उपाहृतानेकनानाजीवमहर्निशम्। प्राविशं भवनं देव्याः कृतान्तसदनोपमम्॥ १७
ीं प्रणम्याहमपश्यं पुरुषं शवम्। कण्ठान्तर्गतनिस्त्रिंशहस्तमात्मोपहारिणम्॥ १८
 पुनर्दुःखहेतोर्मे त्वद्वियोगिनः। अभूदात्मोपहारेण देवीं तोषयितुं मतिः॥ १९
मेव धावित्वा यावदस्मि गृहीतवान्। तावन्निवारयन्तीव दूराद्वार्धककम्पिना॥ २०
समुपेत्यैव सकृपा कापि तापसी। निवार्य मरणात्पृष्ट्वा वृत्तान्तं निजगाद माम्॥ २१
था: पुनर्दृष्टो मृतानामपि संगमः। किं पुनर्जीवतां पुत्र तथा चैतां कथां शृणु॥ २२
त्रेति नाम्नास्ति विख्याता नगरी भुवि। तस्यामुदयतुङ्गाख्यः पुराभूद्राजकुञ्जरः॥ २३
त्ता च कमलमतिर्नाम महानभूत्। विनीतमतिरित्यासीत्तस्याप्यसदृशः सुतः॥ २४
ुणेनापि प्रापि यस्य न तुल्यता। सच्छिद्रेण मृणालेन चापेन कुटिलेन च॥ २५
िचित्सुधाधौतप्रासादोपरि पञ्चके। स्थितो ददर्श शीतांशुमुद्गच्छन्तं निशामुखे॥ २६
्पद्रुमोत्थेन पल्लवेन विनिर्मितम्। रजन्या वासवदिशः कर्णपूरमिवोज्ज्वलम्॥ २७
द्रश्मिजालैश्च जगद्वीक्ष्य विराजितम्। स विनीतमतिर्जातहृदुल्लासो व्यचिन्तयत्॥ २८
न्द्रिकया मार्गाः सुधयेवावभासिताः। दृश्यन्ते तदमीष्वेको गत्वा न विहरामि किम्॥ २९
त्वैव स धनुर्धरो निर्गत्य पर्यटन्। क्रोशमात्रं गतोऽकस्माच्छुश्राव रुदितध्वनिम्॥ ३०
दनुसारेण ददर्शैकां स कन्यकाम्। दिव्यरूपां प्ररुदतीं तरुमूलसमाश्रयाम्॥ ३१
च शुभे का त्वं किं चायं नीयते तुलाम्। मुखेन्दुः समलस्येन्दोस्त्वयाश्रुमलिनीकृतः॥ ३२
तेन सावोचत्सुता नागपतेरहम्। कन्या विजयवत्याख्या महात्मन्गन्धमालिनः॥ ३३
ता रणान्नष्टः शप्तो वासुकिनैकदा। यास्यसि त्वं रिपोः पाप जितः सन्दासतामिति॥ ३४
त्स च यक्षेण कालजिह्वेन वैरिणा। जित्वामनोऽनुगः पुष्पभारवाहीकृतः सदा॥ ३५
तत्कृते गौरीं तपसाहमतोषयम्। प्रत्यक्षीभूय मे सा च भगवत्येवमब्रवीत्॥ ३६
ण्वस्ति सरसो मानसस्यान्तरे महत्। सहस्रदलविस्तीर्णं स्फाटिकं दिव्यमम्बुजम्॥ ३७
त्संस्पर्शकीर्णतेजो विराजते। शेषस्येव शिरो भूरिफणं रत्नांशुपिञ्जरम्॥ ३८

तदेकदा वैश्रवणो दृष्ट्वा स्नात्वात्र मानसे। जातश्रद्धोऽम्बुजे तस्मिन्हरस्यारभतार्चनम्॥
तत्कालं चानुगास्तस्य यक्षास्तत्र सरोन्तरे। विजह्रुश्चक्रहंसादिरूपैर्वारिचरोचितैः॥
तत्र युष्मद्रिपोस्तस्य कालजिह्वस्य दैवतः। विद्युज्जिह्व इति ज्येष्ठो भ्राता यक्षः प्रियासखः॥
क्रीडंश्चक्राह्वरूपेण पक्षविक्षेपघट्टनात्। कुबेरस्य कराग्रस्थमर्घ्यपात्रमपातयत्॥
ततः स धनदः क्रुद्धः शापेनात्रैव मानसे। चक्राह्वमेव तं चक्रे विद्युज्जिह्वं सभार्यकम्॥
तथाकृतं च संप्रीत्या रात्रौ रात्रौ विनोदयन्। कृततत्प्रेयसीरूपो विरहातुरमग्रजम्॥
कालजिह्वोऽद्य तत्रास्ते स दिवा निजरूपभृत्। दासीकृतेन त्वत्पित्रा सहितो गन्धमालिना॥
तत्तत्र प्रेर्यतां पुत्रि प्रतीहारसुतस्त्वया। आहिच्छत्रो महावीरो विनीतमतिरुद्यमी॥
इममश्वं च खड्गं च गृहाणाभ्यां विजित्य तम्। यक्षं स हि प्रवीरस्ते जनकं मोचयिष्यति॥
खड्गरत्नस्य चैतस्य स्वामी भवति यः पुमान्। स जित्वा निखिलाञ्शत्रून्राजा भवति भूतले॥
एवमुक्त्वाश्वखड्गौ मे देवी दत्त्वा तिरोऽभवत्। अथ त्वत्प्रेरणायाद्य क्रमेणाहमिहागता॥
देवीप्रसादसहितं वीक्ष्य त्वां निर्गतं निशि। युक्त्या चानीतवत्यस्मि संश्राव्य रुदितध्वनिम्॥
तदेतत्साधयेष्टं मे सुभगेति तयार्थितः। स विनीतमतिस्तस्याः प्रतिपेदे तथेति तत्॥
ततो गत्वैव सा नागकन्या तत्क्षणमेव तम्। वाजिनं जवनं श्वेतं पिण्डीभूतमिवैन्दवम्॥
रश्मिजालं दिगन्तेषु तमो हन्तुं प्रधावितम्। तच्च वीरावलोकिन्या विप्रेक्षितमिव श्रिया॥
खड्गरत्नमुपानीय सतारगगनच्छवि। तस्मै विनीतमतये समर्पयत ते उभे॥
सोऽप्यात्तखड्गस्तुरगं तमारुह्य तया सह। प्रस्थितोऽश्वप्रभावेण तदैव प्राप मानसम्॥
वातोद्धूताम्बुजकरं चक्रवाकार्तकूजितैः। निषेधदिव मा मेति कालजिह्वानुकम्पया॥
दृष्ट्वा स तत्र यक्षाणां वशे तं गन्धमालिनम्। मुक्तये तस्य तान्क्षुद्रान्व्यद्रावयदरक्षितान्॥
तद्दृष्ट्वा स सरोमध्यान्मुक्तचक्राङ्गनावपुः। कालजिह्वः समुत्तस्थौ प्रावृण्मेघ इवोन्नदन्॥
प्रवृत्ते चाहवे व्योम्नि कालजिह्वं तमुत्प्लुतम्। विनीतमतिरुत्प्लुत्य साश्वः केशेषु सोऽग्रहीत्॥
छेत्तुमिच्छति यावच्च शिरः खड्गेन तस्य सः। तावत्स कृपणं जल्पन्यक्षस्तं शरणं ययौ॥
ददौ च तस्मै मुक्तः सन्नीतिघ्नं स्वाङ्गुलीयकम्। प्रह्वो मुमोच दास्याच्च नागं तं गन्धमालिनम्॥
गन्धमाली च मुदितो विनीतमतये तदा। तस्मै सुतां तां विजयवतीं दत्त्वा गृहानगात्॥
ततः खड्गाङ्गुलीयाश्वकन्यारत्नयुतः कृती। स विनीतमतिर्जाते प्रभाते गृहमाययौ॥
तत्राभिनन्दितः पित्रा पृष्टवृत्तान्ततोषिणा। राज्ञा च स्वेन तां नागकन्यां स परिणीतवान्॥
अथ रत्नैश्चतुर्भिस्तैर्गुणैः स्वैश्चोपबृंहितम्। पिता कदाचित्कमलमतिः प्रोवाच तं रहः॥
इहास्योदयतुङ्गस्य सुतैषा यास्ति भूपते। पुत्रोदयवती नाम सर्वविद्यासु शिक्षिता॥
तस्यां पणः कृतोऽनेन यो विप्रः क्षत्रियोऽपि वा। वादे पराजयेत्तैतां तस्मै दद्यामिमामिति॥
पराजिताश्च वादेन वादिनोऽन्येऽनयाखिलाः। जगदाश्चर्यरूपेण रूपेणेवामराङ्गनाः॥
त्वं चैकवीरः स्वक्षत्रवादे तूष्णीं च तत्कथम्। स्थितोऽसि विजयस्वैनां वादे परिणयस्व च॥
इत्युक्तस्तेन पित्रा स विनीतमतिरब्रवीत्। पेशलाभिः सह स्त्रीभिर्वादः कस्तात मादृशाम्॥
तथाप्येतं त्वदादेशं करिष्यामीत्युदीरिते। प्रौढेन तेन स ययौ तत्पिता क्षितिपान्तिकम्॥
राजपुत्र्या समं वादः प्रातर्देव करिष्यते। विनीतमतिनेत्यत्र स तं भूपं व्यजिज्ञपत्॥
भूपेन प्रतिपन्नार्थो गृहमेत्य च सूनवे। विनीतमतये तस्मै तत्तथैव शशंस सः॥
ततः प्राप्तः स्वयं तेन राजहंसेन संश्रिताम्। विनीतमतिरागत्य वादी विद्वत्सभाब्जिनीम्॥
भास्वान्स भासयामास लोललोचनषट्पदैः। विलोक्यमानोऽभिमुखैर्गुणिवृन्दैस्तदाश्रितैः॥
क्षणान्तरे चाययौ सा तत्रोदयवती शनैः। राजपुत्री गुणाकृष्टा कामस्येव धनुर्लता॥
शोभिता गुणवद्भिः स्वैश्चारुशब्दैर्विभूषणैः। तत्पूर्वपक्षोपक्षेपमिव कुर्वद्भिरादितः॥

ला चेत्स्यादिन्दुलेखाम्बरे ततः । भजेत्साम्यं निषण्णायास्तस्या मरकतासने ॥ ७८
पक्षं सा स्फुरद्दन्तांशुतन्तुषु । गुम्फयन्तीव सुश्लक्ष्णपदरत्नमयीं स्रजम् ॥ ७९
ाद्धान्तं स विनीतमतिर्व्यधात् । क्षणान्निरुत्तरीकृत्य सुमुखीं तां पदे पदे ॥ ८०
स्तुते तस्मिन्सात्मनो राजपुत्रिका । पराजयेऽपि सद्भर्तृलाभाज्जयममन्यत ॥ ८१
ातुङ्गोऽथ राजा हृष्टोऽत्र तां सुताम् । तस्मै विनीतमतये ददौ वादपणार्जिताम् ॥ ८२
ोऽत्र स विनीतमतिस्ततः । ताभ्यां नागसुताराजसुताभ्यां सह तस्थिवान् ॥ ८३
मानोऽन्यैर्द्यूतस्थो व्याकुलाशयः । निर्बन्धाद्ब्राह्मणेनैत्य स भोजनमयाच्यत ॥ ८४
ं भृत्यस्य कथयित्वा क्षुधा वृतः । वस्त्रेणाच्छाद्य सिकतापात्रमस्मायदापयत् ॥ ८५
ृहीत्वैव गुरुत्वात्सहिरण्यकम् । मत्वा प्रहर्षादेकान्तमृजुर्गत्वोदघाटयत् ॥ ८६
ुकापूर्णमुत्सार्य धरणीतले । विप्रलब्धोऽस्मि तेनेति विषण्णः स्वगृहं ययौ ॥ ८७
ष्येतदविचिन्त्य विमुच्य तत् । द्यूतं तस्थौ यथाकामं स्वगृहेषु प्रियासखः ॥ ८८
च जरसा विश्लिष्यत्संधिविग्रहः । सोऽभूदुदयतुङ्गोऽत्र राजा राज्यभराक्षमः ॥ ८९
ारं राज्ये विनीतमतिमेव तम् । सोऽभिषिच्य ययौ गङ्गामपुत्रो देहमुक्तये ॥ ९०
न चिरात्स विनीतमतिस्ततः । अश्वखड्गप्रभावेण जिगायापि दिशो दश ॥ ९१
ीयस्य प्रभावादस्य चाभवत् । राष्ट्रं नीरोगदुर्भिक्षं राज्ञो रघुपतेरिव ॥ ९२
यौ तं च भिक्षुर्देशान्तरान्नृपम् । रत्नचन्द्रमतिर्नाम वादिद्विरदकेसरी ॥ ९३
: कृतातिथ्यो राजानं तं गुणिप्रियम् । प्रार्थयामास वादार्थमीदृशं च पणं जगौ ॥ ९४
ा राजेन्द्र ग्राह्यं सुगतशासनम् । मया जितेन शुश्रूष्या विप्राः संत्यज्य चीवरम् ॥ ९५
ाथेत्युक्त्वा वादं तेन सहाकरोत् । स विनीतमती राजा भिक्षुणा दिनसप्तकम् ॥ ९६
भिक्षुस्तं स जिगाय महीपतिम् । येनोदयवती वादिमुण्डमुद्गरिका जिता ॥ ९७
ष्टं स भिक्षुणा सौगतं मतम् । सत्त्वोपकारपुण्याढ्यं जातश्रद्धोऽग्रहीन्नृपः ॥ ९८
ह्मणादीनां सर्वेषां च चकार सः । विहारसत्रवसतीर्जिनपूजापरायणः ॥ ९९
शान्तश्च भिक्षोस्तस्मादयाचत । स बोधिसत्त्वचर्यायामाज्ञां सत्त्वोपकारिणीम् ॥ १००
स्तमाह स्म राजन्विगतकल्मषैः । बोधिसत्त्वमहाचर्या चरितव्येह नेतरैः ॥ १०१
ःशैलक्ष्यं स्थूलं नास्त्येव किल्बिषम् । किं तु त्वं सूक्ष्ममनया युक्त्यान्विष्य शमं नय ॥ १०२
दिशत्तस्मै स भिक्षुः स्वप्नमाणवम् । सोऽपि तेन नृपः स्वप्नं दृष्ट्वास्मै प्रातरभ्यधात् ॥ १०३
न स्वप्नेऽद्य परलोकमहं गतः । तत्र क्षुधार्थितान्नं मां पुरुषा दण्डिनोऽब्रुवन् ॥ १०४
ूयसी राजन्नर्जितास्तप्तवालुकाः । या दत्ताः क्षुधिताय प्राग्ब्राह्मणायार्थिने त्वया ॥ १०५
स्वर्णकोटीः पापादस्माद्विमोक्ष्यसे । इत्युक्तो दण्डहस्तैस्तैः प्रबुद्धोऽहं निशाक्षये ॥ १०६
तदाख्याय मूलं दत्त्वा च ता दश । स्वर्णकोटीः पुनश्चक्रे स राजा स्वप्नमाणवम् ॥ १०७
स स्वप्नमुत्थायोपस्यवर्णयत् । अद्यापि दत्तं स्वप्ने तैः क्षुधितस्य परत्र मे ॥ १०८
न्नं पुंभिः पृष्टास्ते च ततो मया । दत्तेऽपि दाने भोक्ष्यामि किमिमाः सिकता इति ॥ १०९
ादन्ति स्म तद्दानं तव निष्फलम् । तत्रैकं विप्रसंबन्धि सुवर्णमभवद्यतः ॥ ११०
बुद्धोऽहमिति स्वप्नमुदीर्य सः । राजा प्रायच्छदर्थिभ्यः स्वर्णकोटीः पुनर्दश ॥ १११
भूयोऽपि निशायां स्वप्नमाणवम् । दृष्ट्वा पुनश्च स स्वप्नमुत्थायोषस्यवर्णयत् ॥ ११२
ः पुरुषैस्तदेव सिकताशनम् । दत्तं परत्र मे स्वप्ने पृष्टश्चोक्तोऽस्मि तैरिदम् ॥ ११३
ते दानं निष्फलं दस्युभिर्यतः । अटव्यां तव देशेऽद्य मुषित्वा निहतो द्विजः ॥ ११४
त्वदीयाभूदरक्षाविफलं ततः । तत्तवाद्यतनं दानं तद्देहि द्विगुणं पुनः ॥ ११५
द्धोऽहमित्याख्याय स भिक्षवे । गुरवे नृपतिः स्वप्ने दानं तद्द्विगुणं ददौ ॥ ११६

ततो जगाद तं भिक्षुमाचार्यं कथमीदृशः। बहुच्छिद्रोऽनुपाल्यः स्याद्धर्मो जगति मादृशैः॥
तच्छ्रुत्वा सोऽब्रवीद्भिक्षुर्देव नैतावता बुधैः। धर्मस्य रक्षणविधौ कार्यानुत्साहिनी मतिः॥
धीरानुत्साहसंपन्नान्स्वधर्मानवमानिनः। देवता अभिरक्षन्ति पुष्णन्त्येषां च वाञ्छितम्॥
तथा चेदं भगवतो बोधिसत्त्वस्य जातकम्। वाराहं न श्रुतं राजन्यदि तच्छ्रूयतां त्वया॥
पुरा गुहायां विन्ध्याद्रावासीद्बुद्धांशसंभवः। वराहः कोऽपि सुहृदा मर्कटेन समं सुधीः॥
स सर्वसत्त्वहितकृत्सख्या तेन युतः सदा। अतिथीन्पूजयन्कालं निनाय स्वोचितैः क्रमैः॥
एकदा चोदभूत्तत्र दुर्दिनं पञ्च वासरान्। अच्छिन्नधाराविच्छिन्नप्राणिसंचारदारुणम्॥
पञ्चमेऽह्नि वराहस्य सुप्तस्य सकपेर्निशि। आगात्तस्य गुहाद्वारं सिंहो भार्यासुतान्वितः॥
स सिंहस्तत्र भार्यां तामवादीद्दुर्दिने ध्रुवम्। मरिष्यामोऽद्य दीर्घेऽस्मिन्नप्राप्तप्राणिनः क्षुधा॥
तच्छ्रुत्वा साब्रवीत्सिंही सर्वे तावत्क्षुधा वयम्। न भवामस्तदेकां मां भुक्त्वा द्वौ जीवतं युवाम्॥
त्वं हि प्रभुरयं पुत्रः प्राणसर्वस्वमावयोः। मादृशी भवितान्या ते तन्मयैवास्तु वां शिवम्॥
एवमन्योन्यसंलापो जायापत्योस्तयोस्तदा। दैवात्प्रबुद्धः शुश्राव स वराहो महाशयः॥
प्रीतश्चाचिन्तयद्दिष्ट्या क्व निशेयं क्व दुर्दिनम्। क्व चेदृगतिथिप्राप्तिरहो पुण्योदयोऽद्य मे॥
तद्भिन्नो न भवेद्यावत्तावत्क्षणविनाशिना। किमनेन न देहेन तर्पयाम्यतिथीनमून्॥
इत्युत्थाय स निर्गत्य वराहः स्निग्धया गिरा। सिंहं जगाद तं भद्र मा गमस्त्वं विषादिताम्॥
अयं ससुतदारस्य भक्ष्यः प्राप्तोऽस्म्यहं तव। तद्भुङ्क्ष्व मामिति क्रोडेनोक्ते तेन स केसरी॥
हृष्टस्तामब्रवीद्भार्यां पूर्वं भुङ्क्तामयं शिशुः। अनन्तरमहं भोक्ष्ये भोक्ष्यसे त्वमतः परम्॥
तथेत्युक्ते तया पूर्वं सिंहपोतेन भक्षिते। क्रोडस्य तस्य मांसेऽथ सिंहो भोक्तुं प्रचक्रमे॥
भुञ्जानं च तमाह स्म महासत्त्वः स सूकरः। शीघ्रं पिबैतद्रक्तं मे यावद्भूमौ न लीयते॥
कुरु तृप्तिं च मन्मांसैः शेषमश्नातु ते प्रिया। इति जल्पन्क्रमात्तेन स सिंहेनास्थिशेषताम्॥
नीतोऽपि सूकरः प्राणैः सत्त्वस्थो न व्यमुच्यत। तत्र तद्धैर्यपर्यन्तमवेक्षितुमिव स्थितैः॥
तावच्च सा क्षुधाक्रान्ता सिंही तत्र व्यपद्यत। स सुतः काप्यगात्सिंहः क्षीयते स्म च यामिनी॥
अत्रान्तरे प्रबुद्धः स सखा निर्गत्य मर्कटः। वराहं तं तथाभूतं दृष्ट्वा पप्रच्छ संभ्रमात्॥
केनावस्था कृतेयं ते ब्रूहि शक्नोषि चेत्सखे। तच्छ्रुत्वा स यथावृत्तं धीरोऽस्मै सूकरोऽभ्यधात्॥
ततो रुदन्स तं नत्वा पादयोः कपिरब्रवीत्। त्वं देवतांशो येनात्मा तिर्यक्त्वान्मोचितोऽमुतः॥
तत्कंचिदभिलाषं मे ब्रूहि संसाधयामि ते। इत्युक्तस्तेन कपिना स वराहो जगाद तम्॥
यो वयस्याभिलाषो मे दुःसाध्यो विधिनापि सः। पश्यतो मे मृता येयं क्षुधा सिंही तपस्विनी॥
एषा संप्राप्तपूर्वाङ्गं पुनर्मां प्राप्तजीविता। भुक्त्वा तृप्यत्विति सखे चेतो हि मम वाञ्छति॥
इति तं वादिनं क्रोडं प्रत्यक्षीभूय पाणिना। परामृश्य व्यधाद्धर्मो मुनीन्द्रं दिव्यविग्रहम्॥
उवाच च मयैवेयं माया सिंहादिरूपिणा। कृताभूत्त्वां परार्थैकबद्धकक्ष्यं जिगीषता॥
त्वया त्वखण्डसत्त्वेन परार्थे प्राणदायिना। विजित्य मामिमं धर्मं प्राप्तैवाद्य मुनीन्द्रता॥
तच्छ्रुत्वा धर्ममालोक्य पुरःस्थं सोऽब्रवीन्मुनिः। सख्यावस्मिन्नसंत्यक्ततिर्यक्त्वे मर्कटेऽधुना॥
न मां प्रीणाति भगवन्प्राप्ताप्येषा मुनीन्द्रता। श्रुत्वैतत्स मुनिं चक्रे धर्मस्तमपि मर्कटम्॥
ध्रुवं फलाय महते महद्भिः सह संगमः। अथ धर्मस्तिरोऽभूत्स सिंही चान्तर्दधे मृता॥
एवं सत्त्वबलात्यक्तधर्मोत्साहैरदुर्लभाः। देवताकृतसाहाय्यै राजन्वाञ्छितसिद्धयः॥
इति भिक्षोर्वचः श्रुत्वा स विनीतमतिः पुनः। दानशूरो नृपश्चक्रे रात्रौ तं स्वप्नमाणवम्॥
दृष्ट्वा शशंस च स्वप्नं प्रातस्तस्मै स भिक्षवे। जाने स्वप्नेऽद्य मामेवं दिव्यः कोऽप्यवदन्मुनिः॥
पुत्र निष्कल्मषो बोधिसत्त्वचर्यां चराधुना। तच्छ्रुत्वैव च तद्वाक्यं प्रबुद्धोऽस्म्यद्य निर्वृतः॥
एवं निवेद्य गुरवे भिक्षवे स महीपतिः। जग्राह तां महाचर्यां शुभेऽह्नि तदनुज्ञया॥

च कामानर्थिभ्यो वर्षन्नविरतं ततः । धनं चास्याक्षयं जज्ञे धर्ममूला हि संपदः ॥ १५६
दा तमभ्येत्य ब्राह्मणोऽर्थी व्यजिज्ञपत् । विप्रोऽहं देव वास्तव्यः पुरे पाटलिपुत्रके ॥ १५७
त्रशालामावृत्य पुत्रोऽपि ब्रह्मरक्षसा । आवृतो मे न चैतस्मिन्नुपायः क्रमते मम ॥ १५८
र्थिकल्पवृक्षं त्वामागतोऽस्मीह याचितुम् । देह्येतत्सर्वदोषघ्नमङ्गुलीयं शिवाय मे ॥ १५९
तः स विप्रेण तेन राजाङ्गुलीयकम् । कालजिह्वादवाप्तं तत्तस्मै प्रादादविह्वलः ॥ १६०
त्र तद्गते तस्मिन्विप्रे तस्य च भूपतेः । बोधिसत्त्वव्रतयशो दिगन्तेष्वपि पप्रथे ॥ १६१
कदाचिदपरस्तस्यागादुत्तरापथात् । कोऽपीन्दुकलशो नाम राजपुत्रोऽतिथिः प्रभोः ॥ १६२
ाप्रश्रयस्तेन राज्ञा ज्ञातोत्तमान्वयः । पृष्टकामश्च धीरेण राजपुत्रस्तमब्रवीत् ॥ १६३
वदर्थिसार्थस्य ख्यातश्चिन्तामणिर्भुवि । प्राणानामपि ते ह्यर्थी न प्रयाति पराङ्मुखः ॥ १६४
ास्कन्द्य कनककलशाख्येन राज्यतः । भ्रात्रा निर्वासितः पित्र्यादर्थित्वात्त्वामुपागतः ॥ १६५
वङ्गरत्ने ते ये त्वक्रे ... देहि मे । यत्प्रभावेण दायादं जित्वा राज्यमवाप्नुयाम् ॥ १६६
नैवाश्वखड्गौ ... तमणी अदि । ददौ राजसुतायास्मै स विनीतमतिर्नृपः ॥ १६७
तस्याभ ... धीरचेतसः । अ...मुखेषु मुञ्चत्सु निःश्वासानपि मन्त्रिषु ॥ १६८
प्राप्ताश्व ... राजसुतस्ततः । तत्प्रभावेण जित्वा तं भ्रातरं राज्यमाप्तवान् ॥ १६९
। सोऽपि ... राज्यतश्च्युतः । तस्य तां नगरीमागाद्विनीतमतिभूपतेः ॥ १७०
वेशं कर्तुं च दुः... भतात्र सः । तद्बुद्ध्वा स नृपोऽमात्यान्विनीतमतिरब्रवीत् ॥ १७१
ाधुरिमां प्राप्तो दशां मदपराधतः । तत्स्वराज्यप्रदानेन भवाम्यस्यानृणोऽधुना ॥ १७२
नुपयुक्तेन किं राज्येनामुना च मे । एष एवानपत्यस्य पुत्रो मेऽस्तु च राज्यभृत् ॥ १७३
ाहूय कनककलशाय स तद्ददौ । तस्मै स्वराज्यं सचिवेष्वनिच्छत्स्वपि भूपतिः ॥ १७४
ायश्च निरगान्नगर्यास्तत्क्षणं ततः । भार्याभ्यां सहितो द्वाभ्यां निर्विकल्पेन चेतसा ॥ १७५
धिग्जगदाप्यायी संपूर्णोऽमृतदीधितिः । जातश्चान्तरितश्चैत्य मेघेनाकाण्डपातिना ॥ १७६
ोष सर्वाशापूरणे सर्वदेहिनाम् । नीतश्च विधिना क्वापि प्रजाकल्पद्रुमो नृपः ॥ १७७
क्रन्दमुखरास्तद्दृष्ट्वा विह्वलास्तदा । बाष्पाम्बुसिक्तवसुधाः पौरास्तमनु निर्ययुः ॥ १७८
च कथंचित्तान्सभार्योऽकम्पितस्ततः । स विनीतमतिः प्रायादरण्यं प्रत्यवाहनः ॥ १७९
ापार्कसंतप्तसिकतां निर्जलद्रुमाम् । मरुभूमिं स विधिना सृष्टां धैर्यमवेक्षितुम् ॥ १८०
शे तृष्णार्तो दूराध्वक्लमविक्लवः । निषण्णः स क्षणं जह्रे सपत्नीकोऽपि निद्रया ॥ १८१
वीक्षते यावत्तावत्तत्र ददर्श सः । स्वसत्त्वोत्कर्षनिष्पन्नं महदुद्यानमद्भुतम् ॥ १८२
ाशीतलस्वच्छसलिलापूर्णवापिकम् । नीलशाद्वलसंछन्नं फलभारानतद्रुमम् ॥ १८३
गतसुश्लक्ष्णपृथुतुङ्गशिलातलम् । दानप्रभावेणाकृष्टं त्रिदिवादिव नन्दनम् ॥ १८४
कें नु भ्रमो वायं देवतानुग्रहोऽथ मे । इति तद्वीक्ष्य वीक्ष्यैष यावच्चित्रीयते नृपः ॥ १८५
चारिणा हंसद्वन्द्वरूपेण केनचित् । सिद्धद्वयेन गगनादीरितामशृणोद्गिरम् ॥ १८६
सत्त्वमाहात्म्ये तव कोऽत्रातिविस्मयः । तदस्मिन्कानने स्वेच्छं सदापुष्पफले वस ॥ १८७
द्वचः श्रुत्वा निर्वृतस्तत्र कानने । तपस्यन्सह पत्नीभ्यां विनीतमतिरास्त सः ॥ १८८
च ददर्शाराच्छिलातलगतोऽत्र सः । उद्बन्धनेन पुरुषं कमप्यात्मवधोद्यतम् ॥ १८९
ा प्रियैर्वाक्यैरनुनीय निवार्य च । मरणात्कारणं तत्र पुरुषं तं स पृष्टवान् ॥ १९०
पुरुषोऽवादीदामूलं शृणु वच्मि ते । नागशूरसुतो नाम्ना सोमशूरोऽस्मि सोमकः ॥ १९१
ातकनिर्दिष्टचौर्यस्तच्छास्त्रवेदिभिः । तद्भीत्याध्यापितः पित्रा धर्मशास्त्रं प्रयत्नतः ॥ १९२
ापि चौर्येऽहं प्रवृत्तो दुष्टसंगतेः । कस्य प्राक्कर्म केनेह शक्यते कर्तुमन्यथा ॥ १९३
। चौरमध्याद्गृहीला पुररक्षिभिः । शूलाधिरोपणस्थानं वधाय प्रापितोऽभवम् ॥ १९४

तत्क्षणं राजसंबन्धी भग्नालानो महाद्विपः। मत्तो व्यापादयञ्जन्तूंस्तदेव स्थानमागमत् ॥
तत्रासान्मां परित्यज्य क्वापि ते वधका गताः। अहं च तुमुले तस्मिन्पलाय्यैव ततो गतः ॥
वधाय नीयमानं मां श्रुत्वैवोत्क्रान्तजीवितम्। पितरं लोकतोऽश्रौषं मात्रा मेऽनुगतं ततः ॥
अथ शोकातुरो भ्राम्यन्खिन्नो देहव्ययोन्मुखः। क्रमादिदमहं प्राप्तो विजनं काननं महत् ॥
इह प्रविष्टमात्रं मामकस्माद्दत्तदर्शना। उपेत्य कापि दिव्या स्त्री कृताश्वासाभ्यभाषत ॥
त्वं विनीतमतेः पुत्र राजर्षेरिममाश्रमम्। प्राप्तो गतं च ते पापं ज्ञानं तस्माच्च लप्स्यसे ॥
इदमुक्त्वा तिरोऽभूत्सा भ्राम्यंश्चाहमनाप्नुवन्। राजर्षिं तं शुचात्मानं त्यक्तुमिच्छंस्त्वयेक्षितः ॥
इत्युक्तवन्तं नीत्वा तं सोमशूरं निजोटजम्। आवेद्यात्मानमतिथिं स राजर्षिरपूजयत् ॥
कृताहारश्च तं प्रह्वं नानाधर्मकथान्तरे। निवारयिष्यन्नज्ञानात्स राजमुनिरब्रवीत् ॥
अज्ञानं वत्स हातव्यं विपर्यस्तधियां हि तत्। लोकद्वयेऽपि दोषाय श्रृणु चात्रागमश्रुतिम् ॥
पाञ्चालेषु पुरा देवभूतिनामाभवद्द्विजः। तस्याभूद्भोगवत्याख्या भार्या [illegible] ॥
सा स्नानाय गते तस्मिञ्शाकार्थं शाकवाटिकाम्। प्रविष्टा धावकस्य खरं खाद[illegible]त ॥
गृहीतलगुडा तं च साभ्यधावत्खरश्च सः। पलायमानः पतितः श्वभ्रे भग्नखु[illegible]
तद्बुद्ध्वा सोऽत्र तत्स्वामी क्रोधादागत्य धावकः। लगुडैः पादघातैश्च ब्राह्मणीं [illegible]
तेन साकाण्डविभ्रष्टगर्भाभूद्गर्भिणी सती। ततः स खरमादाय धावकः स्वगृ[illegible]
स्नात्वागतोऽथ तद्भर्ता तद्बुद्ध्वा वीक्ष्य तां च सः। भार्यां विप्रः पुराध्यक्षं गत्वा[illegible] व्यजिज्ञपत्
स बलासुरनामानं तदैवानीय धावकम्। श्रुत्वा तयोर्द्वयोर्वादं मूर्खो विवृतवानिदम् ॥
खुरभङ्गात्खरस्यास्य धावकस्य वहत्वयम्। खरभारं द्विजो यावत्प्रकृतिस्थो भवेत्खरः ॥
धावकोऽप्ययमेतस्य भार्यायामग्रजन्मनः। गर्भं प्रजनयत्वन्यं तस्यां तद्गर्भपातनात् ॥
एषोऽनयोर्द्वयोर्दण्ड इत्युक्ते तेन स द्विजः। संतापाद्भक्षितविषः सभार्योऽपि जहावसून् ॥
तद्बुद्ध्वा तत्र निहतो राज्ञा दुरवधारकः। ब्रह्महा स पुराध्यक्षस्तिर्यग्योनिं गतश्चिरम् ॥
इत्यज्ञानतमश्छन्नाः स्वदोषोन्मार्गगामिनः। अपुरस्कृतसच्छास्त्रदीपा भ्रश्यन्ति निश्चितम् ॥
एवमुक्त्वा स राजर्षिरुपदेशार्थिनं पुनः। सोमशूरं विनेतुं तं विनीतमतिरभ्यधात् ॥
वत्स पारमितार्थं ते वच्मि तावत्क्रमाच्छृणु। पूर्वं राजा कुरुक्षेत्रे मलयप्रभ इत्यभूत् ॥
तं कदाचित्प्रजाभ्योऽर्थं दुर्भिक्षे ददतं नृपम्। मन्त्रिभिर्वारितं लोभाज्जगादेन्दुप्रभः सुतः ॥
उपेक्षसे प्रजास्तात कथं दुर्मन्त्रिणां गिरा। त्वं हि कल्पद्रुमस्तासां ताश्च ते कामधेनवः ॥
निर्बन्धादिति जल्पन्तं पुत्रं मन्त्रिवशो नृपः। खेदात्तं सोऽब्रवीद्वत्स किं मेऽस्ति धनमक्षयम् ॥
विना तेन प्रजाकल्पपादपश्चेद्भवाम्यहम्। तत्त्वमेव किमेतासां न धत्से कल्पवृक्षताम् ॥
एतच्छ्रुत्वा पितुश्चक्रे प्रतिज्ञां स नृपात्मजः। मर्तव्यं कल्पवृक्षत्वं साध्यं वा तपसा मया ॥
इति निश्चित्य स प्रायान्महासत्त्वस्तपोवनम्। आरूढ एव तस्मिंश्च स दुर्भिक्षो न्यवर्तत ॥
ततोऽर्थितवरस्तीव्रतपस्तुष्टान्महेन्द्रतः। स्वस्मिन्नेव स संजज्ञे नगरे कल्पपादपः ॥
आकर्षन्निव दूरस्थान्नाह्वयन्निव चार्थिनः। प्रसारिताभिः शाखाभिर्दिक्षु शब्दैश्च पक्षिणाम् ॥
ददौ च कामानर्थिभ्यो दुष्प्रापानपि सोऽन्वहम्। चक्रे च ता निराकाङ्क्षाः प्रजा स्वर्गस्थिता इव ॥
कालेन च महेन्द्रस्तमागत्योवाच लोभयन्। पूर्णः परोपकारस्ते स्वर्गायागम्यतामिति ॥
ततः कल्पद्रुमीभूतस्तं स राजसुतोऽभ्यधात्। यत्र पुष्पैः फलै रम्यैरप्यन्यतरवोऽप्यमी ॥
पारार्थ्यमेव सततं भजन्ति स्वार्थनिःस्पृहाः। तत्र कल्पतरुर्भूत्वा स्वसुखाय कथं दिवम् ॥
इयतोऽस्य जनस्याशाछेदं कृत्वा व्रजाम्यहम्। इत्युदारं वचस्तस्य श्रुत्वा शक्रोऽब्रवीत्पुनः ॥
तर्हि प्रजापि ते कृत्स्ना स्वर्गमायात्वसाविति। ततस्तमवदद्राजसूनुः कल्पद्रुमोऽपि सः ॥
तुष्टोऽसि चेन्नय स्वर्गं प्रजा नार्थोऽस्ति तेन मे। अहं परोपकारैकसिद्ध्यै तप्स्ये तपो महत् ॥

युक्तवन्तं स्तुत्वा तं सुगतांशं तथेति सः। आदाय च प्रजास्तुष्टः सुरेन्द्रस्त्रिदिवं ययौ॥ २३४
ऽपि तां तरुतां त्यक्त्वा राजपुत्रः स्वरूपभृत्। तपसेन्दुप्रभः प्राप वनस्थो बोधिसत्त्वताम्॥ २३५
ं स्याद्दानसक्तानां सिद्धिरित्युदिता मया। दानपारमितैषा ते शीलपारमितां शृणु॥ २३६
ा शुकानां राजाभूद्विन्ध्याद्रौ सुगतांशजः। प्राग्जन्माभ्यस्तशीलाढ्यो नाम्ना हेमप्रभो वशी॥ २३७
स्य जातिस्मरस्यासीदपि धर्मोपदेशिनः। रागिमूर्खः प्रतीहारो नाम्ना चारुमतिः शुकः॥ २३८
जातु पाशिना भार्या व्याधेन निहतां शुकीम्। शोचन्नवस्थां करुणां तद्वियोगातुरो ययौ॥ २३९
ः स शुकराजस्तं युक्त्या शोकं निवारयन्। हेमप्रभो हितायैवमुवाच मतिमान्मृषा॥ २४०
सा तव मृता भार्या पाशाच्छाकुनिकस्य सा। गता पलाय्य दृष्टा हि जीवन्त्येव मयाधुना॥ २४१
ियाम्येहि तुभ्यं तामित्युक्त्वा स निनाय तम्। राजा चारुमतिं व्योममार्गेणैकं जलाशयम्॥ २४२
संदर्श्य तस्यैव प्रतिबिम्बं जलान्तरे। तमब्रवीदियं सा ते भार्या पश्येह तिष्ठति॥ २४३
छ्रुत्वा वीक्ष्य चात्रात्मप्रतिबिम्बं स मूढधीः। हृष्टः प्रविश्य तोये तामालिलिङ्ग चुचुम्ब च॥ २४४
ाप्नुवन्प्रियास्पर्शमशृण्वंस्तद्वचश्च सः। स्पर्शालापौ प्रिया किं मे न ददातीत्यचिन्तयत्॥ २४५
पाशङ्की ततो गत्वैवानीयामलकं ततः। चाटूर्थं दयिताबुद्ध्या न्यधात्स्वे प्रतिबिम्बके॥ २४६
मग्नोत्पतितं कान्ताप्रतिक्षिप्तमवेत्य च। गत्वा सखेदो राजानं तं हेमप्रभमभ्यधात्॥ २४७
भार्या न सा स्पर्शमालापं वा ददाति मे। किं चैतया प्रतिक्षिप्तं दत्तमामलकं मया॥ २४८
च्छ्रुत्वा स राजा तं शनैः कृच्छ्रादिवाब्रवीत्। न युक्तमेतद्वक्तुं मे वच्मि स्नेहात्तथापि ते॥ २४९
यानुरक्ता ह्यवैषा त्वयि प्रीतिं कथं भजेत्। दर्शयामि च ते साक्षादेह्यत्रैव जलान्तरे॥ २५०
ुक्त्वा तत्र नीत्वा तं स्वं तदीयं च वारिणि। प्रतिबिम्बे उभे राजा तस्मै श्लिष्टे अदर्शयत्॥ २५१
दृष्ट्वैव स तां भार्यां मूर्खो मत्वान्यसंगताम्। संनिवृत्य विरक्तस्तं स्वं राजानं व्यजिज्ञपत्॥ २५२
त्वदुपदेशो यन्मया मूढेन न श्रुतः। तस्यैष पाकस्तन्मेऽत्र कर्तव्यमधुनादिश॥ २५३
तं कृतविज्ञप्तिं राजा हेमप्रभोऽथ सः। लब्धोपदेशावसरः प्रतीहारमभाषत॥ २५४
हालाहलं भुक्तमहिर्बद्धो वरं गले। न पुनः स्त्रीषु विश्वासो मणिमन्त्राद्यगोचरः॥ २५५
ङ्कयन्ति सन्मार्गजुषः परिभवन्त्यलम्। वात्या इवातिचपलाः स्त्रियो भूरिरजोभृतः॥ २५६
ासु न प्रसक्तव्यं धीरसत्त्वैः सुबुद्धिभिः। शीलमभ्यसनीयं तु वीतरागपदाप्तये॥ २५७
तेनानुशिष्टः स राज्ञा चारुमतिः स्त्रियः। परिहृत्य बभूवोर्ध्वरेता बुद्धसमः क्रमात्॥ २५८
न्यानपि शीलाढ्यास्तारयन्तीति ते मया। शीलपारमिता प्रोक्ता क्षमापारमितां शृणु॥ २५९
ीच्छुभनयो नाम केदाराद्रौ महामुनिः। सदा मन्दाकिनीतोयस्नायी दान्तस्तपःकृशः॥ २६०
ा तत्रैकदा पूर्वनिखातं भुवि काञ्चनम्। अन्वेष्टुमाययुश्चौरा न च प्रापुः कुतोऽपि तत्॥ २६१
ऽत्र विजने मत्वा तेन तन्मुनिना हृतम्। प्रविश्य मठिकां तस्य चौरास्ते ब्रुवते स्म तम्॥ २६२
दम्भमुने मुञ्च नीतं नः काञ्चनं क्षितेः। चौराणामप्यहो चौरस्त्वमस्माकमुपस्थितः॥ २६३
ाक्षिप्तः स तैः पापैरहृतार्थो मृषा मुनिः। न नीतं तन्मया किंचिन्न दृष्टं चेत्यभाषत॥ २६४
तैर्लगुडैर्दुष्टैस्ताडितोऽपि स दस्युभिः। यदा तदेव वक्ति स्म सत्यवाङ्मुनिसत्तमः॥ २६५
ते चिच्छिदुस्तस्य क्रूरोऽयमिति तस्कराः। क्रमाद्धस्तौ च पादौ च नयने चोदपाटयन्॥ २६६
प्यनन्यवचनं निर्विकारमवेत्य तम्। मत्वान्यलुप्तं स्वर्णं ते जग्मुश्चौरा यथागतम्॥ २६७
श्च शेखरज्योतिर्नाम राजात्र तं मुनिम्। पश्यति स्म तथाभूतं शिष्यस्तद्दर्शनागतः॥ २६८
स गुरुशोकार्तस्तं दृष्ट्वा तदवेत्य च। अन्विष्यानाययच्चौरांस्तांस्तत्रैव तदा प्रभुः॥ २६९
वधे प्रवृत्तं च नृपं तं सोऽब्रवीन्मुनिः। राजन्यदि निहंस्येतांस्तदात्मानं निहन्म्यहम्॥ २७०
णेदं कृतं चेन्मे तदेषां कापराधिता। तस्य वा प्रेरका ह्येते तद्धैतेषामपि क्रुधः॥ २७१
ामपि स्वर्णनाशस्तस्य मत्पूर्वदुष्कृतम्। तस्यापि स्वं ममाज्ञानं तस्मात्तदपकारि मे॥ २७२

ततस्तदेव मे धार्यं किं च यद्यपकारतः। वध्या एते कथं नात्र रक्ष्याः स्युरुपकारतः॥
नैते कुर्युरिदं चेन्मे क्षमां मोक्षफलामहम्। कस्य कुर्यां तदेतैर्मे पूर्णैवोपकृतिः कृता॥
इत्यादिभिः स बहुभिर्वाक्यैः क्षान्तिपरो मुनिः। प्रबोध्य तं नृपं चौरान्निग्रहात्तानमोचयत्॥
तपसश्चास्य माहात्म्यात्तत्क्षणं प्राग्वदक्षतम्। शरीरमभवत्तस्य सिद्धिश्चाविरभूत्तदा॥
एवं तरन्ति क्षमिणः संसारमिति वर्णिता। क्षमापारमिता तुभ्यं धैर्यपारमितां शृणु॥
आसीन्मालाधरो नाम पूर्वं ब्राह्मणपुत्रकः। सोऽपश्यदेकदा सिद्धकुमारं व्योमगामिनम्॥
तत्स्पर्धयातृणमयान्पक्षानाबध्य पार्श्वयोः। उत्प्लुत्योत्प्लुत्य गगने गत्यभ्यासमशिक्षत॥
प्रत्यहं च तथा कुर्वन्परिश्रममपार्थकम्। ददृशे स कुमारेण कदाचिद्व्योमचारिणा॥
धैर्ययुक्तः परिश्राम्यन्दुष्प्रापेऽर्थेऽपि सोद्यमः। बालोऽयमनुकम्प्यो मे मम ह्येष परिग्रहः॥
इति संचिन्त्य तुष्टेन नीत्वा तेन स्वशक्तितः। स्कन्देन द्विजमुख्योऽसावात्मनोऽनुचरः कृतः॥
इत्थं धैर्येण तुष्यन्ति देवता अपि ते मया। धैर्यपारमिता प्रोक्ता ध्यानपारमितां शृणु॥
आसीद्विजयमालीति कर्णाटेषु पुरा वणिक्। अभून्मलयमालीति महर्द्धेस्तस्य चात्मजः॥
स तेन पित्रा सहितो जातु राजकुलं गतः। राज्ञस्तस्य युवापश्यदिन्दुकेसरिणः सुताम्॥
सा तस्येन्दुयशा नाम मारवल्लीव मोहिनी। वणिक्पुत्रस्य दृष्टैव विवेश हृदि कन्यका॥
ततः स गृहमागत्य विनिद्रो निशि पाण्डुरः। दिवा संकुचितस्तस्थावालम्ब्य कुमुदव्रतम्॥
तामेव चान्वहं ध्यायन्नाहारादिपराङ्मुखः। पृष्टोऽपि स्वजनैर्नैव मूकवत्किंचिदभ्यधात्॥
अथैकान्ते तथारूपं तमाप्तो विरहातुरम्। सुहृन्मन्थरको नाम राजचित्रकरोऽब्रवीत्॥
सखे किं भित्तिसक्तस्त्वं तिष्ठस्यालिखितो यथा। रूपैकसारोऽनाश्वासी न शृणोषि न पश्यसि॥
इति निर्बन्धतस्तस्मै पृच्छते स वणिक्सुतः। सख्ये मलयमाली स्वमभिप्रायं शशंस तम्॥
युक्ता न ते वणिक्पुत्र राजपुत्रीं प्रति स्पृहा। हंसो वाञ्छतु नामान्यसरोम्बुजसुखश्रियम्॥
हरिनाभीह्रदाम्भोजभोगलक्ष्म्याः स कः पुनः। इति ब्रुवन्स च यदा चित्रकृन्न शशाक तम्॥
प्रतिषेद्धुं तदा तस्मै तामुत्कण्ठाविनोदिनीम्। कालातिवाहायालिख्य राजपुत्रीं पटे ददौ॥
सोऽपि चित्रस्थितां प्राप्य पश्यन्ननुनयन्स्पृशन्। आसीन्मलयमाली तां भूषयंश्च वणिक्सुतः॥
सेयमिन्दुयशा राजपुत्रीत्येवं स भावयन्। क्रमात्तन्मयतां प्राप्य तया वृत्त्याकरोत्क्रियाः॥
शनैश्च तामालपन्तीं चुम्बनादि च कुर्वतीम्। तद्भावनाभावितः सन्नपश्यल्लिखितामपि॥
ततः स भावनासिद्धकान्तासंभोगसुस्थितः। तस्थौ चित्रपटस्यैककृत्स्नसंसारनिर्वृतः॥
एकदादाय तं चित्रपटं चन्द्रोदयेऽथ सः। निर्गत्योद्यानमगमद्विहर्तुं प्रियया सह॥
तत्रैकस्य तरोर्मूले तं निवेश्य पटं च सः। विप्रकृष्टं ययौ पुष्पाण्यवचेतुं प्रियाकृते॥
तत्कालं विनयज्योतिर्नामाम्बरतलान्मुनिः। दृष्ट्वा तं कृपया मोहादुद्धरिष्यन्नवातरत्॥
सोऽत्र चित्रपटस्यैकदेशे तस्य स्वशक्तितः। सजीवं सर्पमालिख्य कृष्णं तस्थावलक्षितः॥
तावन्मलयमाली च पुष्पाण्युच्चित्य तत्र सः। आगत्य कृष्णसर्पं तं पटे दृष्ट्वा व्यचिन्तयत्॥
सर्पः कुतोऽधुनात्रैषो विधिना किं नु निर्मितः। निधानभूतां रूपस्य रक्षितुं सुन्दरीमिमाम्॥
इति संचिन्त्य पुष्पैस्तामलंकृत्य प्रियां पटे। भावनोपनतां यावदालिङ्ग्यैतरत्स पृच्छति॥
तावद्ददर्श तस्यात्र मुनेर्मायाप्रभावतः। एतां कृष्णाहिना तेन दष्टां विगतजीविताम्॥
ततः स विस्मृतपटो हाहेत्युक्त्वैव मोहितः। पपात पटसंसिद्धविद्याधर इव क्षितौ॥
क्षणाच्च संज्ञां संप्राप्य विलपन्मरणोन्मुखः। उत्थायारुह्य वृक्षाग्रात्तुङ्गादात्मानमक्षिपत्॥
पतन्तमेव तस्माच्च पाणिभ्यां स तमग्रहीत्। मुनीन्द्रः प्रकटीभूय समाश्वास्य जगाद च॥
मूढ वेत्सि न किं यत्सा राजपुत्री स्वमन्दिरे। स्थिता चित्रपटे चैषा निर्जीवा चित्रपुत्रिका॥
तदालिङ्गसि कां का वा तव दष्टा महाहिना। रागिणस्ते स्वसंकल्पभावनाभ्रम एष कः॥

ार्थ्येन तत्त्वं जिज्ञाससे न किम् । येनेदृशानां दुःखानां न पुनर्यासि पात्रताम् ॥ ३१२
ुनिना जातमोहनिशाक्षयः । प्रबुद्धः स वणिक्पुत्रः प्रणिपत्य जगाद तम् ॥ ३१३
भगवन्नेतां तीर्णोऽहमापदम् । यथा तरेयं संसारं प्रसादं मे तथा कुरु ॥ ३१४
र्थतो बोधिसत्त्वो मलयमालिना । मुनिस्तस्मै स्वविज्ञानमुपदिश्य तिरोदधे ॥ ३१५
ाली स वनं गत्वा तपोबलात् । सहेतुहेयोपादेयतत्त्वज्ञोऽर्हत्त्वमाप्तवान् ॥ ३१६
पालुस्तमिन्दुकेसरिणं नृपम् । चक्रे ज्ञानोपदेशेन सपौरं मुक्तिभागिनम् ॥ ३१७
ध्यानबलिनामेति सत्यताम् । ध्यानपारमितैषोक्ता प्रज्ञापारमितां शृणु ॥ ३१८
हलद्वीपे सिंहविक्रम इत्यभूत् । आजन्मपोषिततनुः परस्वैः सर्वतो हृतैः ॥ ३१९
कालेन विरम्यैतदचिन्तयत् । परत्र कोऽभ्युपायो मे कं तत्र शरणं श्रये ॥ ३२०
शरणं शंभुं शौरिमथात्र तम् । कोऽहं तयोर्ययोर्देवा मुनयोऽन्ये च सेवकाः ॥ ३२१
जन्तूनामेकः सुकृतदुष्कृते । तं चित्रगुप्तं सेवेऽहं स रक्षेन्मां स्वयुक्तितः ॥ ३२२
करोत्येको व्यापारं ब्रह्मरुद्रयोः । लिखत्युत्पुंसयति च क्षणाद्विश्वं करस्थितम् ॥ ३२३
तस्यैव भक्तिमारभते स्म सः । तमेवानर्च तत्प्रीत्यै विप्रान्नित्यमभोजयत् ॥ ३२४
स्य चित्तं चौरस्य वीक्षितुम् । चित्रगुप्तो गृहानागादेकदातिथिरूपभृत् ॥ ३२५
ामभ्यर्च्य भोजितं दत्तदक्षिणम् । उवाच चित्रगुप्तस्तं प्रीतोऽस्त्वित्युच्यतामिति ॥ ३२६
गुप्तस्तमवोचद्ब्राह्मणाकृतिः । मुक्त्वा हरिहरादींस्ते चित्रगुप्तेन किं वद ॥ ३२७
ृत्यवादीत्तं तस्करः सिंहविक्रमः । किं तवानेन नार्थो मे तदन्यैर्दैवतैरिति ॥ ३२८
रूपी तं चित्रगुप्तोऽब्रवीत्पुनः । तर्हि मे यदि भार्यां स्वां ददास्येवं वदामि तत् ॥ ३२९
ष्टस्तमवादीत्सिंहविक्रमः । अभीष्टदैवतप्रीत्यै भार्या दत्तैव ते मया ॥ ३३०
तच्छ्रुत्वा प्रदर्श्यात्मानमब्रवीत् । सैष तुष्टोऽस्मि तत्किं ते करवै कथ्यतामिति ॥ ३३१
धान्तं स विशेषात्सिंहविक्रमः । भगवन्न यथा मृत्युर्भवेन्मम तथा कुरु ॥ ३३२
ागुप्तो मृत्युः शक्यो न रक्षितुम् । तथापि तावद्युक्तिं ते करिष्ये तां च मे शृणु ॥ ३३३
नेर्दग्धः कालः श्वेतनिमित्ततः । कुपितेनेश्वरेणेह पुनः कार्याच्च निर्मितः ॥ ३३४
ात्रैव श्वेतो वसति तत्र सः । न जन्तून्बाधतेऽन्यानप्याज्ञया यन्त्रितः प्रभोः ॥ ३३५
तमुनिः पारे पूर्वाम्बुधेः स्थितः । तरङ्गिणीं नाम नदीं समुत्तीर्य तपोवने ॥ ३३६
क्रम्ये नीत्वा त्वां स्थापयाम्यहम् । तरङ्गिण्या इदं पारमागन्तव्यं च न त्वया ॥ ३३७
ादात्त्वां मृत्युर्बाधिष्यते यदि । तदुपायं करिष्यामि परलोकागतस्य ते ॥ ३३८
गुप्तस्तं प्रहृष्टः सिंहविक्रमम् । नीत्वा श्वेताश्रमे तस्मिन्निधायादर्शनं ययौ ॥ ३३९
ात्रस्थं नेतुं तं सिंहविक्रमम् । कालस्तस्यास्तरङ्गिण्या इदं पारमुपाययौ ॥ ३४०
ार्शोन्यमुपायं न यदा तदा । स तस्मै प्राहिणोद्दिव्यां स्त्रियं निर्माय मायया ॥ ३४१
तं युक्त्या वशीचक्रे विलासिनी । मोहयित्वा स्वलावण्यसंपदा सिंहविक्रमम् ॥ ३४२
बन्धुदिदृक्षाव्यपदेशतः । सतरङ्गां तरीतुं तां प्रविवेश तरङ्गिणीम् ॥ ३४३
ायाते तीरस्थे सिंहविक्रमे । मध्येनदि च सा चक्रे परिस्खलितमात्मनः ॥ ३४४
ाणेव तारं चक्रन्द तत्र सा । वीक्षसे म्रियमाणां मामार्यपुत्र न रक्षसि ॥ ३४५
किं त्वं न पुनः सिंहविक्रमः । तच्छ्रुत्वैवावतीर्णोऽभूत्स नद्यां सिंहविक्रमः ॥ ३४६
वेगेन नीयमानेव तत्र तम् । त्रातुं तमनुगच्छन्तं तत्पारमनयत्क्षणात् ॥ ३४७
क्षिप्तपाशः कालस्तमब्रवीत् । अपायो मस्तकस्थो हि विषयग्रस्तचेतसाम् ॥ ३४८
नीतं कालेनैतं प्रमादिनम् । चित्रगुप्तोऽब्रवीद्दृष्ट्वा प्राक्प्रसन्नो जनान्तिकम् ॥ ३४९
मुङ्क्षे किं वा स्वर्गमितीह चेत् । पृच्छ्यसे प्रार्थयेथास्तत्स्वर्गवासं त्वमग्रतः ॥ ३५०

स्वर्गे वसंश्च कुर्वीथाः पुण्यं तद्दार्ढ्यसिद्धये। ततः कुर्यास्तपस्तत्र कृत्स्नपापापनुत्तये॥
इत्युक्तश्चित्रगुप्तेन स स्वैरं सिंहविक्रमः। विलक्षोऽधोमुखो भीतः प्रतिपेदे तथेति तत्॥
क्षणाच्च धर्मराजोऽत्र चित्रगुप्तमभाषत। कश्चित्कोऽप्यस्य पुण्यांशश्चौरस्यास्त्यत्र किं न वा॥
चित्रगुप्तस्ततोऽवादीदस्त्यसावतिथिप्रियः। प्रादाद्दारानपि स्वेष्टदेवताप्रीतयेऽर्थिने॥
ततोऽस्य दिवसं दिव्यमस्ति स्वर्गगतिः प्रभो। श्रुत्वैतद्धर्मराजस्तमपश्यत्सिंहविक्रमम्॥
रे शुभाशुभयोः पूर्वं भुङ्क्षे किं कथ्यतामिति। ततः प्रार्थितवान्पूर्वं स शुभं सिंहविक्रमः॥
तेनाज्ञया धर्मराजस्यागतं स विमानकम्। आरुह्य त्रिदिवं प्रायाच्चित्रगुप्तवचः स्मरन्॥
तत्र व्योमसरित्स्नानजपव्रतपरायणः। द्वितीयं दिवसं प्राप स स्वर्गे भोगनिस्पृहः॥
एवं क्रमेण चासाद्य स्वर्गं तीव्रतपोबलात्। आराध्य शंकरं प्राप ज्ञानं निर्दग्धकिल्बिषः॥
ततोऽस्य नारका दूता न शेकुर्मुखमीक्षितुम्। चित्रगुप्तो ममार्जाघं भूर्जे तूष्णीमभूद्यमः॥
इत्थं चौरोऽपि सत्प्रज्ञाबलात्सिद्धिमवाप सः। सिंहविक्रम इत्येषा प्रज्ञापारमितोदिता॥
एवं चारुह्य नौतुल्यां तरन्त्येव भवाम्बुधिम्। वत्स बुद्धोक्तदानादिषट्पारमितां बुधाः॥
इति तस्मिन्वने सोमशूरं तस्यानुशासतः। बोधिसत्त्वपदस्थस्य विनीतमतिभूपतेः॥
भास्करस्ता निशम्यैव प्रशाम्यन्धर्मदेशनाः। संध्यारागात्तकाषायो विवेशास्ताद्रिकंदरम्॥
ततः संध्यामुपस्थाय यथावत्तत्र तां निशाम्। स विनीतमती राजा सोमशूरश्च निन्यतुः॥
अन्येद्युश्च क्रमात्तस्मै सोमशूराय शासनम्। स विनीतमतिर्बौद्धं सरहस्यमुपादिशत्॥
ततः स सोमशूरस्तमुपासीनो गुरुं वने। तस्थौ समाधिनिष्ठोऽत्र वृक्षमूले कृतोटजः॥
क्रमाच्च तौ समं तत्र गुरुशिष्यावुभावपि। लब्धयोगमहासिद्धी परां बोधिमवापतुः॥
अत्रान्तरे स कनककलशो मत्सरान्नृपः। तेनेन्दुकलशेनैत्य तत्खड्गाश्वप्रभावतः॥
भ्रात्रा निर्वासितस्तस्मादप्यहिच्छत्रराज्यतः। यद्विनीतमतिस्तस्मै तदुत्खाताय दत्तवान्॥
स राज्यविच्युतो भ्राम्यन्द्वित्रस्वसचिवान्वितः। तद्विनीतमतेः प्राप दैवादाश्रमकाननम्॥
तत्र यावत्स दुर्वारक्षुत्तृष्णार्तोऽभिवाञ्छति। फलमूलाम्बु तावत्तन्माययेन्द्रेण काननम्॥
दग्ध्वा मरूकृतं प्राग्वत्तं वञ्चयितुमिच्छता। विनीतमतिमेतादृगध्वगातिथ्यलोभतः॥
सोऽप्यकस्मान्मरूभूतमात्माश्रममवेक्ष्य तम्। विनीतमतिरुद्भ्रान्तो बभ्रामेतस्ततः क्षणम्॥
ददर्श तं च कनककलशं भ्रान्तमागतम्। क्षुधा कण्ठगतप्राणमतिथिं सानुगं ततः॥
उपेत्य तादृशं तं च वृत्तान्तं परिपृच्छ्य च। आतिथेयः कृतप्रश्नो बोधिसत्त्वो जगाद सः॥
अरण्येऽस्मिन्निरातिथ्ये मरुभूमित्वमागते। जीवितोपायमप्येतं क्षुधितानां वदामि वः॥
इतोऽर्धक्रोशमात्रेऽत्र पतित्वा खातके मृतः। मृगस्तिष्ठति तन्मांसैः प्राणान्रक्षत गच्छत॥
तथेत्यार्तेऽतिथौ तत्र सानुगे गन्तुमुद्यते। स विनीतमतिर्बोधिसत्त्वः पूर्वं ततो ययौ॥
प्राप्य तत्खातकं कृत्वा मृगरूपं च योगतः। निक्षिप्य तत्र चात्मानं सोऽर्थिहेतोर्जहावसून्॥
ततः शनैस्ते कनककलशाद्याः समाययुः। खातं तद्ददृशुश्चात्र तं विपन्नस्थितं मृगम्॥
उद्धृत्य तमथोत्पाद्य ज्वलनं तृणकण्टकैः। भृष्ट्वा च तस्य मांसानि ते निःशेषाण्यभक्षयन्॥
तावच्च तस्य भार्ये द्वे बोधिसत्त्वस्य विह्वले। पश्यन्त्यावाश्रमध्वंसमपश्यन्त्यौ च तं पतिम्॥
गत्वा नागसुताराजसुते तस्मै तदूचतुः। सोमशूराय निबिडाचलिताय समाधितः॥
सोऽपि तत्प्रणिधानेन विज्ञाय गुरुचेष्टितम्। शशंस गुरुपत्नीभ्यां ताभ्यां दुःखप्रदाप्यपि॥
ताभ्यामेव समं चाशु तत्खातनिकटं ययौ। यत्रातिथिभ्यस्तेनात्मा दत्तोऽस्य गुरुणा तथा॥
तत्र ते नागतनयाराजपुत्र्यौ मृगाकृतिम्। शृङ्गास्थिमात्रशेषं तं पतिं दृष्ट्वान्वशोचताम्॥
तच्छृङ्गास्थीनि चादाय स्वाश्रमाद्दारुसंचयम्। आनीयाग्निप्रवेशं ते कुरुतः स्म पतिव्रते॥
ततस्तत्र स्थितः सोऽपि ज्ञातवृत्तान्तदुःखितः। अग्निप्रवेशं कनककलशः सानुगो व्यधात्॥

सोमशूरो गुरुदुःखासहोऽत्र सः । दर्भसंस्तरमध्यास्त प्राणोत्क्रान्तिविधित्सया ॥ ३९०
च तमागत्य साक्षादिन्द्रोऽभ्यभाषत । मैवं कृथा मया ह्येष गुरुस्तव परीक्षितः ॥ ३९१
स्मावशेषोऽपि जीवन्नुत्थापितो ह्यसौ । सिक्त्वैवामृतवर्षेण सभार्यः सातिथिर्मया ॥ ३९२
ाचनं श्रुत्वा तं प्रणम्योत्थितो मुदा । गत्वा स वीक्षते सोमशूरो यावत्स तद्गुरुः ॥ ३९३
त्वः पुनर्जीवन्विनीतमतिरुत्थितः । भार्याभ्यां तैश्च कनककलशप्रमुखैः सह ॥ ३९४
तं सपत्नीकं परलोकागतं गुरुम् । मूर्ध्नावन्दत वाक्पुष्पैरार्चयच्चक्षुषा पपौ ॥ ३९५
ःषु कनककलशादिषु तेषु च । ब्रह्मविष्णुमुखा देवाः सर्वे तत्राययुस्ततः ॥ ३९६
ष्टाश्च ते तस्मै विनीतमतये वरान् । दिव्यानुभावान्पाराथ्र्यवृतान्दत्त्वा तिरोदधुः ॥ ३९७
तैरुक्तवृत्तान्तैर्विनीतमतिरन्वितः । सोमशूरादिभिः प्रायाद्दिव्यमन्यत्तपोवनम् ॥ ३९८
ठन्तीह पुनर्भस्मीभावं गता अपि । किं पुनस्तात जीवन्तः स्वच्छन्दगतयो नराः ॥ ३९९
हमुत्सृज्य वत्स वीरो ह्यसि व्रज । भावी मृगाङ्कदत्तेन तवावश्यं समागमः ॥ ४००
ाद्धतापस्या मुखाच्छ्रुत्वा कथामहम् । जातास्थः खड्गहस्तस्तां नत्वा प्रस्थितवांस्ततः ॥ ४०१
प्तोऽटवीमेतामेभिर्लब्धोऽस्मि दैवतः । उपहारं विचिन्वद्भिः शबरैश्चण्डिकाकृते ॥ ४०२
चैतैरानीतः प्रयुद्धेऽहं व्रणार्दितः । शबराधिपतेरस्य पार्श्वे मायावटोरिह ॥ ४०३
धो मया द्वित्रमन्त्रियुक्तो भवान्प्रभो । त्वत्प्रसादाच्च जाता मे निर्वृतिः स्वगृहे यथा ॥ ४०४

इति तेन गुणाकरेण सख्या निजवृत्तान्तमुदीरितं निशम्य ।
शबरेशगृहस्थितः स भेजे परितोषं परमं मृगाङ्कदत्तः ॥ ४०५
समवेक्ष्य च तस्य संगरे तां व्रणितस्योचितपथ्यदेहचर्याम् ।
अहनि वलति सोऽपरैर्वयस्यैः समुत्थाय निजाह्निकं चकार ॥ ४०६
आसीच्च तत्राथ गुणाकरं तमुल्लाघयन्संप्रति तान्यहानि ।
शेषान्सखीन्प्राप्तुमसौ शशाङ्कवत्याप्तये चोज्जयिनीं यियासुः ॥ ४०७

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके पञ्चमस्तरङ्गः ।

---

षष्ठस्तरङ्गः ।

ाव्रणे स्वस्थे जाते तस्मिन्गुणाकरे । शुभेऽहनि तमापृच्छ्य सुहृदं शबराधिपम् ॥ १
वगायातं कार्याय कृतसंविदम् । सख्या दुर्गपिशाचेन मातङ्गपतिना युतम् ॥ २
ः सानुचरं स शशाङ्कवतीकृते । मृगाङ्कदत्तस्तत्पल्ल्याः प्रायादुज्जयिनीं प्रति ॥ ३
स श्रुतधिना तदा विमलबुद्धिना । गुणाकरेण च समं सहभीमपराक्रमः ॥ ४
न्यान्सखींस्तस्यां विन्ध्याटव्यामथैकदा । सामात्यः पथि सुष्वाप रात्रौ क्वापि तरोस्तले ॥ ५
व प्रबुद्धः सन्यावदुत्थाय वीक्षते । तावत्तत्र ददर्शैकं सुप्तस्थं मानुषं परम् ॥ ६
ं मुखं यावत्तस्य तावत्स्वमन्त्रिणम् । प्रत्यभिज्ञातवान्प्राप्तं विचित्रकथसंज्ञकम् ॥ ७
ग्बुद्धो दृष्ट्वैव तं विचित्रकथः प्रभुम् । मृगाङ्कदत्तं सानन्दं साश्रुर्जग्राह पादयोः ॥ ८
लेङ्गितोऽकाण्डदर्शनोत्फुल्लचक्षुषा । तन्मन्त्रिभिश्च तैः सर्वैः प्रबुद्धैरभ्यनन्द्यत ॥ ९
ग्स्ववृत्तान्तैः पृष्टस्तैरखिलैः क्रमात् । स विचित्रकथो वक्तुं स्ववृत्तान्तं प्रचक्रमे ॥ १०
ावताख्यस्य शापाद्युष्मास्वितस्ततः । विभ्रष्टेष्वहमेकाकी मोहात्तत्राभ्रमं चिरम् ॥ ११
ोऽपरेद्युश्च नष्टसंज्ञोऽहमाप्तवान् । अकस्मादटवीप्रान्ते क्लान्तो दिव्यं महत्पुरम् ॥ १२
यः पुमानेको दिव्यनारीद्वयान्वितः । मामाश्वासितवान्दृष्ट्वा स्नपितं शीतलैर्जलैः ॥ १३
ान्तः प्रादान्मे यत्नाद्दिव्यं स भोजनम् । ततोऽभुङ्क्त स्वयं नार्यावभुञ्जातां ततोऽपि ते ॥ १४
ः च तमहं विश्रान्तोऽत्र व्यजिज्ञपम् । को भवान्किं च मामेवं मुमूर्षुं त्रातवानसि ॥ १५

मया ह्यवश्यं त्यक्तव्यं शरीरं स्वप्रभुं विना । इत्युक्त्वा वर्णितस्तस्मै स्ववृत्तान्तोऽखिलो मया ॥
ततश्च स महात्मा मां प्रीतिमानेवमब्रवीत् । यक्षोऽहमेते मद्भार्ये त्वं च प्राप्तोऽद्य मेऽतिथिः ॥
यथाशक्त्यतिथेः पूजा धर्मो हि गृहमेधिनाम् । मयार्चितोऽस्यतः किं च प्राणान्कस्मान्मुमुक्षसि ॥
वियोगो नागशापेन कंचित्कालमयं हि वः । अवश्यं क्षीणशापानां युष्माकं स्यात्समागमः ॥
निर्दुःखो नामकश्चात्र संसारे भद्र जायते । यक्षेणापि मया दुःखं यद्दृष्टं वच्मि तच्छृणु ॥
अस्त्यस्या वसुधावध्वा मौलिमण्डनमालिका । त्रिगर्ता नाम नगरी सुमनोगुणगुम्फिता ॥
तस्यां द्विजयुवा कोऽपि पवित्रधर इत्यभूत् । धनैर्दरिद्रः स्वजनैरदरिद्रः कुलादिभिः ॥
स वसञ्श्रीमतां मध्ये द्विजो मानी व्यचिन्तयत् । एषामर्थवतां मध्ये वृत्तस्थोऽपि न भाम्यहम् ॥
एकः सत्काव्यशब्दानामिव शब्दो निरर्थकः । मनस्वी च न शक्नोमि सेवां नापि प्रतिग्रहम् ॥
तद्गत्वा क्वचिदेकान्ते यक्षिणीं साधयाम्यहम् । अस्ति मन्त्रोपदेशो हि तत्र मे गुरुवक्त्रतः ॥
इति संकल्प्य विधिवद्गत्वारण्याय यक्षिणीम् । भार्यात्वे साधयामास स पवित्रधरो द्विजः ॥
सिद्धया च तया युक्तः सौदामिन्यभिधानया । तस्थौ घोरहिमोत्तीर्णो विटपीव मधुश्रिया ॥
एकदा तं सुतोत्पत्तिं विना दुःखितचेतसम् । दृष्ट्वा सा यक्षिणी भार्या पवित्रधरमब्रवीत् ॥
मार्यपुत्र कृथाश्चिन्तां सूनुरुत्पद्यते हि नौ । इमं च शृणु वृत्तान्तमत्राहं कथयामि ते ॥
अस्ति दक्षिणदिक्प्रान्ते प्रावृषो जन्मभूरिव । पिहितार्का घनश्यामा तमालवनवीथिका ॥
तस्यां पृथूदरो नाम यक्षो वसति विश्रुतः । तस्याहमियमेकैव नाम्ना सौदामिनी सुता ॥
सा स्नेहात्तेन पित्राहं नीयमाना कुलाद्रिषु । तेषु तेषु सदाक्रीडं दिव्योपवनभूमिषु ॥
एकदा च समं सख्या क्रीडन्ती कपिशभ्रुवा । अद्राक्षमट्टहासाख्यं कैलासे यक्षपुत्रकम् ॥
सोऽपि मां सखिमध्यस्थो दृष्टवानथ तत्क्षणम् । जातावावां किलान्योन्यरूपाकृष्टविलोचनौ ॥
तद्दृष्ट्वा तुल्यसंयोगमवेत्याहूय चात्र तम् । सद्योऽट्टहासं तातेन विवाहो नौ विनिश्चितः ॥
स्थापिते लग्नदिवसे तातो मामनयद्गृहम् । अट्टहासोऽपि मुदितः समित्रः स्वगृहानगात् ॥
अन्येद्युश्च विषण्णेव कपिशभ्रूः सखी मम । आगात्समीपं पृष्टा च कृच्छ्रादेवमभाषत ॥
अनाख्येयमपीदं ते कथयाम्यप्रियं सखि । अद्यायान्त्या मया दृष्टः सोऽट्टहासो वरस्तव ॥
चित्रस्थलाख्ये हिमवत्सानूद्याने त्वदुत्सुकः । विनोदयद्भिः सखिभिः क्रीडया यक्षराट् कृतः ॥
भ्राता दीप्तशिखस्तस्य तत्पुत्रो नडकूबरः । कल्पितस्तैः स्वयं ते च तस्य साचिव्यमाश्रयन् ॥
एवं कृतविनोदं तं वयस्यैस्त्वत्प्रियं तदा । व्योम्ना यदृच्छया गच्छन्नपश्यन्नडकूबरः ॥
स तमाहूय संक्रुद्धो धनाधिपसुतोऽशपत् । भृत्यो भूत्वा प्रभोर्लीलामभिवाञ्छसि यत्ततः ॥
दुर्मते भव मर्त्यस्त्वमूर्ध्वमिच्छन्नधो व्रज । इत्युक्तस्तेन विग्रस्तं सोऽट्टहासो व्यजिज्ञपत् ॥
औत्सुक्यं नुदता देव मूर्खेणेदं मया कृतम् । नाधिकाराभिमानेन तत्क्षमां कुरु मे प्रभो ॥
इत्यार्तं तद्वचः श्रुत्वा प्रणिधानात्तथैव तत् । बुद्ध्वा शापान्तहेतोस्तं सोऽब्रवीन्नडकूबरः ॥
यस्यां त्वमुत्सुकस्तस्यां यक्षिण्यां मानुषो भवन् । जनयित्वानुजं दीप्तशिखमेवैतमात्मजम् ॥
शापाद्विमुक्तः स्वपदं तया पत्न्या सहाप्स्यसि । भ्राता तु ते सुतो भूत्वा कृत्वा राज्यमसौ भुवि ॥
शापान्मोक्ष्यत इत्युक्ते तेन वित्तेशसूनुना । सोऽट्टहासस्तिरोभूतः क्वापि शापप्रभावतः ॥
तद्दृष्ट्वाहमिहायाता पार्श्वे ते सखि दुःखिता । इत्युक्ताहं तया सख्या दुःखात्कामप्यगां दशाम् ॥
आत्मानमनुशोच्याथ गत्वा पित्रोर्निवेद्य तत् । अनैषं तमहं कालं पुनः संगमवाञ्छया ॥
सोऽट्टहासस्त्वमुत्पन्नः सा चाहं मिलितावुभौ । अद्येहावां तदेवं नौ जनितैवाचिरात्सुतः ॥
एवं तयोक्ते ज्ञानिन्या सौदामिन्या प्रहर्षवान् । अभूदुत्पन्नपुत्रास्थः स पवित्रधरो द्विजः ॥
कालेन तस्य यक्षिण्यां तस्यां सूनुरजायत । गृहं चित्तं च जातेन तयोर्येन प्रकाशितम् ॥
दृष्ट्वा च तस्य पुत्रस्य स पवित्रधरो मुखम् । संपेदे सोऽट्टहासोऽत्र यक्षो दिव्याकृतिः क्षणात् ॥

ाच यक्षिणीं चैतां प्रिये शापो गतः स नौ । जातः सैषोऽट्टहासोऽहमेहि यावो निजां गतिम् ॥ ५५
ुक्तवन्तं तं भार्या सावादीच्छिशुरेष ते । भ्राता शापात्सुतीभूतः कथं स्यादिति चिन्त्यताम् ॥ ५६
कृत्वा ध्यानतोऽवेक्ष्य सोऽट्टहासो जगाद ताम् । देवदर्शन इत्यस्ति ब्राह्मणोऽस्यां पुरि प्रिये ॥ ५७
ाग्नेस्तस्य चान्यौ द्वावधिकं ज्वलतः क्षुधा । जठराग्नी सभार्यस्य दरिद्रस्य प्रजाधनैः ॥ ५८
पुत्रार्थिनं तं च तपसि स्थितमेकदा । आराधयन्तं भगवानग्निः स्वप्ने समादिशत् ॥ ५९
ःसो नास्ति पुत्रस्ते कृत्रिमस्तु भविष्यति । तद्वशादेव च ब्रह्मन्दारिद्र्यं ते निवर्त्स्यति ॥ ६०
ग्यादेशतो विप्रस्तत्प्रतीक्षोऽद्य संस्थितः । तस्मै शिशुरयं देयो भवितव्यमिदं हि तत् ॥ ६१
ःक्त्वा तां प्रियां स्वर्णपूर्णकुम्भोपरि स्थितम् । कृत्वा च तं गलाबद्धदिव्यरत्नस्रजं शिशुम् ॥ ६२
वा तस्य गृहे रात्रौ प्रसुप्तस्य द्विजन्मनः । सभार्यस्य सभार्यः स्वां सोऽट्टहासो ययौ गतिम् ॥ ६३
ःपि प्रबुध्य विप्रोऽत्र विस्फुरद्रत्नतारकम् । अपश्यद्बालचन्द्रं तं सभार्यो देवदर्शनः ॥ ६४
ातदिति विस्मित्य हेमकुम्भं विलोक्य तम् । स स्वप्नादेशमाग्नेयं सस्मार च ननन्द च ॥ ६५
ाह बालकं तं च पुत्रं विधिसमर्पितम् । धनं च तत्प्रभाते च विदधे स महोत्सवम् ॥ ६६
ादशे च दिवसे तस्य पुत्रस्य तत्र सः । बालस्य स्वोचितं नाम श्रीदर्शन इति व्यधात् ॥ ६७
। महाधनो भूत्वा तस्थौ क्रत्वादिकाः क्रियाः । कुर्वन्भोगांश्च भुञ्जानः स विप्रो देवदर्शनः ॥ ६८
ःपि श्रीदर्शनस्तत्र वृद्धिं प्राप्तः पितुर्गृहे । प्रकर्षं वेदविद्यासु प्रापास्त्रेषु च वीर्यवान् ॥ ६९
ठेन यौवनस्थस्य स पिता देवदर्शनः । तीर्थयात्रागतस्तस्य प्रयागे प्रशमं ययौ ॥ ७०
द्धा तस्य मातापि प्रविष्टाग्निं ततश्च सः । व्यधाच्छ्रीदर्शनः शोचंस्तयोः शास्त्रोदिताः क्रियाः ॥ ७१
श्च स तनूभूतशोकोऽकृतपरिग्रहः । द्यूतक्रीडाप्रसक्तोऽभूद्दैवात्प्राज्ञोऽप्यबान्धवः ॥ ७२
रेण च कालेन तस्य क्षीणार्थसंपदः । तेन दुर्व्यसनेनासीद्भोजनेऽपि कदर्थना ॥ ७३
दा द्यूतशालायां निराहारस्थितं त्र्यहम् । अशक्नुवन्तं निर्गन्तुं लज्जयानुचिताम्बरम् ॥ ७४
ैर्दत्तमभुञ्जानं दुःखितं कितवः सखा । कश्चिन्मुखरको नाम तं श्रीदर्शनमभ्यधात् ॥ ७५
मुह्यसीदृगेवेदं द्यूतव्यसनपातकम् । अश्रीकटाक्षपाताः किमक्षा न विदितास्तव ॥ ७६
ः प्रावरणं शय्या पांसवश्चत्वरं गृहम् । भार्या विध्वस्तता धात्रा कितवस्य हि निर्मितम् ॥ ७७
तन्न भुङ्क्षे विद्वानप्यात्मानं किमुपेक्षसे । जीवन्हि धीरोऽभिमतं किं नाम न यदाप्नुयात् ॥ ७८
ः च चित्रामत्रैतां भूनन्दनकथां शृणु । अस्तीहाभरणं भूमेः कश्मीरा इति मण्डलम् ॥ ७९
रभोगं विधायैकं त्रिदिवं सुकृतां कृते । भोग्यभोगं विधाता यद्द्वितीयमिव निर्ममे ॥ ८०
मत्राधिका नाहमित्यन्योन्यमिवेर्ष्यया । प्रविष्टाभ्यां श्रितं द्वाभ्यां सरस्वत्या श्रिया च यत् ॥ ८१
द्रुहः प्रवेशोऽत्र कलेर्मा भूदितीव यत् । स्वदेहपरिवेषेण रक्ष्यते तुहिनाद्रिणा ॥ ८२
ीर्थमयाद्दूरमितो याहीति कल्मषम् । वीचिहस्तैर्नुदन्त्येव भूषितं यद्वितस्तया ॥ ८३
मन्सितसुधाधौतास्तुङ्गाः प्रासादपङ्क्तयः । कुर्वन्त्यासन्नहिमवत्पादशैलावलीभ्रमम् ॥ ८४
मन्वर्णाश्रमगुरुः प्रजानन्दनचन्द्रमाः । अभूद्विद्यागमबुधो नाम्ना भूनन्दनो नृपः ॥ ८५
राजिनियुक्तेषु विरेजे यस्य विक्रमः । कामिनीकुचयुग्मेषु मण्डलेषु च विद्विषाम् ॥ ८६
। नीतिमतोऽप्यासन्प्रजाः शश्वदनीतयः । कृष्णैकासक्तचित्तस्याप्यकृष्णतरमानसाः ॥ ८७
दातु राजा द्वादश्यां विधिवत्पूजिताच्युतः । स्वप्ने कामप्युपायातामपश्यद्दैत्यकन्यकाम् ॥ ८८
' संप्राप्य संयोगं प्रबुद्धो न ददर्श ताम् । व्यक्तं ददर्श संभोगचिह्नमङ्गे तु विस्मितः ॥ ८९
' स्वप्नः स्फुटो ह्येष संभोगस्तर्कयाम्यहम् । विप्रलब्धस्तया नूनं नार्या किमपि दिव्यया ॥ ९०
त्य च तच्चित्तस्तथाभूद्विरहातुरः । यथा स राजकार्याणि जहौ सर्वाण्यपि क्रमात् ॥ ९१
श्यन्प्राप्त्युपायं च तस्याः सोऽचिन्तयन्नृपः । हरेः प्रसादात्सोऽभून्मे तथा तत्संगमक्षणः ॥ ९२
ाधयामि तत्प्राप्त्यै गत्वैकान्ते तमेव तत् । राज्यपाशं विमुच्येमं हा तद्विरहनीरसम् ॥ ९३

इति संकल्प्य संबोध्य सचिवाननुजाय सः । सुनन्दनाभिधानाय राज्यं भूनन्दनो ददौ ॥
त्यक्तराज्यश्च स ययौ पादन्यासोद्भवं हरेः । तीर्थं क्रमसरो नाम त्रिविक्रमकृतं पुरा ॥
यदध्यासितमभ्यर्णपर्वताग्रनिवेशिभिः । शृङ्गाकारैस्त्रिभिर्देवैर्ब्रह्मविष्णुमहेश्वरैः ॥
येन विष्णुपदेनान्या कश्मीरेषु सुरापगा । सृष्टा विषुवती नाम वितस्ता मत्सरादिव ॥
तत्रासीत्स तपः कुर्वन्राजान्यरसनिःस्पृहः । क्षाम्यन्नन्यरसाकाङ्क्षी निदाघ इव चातकः ॥
व्यतीतद्वादशाब्दे च तस्मिंस्तत्र तपःस्थिते । आगात्तेन पथा कोऽपि तपस्वी ज्ञानिनां वरः ॥
पिङ्गलाग्रजटश्चीरवासाः शिष्यगणान्वितः । तत्तीर्थशैलशिखरादवतीर्ण इवेश्वरः ॥
स तं दृष्ट्वैव राजानं जातप्रीतिरुपेत्य च । प्रह्वः पृष्ट्वा च वृत्तान्तं ध्यात्वा क्षणमिवाब्रवीत् ॥
राजन्सा दैत्यकन्या ते प्रिया पातालवासिनी । तदाश्वसिहि तस्यास्त्वामन्तिकं प्रापयाम्यहम् ॥
अहं हि दाक्षिणात्यस्य यज्ञसंज्ञस्य यज्वनः । पुत्रो भूतिवसुर्नाम ब्राह्मणो योगिनां गुरुः ॥
सोऽहं संक्रमितज्ञानः पित्रा पातालशास्त्रतः । शिक्षित्वा हाटकेशानमन्त्रतन्त्रविधिक्रमम् ॥
गत्वा श्रीपर्वतेऽकार्षं त्र्यम्बकाराधनं तपः । तेन तुष्टोऽथ मां तत्र साक्षादित्यादिशच्छिवः ॥
गच्छ दैत्याङ्गनायुक्तो भुक्त्वा भोगान्रसातले । मामुपैष्यस्युपायं च तत्प्राप्तौ शृणु वच्मि ते ॥
सन्ति भूयांसि पातालविवराण्यत्र भूतले । प्रकाशं त्वस्ति कश्मीरेष्वेकं मयकृतं महत् ॥
येन प्रवेश्य गुप्तासु दानवोद्यानभूमिषु । उषा बाणसुता कान्तमनिरुद्धं व्यनोदयत् ॥
प्रद्युम्नश्च तदा पुत्रं रक्षितुं तं व्यधत्त यत् । प्रकटं गिरिशृङ्गेण प्रकल्प्य द्वारमेकतः ॥
तद्द्वाररक्षाहेतोश्च यत्र दुर्गां न्यवेशयत् । आराध्य स स्तुतिशतैः शारिकानामधारिणीम् ॥
येन प्रद्युम्नशिखरं शारिकाकूटमित्यपि । नामद्वयेन तत्तत्र स्थानमद्याभिधीयते ॥
गच्छ तेन बिलाग्रेण प्रविश्यानुचरैः सह । पातालं मत्प्रसादाच्च सिद्धिस्तेऽत्र भविष्यति ॥
इत्युक्त्वान्तर्हिते देवे तत्प्रसादप्रभावतः । उत्पन्नाखिलविज्ञानः कश्मीरानागतोऽस्म्यमून् ॥
तदस्माभिः समं राजञ्शारिकाकूटमेहि तत् । यावदिष्टाङ्गनापार्श्वं पातालं त्वां नयाम्यहम् ॥
एवमुक्तवता तेन तथेति स तपस्विना । समं तच्छारिकाकूटं ययौ भूनन्दनो नृपः ॥
तत्र स्नात्वा वितस्तायामर्चयित्वा विनायकम् । संपूज्य शारिकां देवीं दिग्बन्धादिपुरःसरम् ॥
विधिवत्सर्षपक्षेपाद्वरानुग्रहशालिना । महातपस्विना तेन विवरे प्रकटीकृते ॥
प्रविश्य तेनैव समं सशिष्येण स भूपतिः । जगाम पातालपथं पञ्चाहानि दिवानिशम् ॥
षष्ठेऽह्नि सर्वेऽप्युत्तीर्य गङ्गां पातालवाहिनीम् । भूमौ रजतमय्यां ते दिव्यमैक्षन्त काननम् ॥
स्थलप्रफुल्लसौवर्णकमलामोदवासितम् । उद्यत्प्रवालकर्पूरचन्दनागुरुपादपम् ॥
तन्मध्ये सुमहाभोगं रत्नसोपानसुन्दरम् । सौवर्णभित्ति माणिक्यस्तम्भसंभारभासुरम् ॥
चन्द्रकान्तशिलाबद्धविशालामलसारकम् । प्रहृष्टा ददृशुः प्रांशु शैवमायतनं च ते ॥
ततश्च स तपस्वी तान्स्वशिष्यांस्तं च भूपतिम् । भूनन्दनं ज्ञानिवरो जाताश्चर्यानभाषत ॥
अयं स देवः पातालनिलयो हाटकेश्वरः । गीयते त्रिषु लोकेषु तदसौ पूज्यतामिति ॥
ततः सर्वेऽपि ते तैस्तैः पुष्पैः पातालसंभवैः । तद्गङ्गाम्भःप्लुताः शंभुं पूजयामासुरत्र तम् ॥
तत्पूजाक्षणविश्रान्ता गत्वा प्रापुस्ततश्च ते । पतत्पक्वफलं दिव्यमेकं जम्बूमहाद्रुमम् ॥
तं प्रेक्ष्य स तपस्वी तानवोचन्न फलानि वः । भक्ष्याण्येतस्य विघ्नं हि भुक्तान्येतानि कुर्वते ॥
तच्छ्रुत्वापि चखादैकस्तच्छिष्यस्तत्फलं क्षुधा । खादित्वैव च संपेदे निश्चेष्टः स्थावराकृतिः ॥
ततस्तद्दर्शनत्रासपरित्यक्तफलस्पृहैः । स तपस्वी सहान्यैस्तैः शिष्यैर्भूनन्दनान्वितः ॥
क्रोशमात्रमतिक्रम्य हेमप्राकारमुच्छ्रितम् । सद्रत्नरचितद्वारमत्रावस्थितमैक्षत ॥
तद्द्वारपार्श्वयोर्लोहमयाङ्गावुभयोरुभौ । प्रवेशरोधिनौ मेषौ दृष्ट्वा शृङ्गप्रहारिणौ ॥
हत्वा सपदि दण्डेन न्यस्तमन्त्रेण मूर्धनि । विद्रावयामास स तौ क्वापि वज्रहताविव ॥

ारेण तच्छिष्याश्च नृपश्च सः । प्रविश्य ददृशुर्दिव्यान्हेमरत्नमयान्गृहान् ॥ १३३
तेषां ते दन्तदष्टाधरोत्कटान् । गृहीतलोहमुसलानपश्यन्द्वाररक्षिणः ॥ १३४
सर्वे तत्रैकस्य तरोस्तले । स तपस्वी तु दुष्टघ्नीमबध्नाद्योगधारणाम् ॥ १३५
ण रौद्रास्ते द्वाररक्षकाः । सर्वेऽपि सर्वद्वारेभ्यः पलाय्यादर्शनं ययुः ॥ १३६
द्वारेभ्यो दिव्याभरणवाससः । दैत्यकन्यापरीवारवारनार्यो विनिर्ययुः ॥ १३७
भ्येत्य तान्सर्वाना तपस्विनः । प्रवेशायार्थयामासुर्यथास्वं स्वामिनीगिरा ॥ १३८
माभिर्नोल्लङ्घ्यं स्वप्रियावचः । इति तानपरानुक्त्वा स तपस्वी कृती ततः ॥ १३९
ताभिः प्रविश्य वरमन्दिरम् । एकां प्रापोत्तमां दैत्यकन्यां भोगांश्च वाञ्छितान् ॥ १४०
ोऽन्याभिस्ताभिस्ते दिव्यवेश्मसु । प्रवेशिता ययुर्दैत्यसुतासंभोगपात्रताम् ॥ १४१
: सोऽपि नीतोऽभूदेकया तदा । प्रश्रयानतया तत्र बहिर्मणिमयं गृहम् ॥ १४२
ां प्रतिबिम्बैः समन्ततः । सजीवचित्रविन्यासमिव यद्रत्नभित्तिषु ॥ १४३
नीलमयभूभागनिर्मितम् । दिवः पृष्ठमिवारूढं विमानविजिगीषया ॥ १४४
ं हृद्यप्रद्युम्नविभ्रमम् । यदच्युतप्रभावाढ्यं वृष्णीनामिव केतनम् ॥ १४५
ल्पमपि यत्र न योषिताम् । वपुषः सुकुमारत्वे प्राप्नुयादुपमानताम् ॥ १४६
ऽपश्यद्दिव्यसंगीतनादिनि । राजा प्राक्स्वप्नदृष्टां तां कान्तामसुरकन्यकाम् ॥ १४७
ते कान्त्या पातालेऽर्कादिवर्जिते । रत्नाद्यालोकनिर्माणं पुनरुक्तं प्रजापतेः ॥ १४८
ेर्वाच्यरूपां हर्षाश्रुणा नृपः । अन्यावलोकनमलं चक्षुषोर्धौतवानिव ॥ १४९
राजेन्द्रं ख्याप्यमानालिगीतिभिः । बाला कुमुदिनी नाम कमपि प्रमदं दधौ ॥ १५०
ादाय क्लेशितोऽसि मयेति च । ब्रुवती सादरा सा तमुपावेशयदासने ॥ १५१
श्रान्तं स्नातं वस्त्राद्यलंकृतम् । सा निनाय तमुद्यानमापानायासुराङ्गना ॥ १५२
म्बशवरक्तवसासवैः । पूर्णायाः सा तटे वाप्यास्तेन साकमुपाविशत् ॥ १५३
च पात्रं तस्मै नृपाय सा । ददौ पानाय स च तन्न जग्राह जुगुप्सितम् ॥ १५४
ेतदस्मत्पानं निषेधतः । इति निर्बन्धतस्तां च ब्रुवाणां सोऽब्रवीन्नृपः ॥ १५५
नैव पास्याम्येतद्यदस्त्विति । ततः सा तस्य तन्मूर्ध्नि पात्रं क्षिप्त्वान्यतो ययौ ॥ १५६
त्रास्यो राजान्यस्यां जलान्तरे । तच्चेटिकाभिरादाय दीर्घिकायां निचिक्षिपे ॥ १५७
त्काल तस्मिन्पूर्वतपोवने । तीर्थे क्रमसरस्येव प्राप्तमात्मानमैक्षत ॥ १५८
ं तत्र हसन्तमिव तं नगम् । विषण्णविस्मितोद्भ्रान्तो वञ्चितः स व्यचिन्तयत् ॥ १५९
ानं क्वायं क्रमसरो गिरिः । अहो किमिदमाश्चर्यं किं माया किं मतिभ्रमः ॥ १६०
तस्या यन्मयोल्लङ्घितं वचः । तपस्विवाक्यं श्रुत्वापि तस्येदं मे विजृम्भितम् ॥ १६१
ं पानं सा ममैव परीक्षिणी । मूर्ध्नि च्युतेन यत्तेन दिव्यमायाति सौरभम् ॥ १६२
्यानां कृतः क्लेशो महानपि । न फलाय विधिस्तेषु तथा वामो हि वर्तते ॥ १६३
ात्य भृङ्गैर्भूनन्दनोऽत्र सः । अवेष्ट्यतासुरसुतापानसिक्ताङ्गगन्धतः ॥ १६४
ा भूर्जातोऽनिष्टफलस्तु मे । परिक्लेशोऽल्पसत्त्वस्य वेतालोत्थापनं यथा ॥ १६५
ाश्च भृङ्गैः स विमृशंस्तदा । जातोद्वेगो मतिं चक्रे देहत्यागाय भूपतिः ॥ १६६
र्गेण कोऽपि दैवात्समागतः । मुनिपुत्रः क्षितिपतिं तथाभूतं ददर्श तम् ॥ १६७
वार्याशु भ्रमरान्करुणार्द्रधीः । ऋषिः पृष्ट्वा च वृत्तान्तं नृपमेतमभाषत ॥ १६८
देहस्तावद्दुःखक्षयः कुतः । तदनुद्वेगतः साध्यः पुरुषार्थः सदा बुधैः ॥ १६९
शानविरिञ्चिष्वेकतामतिः । भेदोपासनजास्तावदङ्कुरा एव सिद्धयः ॥ १७०
प्रायन्ब्रह्मविष्णुमहेश्वरान् । धैर्येण द्वादशान्यानि वर्षाणीह तपः कुरु ॥ १७१

ततः प्राप्स्यसि कान्तां तामन्ते सिद्धिं च शाश्वतीम् । देहस्तु तावत्सिद्धस्ते पश्यायं दिव्यसौरः
समन्त्रं च गृहाणेदं मम कृष्णमृगाजिनम् । कृतावगुण्ठनो येन भ्रमरैर्नहि बाध्यसे ॥
इत्युक्त्वाजिनमन्त्रौ स तस्मै दत्त्वा मुनिर्ययौ । तथेत्यात्तधृतिः सोऽपि तीर्थे तत्रावसन्नृपः ॥
द्वादशाब्दोषितं तं च तपसाराधितेश्वरम् । भूपं कुमुदिनी दैत्यकन्या सा स्वयमभ्यगात् ॥
तया साकं स पातालं गत्वा दयितया चिरम् । राजा भूनन्दनो भोगान्भुञ्जानः सिद्धिमाप्तवा
इत्यनुद्वेगशीला ये भव्या धैर्यावलम्बिनः । दूरभ्रष्टामपि निजां भूमिं संप्राप्नुवन्ति ते ॥
त्वं चेह भाविकल्याणः श्रीदर्शन सुलक्षणः । तदाहारं विनात्मानं किमुद्वेगादुपेक्षसे ॥
इत्युक्तो द्यूतशालान्तः सख्या मुखरकेण सः । तेन श्रीदर्शनो रात्रौ निराहारो जगाद तम् ॥
यथात्थ त्वं कुलीनः सन्कित्वस्यां पुरि लज्जया । निर्गन्तुं न बहिः शक्नोमीदृशो द्यूतदुर्गतः ॥
तदस्यामेव चेद्रात्रौ विदेशे गमनं क्वचित् । न निषेधसि मे मित्र तदाहारं करोम्यहम् ॥
तच्छ्रुत्वैव तथेत्युक्त्वा तस्मै मुखरकोऽथ सः । आनीय भोजनं प्रादात्सोऽपि तद्बुभुजे तदा ॥
भुक्त्वैव च स तेनैव सह श्रीदर्शनस्ततः । प्रायात्स्नेहानुयातेन सख्या देशान्तरं प्रति ॥
गच्छन्तं चात्र तं मार्गे यक्षौ दैवादपश्यताम् । यदृच्छयागतौ व्योम्ना जननीजनकौ निशि ॥
सौदामिन्यट्टहासौ तौ याभ्यां विप्रस्य वेश्मनि । स देवदर्शनस्यात्र जातमात्रो न्यधीयत ॥
तौ विज्ञाय तमापन्नं द्यूतव्यसननिर्धनम् । विदेशप्रस्थितं स्नेहाददृश्यावूचतुर्दिवः ॥
भोः श्रीदर्शन मात्रा ते देवदर्शनभार्यया । भूमावाभरणान्यन्तः स्थापितानि स्ववासके ॥
तानि गत्वा गृहीत्वा त्वं निश्चिन्तं मालवं व्रज । ऊर्जितश्रीर्हि तत्रास्ति श्रीसेन इति भूपतिः ।
स च द्यूतविपत्क्लिष्टः कुमारत्वे भृशं यतः । अतस्तेन कृतः स्फीतः कितवानां महामठः ॥
लभन्ते कितवास्तत्र वसन्तोऽभीष्टभोजनम् । तद्वत्स तत्र गच्छ त्वं भद्रं तव भविष्यति ॥
इति वाचं दिवः श्रुत्वा गत्वा श्रीदर्शनो गृहम् । भुवः खातात्समित्रस्तान्यादत्ताभरणानि सः
ततो हृष्टः समं तेन सख्या मुखरकेण सः । देवतानुग्रहं मत्वा प्रतस्थे मालवं प्रति ॥
गत्वा सुदूरमध्वानं तया रात्र्या दिनेन च । सायं स बहुसस्याख्यं ग्रामं तेन सहाप्तवान् ॥
श्रान्तश्च तस्य ग्रामस्य नातिदूरे सुहृत्सखः । उपाविशत्तडागस्य तीरे विमलपाथसः ॥
तत्र तस्मिन्क्षणं धौतपादे पीताम्भसि स्थिते । काप्यनन्यसमा रूपे कन्या तोयार्थमाययौ ॥
नीलोत्पलसवर्णाङ्गलेखा रतिरिवैकिका । हरदग्धस्य कामस्य धूमेन श्यामलीकृता ॥
सा तं श्रीदर्शनं दृष्ट्वा प्रेमनिर्भरया दृशा । उपेत्य दर्शनप्रीतं सवयस्यमभाषत ॥
कुत्रागतौ महाभागौ युवामिह विपत्तये । किमज्ञानाज्ज्वलत्यग्नौ पतितौ स्थः पतङ्गवत् ॥
एतच्छ्रुत्वा स संभ्रान्तः कन्यां मुखरकोऽत्र ताम् । पप्रच्छ का त्वं किं चैतत्त्वयोक्तं कथ्यतां
ततोऽब्रवीत्सा संक्षेपाद्वच्म्येतच्छृणुतं युवाम् । अस्त्यग्रहारः सुमहान्सुघोषो नाम विश्रुतः ॥
तत्राभूत्पद्मगर्भाख्यो ब्राह्मणो वेदवित्तमः । तस्योत्तमकुला भार्या नाम्ना शशिकलाभवत् ॥
तस्यां च तस्यापत्ये द्वे जाते आस्तां सुजन्मनः । सुतो मुखरको नाम पद्मिष्ठेति सुताप्यहम्
स मे मुखरको भ्राता द्यूतव्यसनविप्लुतः । बाल्येऽपि निर्गत्य गृहात्क्वापि देशान्तरं गतः ॥
तेन शोकेन पञ्चत्वं गतायां मम मातरि । मत्पितोभयदुःखार्तस्त्यक्तवान्स गृहस्थितिम् ॥
एकाकी च गृहीत्वा मां तं गवेषयितुं सुतम् । भ्राम्यन्निलस्ततः प्रापदिमं ग्रामं विधेर्वशात् ॥
इह चास्ति महान्ग्रामे चौरश्चौरचमूपतिः । वसुभूतिरिति ख्यातो ब्राह्मणो नाममात्रतः ॥
तेनेह प्राप्य पापेन सभृत्येन पितुर्मम । तस्य प्राणाः सुवर्णं च शरीरान्तर्गतं हृतम् ॥
अहं च तेन नीत्वैव गृहं बन्दीकृता सती । सुभूतिनाम्ने पुत्राय प्रदातुं परिकल्पिता ॥
स चास्य पुत्रो मुषितुं सार्थं क्वापि गतः स्थितः । नायात्यद्यापि मत्पुण्यैः प्रमाणं मेऽधुना वि
तदेष चौरो दृष्ट्वा वां कुर्यादत्याहितं ध्रुवम् । विमुच्येथे यथैतस्मादुपायं कुरुतं तथा ॥

ावतीं जातप्रत्यभिज्ञस्तदैव ताम् । कन्यां कण्ठे समालम्ब्य रुदन्मुखरकोऽब्रवीत् ।। २११
ाष्टे स एषोऽहं भ्राता मुखरकस्तव । बन्धुद्रोही भगिनिके मन्दभाग्यो हतोऽस्मि हा ।। २१२
। सापि पद्मिष्ठा विप्रा दृष्टेऽग्रजे तथा । कृपयेवाखिलैर्दुःखैः परिवव्रे जवाद्यथा ।। २१३
पितरावार्त्यौ शोचन्तौ भ्रातरावुभौ । श्रीदर्शनः समाश्वास्य कालोचितमभाषत ।। २१४
ावसरो नायं रक्ष्यो ह्यात्मैव सांप्रतम् । त्यक्त्वाप्यर्थं ततः कार्या चौरस्यास्य प्रतिक्रिया ।। २१५
ादर्शनेनोक्ते दुःखं संहृत्य धैर्यतः । कर्तव्यसंविदं चक्रुस्ते त्रयोऽपि परस्परम् ।। २१६
ीदर्शनो मान्द्यं विधायासीन्निपत्य सः । तीरे तस्य तडागस्य कृशः पूर्वैरभोजनैः ।। २१७
ास्य गृहीत्वा च तस्थौ मुखरको रुदन् । पद्मिष्ठा च ययौ तस्य पार्श्वं चौरपतेर्द्रुतम् ।। २१८
व तडागान्ते मन्दः कोऽप्यागतः स्थितः । पान्थस्तस्य द्वितीयश्च तत्रास्ते परिचारकः ।। २१९
व स चौरोऽत्र भृत्यांश्चौरान्विसृष्टवान् । ते गत्वा तौ तथारूपौ दृष्ट्वा मुखरकं तयोः ।। २२०
न्नस्य किं भद्र कृते रोदिषि यद्दृशम् । एतच्छ्रुत्वा कृतार्तिस्तांश्चौरान्मुखरकोऽब्रवीत् ।। २२१
ब्राह्मणोऽयं मे तीर्थयात्राप्रवासतः । रोगाक्रान्तः शनैर्भ्राम्यन्निह प्राप्तोऽद्य मत्सखः ।। २२२
व च निश्चेष्टीभूतो मामयमुक्तवान् । उत्तिष्ठ वत्स मे दर्भसंस्तरं कुरु सत्वरम् ।। २२३
कंचिदस्माच्च ग्रामाद्गुणिनमानय । तस्मै ददामि सर्वस्वं नाद्य जीवाम्यहं निशि ।। २२४
ोऽहमनेनेह विदेशेऽस्तं गते रवौ । कर्तव्यमूढो दुःखार्तो रोदनं शरणं श्रितः ।। २२५
ब्राह्मणं कंचिदस्यानयत जीवतः । यावद्ददात्ययं तस्मै स्वहस्तेन यदस्ति नौ ।। २२६
द्य ध्रुवं रात्रौ न भविष्यत्यहं च तत् । दुःखं सोढुं न शक्नोमि श्वः प्रवेक्ष्यामि पावकम् ।। २२७
दर्थनामेतां कुरुध्वं यत्कृपालवः । मिलिता यूयमस्माकमिहाकारणबान्धवाः ।। २२८
ा जातकरुणाश्चौरा गत्वा तथैव तत् । उक्त्वा तं वसुभूतिं ते स्वामिनं पुनरब्रुवन् ।। २२९
च्छ गृहाण त्वं स्वयं तस्मात्प्रयच्छतः । प्रतिग्रहेण विप्रात्तद्धनं ग्राह्यं निपात्य यत् ।। २३०
ो वसुभूतिस्तैरवादीदेष कः क्रमः । अनिपात्य धनादानमस्माकमनयः परः ।। २३१
निश्चयं दोषं हृतस्वो ह्यनिपातितः । इत्युक्तवन्तं तं पापं भृत्याः प्रत्यूचुरत्र ते ।। २३२
ाङ्का क हरणं क मुमूर्षोः प्रतिग्रहः । प्रातर्वा तौ हनिष्यामो द्विजौ जीविष्यतो यदि ।। २३३
ा तु वृथाब्रह्महत्यापापेन किं फलम् । श्रुत्वैतत्प्रतिपेदे स वसुभूतिस्तथेति तत् ।। २३४
ःप्रतिग्रहार्थं च नक्तं श्रीदर्शनान्तिकम् । श्रीदर्शनोऽप्यवच्छाद्य किंचित्किंचिद्ददौ श्वसन् ।। २३५
भरणमस्मै तत्कृत्वा ग्रस्ताक्षरां गिरम् । ततः कृतार्थश्चौरोऽसौ सानुगोऽपि गृहान्ययौ ।। २३६
सुप्तेषु चौरेषु रात्रौ श्रीदर्शनस्य सा । पद्मिष्ठोपाययौ तस्य पार्श्वं मुखरकस्य च ।। २३७
योऽपि ते तूर्णं मन्त्रयित्वा ययुस्ततः । पथा चौरविहीनेन मालवं प्रति तं पुनः ।। २३८
रात्र्या च दूरं ते गत्वा प्रापुर्महाटवीम् । नित्यं कण्टकितां भ्राम्यत्कृष्णसारमृगेक्षणाम् ।। २३९
तनुलतां तारचीरचीत्काररोदिनीम् । उन्नदद्व्याघ्रसिंहादिप्राणिभ्यो बिभ्यतीमिव ।। २४०
च गच्छतां तेषां क्लेशं दृष्ट्वाखिलं दिनम् । कृपयेवोपसंहृत्य भासमस्तं ययौ रविः ।। २४१
श्रान्ताः क्षुधार्तास्ते वृक्षमूलमुपाश्रिताः । प्रदोषेऽग्नेरिव ज्वालां ददृशुस्तत्र दूरतः ।। २४२
ऽयमत्र जातु स्यात्तद्गत्वालोकयाम्यहम् । इत्युक्त्वानुसरञ्ज्वालां सोऽथ श्रीदर्शनो ययौ ।। २४३
ऽत्र वीक्षते यावत्तावद्रत्नमयं गृहम् । स ददर्श महत्तां च तस्य ज्वालामिव प्रभाम् ।। २४४
ांदिव्यरूपां च यक्षिणीं बहुभिर्वृताम् । विपरीताङ्घ्रिभिर्यक्षैराकेकरविलोचनैः ।। २४५
धं चान्नपानं तैराहृतं तत्र वीक्ष्य सः । उपेत्यातिथिभागं तां वीरोऽयाचत यक्षिणीम् ।। २४६
तुष्टा च सा तस्मै यथार्थितमदापयत् । अन्नमात्मतृतीयस्य संतृप्त्यै तस्य वारि च ।। २४७
ीत्वा तदादिष्टयक्षस्कन्धाधिरोपितम् । आययौ स तयोः पार्श्वं पद्मिष्ठास्ववयस्ययोः ।। २४८
ज्य यक्षं बुभुजे ताभ्यां सह च तत्र सः । तदन्नं विविधं दिव्यं पपौ शीतास्वच्छमम्बु च ।। २४९

ततः सत्त्वप्रभावाढ्यं देवांशं तमवेत्य सः। आत्मनो धन्यतां वाञ्छंस्तुष्टो मुखरकोऽब्रवीत् ॥
त्वं तावत्कोऽपि देवांशः पद्मिष्ठेयं च मत्स्वसा। लोकैकसुन्दरी तत्ते दत्तैषाद्य मयोचिता ॥
तच्छ्रुत्वा सुहृदं तं सानन्दः श्रीदर्शनोऽभ्यधात्। मयाभिनन्दितमिदं त्वद्वाक्यं पूर्वकाङ्क्षितम् ॥
एतां तु परिणेष्यामि स्थानं प्राप्य यथाविधि। इत्यूचिवान्स तौ चोभौ हृष्टास्तामनयन्निशाम् ॥
प्रातश्च प्रस्थिताः सर्वे ततः प्रापुः क्रमेण ते। नगरं मालवेन्द्रस्य तस्य श्रीसेनभूपतेः ॥
तत्र प्रविविशुस्तेऽथ सद्यः श्रान्तागता गृहम्। विश्रान्तिहेतोः कस्याश्चिद्वृद्धाया द्विजयोषितः ॥
तत्र तैश्च प्रसङ्गोक्तनिजवृत्तान्तनामभिः। विप्रेव दृष्टा पृष्टा सा वृद्धयोषिदुवाच तान् ॥
अहं यशस्वती नाम राजसेवोपजीविनः। भार्या सत्यव्रताख्यस्य विप्रस्येहामलान्वया ॥
मृते भर्तर्यपुत्रायास्तस्या मे वृत्तयेऽमुना। तज्जीवनचतुर्भागो दत्तो राज्ञा दयालुना ॥
अद्य चैष ममापुण्यैर्विश्वाप्यायकरोऽपि सन्। गृहीतो राजशशभृद्वैद्यासाध्येन यक्ष्मणा ॥
मन्त्राश्चौषधयश्चास्मिन्क्रमन्ते नैव तद्विदाम्। एकेन तु प्रतिज्ञातमस्याग्रे मन्त्रवादिना ॥
यदि वीरः सहायो मे तादृग्भवति कोऽपि तत्। वेतालसाधनेनाहं रुजं हन्यामिमामिति ॥
ततो हतेऽपि पटहे यदा प्राप्तो न तादृशः। वीरः कोऽपि तदा राजा सचिवानेवमादिशत् ॥
कितवानां कृते योऽयमिह ख्यातो महामठः। आगन्तुकोऽत्र कितवो वीरश्चिन्त्यः स कश्चन ॥
कितवा निरपेक्षा हि दारबन्धुधनोज्झिताः। निर्भया वृक्षमूलादिशायिनो योगिनो यथा ॥
इति राज्ञा समादिष्टैर्मन्त्रिभिस्तन्मठाधिपः। तथैवोक्तो विचिनुते वीरमागन्तुकं सदा ॥
यूयं च कितवास्त्वं च तस्मिन्कर्मणि चेत्क्षमः। तन्नयाम्यहमेवाद्य त्वां श्रीदर्शन तं मठम् ॥
सत्कारं प्राप्नुयास्त्वं च राजतो मम च त्वया। कृता भवेदुपकृतिर्दुःखं प्राणान्तकृद्धि मे ॥
एवमुक्तवतीं तां च वृद्धां श्रीदर्शनोऽब्रवीत्। बाढं शक्तोऽस्मि तत्कार्यं कर्तुं तन्नय मां मठम् ॥
एतच्छ्रुत्वा सपद्मिष्ठं सा तं मुखरकान्वितम्। नीत्वा वृद्धा मठे तत्र मठाधिपतिमभ्यधात् ॥
ब्राह्मणो द्यूतकारोऽयं राजार्थे मन्त्रवादिनः। तस्य साहायके शक्तो वीरो देशान्तरागतः ॥
तच्छ्रुत्वा मठपः पृष्ट्वा तं तथेत्येव वादिनम्। श्रीदर्शनं स सत्कृत्य निनायाशु नृपान्तिकम् ॥
तत्र चावेदितस्तेन राजानं स ददर्श तम्। श्रीदर्शनः पाण्डुकृशं शशाङ्कमिव पार्वणम् ॥
राजापि प्रणतं भव्यमुपविष्टं विलोक्य तम्। आकारतुष्टः श्रीसेनो जाताश्वासो जगाद सः ॥
त्वत्प्रसादेष मे रोगो नाशमेष्यत्यसंशयम्। एतत्त्वद्दर्शनध्वस्तपीडा वक्ति हि मे तनुः ॥
तत्कुरुष्वार्य साहाय्यमित्युक्ते तेन भूभृता। देव किं नाम वस्त्वेतदिति श्रीदर्शनोऽब्रवीत् ॥
अथानाय्य स राजा तं मन्त्रवादिनमभ्यधात्। अयं वीरः सहायस्ते यत्त्वयोक्तं कुरुष्व तत् ॥
तच्छ्रुत्वा मन्त्रवादी तं श्रीदर्शनमुवाच सः। वेतालाह्वानसाहाय्ये समर्थो भद्र चेदसि ॥
तत्त्वं कृष्णचतुर्दश्यामद्यैवास्यां निशागमे। इह श्मशानमागच्छेरन्तिकं मम सिद्धये ॥
इत्युक्त्वा स ततोऽयासीत्तपस्वी मन्त्रसाधकः। श्रीदर्शनोऽप्यगच्छत्तं मठमामन्त्र्य भूपतिम् ॥
तत्र पद्मिष्ठया साकं भुक्त्वा मुखरकेण च। एकः कृपाणभृद्रात्रौ श्मशानं तज्जगाम सः ॥
भूरिभूताकुलं शून्यमशिवं निनदच्छिवम्। गाढान्धकारमालोकं कमप्युपचितं दधत् ॥
तत्रास्पदे विरुद्धानां वीरो भ्रान्त्वा ददर्श सः। श्रीदर्शनो मध्यभागस्थितं तं मन्त्रसाधकम् ॥
भस्मानुलिप्तसर्वाङ्गं धृतकेशोपवीतकम्। प्रेतवस्त्रकृतोष्णीषं संवीतासितवाससम् ॥
उपेत्यावेदितात्मा च स तं श्रीदर्शनस्ततः। आबद्धकक्ष्यः पप्रच्छ ब्रूहि किं करवाणि ते ॥
गच्छार्धक्रोशमात्रेऽस्ति पश्चिमायामितो दिशि। चिताग्नितापनिर्दग्धपल्लवः शिंशपातरुः ॥
तस्य स्थितः शवो मूले तमक्षतमिहानय। इति सोऽपि तमाह स्म साधको हृष्टमानसः ॥
ततस्तथेति स गतस्तत्र श्रीदर्शनो द्रुतम्। अन्येन नीयमानं तं केनापि शवमैक्षत ॥
धावित्वा तस्य च स्कन्धाच्चकर्ष तममुञ्चतः। मुञ्च दार्ढ्यं क मे मित्रं नयस्येतमिति ब्रुवन् ॥

२५० ततः सोऽपि द्वितीयोऽत्र तं श्रीदर्शनमब्रवीत् । न मोक्ष्यामि मम ह्येष मित्रं कोऽस्य भवानिति ॥
२५१ एवं तयोरुभयतः स्कन्धयोः कर्षतोः शवः । वेतालानुप्रविष्टः सन्नमुश्चद्भैरवं रवम् ॥
२५२ तेन त्रस्तो द्वितीयः स हृत्स्फोटेन व्यपद्यत । श्रीदर्शनश्चचालाथ स गृहीत्वैव तं शवम् ॥
२५३ तावच्चात्र द्वितीयः स मृतोऽप्युत्थाय पूरुषः । वेतालाधिष्ठितो रुन्धंस्तं श्रीदर्शनमुक्तवान् ॥
२५४ तिष्ठ स्कन्धार्पितं कृत्वा मित्रं मे मा स्म गा इति । ततः स भूताविष्टं तं मत्वा श्रीदर्शनोऽभ्यधात् ॥
२५५ किं प्रमाणं तवैतस्य मित्रत्वे मित्रमेष मे । तच्छ्रुत्वा सोऽपरोऽवादीत्प्रमाणमयमेव नौ ॥
२५६ श्रीदर्शनस्ततोऽवोचन्मित्रं स्वं तर्हि वक्त्यसौ । ततस्तत्स्कन्धवर्ती स सवेतालः शवोऽब्रवीत् ॥
२५७ अहमेवं ब्रुवे मह्यमाहारं यः प्रयच्छति । क्षुधिताय स मे मित्रं स्वेच्छं नयतु मां च सः ॥
२५८ एतच्छ्रुत्वा सवेतालो द्वितीयः सोऽवदच्छवः । मम नास्त्यस्य चेदस्ति तदाहारं ददातु ते ॥
२५९ तच्छ्रुत्वाहं ददामीति वदन्यावत्तमेव सः । श्रीदर्शनो निजांसस्थवेतालाहारसिद्धये ॥
२६० हन्ति खड्गेन तावत्स हन्यमानः स्वसिद्धितः । अन्तर्दधे द्वितीयोऽत्र सवेतालः शवस्तदा ॥
२६१ अथ श्रीदर्शनं तं स वेतालोंऽसस्थितोऽब्रवीत् । प्रतिपन्नमिदानीं मे भोजनं दीयतामिति ॥
२६२ ततो यदा न लेभेऽन्यन्मांसं श्रीदर्शनोऽत्र सः । भोजनाय ततस्तस्मै स्वमुत्कृत्यासिना ददौ ॥
२६३ तेन तुष्टः स वेतालस्तमेवमवदत्तदा । प्रीतोऽस्मि ते महासत्त्व देहस्तेऽस्त्वयमक्षतः ॥
२६४ नय मामधुना कार्यं तवैवेदं हि सेत्स्यति । स साधकस्तपस्वी तु स्वल्पसत्त्वो विनङ्क्ष्यति ॥
२६५ इत्युक्तस्तेन भूत्वैव स स्वस्थाङ्गस्तदैव तम् । नीत्वा श्रीदर्शनस्तस्मै साधकाय समर्पयत् ॥
२६६ स चाभिनन्द्य संपूज्य रक्तमाल्यानुलेपनैः । नरास्थिचूर्णलिखिते कोणन्यस्तास्रकुम्भके ॥
२६७ महातैलज्वलद्दीपे मण्डले विपुलान्तरे । वेतालं तं तदोत्तानमात्तप्रेततनुं व्यधात् ॥
२६८ वक्षस्थलोपविष्टश्च तस्यास्यकुहरेऽथ सः । नरास्थिस्रुक्स्रुवकरो होमं कर्तुं प्रचक्रमे ॥
२६९ क्षणाच्च तस्य वेतालस्यास्याज्ज्वालोद्भूत्तदा । यथा स साधकस्त्रासादुत्थायापासरत्ततः ॥
२७० सत्त्वच्युतं च तं स्रस्तस्रुक्स्रुवं परिधाव्य सः । वेतालो व्यात्तवदनः साङ्गोपाङ्गं निगीर्णवान् ॥
२७१ तद्दृष्ट्वा खड्गमुद्यम्य यावच्छ्रीदर्शनः स तम् । अभिधावति तावत्स वेतालस्तमभाषत ॥
२७२ भोः श्रीदर्शन धैर्येण तुष्टोऽस्म्येवंविधेन ते । तत्सर्षपान्गृहाण त्वमिमान्मन्मुखसंभवान् ॥
२७३ एभिः शिरोनिबद्धैश्च पाणिस्थैश्चैष भूपतिः । निवृत्तयक्ष्मदोषार्तिः सद्य एव भविष्यति ॥
२७४ त्वं चाचिरेण सर्वस्याः पृथ्व्या राजा भविष्यसि । इति तद्वचनं श्रुत्वा तं स श्रीदर्शनोऽभ्यधात् ॥
२७५ साधकेन विनैतेन तत्र यास्याम्यहं कथम् । अनेन स हतः स्वार्थलोभादिति वदेन्नृपः ॥
२७६ एवं श्रीदर्शनेनोक्ते वेतालः स जगाद तम् । वच्मि ते प्रत्ययं येन शुद्धिस्तव भविष्यति ॥
२७७ इमं मृतं मन्निगीर्णमिहास्यैव शवस्य हि । उदरं पाटयित्वा त्वमन्तःस्थं दर्शयिष्यसि ॥
२७८ इत्युक्त्वा स ययौ क्वापि वेतालोऽर्पितसर्षपः । निर्गत्यैव शवात्तस्माच्छवः सोऽप्यपतद्भुवि ॥
२७९ स्वीकृत्य सर्षपान्सोऽपि गत्वा श्रीदर्शनस्ततः । सहायाध्युषिते तस्मिन्मठे रात्रिं निनाय ताम् ॥
२८० प्रगे राज्ञोऽन्तिकं गत्वा रात्रिवृत्तं निवेद्य तत् । मन्त्रिभ्योऽदर्शयन्नीत्वा साधकं तं शवोदरात् ॥
२८१ ततो बबन्ध राज्ञस्तान्पाणौ मूर्ध्नि च सर्षपान् । तेन सोऽभून्नृपो नष्टनिःशेषव्याधिनिर्वृतः ॥
२८२ अथ तुष्टः स नृपतिः श्रीसेनः प्राणदायिनम् । अनपत्यः सुतत्वेन तं श्रीदर्शनमग्रहीत् ॥
२८३ अभ्यषिञ्चच्च तं वीरं यौवराज्ये तदैव सः । उप्तं सुकृतबीजं हि सुक्षेत्रेषु महाफलम् ॥
२८४ ततः श्रीदर्शनः श्रीमानुपयेमे स तत्र ताम् । पद्मिष्ठां पूर्वसेवार्थं लक्ष्मीमिव सहागताम् ॥
२८५ तया समं स भुञ्जानो भोगान्मुखरकेण च । तद्भ्रात्रा सोऽथ तत्रासीत्पृथ्वीं वीरोऽनुपालयन् ॥
२८६ एकदा जलधेस्तीरात्प्राप्य रत्नविनायकम् । उपेन्द्रशक्तिरानीय ददौ तस्मै महावणिक् ॥
२८७ तमनर्घं समालोक्य युवराजः स भक्तितः । तत्र प्रतिष्ठापितवान्विभवेनातिभूयसा ॥
२८८ ददौ ग्रामसहस्रं च नित्यभोगाय तत्र सः । यात्रोत्सवं च विदधे मिलिताखिलमानवम् ॥

नृत्तवादित्रगीतैश्च तत्र सातिशयैर्निशि। परितुष्टो गणानेवमादिदेश गणाधिपः॥
मत्प्रसादादयं भावी सम्राट् श्रीदर्शनो भुवि। तदिहास्त्यपराम्भोधौ हंसद्वीपमिति श्रुतम्॥
द्वीपं तत्रास्ति च क्ष्माभृदनङ्गोदयसंज्ञकः। अनङ्गमञ्जरीत्यस्ति स्त्रीरत्नं तस्य चात्मजा॥
मद्भक्ता सा च कन्या मामर्चित्वा याचते सदा। सर्वपृथ्वीश्वरं देहि पतिं मे भगवन्निति॥
अतः श्रीदर्शनेनैतां पत्न्या संयोजयाम्यहम्। उभयोरेतयोरेवं दत्तं भक्तिफलं भवेत्॥
तस्माच्छ्रीदर्शनस्तत्र नीत्वा युष्माभिरेतयोः। अन्योन्यदर्शनं युक्त्या संपाद्यानीयतां द्रुतम्॥
संयोगस्तु शनैः सम्यक्क्रमेण भवितानयोः। अद्यैव तु स नास्त्येव भवितव्यं हि तत्तथा॥
किं चैवं वणिजोऽप्यस्य प्रतिमाप्रापकस्य मे। उपेन्द्रशक्तेरस्त्येव विहिता काप्युपक्रिया॥
एवं गणेशेनादिष्टा गणा रात्रौ तदैव तम्। सुप्तं श्रीदर्शनं निन्युर्हंसद्वीपं स्वसिद्धितः॥
तत्र चानङ्गमञ्जर्यास्तं प्रवेश्यैव वासके। सुप्तायाः शयने तस्या राजपुत्र्या न्यवेशयन्॥
प्रबुद्धः स क्षणात्तत्र ज्वलद्रत्नप्रदीपके। द्योतमानवितानादिनानानर्घमहामणौ॥
राजावर्तोपलश्यामतले सद्वासवेश्मनि। पर्यङ्कशयने धौतसितपट्टोत्तरच्छदे॥
शयानाममृतस्यन्दसुन्दरप्रसरद्द्युतिम्। सर्वतः प्रस्फुरत्तारतारावलिमनोरमे॥
गगने धवलाम्भोदशकलोत्सङ्गवर्तिनीम्। शरच्छशभृतो मूर्तिमिवानन्दकरीं दृशोः॥
श्रीदर्शनस्तां सहसा ददर्शानङ्गमञ्जरीम्। हृष्टविस्मितविभ्रान्तश्चिन्तयामास च क्षणम्॥
क्व सुप्तः क्व प्रबुद्धोऽस्मि किमिदं केयमङ्गना। स्वप्नो ध्रुवमसौ सोऽपि वरमस्त्वयमीदृशः॥
प्रबोध्य तदिमां तावत्पश्यामीति विविच्य सः। नुदति स्म शनैरंसे पाणिनानङ्गमञ्जरीम्॥
सापि तस्य करस्पर्शादिन्दोरिव कुमुद्वती। व्यालोलनेत्रभ्रमरा प्रबोधं प्राप तत्क्षणम्॥
दृष्ट्वा च तं क्षणं दध्यौ कोऽयं दिव्याकृतिर्भवेत्। दुष्प्रवेशे प्रविष्टोऽत्र देवो नूनमसाविति॥
उत्थाय चैतं पप्रच्छ संभ्रमप्रश्रयाकुला। कस्त्वं कस्मात्कथं चेह प्रविष्टोऽस्युच्यतामिति॥
ततः श्रीदर्शनेनोक्ते स्वोदन्ते साप्यवोचत। तत्पृष्टा सुन्दरी चास्मै देशनामान्वयान्निजान्॥
सोत्कावन्योन्यसंलक्तस्वप्नभ्रान्ती ततश्च तौ। भूषणानां विनिमयं चक्रतुर्निश्चयाप्तये॥
अथोभावपि गान्धर्वविवाहोत्सुकमानसौ। ते गणा मोहयित्वा तौ निन्युर्निद्रावशं तदा॥
जातनिद्रं गृहीत्वा च तं तु श्रीदर्शनं ततः। स्वगृहं प्रापयामासुस्तदैवाप्राप्तवाञ्छितम्॥
तत्रापगतनिद्रश्च धाम्नि श्रीदर्शनो निजे। स्थितः स्त्र्याभरणैर्युक्तं दृष्ट्वात्मानं व्यचिन्तयत्॥
अहो किमेतत्क नु सा हंसद्वीपेश्वरात्मजा। क्व तद्वासगृहं दिव्यं क्वाहं पुनरिहैव च॥
न च स्वप्नः स यत्तानि तदीयाभरणानि मे। तिष्ठन्त्येतानि तन्नूनं विलासः कोऽप्ययं विधेः॥
इत्यादि चिन्तयन्पत्न्या पृष्टः सुप्तप्रबुद्धया। पद्मिष्ठया धीर्यमाणः साध्व्या तां सोऽनयन्निशाम्
प्रातश्च सर्वं राज्ञेऽपि श्रीसेनाय तदब्रवीत्। अनङ्गमञ्जरीनामचिह्निताभरणान्वितः॥
राजापि तत्प्रियैषी स हंसद्वीपं गवेषयन्। मार्गं दत्त्वापि पटहं नोपलेभे कुतश्चन॥
ततः श्रीदर्शनस्तत्र स विनानङ्गमञ्जरीम्। आसीत्स्मरज्वराक्रान्तः सर्वभोगपराङ्मुखः॥
नाहारं श्रद्दधे पश्यन्ना हारं तदलंकृतीः। स्वापं जहावपश्यंस्तु स्वापं तन्मुखपङ्कजम्॥
अत्रान्तरे च सा तत्र हंसद्वीपे नृपात्मजा। तूर्यशब्दैः प्रबुबुधे प्रभातेऽनङ्गमञ्जरी॥
स्मृत्वा तद्रात्रिवृत्तं सा दृष्ट्वा चालंकृतां तनुम्। श्रीदर्शनालंकरणैश्चिन्तामौत्सुक्यतो ययौ॥
स्वप्नभ्रान्तिहरैर्दत्तप्रेमभिर्दुर्लभे जने। एभिराभरणैर्नीतास्म्यहं जीवितसंशयम्॥
इत्यादि चिन्तयन्तीं तां पुरुषाभरणैर्युताम्। पितानङ्गोदयोऽकस्मात्प्रविश्यात्र व्यलोकयत्॥
वाससाच्छादिताङ्गीं च लज्जयावनतां ततः। पप्रच्छोत्सङ्गमारोप्य स तां राजातिवत्सलः॥
किमयं पुत्रि पुंवेषः किं त्रपा चेदृशी वद। मा कृथा मय्यविश्वासं बद्धाः प्राणा हि मे त्वयि॥
इत्यादिभिः प्रियालापैस्तेन मन्दीकृतत्रपा। पित्रा शनैस्तं वृत्तान्तं कृत्स्नं तस्मै शशंस सा॥

सोऽस्याः पिता राजा तदमानुषगोचरम् । इन्द्रजालमिवावेत्य ययौ कर्तव्यसंशयम् ॥ ३६७
। तच्च पप्रच्छ सुप्रीतं सिद्धयोगिनम् । महाव्रतधरं ब्रह्मसोमं नाम स्वदेशजम् ॥ ३६८
क्ष्य प्रणिधानेन नृपं तं तापसोऽभ्यधात् । मालवात्सत्यमानिन्ये गणैः श्रीदर्शनो नृपः ॥ ३६९
रः प्रसन्नो हि त्वत्पुत्र्यास्तस्य चोभयोः । तत्प्रसादाच्च राजा स सार्वभौमो भविष्यति ॥ ३७०
घनीयो दुहितुस्तव भर्ता स तादृशः । इत्युक्ते ज्ञानिना तेन प्रह्वो राजा जगाद तम् ॥ ३७१
लवः क्व भगवन्हंसद्वीपो महानयम् । पन्था दुर्गश्च कार्यं च नेदं कालान्तरक्षमम् ॥ ३७२
ादपरो नित्यं त्वमेवात्र गतिर्मम । इति राज्ञा स विज्ञप्तस्तपस्वी भक्तवत्सलः ॥ ३७३
इं साधयाम्येतदित्युक्त्वान्तर्दधे ततः । क्षणाच्च मालवं प्राप पुरं श्रीसेनभूभृतः ॥ ३७४
ास्मिन्प्रविश्यैव श्रीदर्शनविनिर्मिते । देवागारे गणाधीशं प्रणम्योपविवेश सः ॥ ३७५
स्तु तुभ्यं नक्षत्रमालामण्डितमूर्धने । सुमेरुशिखराभाय कल्याणमयमूर्तये ॥ ३७६
नृत्तोत्सवोत्क्षिप्तसरलाभ्रंलिहं तव । करं त्रिभुवनागारधारणस्तम्भसंनिभम् ॥ ३७७
ां सर्वसिद्धीनां विघ्नान्तक नमाम्यहम् । पृथुलोदरकुम्भं ते पन्नगाभरणं वपुः ॥ ३७८
ात्र स यावच्च गणेशं स्तौति तापसः । तावत्तत्प्रतिमानेतुः पुत्रस्तस्य वणिक्पतेः ॥ ३७९
शक्तेरुद्दामचिरोन्मादविशृङ्खलः । भ्राम्यन्महेन्द्रशक्त्याख्यो विवेशात्रैव दैवतः ॥ ३८०
ावद्ग्रहीतुं च तमेव स तपस्विनम् । ततः स पाणिना तत्र तपस्वी तमताडयत् ॥ ३८१
। न्यस्तमन्त्रेण पाणिना तस्य ताडितः । शान्तोन्मादस्तथैवाभूत्स्वस्थबुद्धिर्वणिक्सुतः ॥ ३८२
ज्जश्च स ततो निर्गत्यैव दिगम्बरः । हस्ताच्छादितकौपीनो जगाम स्वगृहं प्रति ॥ ३८३
ं लोकतो बुद्ध्वा समेत्यानन्दनिर्भरः । उपेन्द्रशक्तिः स्थविता तमनैषीन्निजं गृहम् ॥ ३८४
स्नपयित्वा च कृत्वा वस्त्राद्यलंकृतम् । तद्युक्तस्तापसं तं स ब्रह्मसोममुपाययौ ॥ ३८५
ग्रच्च बहस्मै धनं पुत्रप्रदायिने । स तु तन्नैव जग्राह तापसो दिव्यसिद्धिभृत् ॥ ३८६
तरे च तद्बुद्ध्वा तमुपागात्तपस्विनम् । श्रीदर्शनान्वितो भक्त्या श्रीसेननृपतिः स्वयम् ॥ ३८७
ग्र स्तुतिं कृत्वा तं स राजा व्यजिज्ञपत् । संपन्ना वणिजस्तावत्पुत्रस्वास्थ्यादुपक्रिया ॥ ३८८
ागमनादस्य तन्ममापि तथा कुरु । यथा श्रीदर्शनस्यास्य मत्सूनोः कुशलं भवेत् ॥ ३८९
नार्थितो राज्ञा तापसः सोऽब्रवीद्धसन् । राजन्किमस्य चौरस्य करोम्यहमभीप्सितम् ॥ ३९०
जपुत्र्या हृदयं मुषित्वाभरणानि च । रात्रावनङ्गमञ्जर्या हंसद्वीपादिहागतः ॥ ३९१
त्वद्वचः कार्यं मयेत्युक्त्वा प्रकोष्ठतः । श्रीदर्शनं तमादाय तापसोऽन्तर्दधेऽथ सः ॥ ३९२
य हंसद्वीपं च राज्ञोऽनङ्गोदयस्य तम् । प्रावेशयद्राजधानीं तत्सुताभरणैर्युतम् ॥ ३९३
भ्यनन्दत्तं राजा प्राप्तं श्रीदर्शनं तदा । हृष्टः पूर्वं तमभ्यर्च्य पादनम्रस्तपस्विनम् ॥ ३९४
। तां सुतां तस्मै पुण्याहेऽनङ्गमञ्जरीम् । श्रीदर्शनाय रत्नौघमालिनीं वसुधामिव ॥ ३९५
द्ध्वा समेतं च तं स जामातरं पुनः । मालवं प्रापयामास शक्त्या तस्य तपस्विनः ॥ ३९६
प्रश्च स ततः कान्ताद्वितयसंगतः । श्रीदर्शनः सुखं तस्थौ हृष्टराजाभिनन्दितः ॥ ३९७
तस्मिञ्श्रीसेने राज्ञि लोकान्तरं गते । तद्राज्यं प्राप्य पृथिवीं कृत्स्नां वीरो जिगाय सः ॥ ३९८
ादितसाम्राज्यः स तयोर्भार्यंयोर्द्वयोः । पद्मिष्ठानङ्गमञ्जर्योस्तनयौ द्वावजीजनत् ॥ ३९९
योः पद्मसेनं नाम्ना स कृतवान्नृपः । अनङ्गसेनमपरं वृद्धिं तौ चात्र नीतवान् ॥ ४००
ाले च देवीभ्यां सह सोऽभ्यन्तरे स्थितः । श्रीदर्शनोऽशृणोद्राजा विप्रस्याक्रन्दितं बहिः ॥ ४०१
तं च पप्रच्छ विप्रमाक्रन्दकारणम् । ततः स दर्शितोद्वेगो विप्रस्तमिदमब्रवीत् ॥ ४०२
ीप्तशिखोऽग्निर्मे सोऽट्टहासमुचाधुना । सज्योतिर्धूमलेखोऽपि कालमेघेन नाशितः ॥ ४०३
त्रा दृष्टनष्टोऽभूद्ब्राह्मणः सोऽत्र तत्क्षणम् । किमेतदुक्तमेतेन क्व गतश्चेति विस्मयात् ॥ ४०४
राजा ब्रूते च तावद्देव्यावशङ्कितम् । धाराश्रुणा रुदन्त्यौ ते तस्य पश्चात्समापतुः ॥ ४०५

तद्दृष्ट्वाशनिपाताग्रं सहसा स महीपतिः । हा हा किमिदमित्यार्तो विलपन्नपतद्भुवि ॥ ४
पतितं च तमादाय पार्श्वगा निन्युरन्यतः । देव्योश्च वह्निसंस्कारं नीत्वा मुखरको व्यधात् ॥ ४
लब्धसंज्ञोऽनुशोच्याथ भार्ये ते सुचिरं नृपः । तयोर्निर्वर्तयामास स स्नेहादौर्ध्वदैहिकम् ॥ ४
बाष्पदुर्दिनबद्धान्धकारं नीत्वा च वत्सरम् । द्वाभ्यां विभज्य पुत्राभ्यां पृथ्वीराज्यं ददौ द्विधा ॥ ४
ततो निर्गत्य नगरात्प्रकृतीरनुयायिनीः । निवर्त्य जातवैराग्यः शिश्रिये तपसे वनम् ॥ ४
फलमूलाशनस्तत्र वसञ्जातु यदृच्छया । भ्रमन्सोऽन्तिकमेकस्य प्राप न्यग्रोधशाखिनः ॥ ४
तत्र प्राप्तमकस्मात्तं निर्गत्यैव तरोस्ततः । ऊचतुर्दिव्यरूपे द्वे फलमूलकरे स्त्रियौ ॥ ४
राजन्नेहि गृहाणैतान्यद्य मूलफलानि नौ । तच्छ्रुत्वा सोऽब्रवीद्ब्रूतं तावन्मे के युवामिति ॥ ४
ततस्ते दिव्यनार्यौ तमूचतुस्तर्हि नौ गृहम् । एहि प्रविश्य तत्रैतद्वक्ष्यामस्ते यथातथम् ॥ ४
तच्छ्रुत्वा स तथेत्युक्त्वा ताभ्यां श्रीदर्शनः सह । प्रविष्टोऽत्र ददर्शान्तर्दिव्यं हेममयं पुरम् ॥ ४
विश्रान्तस्तत्र दिव्यानि भुक्तवांश्च फलानि सः । नारीभ्यां जगदे ताभ्यामिदानीं नृपते शृणु ॥ ४
आसीत्कमलगर्भाख्यः प्रतिष्ठाने पुरा द्विजः । तस्याभूतां च भार्ये द्वे एका पथ्या बलापरा ॥ ४
जराक्रान्ताश्च कालेन ते भार्यापतयस्त्रयः । पर्यन्ते विविशुर्वह्निं सहान्योन्यानुरागिणः ॥ ४
भार्यापतित्वं सर्वस्मिन्भूयाज्जन्मनि नः प्रभो । इति प्रार्थ्यत तस्मिंश्च काले तैरनलाद्वरः ॥ ४
ततः कमलगर्भोऽसौ यक्षयोनावजायत । प्रदीप्ताक्षस्य यक्षस्य पुत्रो दीप्तशिखाभिधः ॥ ४
कनीयानट्टहासस्य भ्राता तीव्रतपोबलात् । तद्भार्ये अपि ते पथ्याबले यक्षपतेः सुते ॥ ४
धूमकेत्वभिधानस्य जज्ञाते यक्षकन्यके । ज्योतिर्लेखाभिधानैका धूमलेखेति चापरा ॥ ४
कालेन च भगिन्यौ ते कन्यके प्राप्तयौवने । भर्त्रर्थं तपसा गत्वारण्येऽतोषयतां हरम् ॥ ४
स तुष्टो दर्शनं दत्त्वा देवस्ते द्वे समादिशत् । सममेव प्रविश्याग्निं युवाभ्यां पूर्वजन्मनि ॥ ४
येन साकं वृतं भार्यापतित्वं सर्वजन्मसु । स वां यक्षोऽट्टहासस्य भ्राता दीप्तशिखाभिधः ॥ ४
जातः स स्वामिशापेन पुनर्मर्त्यत्वमागतः । जातः श्रीदर्शनो नाम तद्युवामपि गच्छतम् ॥ ४
भवेतां मर्त्यलोकेऽस्य भार्ये शापक्षये पुनः । यूयं च भार्यापतयो यक्षाः सर्वे भविष्यथ ॥ ४
इति गौरीपतेर्वाक्यादुभे ते यक्षकन्यके । पद्मिष्ठानङ्गमञ्जर्यावजायेतां भुवस्तले ॥ ४
श्रीदर्शनस्य भार्यात्वं प्राप्ते सत्यौ च ते चिरात् । एत्य तेनाट्टहासेन युक्त्या ब्राह्मणरूपिणा ॥ ४
श्लिष्टोक्त्या स्मारिते दैवाज्जातिं नामान्युदीर्य यत् । तेन ते तां तनुं त्यक्त्वा यक्षिणीत्वमुपागते ॥ ४
ते चावां त्वमिमे विद्धि भवान्दीप्तशिखश्च सः । इत्युक्त एव ताभ्यां तां जातिं श्रीदर्शनोऽस्मरत् ॥ ४
संपन्नश्च ततः सद्यो यक्षो दीप्तशिखोऽत्र सः । प्राप्तश्च ताभ्यां भार्याभ्यां संयोगं विधिवत्पुनः ॥ ४
तमिमं विद्धि मां यक्षं विचित्रकथ ते इमे । ज्योतिर्लेखां तथा धूमलेखां जानीहि मे प्रिये ॥ ४
तदेवं मादृशां देववंशजानामपीदृशम् । सुखदुःखं भवेत्कामं मानुषाणां कथैव का ॥ ४
युष्माकं चाचिराद्वत्स भविष्यति समागमः । भर्त्रा मृगाङ्कदत्तेन मा विषादमतः कृथाः ॥ ४
अहं चेह तवातिथ्यहेतोरास्थामिदं हि मे । भौमं धाम तदास्स्वेह करिष्येऽभिमतं तव ॥ ४
ततो यास्यामि कैलासं स्वं धामेति निजां कथाम् । उक्त्वा स यक्षो मां तत्र कंचित्कालमुपाचरत् ॥ ४
अद्य युष्मानिह प्राप्ताञ्ज्ञात्वा रात्रौ स सन्मतिः । सुप्तानां भवतां मध्ये सुप्तमानीय मां न्यधात् ॥ ४
ततो दृष्टोऽस्मि युष्माभिर्यूयं दृष्टा मयापि च । इत्येष युष्मद्विश्लेषे वृत्तान्तो देव मामकः ॥ ४

इति निजसचिवान्निशम्य तस्मान्निशि स विचित्रकथाद्यथार्थनाम्नः ।
सुखमभजदतीव राजपुत्रः सममपरैः सचिवैर्मृगाङ्कदत्तः ॥ ४

नीत्वात्र रात्रिमटवीभुवि नागशापविश्लेषितान्मिलितशेषसखीन्विचिन्वन् ।
अभ्युज्जयिन्युदचलच्च शशाङ्कवत्या लाभाय सोऽर्पितमतिः सह तैर्वयस्यैः ॥ ४

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके षष्ठस्तरङ्गः ।

सप्तमस्तरङ्गः।

तैः सचिवैर्युक्तः क्रमाच्छ्रुतधिपश्चमैः। मृगाङ्कदत्तस्तस्यां स गच्छन्विन्ध्याटवीभुवि ॥ १
प सफलस्निग्धतरुच्छायमनोरमम्। एकं काननमच्छाच्छस्वादुशीतजलाशयम् ॥ २
स्नातः ससचिवो भुक्तनानाफलश्च सः। एकदेशे लताछन्ने समालापमिवाशृणोत् ॥ ३
। ददाति यावच्च दृष्टिं तत्र लतान्तरे। तावद्ददर्श तत्रान्तर्महान्तं वरवारणम् ॥ ४
ासयन्तं पुरुषं पथि श्रान्तमचक्षुषम्। करेणोपाहृतैस्तोयैः फलैः कर्णानिलैस्तथा ॥ ५
त्किंचित्समाश्वस्तो भवानिति च तं मुहुः। साधुमानुषवत्प्रीत्या वदन्तं व्यक्तया गिरा ॥ ६
ष्ट्वा स सखीनाह राजपुत्रः सविस्मयः। पश्यत क्व गजो वन्यः क्वाचारो मानुषोचितः ॥ ७
र्यं कोऽप्ययं हेतोः कुतोऽप्येवमिह स्थितः। अयं प्रचण्डशक्तेश्च सख्युः सुसदृशः पुमान् ॥ ८
त्वन्ध एष तत्क्षिप्रं पश्याम इति तान्सखीन्। उक्त्वा मृगाङ्कदत्तोऽत्र तस्थौ शृण्वन्नलक्षितः ॥ ९
ःस तं समाश्वस्तमन्धं पप्रच्छ वारणः। कस्त्वं कथमिहायातोऽस्यन्धः सन्कथ्यतामिति ॥ १०
सोऽपि जगादैतं पुमानन्धो गजोत्तमम्। अस्तीहामरदत्ताख्यो राजायोध्यापुरीपतिः ॥ ११
ङ्कदत्त इत्यस्ति तस्योत्तमगुणः सुतः। तस्य प्रचण्डशक्त्याख्यो भृत्योऽहं शुभजन्मनः ॥ १२
ाजपुत्रः केनापि कारणेन स्वदेशतः। पित्रा निर्वासितोऽस्माभिः सहायैर्दशभिर्वृतः ॥ १३
शाङ्कवतीहेतोर्वयमुज्जयिनीं ततः। प्रस्थिता नागशापेन सर्वेऽटव्यां वियोजिताः ॥ १४
चान्धत्वमायातस्तच्छापेन परिभ्रमन्। इह प्राप्तो यथालब्धफलमूलजलाशनः ॥ १५
ादिपातानशनैर्मृत्युरिष्टतमोऽपि मे। अनुभावयता क्लेशं न दत्तो बत वेधसा ॥ १६
त्वद्य यथा शान्तं क्षुद्दुःखं त्वत्प्रसादतः। तथान्ध्यमपि मे शाम्येत्किमपि त्वं हि दैवतम् ॥ १७
क्तेन संजातनिश्चयो हर्षशोकयोः। मृगाङ्कदत्तो मध्यस्थः सचिवांस्तानभाषत ॥ १८
डशक्तिरेवायं कष्टमेतां दशां गतः। न चैष संभावयितुं युक्तो नरस्वरयाधुना ॥ १९
ाकारमस्यैष द्विपः कुर्वीत जातुचित्। अस्मान्दृष्ट्वा त्वसौ नश्येद्द्रष्टव्योऽन्तस्तदत्र नः ॥ २०
त्वा सानुगः शृण्वंस्तस्थौ राजसुतोऽत्र सः। प्रचण्डशक्तिश्च ततस्तं स पप्रच्छ वारणम् ॥ २१
ीं ब्रूहि वृत्तान्तं महात्मन्मम को भवान्। कैषा ते गजता वाक्च समदस्यापि निर्मदा ॥ २२
्रण्यं स निःश्वस्य गजेन्द्रस्तमभाषत। शृण्विमं निजवृत्तान्तमामूलात्कथयामि ते ॥ २३
ीमेकलव्यायां पुरा श्रुतधराभिधः। राजाभूत्तस्य चाभूतां सुतौ द्वौ भार्ययोर्द्वयोः ॥ २४
शीलधरं नाम ज्येष्ठं तस्मिन्दिवं गते। राज्यात्सत्यधरो नाम कनीयान्निरवासयत् ॥ २५
ा शीलधरो गत्वा तेनामर्षेण शंकरम्। आराध्य तपसा तुष्टात्तस्माद्वरमयाचत ॥ २६
सं देव गन्धर्वो येनाम्बरचरो भवन्। तं सत्यधरदायादं हन्यामेवावहेलया ॥ २७
त्वा भगवानेवं शंभुरादिशति स्म तम्। एतत्ते भावि किं त्वद्य स शत्रुस्ते मृतः स्वयम् ॥ २८
्यते च राढायां पुनरुग्रभटस्य सः। नृपस्य पुत्रः समरभटो नाम पितृप्रियः ॥ २९
भीमभटो नाम तस्य द्वैमातुरोऽग्रजः। भ्राता जनिष्यते तं च हत्वा राज्यं करिष्यसि ॥ ३०
र्षेण त्वया चैतद्यतस्तप्तं तपस्ततः। मुनिशापात्पदभ्रष्टो वन्यो हस्ती भविष्यसि ॥ ३१
स्मरो व्यक्तवाक्च भवानाश्वासयिष्यति। यदावसन्नमतिथिं स्ववृत्तान्तं च वक्ष्यति ॥ ३२
गजत्वान्निर्मुक्तो गन्धर्वस्त्वं भविष्यसि। उपकारश्च तस्यापि भविष्यत्यतिथेस्तदा ॥ ३३
देश्य तिरोभूते भर्गे शीलधरोऽत्र सः। दृष्ट्वा चिरतपःक्षीणां गङ्गायां तनुमक्षिपत् ॥ ३४
न्तरे कथासंधौ पूर्वोद्दिष्टस्य भूपतेः। तस्योग्रभटसंज्ञस्य राढायां पुरि तुल्यया ॥ ३५
ाख्यया देव्या समं निवसतः सुखम्। पार्श्वं देशान्तरादागाल्लासको नाम नर्तकः ॥ ३६
नाट्यप्रयोगं तं राज्ञे तस्मायदर्शयत्। दैत्यानां हरिणा यत्र हृतं स्त्रीरूपिणामृतम् ॥ ३७
वामृतिकाभूमौ नृत्यन्तीं नर्तकस्य सः। ददर्श तनयां तस्य नाम्ना लास्यवतीं नृपः ॥ ३८

तस्याः स रूपं दृष्ट्वैव विश्वक्षोभितदानवम् । सत्यामृताया इव तद्राजा कामवशं ययौ ॥
वृत्तान्ते च धनं भूरि तत्पित्रे प्रवितीर्य सः । प्रावेशयत्तां तत्कालं कन्यामन्तःपुरं स्वकम् ॥
ततस्तया स नर्तक्या विहितोद्वाहया सह । लास्यवत्या नृपस्तस्थौ तन्मुखासक्तलोचनः ॥
एकदा स यजुःस्वामिसंज्ञं प्राह पुरोहितम् । पुत्रो नास्तीह मे तत्त्वं पुत्रेष्टिं मम कुर्विति ॥
ततस्तथेति विधिवत्तामिष्टिं तस्य भूपतेः । पुरोहितः स विदधे विद्वद्भिर्ब्राह्मणैः सह ॥
प्राशयन्मन्त्रपूतं च तद्देवीं तां मनोरमाम् । भागमर्घ्यं चरोर्ज्येष्ठां स पूर्वाराधितस्तया ॥
शेषं तस्यै द्वितीयस्यै लास्यवत्यै ददौ च सः । ततश्च तौ तयोः शीलधरसत्यधरावुभौ ॥
उभयोरुदरे राज्योः पूर्वोक्तौ संबभूवतुः । प्राप्ते च समये चात्र देवी तस्य महीपतेः ॥
मनोरमा प्रसूते स्म पुत्रं कल्याणलक्षणम् । एष भीमभटो नाम जातः ख्यातयशा नृपः ॥
इत्युच्चचार तत्कालं सुस्पष्टा भारती दिवः । ततोऽन्येद्युः प्रसुषुवे सापि लास्यवती सुतम् ॥
पिता च तं स समरभटं नाम्नाकरोन्नृपः । अथ तौ कृतसंस्काराववर्धेतां शनैः शिशू ॥
ज्येष्ठो भीमभटस्तं तु कनिष्ठमजयद्गुणैः । तत्संघर्षेण चान्योन्यं तयोर्वैरमवर्धत ॥
एकदा बाहुना बाहुयुद्धकेलौ समत्सरः । हन्ति स्म कण्ठे समरभटो भीमभटं हठात् ॥
ततो भीमभटः क्रोधाद्भुजाभ्यां परिवेष्ट्य तम् । न्यधादुत्क्षिप्य समरभटं चटदिति क्षितौ ॥
स तेनाभिहतो गाढं सर्वद्वारैरसृग्वमन् । समुत्थाप्यान्तिकं मातुर्नीतोऽभून्निजसेवकैः ॥
सा तं दृष्ट्वा च बुद्ध्वा च वृत्तान्तं स्नेहकातरा । तस्य मूर्धनि मूर्धानमासज्य प्रारुदद्भृशम् ॥
तावद्राज्ञा प्रविष्टेन तद्दृष्ट्वाकुलचेतसा । किमेतदिति पृष्टा सा लास्यवत्येवमब्रवीत् ॥
इयं भीमभटेनास्य कृतावस्था सुतस्य मे । सदा चाभिभवत्येनं न चाहं देव वच्मि ते ॥
इदं दृष्ट्वा तु जानेऽहं तवैव स्यात्क्वचिदिवं कथम् । तस्मिन्नेवंविधे पुत्रे विचारयतु वा भवान् ॥
एवं तयोक्तः प्रियया स तमुग्रभटो नृपः । क्रुद्धो भीमभटं स्वात्मसंनिकर्षान्न्यवारयत् ॥
हृतवृत्तिं च कृत्वैनं राजपुत्रशतं व्यधात् । रक्षार्थं तस्य समरभटस्य सपरिच्छदम् ॥
स्वाधीनं चाकरोत्तस्य भाण्डागारं कनीयसः । तं तु भीमभटं ज्येष्ठं सर्वाकारमपाकरोत् ॥
ततो माता तमाहूय सा वक्ति स्म मनोरमा । नर्तकीरागिणा तावत्पित्रा त्वं परिवर्जितः ॥
तन्मातामहशालां त्वं गच्छ पाटलिपुत्रकम् । तत्र मातामहः स्वं ते राज्यं दास्यत्यपुत्रकः ॥
इह त्वां चैष समरभटो हन्याद्रिपुर्बली । इति मातुर्वचः श्रुत्वा तां स भीमभटोऽब्रवीत् ॥
क्षत्रियः सन्न देशं स्वं त्यक्ष्यामि क्लीबवद्भयात् । धीरा भवाम्ब कः शक्तो वराको मां प्रबाधितुम्
इत्युक्तवन्तं तं माता साब्रवीत्तर्हि भूयसः । सहायान्कुरु रक्षार्थं मदीयैस्त्वं धनैरिति ॥
ततो भीमभटोऽवादीदेतदम्ब न शोभते । एवं हि सत्यं तातस्य प्रातिपक्ष्यं कृतं भवेत् ॥
तन्मे त्वदाशिषैव स्यात्कल्याणं निर्वृता भव । इत्याश्वास्य स तां भीमभटो निरगमत्ततः ॥
तावच्च तत्र बुद्ध्वा तत्पौराः सर्वे व्यचिन्तयन् । अनौचित्यं परं राज्ञा कृतं भीमभटस्य तु ॥
नैवास्य राज्यं समरभटो हर्तुं प्रगल्भते । तदेष पूर्वसेवायाः कालो भीमभटस्य नः ॥
इति निश्चित्य गुप्तं ते पौरा भीमभटं धनैः । तथापुष्यन्यथा सोऽत्र तस्थौ भृत्यैः समं सुखम् ॥
कनिष्ठः स तु तस्यासीद्वधमेव निरूपयन् । पितुः परिच्छदकृतः परिकल्प्य तदाशयम् ॥
तावच्च शङ्खदत्ताख्यो विप्रः शूरो युवा धनी । द्वयोर्वयस्यः समरभटमेत्य तमब्रवीत् ॥
भ्रात्रा वैरं न युक्तं ते नैष धर्मो न च त्वया । ज्यायान्स बाधितुं शक्यः स्यादकीर्तिः परं तव ॥
इति ब्रुवन्नधिक्षिप्य स तेन निरभर्त्स्यत । हितोपदेशो मूर्खस्य कोपायैव न शान्तये ॥
ततस्तत्कोपतो गत्वा धीरस्तद्विजिगीषया । शङ्खदत्तो व्यधादेकसख्यं भीमभटेन सः ॥
अथात्र मणिदत्ताख्यः कोऽपि देशान्तरागतः । आनीतवानश्वरत्नमेकमत्युत्तमं वणिक् ॥
शशाङ्कधवलं शुद्धशङ्खादिश्रव्यनिःस्वनम् । दुग्धाब्धेरिव कल्लोलजालमुच्छ्रितमुत्थितम् ॥

वमानैः समायुक्तचूडामण्यङ्गदादिभिः । गन्धर्वकुलसंभूतिसंसिद्धैरिव भूषितम् ॥ ७८
ख्यातं शङ्खदत्तेन तं च गत्वा हयोत्तमम् । क्रीणाति स्म धनैर्भीमभटस्तस्माद्वणिग्वरात् ॥ ७९
क्षणं चात्र समरभटो बुद्ध्वा तदैत्य सः । मूल्येन द्विगुणेनाश्वं वणिजो मार्गति स्म तम् ॥ ८०
तत्रीकृतं तं च तस्मै नादाद्वणिग्यदा । तदा सोऽश्वं बलान्नेतुं तं प्रावर्तत मत्सरात् ॥ ८१
ोभयोस्तयो राजपुत्रयोः शस्त्रपाणिषु । भृत्येषु धावितेष्वत्र समभूद्युद्धमुद्धतम् ॥ ८२
। भीमभटोच्चण्डदोर्दण्डनिहतानुगः । त्यक्त्वा हयं स समरभटोऽभज्यत तद्भयात् ॥ ८३
य्यमानं च धावित्वा केशेष्वाकृष्य पृष्ठतः । निहन्ति शङ्खदत्तस्तं यावन्मन्युभराकुलः ॥ ८४
वद्भीमभटः पश्चादुपेत्यैनं न्यवारयत् । आस्तां संप्रति तातस्य दुःखमेवं भवेदिति ॥ ८५
ः स शङ्खदत्तेन मुक्तो रक्तं व्रणैर्वमन् । त्रस्तः पलाय्य समरभटः पार्श्वमगात्पितुः ॥ ८६
ोऽत्र स्वीकृताश्वं तं वीरं भीमभटं क्षणात् । उपेत्य ब्राह्मणः कश्चिन्नीत्वा विजनमब्रवीत् ॥ ८७
ता मनोरमा देवी यजुःस्वामी पुरोहितः । पितृमन्त्री स सुमतिस्त्वामिदं ब्रुवतेऽधुना ॥ ८८
नासि यादृशो वत्स राजा त्वयि विशेषतः । अस्मिन्व्यतिकरे वृत्ते शत्रुतामेव ते गतः ॥ ८९
ात्मानं च धर्मं च यशश्च यदि रक्षसि । आयतिं यदि जानासि यद्यस्मान्मन्यसे हितान् ॥ ९०
र्कोऽस्तं गतो यावदितस्तावदलक्षितः । निर्गत्य सांप्रतं सिद्ध्यै मातामहगृहं व्रज ॥ ९१
ते संदिष्टवद्भिश्च सद्रत्नस्वर्णपूरितम् । तैरिदं प्रेषितं भाण्डं मद्धस्तेन च गृह्यताम् ॥ ९२
त्तस्माद्द्विजाच्छ्रुत्वा स तथेत्यभिनन्द्य च । सुधीस्तत्स्वर्णसद्रत्नभाण्डं भीमभटोऽग्रहीत् ॥ ९३
त्वा च प्रतिसंदेशमनुरूपं विसृज्य तम् । द्विजं कृपाणपाणिस्तमारूढोऽभूत्तुरङ्गमम् ॥ ९४
ीतहेमरत्नेन द्वितीयाश्वाधिरोहिणा । सहितः शङ्खदत्तेन सोऽथ प्रस्थितवांस्ततः ॥ ९५
ं व्यतीत्य चाध्वानं निशीथे स नृपात्मजः । प्रापद्भीमभटो मार्गमध्ये शरवणं महत् ॥ ९६
त्रानवरतं तस्य सवयस्यस्य गच्छतः । पतद्वाजिखुरक्षुण्णशरशब्दप्रबोधितम् ॥ ९७
त्थाय सिंहमिथुनमुद्गर्जत्पोतकैः सह । अपाटयत्तौ तुरगौ नखैरुदरयोरधः ॥ ९८
द्वितीयश्च तान्सर्वान्सिंहान्वीरः स तत्क्षणम् । खड्गप्रहारलूनाङ्गानकरोद्गतजीवितान् ॥ ९९
मित्रोऽप्यवरुह्याथ तुरगौ यावदीक्षते । तावद्विगलितान्त्रौ तौ भूमावपततामुभौ ॥ १००
दृष्ट्वा स विषण्णस्तं शङ्खदत्तमभाषत । सखे विरुद्धात्स्वजनाद्वयं यत्नात्पलायिताः ॥ १०१
हि यत्नशतेनापि क्व पलायामहे विधेः । येनेहापि हताः स्मोऽद्य वाहमात्रासहिष्णुना ॥ १०२
त्कृते विहितो देशत्यागः सोऽपि हयो मृतः । तदस्माभिः कथं पद्भ्यां गम्येयमटवी निशि ॥ १०३
युक्तस्तेन स सुहृच्छङ्खदत्तस्तमब्रवीत् । नैतन्नवं जयति यत्पौरुषं विधुरो विधिः ॥ १०४
ासर्ग एव तस्यायं धैर्येण तु स जीयते । वातोऽद्रेरिव किं कुर्याद्धीरस्याकम्पितस्य सः ॥ १०५
देह्यारूढधैर्याश्वौ व्रजावोऽत्रेति वादिना । शङ्खदत्तेन स समं प्रायाद्भीमभटस्ततः ॥ १०६
यतिक्रान्तस्य शनकैः कान्तारमथ तस्य तत् । शरपाटितपादस्य शर्वरी पर्यहीयत ॥ १०७
दितेऽथ जगद्दीपे भानौ नैशतमोमुषि । मार्गाब्जिनीसरोजेषु मधुरक्वणितालिषु ॥ १०८
दृष्ट्वा सिंहादिसंकीर्णा तीर्णोऽयमटवीमिमाम् । जल्पत्स्विवोत्फुल्लमुखेष्वन्योन्यमवलोक्य तम् ॥ १०९
्मेण गच्छन्नुटजैः समकीर्णं तपस्विनाम् । पुलिनं जह्नुकन्यायाः प्रापत्स सवयस्यकः ॥ ११०
त्र शार्वशिरोवासलग्नचन्द्रामृतैरिव । तज्जलैः स्वादुभिः शीतैः स्नातो विश्राम्यति स्म सः ॥ १११
याधान्मार्गागतात्क्रीतैर्भृष्टैश्च हरिणामिषैः । शङ्खदत्तोपनीतैश्च देहवृत्तिं व्यधत्त सः ॥ ११२
त्तरीतुमशक्यां च पूर्णामालोक्य जाह्नवीम् । तरङ्गहस्तैरसकृद्वारयन्तीमिवोच्छ्रितैः ॥ ११३
स्याः कूलेन स ततो गत्वा ब्राह्मणपुत्रकम् । स्वाध्यायासक्तमद्राक्षीद्द्विजनस्योटजाङ्गणे ॥ ११४
पेत्य तमपृच्छच्च कस्त्वं किमिह निर्जने । एकाक्येव करोषीति ततः सोऽप्येनमभ्यधात् ॥ ११५
हं वाराणसीवासी श्रीकण्ठाख्यद्विजात्मजः । नीलकण्ठाभिधः पित्रा कृतसंस्कारपद्धतिः ॥ ११६

सोऽहं गुरुकुलाधीतविद्यो बाल्ये निजं गृहम् । उपैमि यावत्तावन्मे विनष्टाः सर्वबान्धवाः ॥
तेनानाथोऽर्थहीनश्च गार्हस्थ्यासिद्धिदुःस्थितः । निर्विण्णोऽहमिहागत्य तपस्तीव्रमशिश्रियम् ॥
ततः स्वप्नेऽब्रवीद्देवी गङ्गा दत्त्वा फलानि मे । एतानि खादंस्तिष्ठेह यावत्प्राप्स्यसि वाञ्छितम् ॥
एतच्छ्रुत्वा प्रबुद्ध्यैव गत्वा स्नात्वा निशाक्षये । प्राप्तं फलानि गङ्गायामागतानि जलान्तरे ॥
तान्यानीयामृतस्वादून्युटजेऽहं च भुक्तवान् । एवं तान्यन्वहं प्राप्तान्यश्नन्नहमिह स्थितः ॥
इति तेनोदिते शङ्खदत्तं भीमभटोऽब्रवीत् । अस्मै गार्हस्थ्यपर्याप्तं ददामि गुणिने धनम् ॥
तच्छ्रुत्वा श्रद्धितवचास्तेन राजसुतोऽथ सः । मात्रा निसृष्टं तद्द्रव्यमदात्तस्मै द्विजन्मने ॥
अलुप्तसत्त्वकोषाणां महत्त्वं महतां हि किम् । आकर्णितां परस्यार्तिं न चेच्छिन्दन्ति तत्क्षणम् ॥
कृतार्थीकृत्य तं विप्रं ततो गत्वा स सर्वतः । चिन्वन्नुत्तरणोपायं गङ्गाया नाप्तवान्यदा ॥
तदा भीमभटो मूर्धनिबद्धासिविभूषणः । शङ्खदत्तयुतो दोर्भ्यां तरीतुं तामवातरत् ॥
मध्यभागे च वार्योघदूरीकृतवयस्यकः । कथंचित्तीर्णवान्पारं ह्रियमाणः स वीचिभिः ॥
पारं प्राप्तस्य मित्रं तं शङ्खदत्तमपश्यतः । अन्विष्यतश्चानुतटं तस्यास्तमगमद्रविः ॥
ततो निराशो हा मित्रेत्याक्रन्दन्नतिदुःखितः । गङ्गायां क्षेप्तुमात्मानमुद्यतोऽभून्निशागमे ॥
जीवितं मे सखा देवि जाह्नव्यपहृतस्त्वया । तच्छून्यं देहमप्येतं त्वं गृहाणाधुना मम ॥
इत्युक्त्वा यावदात्मानं क्षेप्तुमिच्छति तत्र सः । तावदाविरभूत्साक्षाद्गङ्गा तस्याम्बुमध्यतः ॥
अब्रवीत्तीव्रसंवेगतुष्टा सा तं च तत्क्षणम् । मा पुत्र साहसं कार्षीः स ते जीवन्सखा स्थितः ॥
अचिरेण च संयोगस्तव तेन भविष्यति । प्रतिलोमानुलोमाख्यां विद्यां चैतां गृहाण मे ॥
अदृश्यः स्यात्परस्यैतामनुलोमां पठन्नरः । प्रतिलोमां पठन्कुर्यादिष्टरूपप्रकाशनम् ॥
एतत्प्रभावा विद्येयं यत्स सप्ताक्षरोम्भिता । एतत्प्रभावात्त्वं चास्यां पृथ्व्यां राजा भविष्यसि ॥
इत्युक्त्वा दत्तविद्या सा तिरोऽभूत्तस्य जाह्नवी । जातास्थः सखिलाभादौ मरणात्सोऽप्युपारमत् ॥
मित्रप्राप्त्युत्सुको नीत्वा कृच्छ्रात्पद्म इव क्षपाम् । प्रातर्भीमभटस्तं स चिन्वन्प्रस्थितवांस्ततः ॥
अथान्वेष्टुं क्रमादेतं शङ्खदत्तं परिभ्रमन् । देशं स लाटविषयं कदाचित्प्रापदेककः ॥
यत्रासंकीर्णवर्णोऽपि जनश्चित्रोज्ज्वलस्थितिः । निलयोऽपि कलानां यो न दोषाकरशब्दभाक् ॥
तत्रान्तर्नगरे देवकुलावासान्विलोकयन् । भ्रान्त्वा स द्यूतकाराणामेकां शालामवाप्तवान् ॥
तत्र प्रविश्य चापश्यत्कितवानक्षदेविनः । कटिकर्पटमात्रैकवसनानपि पेशलैः ॥
विभक्तैः पीवरैश्चाङ्गैर्भोगव्यायामसूचकैः । शंसतो गूढमैश्वर्यमर्थार्थाश्रिततत्कलम् ॥
कृतालापैश्च तैः साकं द्यूतमारभते स्म सः । अयं साभरणोऽस्माकं भक्ष्य इत्यात्तबुद्धिभिः ॥
ततस्तेन हृतं तेषां जित्वाक्षैरखिलं धनम् । धूर्तैर्यद्वञ्चयित्वान्यांस्तैरभूत्समुपार्जितम् ॥
हारितार्थांश्च कितवान्स्वगृहान्गन्तुमुद्यतान् । द्वारार्पितभुजो रुद्ध्वा स तान्भीमभटोऽब्रवीत् ॥
क्व गच्छथेदं गृह्णीत धनं किममुना मम । मयैतद्देयमिष्टेभ्यो यूयं चेष्टा न किं मम ॥
भवद्भिः सदृशानिष्टान्सखीन्प्राप्नोम्यहं कुतः । इति तस्मिन्वदत्येव तेष्वगृह्णत्सु च ह्रिया ॥
अक्षक्षपणको नाम तत्रैकः कितवोऽब्रवीत् । तद्द्यूतपरिभाषैषा हारितं यन्न दीयते ॥
तथाप्येष सुहृद्भूत्वा यद्यस्मभ्यं प्रयच्छति । स्वेच्छया जितमप्यर्थं तद्गृह्णीमो वयं न किम् ॥
तच्छ्रुत्वा तेऽब्रुवन्नन्ये सख्यं चेदेष शाश्वतम् । तादृशं कुरुतेऽस्माभिस्तदैतदुपपद्यते ॥
एवमुक्तवतस्तान्स मत्वा वीरांस्तथेति तैः । व्यधाद्भीमभटः सख्यमदात्तेभ्यश्च तद्धनम् ॥
तदर्थितश्च तैः साकमुद्याने सकुटुम्बकैः । गत्वा भोजनपानाद्यैर्व्यहरत्तदुपाहृतैः ॥
ततोऽक्षक्षपणाद्यैस्तैः पृष्टस्तेभ्यो ब्रवीन्निजम् । स वंशनामवृत्तान्तमपृच्छच्च तथैव तान् ॥
अथैवमक्षक्षपणस्तस्मै स्वोदन्तमभ्यधात् । शिवदत्ताभिधानोऽभूद्ब्राह्मणो हस्तिनापुरे ॥
तस्याहं वसुदत्ताख्यो महाधनवतः सुतः । बाल्ये मया शस्त्रविद्या वेदविद्याश्च शिक्षिताः ॥

तो विवाहः पित्रा मे विहितः सद्वशात्कुलात् । माता तु मे महारौद्रा दुराराध्यातिकोपना ॥ १५६
या चोद्वेजितोऽत्यर्थं दृष्ट्वा मां सपरिग्रहम् । पिता मे स्वगृहं त्यक्त्वा स गतः क्वाप्यतर्कितः ॥ १५७
दृष्ट्वा सभयोऽम्बायाश्चित्तग्रहविधावहम् । यत्नान्नियुक्तवान्भार्यां सापि भीता तथाकरोत् ॥ १५८
म्बा तु तस्या नातुष्यत्कथंचित्कलहोद्यता । तूष्णींस्थानमवज्ञानं दैन्यालापं च कैतवम् ॥ १५९
त्यायनं विवादं च मन्यमाना दुराशया । को हि त्याजयितुं शक्तो वह्नेः स्वां दहनात्मताम् ॥ १६०
तस्तस्या विरुद्धैस्तैश्चेष्टितैः सा ममाचिरात् । खिन्ना भार्यापि निर्गत्य न जाने क्व गता गृहात् ॥ १६१
थोद्विग्नो गृहं त्यक्तुमना अपि बलादहम् । मिलित्वा बन्धुभिः पापैर्विवाहं कारितो परम् ॥ १६२
ापि भार्या मम तया तथा संतापिताम्बया । उद्बध्य पाशेनात्मानं व्यापादितवती यथा ॥ १६३
तोऽहं नितरां खिन्नो विदेशं गन्तुमुद्यतः । निवारयद्भ्यो बन्धुभ्योऽवर्णयं मातृदुष्टताम् ॥ १६४
पेतृप्रवासनादौ मे कारणान्तरवादिनाम् । तेषां यत्प्रत्ययो नाभूत्तद्युक्त्या दारुपुत्रिका ॥ १६५
ारयित्वा मयैकान्ते परिणीता मृषा पुनः । आनीय स्थापिता चान्तर्गृहेऽन्यत्रार्पितार्गले ॥ १६६
क्षिकैका कृता चास्या नारी कर्मकरीनिभा । मयैषा नूतना भार्या स्थापितैव पृथग्गृहे ॥ १६७
वं चाहं चाधुनात्रैव स्वगृहे पृथगास्महे । न गन्तव्यं त्वया तत्र नागन्तव्यमितस्तया ॥ १६८
ाराधनं तवाप्रौढा न सा वेत्ति हि संप्रति । इत्यम्बामब्रवं चाहमन्वमन्यत सापि तत् ॥ १६९
तो दिनेषु यातेषु यदा तां कपटस्नुषाम् । न कथंचिदपि प्रापत्सार्गलेऽन्तर्गृहे स्थिताम् ॥ १७०
दाश्मना सा मूर्धानमाहत्य स्वयमेकदा । तारमाक्रन्दति स्माम्बा रक्ताक्ता स्वगृहाङ्गणे ॥ १७१
ुत्वाक्रन्दं प्रविष्टेन मया सर्वैश्च बान्धवैः । दृष्ट्वा किमेतद्ब्रूहीति पृष्टा सासूयमभ्यधात् ॥ १७२
ईदृशी स्नुषयागत्य विनाहेतुः कृता मम । अवस्था तदिदानीं मे मरणेनैव निष्कृतिः ॥ १७३
च्छ्रुत्वैव सकोपास्ते तां सहादाय बान्धवाः । तत्रागच्छन्मया सार्कं यत्र सा दारुपुत्रिका ॥ १७४
अपास्यार्गलमुद्धाट्य द्वारं यावद्विशन्ति ते । तावत्काष्ठमयीं नारीमपश्यंस्तत्र केवलाम् ॥ १७५
ततो विडम्बितात्मानं हसन्तोऽम्बां विलक्षिताम् । उत्पन्नप्रत्यया याता बान्धवास्ते यथागतम् ॥ १७६
अहं च त्यक्तदेशो भ्राम्यन्निममवाप्तवान् । प्रदेशमिह च द्यूतशालां दैवात्किलाविशम् ॥ १७७
अत्रैतानहमद्राक्षं पञ्चाक्षैर्दीव्यतो जनान् । इमं चण्डभुजंगाख्यमेतं पांसुपटं तथा ॥ १७८
अमुं श्मशानवेतालमिमं कालवराटकम् । शारिप्रस्तरमेतं च शूरांस्तुल्यपराक्रमान् ॥ १७९
एतैः समं च द्यूतेन तत्र क्रीडितवानहम् । दासः स्याद्विजितो जेतुरिति बद्ध्वा मिथः पणम् ॥ १८०
ततो द्यूतेन विजिता मम दास्यमिमे गताः । अहं गुणैर्जितस्त्वेषां दासतामागतः स्वयम् ॥ १८१
एभिः समं च वसतः स्वदुःखं विस्मृतं मम । नाम्नावस्थोचितेनात्र विद्धक्षक्षपणं च माम् ॥ १८२
इत्यहं सत्कुलोत्पन्नैरिहैवं गूहितात्मभिः । एतैः सह स्थितः पुण्यैस्त्वं चाद्य मिलितोऽत्र नः ॥ १८३
तदिदानीं त्वमस्माकं प्रभुः प्रागेव चैतया । बुद्ध्या तवात्तमस्माभिस्तद्धनं गुणरागिभिः ॥ १८४
इत्यक्षक्षपणेनोक्ते स्ववृत्तान्ते क्रमेण ते । सर्वे भीमभटायान्येऽप्युदन्तान्स्वानवर्णयन् ॥ १८५
ततोऽर्थार्थमुपात्ताभिः कलाभिश्छादितात्मनः । प्रवीरांस्तान्सखीन्मत्वा कृत्वान्या विविधाः कथाः ॥ १८६
नीत्वा विहारेण दिनं दृष्ट्वा पौरंदरीं दिशम् । उद्भासमानशीतांशुतिलकालंकृताननाम् ॥ १८७
अगाद्भीमभटस्तस्मादुद्यानात्स नृपात्मजः । अक्षक्षपणकाद्यैस्तैः षड्भिः सह तदास्पदम् ॥ १८८
तैः समं तिष्ठतश्चात्र तस्य प्रावृडुपागमत् । शंसन्तीव सुहृत्प्राप्तिं प्रवृष्टघनगर्जितैः ॥ १८९
तदा चात्र विपाशाख्या नदी मत्ता समुद्रगा । प्रतीपवाहिनी जाता सागरौघेण पूरिता ॥ १९०
समापूर्य महावारिपूरेण पुलिनं च सा । ओघप्रशान्तावम्भोधिसंमुखीव जगाम सा ॥ १९१
तस्मिन्कालेऽत्र चानीय क्षिप्रस्तेनौघवारिणा । महामत्स्यो गरीयस्त्वाद्यासक्तोऽभून्नदीतटे ॥ १९२
दृष्ट्वा च तं प्रधाव्यैव निहन्तुं विविधायुधैः । तत्रत्याः पाटयामासुर्जनास्तस्योदरं तिमेः ॥ १९३
पाटितान्निरगाच्चात्र तस्माज्जीवन्युवा द्विजः । तद्दर्शनाद्भुतात्तत्र लोकः कोलाहलं व्यधात् ॥ १९४

तच्छ्रुत्वा सह मित्रैस्तैर्गतो भीमभटोऽत्र सः। अपश्यच्छङ्खदत्तं तं मित्रं मत्स्याद्विनिर्गतम्।
समाश्लिषच्च धावित्वा सिञ्चन्धाराश्रुभिः स तम्। मीनोदरदरीवासविस्रं प्रक्षालयन्निव ॥
सोऽपि तद्विपदुत्तीर्णः प्राप्य तं परिरभ्य च। सुहृदं शङ्खदत्तोऽगादुत्सवादुत्सवं तदा ॥
ततो भीमभटेनात्र तेन पृष्टः स कौतुकात्। शङ्खदत्तः स्ववृत्तान्तं संक्षेपादेवमब्रवीत् ॥
तदा गङ्गोर्मिवेगेन हृतस्त्वदृष्टिगोचरात्। अशङ्कितं निगीर्णोऽस्मि मत्स्येनातिमहीयसा ॥
तस्योदरमहावेश्मप्रविष्टोऽहं ततश्चिरम्। अतिष्ठं छुरिकोत्कृत्तं तन्मांसं भक्षयन्क्षुधा ॥
अद्य सोऽयमिहानीय धात्रा क्षिप्तः कथंचन। मत्स्यो हतो जनैरेभिः कृष्टश्चास्योदरादहम्।
दृष्टो मया त्वमर्कश्च प्रकाशं मे गता दिशः। एष मे मित्र वृत्तान्तो वेद्मि नाहमतः परम्
इत्युक्तः शङ्खदत्तेन तेन भीमभटश्च सः। अन्ये च सर्वे तत्रस्था विस्मयादेवमब्रुवन् ॥
क्व गङ्गायां निगरणं मत्स्येनाब्धौ क्व तद्गतिः। क्व च तद्वर्त्मना तस्य विपाशायां निवेशनम्
क्व वधस्तस्य तस्माच्च जीवतः कास्य निर्गमः। अहो विधेरचिन्त्यैव गतिरद्भुतकर्मणः ॥
इत्यादि तैः सह वदन्नक्षक्षपणकादिभिः। अनयच्छङ्खदत्तं स धाम भीमभटो निजम् ॥
तत्र चोपाचरत्स्नानवस्त्राद्यैस्तं स सोत्सवः। तेनैव वपुषा जातमिव मत्स्योदरात्पुनः ॥
ततस्तेन समं देशे तस्मिन्भीमभटे स्थिते। आगाद्यात्रोत्सवस्तत्र नागराजस्य वासुकेः ॥
तद्दर्शनाय स प्रायाद्राजपुत्रः सुहृद्वृतः। मिलन्महाजनं तस्य नागमुख्यस्य केतनम् ॥
तत्र प्रणम्य तन्मूर्तिं प्रासादे माल्यदामभिः। भृते भोगिगणाकारैः पातालोदकसंनिभे ॥
गत्वा दक्षिणतोऽपश्यन्महान्तं तस्य स ह्रदम्। फणारत्नप्रभापुञ्जैरिव रक्ताम्बुजैश्चितम् ॥
विषाग्निधूमपटलैरिव नीलोत्पलैर्भृतम्। वृतं वातपतत्पुष्पैरर्चद्भिरिव पादपैः ॥
स्वल्पः समुद्रोऽमुद्रस्य पुरोऽस्य प्रतिभाति मे। अनन्यहारिश्रीकस्य हृतश्रीकः स शौरिण
इति यावच्च तं दृष्ट्वा स चिन्तयति विस्मितः। तावत्स्नानार्थमायातामद्राक्षीत्तत्र कन्यका
राज्ञो लाटेश्वरस्यात्र चन्द्रादित्यस्य पुत्रिकाम्। जातां कुवलयावल्यां नाम्ना हंसावलीं शुभ
अङ्गैरपह्नुतोऽप्यन्यैर्यस्या दिव्यानुकारिभिः। चक्षुषा चपलेनोक्तो मर्त्यभावो निमेषतः ॥
सा पुष्पपेलववपुष्कोटिप्राप्तस्फुरद्भ्रुणा। मुष्टिग्राह्येण मध्येन मान्मथीव धनुर्लता ॥
दृष्ट्वैव तिर्यग्वलितैरपि लोचनसायकैः। अमोहयद्भीमभटं हृदि निर्भिद्य तं तदा ॥
सोऽपि तस्याः प्रविश्यैव तिर्यङ् नयनवर्त्मना। हृत्कोषमहरद्धैर्यं जगत्सौन्दर्यतस्करः ॥
ततो गुप्तविसृष्टाप्तदक्षचेटीमुखेन सा। अन्विष्यति स्म मित्रेभ्यस्तस्य नामास्पदादिकम्।
अथागात्सा परिजनैर्नीयमाना स्वमन्दिरम्। स्नाता विवर्तितमुखी मुहुस्तद्गतया दृशा ॥
ततो भीमभटः सोऽपि स्वावासं सखिभिः सह। प्रत्यागात्तत्प्रियाप्रेमपाशबन्धस्खलद्गतिः
तत्र तस्मै क्षणाद्दूतीं तां चेटीं राजकन्यका। हंसावली सा व्यसृजद्दत्त्वा संदेशमीप्सित
साभ्युपेत्य तमाह स्म चेटी भीमभटं रहः। देव हंसावली राजसुता त्वामनुनाथति ॥
ह्रियमाणं स्मरौघेण दृष्ट्वा प्रणयिनं जनम्। इमं द्रुतमनादृत्य न युक्ता ते तटस्थता ॥
इति संप्राप्य दूतीतो दयितावचनामृतम्। लब्धजीवितहृष्टस्तां सोऽथ भीमभटोऽब्रवीत्
ओघस्थो न तटस्थोऽहमिति वेत्ति न किं प्रिया। तद्वचस्तु करिष्यामि कामं लब्धावलम्ब
एत्य संभावयिष्यामि नक्तमन्तःपुरेऽद्य ताम्। विद्याछन्नं विशन्तं च नहि द्रक्ष्यति कोऽ
इत्युक्त्वा तेन चेटी सा तुष्टा गत्वा शशंस तत्। हंसावल्यै ततः सापि तस्थौ तत्संगमोन
सोऽपि प्रदोषसमये दिव्याभरणभूषितः। गङ्गावितीर्णविद्याया आनुलोम्येन पाठतः ॥
अदृश्यीभूय गत्वा तत्तस्या अन्तःपुरोत्तमम्। समाविशद्भीमभटः प्राग्विविक्तीकृतं तया
रतिप्रीतिकरे तत्र कालागुरुसुगन्धिनि। दशार्धवर्णविन्यस्तपुष्पप्रकरशोभिते ॥
कामोद्याननिभे कान्तां तां वहद्दिव्यसौरभाम्। सोऽपश्यद्गाङ्गसद्विद्यावल्लीप्रसवसंनिभा

तिलोम्येन विद्यां च तां पठित्वा स दृश्यताम् । सहसा सुभगस्तस्या राजपुत्र्या गतोऽभवत् ॥ २३४
तं दृष्ट्वैव सानन्दपुलकोत्कम्पसाध्वसा । रणत्स्वाभरणातोद्येष्वनृत्यदिव तत्क्षणम् ॥ २३५
सीच्च कन्यकाभावलज्जया विनतानना । कर्तव्यमिव पृच्छन्ती हृदयं तत्प्रवृत्तिकृत् ॥ २३६
धे प्रकाशितस्यापि ह्रिया किं चेतसोऽधुना । निगूह्यते न तद्वस्तु कथमेष तु गूह्यते ॥ २३७
कोऽङ्गेषु किं चैतद्विदलत्संधि कञ्चुकम् । इत्यादिभिर्वचोभिस्तामन्यैश्च प्रणयक्रमैः ॥ २३८
धाय सुमुखीं मुक्तलज्जां भीमभटोऽथ ताम् । गान्धर्वोद्वाहविधिना भार्यां हंसावलीं व्यधात् ॥ २३९
त्वा तया समं रात्रिं तन्मुखाब्जालिलीलया । कृच्छ्रात्ताँ नक्तमेष्यामीत्यामन्त्र्यागात्स्वमास्पदम् ॥ २४०
च हंसावलीं तत्र प्रविष्टाः स्वमहत्तराः । प्रातरन्तःपुरेऽद्राक्षुर्युक्तां संभोगलक्षणैः ॥ २४१
लिताकलकेशान्तामार्द्रदन्तनखक्षताम् । साक्षात्स्मरशरश्रेणिव्रणव्याकुलितामिव ॥ २४२
त्वा च राज्ञे तत्पित्रे ते शशंसुस्तथैव तत् । सोऽपि तत्र व्यधाद्गुप्तं नक्तं चारानवेक्षितुम् ॥ २४३
ऽथ भीमभटो मित्रैः सहितश्च सुखं दिनम् । नीत्वा प्रदोषे भूयस्तत्प्रियान्तःपुरमागमत् ॥ २४४
लक्षितप्रविष्टं तं तत्र विद्याप्रभावतः । दृष्ट्वा संभाव्य सिद्धं च चारास्ते निर्ययुस्ततः ॥ २४५
त्वा च राज्ञे जगदुः सोऽपि तानेवमादिशत् । अदृश्यो यः प्रविष्टोऽत्र सुगुप्ते न स मानुषः ॥ २४६
त्तमानयतेहैव यावत्पश्यामि किं त्विदम् । ब्रूत चापरुषं यूयमेवं मद्वचनेन तम् ॥ २४७
कटं प्रार्थिता मत्तः किं न मत्तनया त्वया । रहस्यं किं कृतं त्वादृग्गुणवान्हि वरः कुतः ॥ २४८
त्युक्त्वा प्रेषिता राज्ञा गत्वा चारास्तथैव ते । द्वारस्था एव तद्वाक्यमाहुर्भीमभटाय तत् ॥ २४९
ोऽपि ज्ञातोऽस्मि राज्ञेति बुद्ध्वाप्यभ्यन्तरस्थितः । सुधीरो राजपुत्रस्तान्प्रसह्य प्रत्यभाषत ॥ २५०
द्वाक्याद्ब्रूत राजानं प्रातरास्थानमेत्य ते । तत्त्वमावेदयिष्यामि रात्रिरन्धा हि संप्रति ॥ २५१
च्छ्रुत्वा तैर्गतैस्तद्वदुक्तस्तूष्णीमभून्नृपः । प्रातर्भीमभटः सोऽथ ततोऽयासीत्सखीन्प्रति ॥ २५२
श्च साकं कृतोद्दामवेषो धीरैः स सप्तभिः । आस्थानमगमत्तस्य चन्द्रादित्यस्य भूपतेः ॥ २५३
त्तेजोवैर्यसौन्दर्यदर्शिना तेन सत्कृते । निजोचितासनासीने तस्मिन्भीमभटे द्विजः ॥ २५४
ा तत्सखा शङ्खदत्तो राजानं तमभाषत । राजन्नुग्रभटस्यायं राज्ञो राढापतेः सुतः ॥ २५५
ातर्क्यविद्यामाहात्म्याद्दुरतिक्रमविक्रमः । नाम्ना भीमभटो युष्मत्सुताहेतोरिहागतः ॥ २५६
च्छ्रुत्वा रात्रिवृत्तान्तं स्मरन्योग्यमवेक्ष्य तम् । हन्त धन्याः स्म इत्युक्त्वा राजा श्रद्धितवांस्ततः ॥ २५७
ादाच्च रचितोद्वाहविभवप्रक्रियोऽथ ताम् । सुतां हंसावलीं भीमभटाय विभवोत्तरम् ॥ २५८
ततो भीमभटो भूरिहस्त्यश्वग्रामलाभवान् । हंसावल्या च लक्ष्म्या च सहासीत्तत्र निर्वृतः ॥ २५९
दिनैश्च तस्मै श्वशुरो लाटराज्यं समर्प्य तत् । चन्द्रादित्यः स वृद्धः सन्नपुत्रः प्राव्रजद्वनम् ॥ २६०
अथ भीमभटः प्राप्य तद्राज्यमशिषत्कृती । सम्यक्तैः सप्तभिर्वीरैः शङ्खदत्तादिभिः सह ॥ २६१
गतेष्वथ दिनेष्वत्र चारेभ्यो जातु सोऽशृणोत् । प्रयागमेत्य पितरं मृतमुग्रभटं नृपम् ॥ २६२
अभिषिक्तं च तेन स्वे राढाराज्ये मुमूर्षता । पुत्रं कनिष्ठं समरभटं तं नर्तकीसुतम् ॥ २६३
ततोऽनुशोच्य पितरं कृत्वा तस्यौर्ध्वदैहिकम् । तस्मै स दूतं समरभटाय प्राहिणोन्नृपः ॥ २६४
तातसिंहासने मूर्ख नर्तकीपुत्र का तव । योग्यता मम तत्स्वं हि लाटराज्येऽत्र सत्यपि ॥ २६५
अतस्त्वयाधिरोढव्यं न तस्मिन्निति तस्य च । संदिष्टवान्स लेखेन दायादस्यापकारिणः ॥ २६६
स च दूतो द्रुतं गत्वा लेखं तस्मै समर्पयत् । आवेदितात्मा समरभटायास्थानवर्तिने ॥ २६७
सोऽपि तं तादृशं भीमभटनामाङ्कमुद्धतम् । वाचयित्वैव समरभटः क्रुद्धोऽभ्यभाषत ॥ २६८
अयोग्य इति पित्रा यो देशान्निर्वासितः पुरा । तस्यैषा दुर्विनीतस्य युक्ता मिथ्याभिमानिता ॥ २६९
सिंहायते सृगालोऽपि स्वगुहागृहसंस्थितः । सिंहस्य दर्शनं प्राप्तो ज्ञायते स तु तादृशः ॥ २७०
इत्याद्युद्रूक्ष्य लेखेन संदिश्य च तथैव तत् । सोऽपि भीमभटाय स्वं प्रतिदूतं विसृष्टवान् ॥ २७१
प्रतिदूतोऽपि गत्वा स लाटदेशेश्वराय तम् । तस्मै भीमभटायाद्राक्लेखं क्षत्तृनिवेदितः ॥ २७२

सोऽथ भीमभटस्तस्मिंल्लेखे तत्रानुवाचिते। मुक्ताट्टहासो दायादप्रतिदूतं तमभ्यधात्॥
गच्छ रे दूत मद्वाक्याद्ब्रूहि तं नर्तकीसुतम्। अश्वग्रहे शङ्खदत्ताद्रक्षितोऽसि मया तदा॥
बालस्तातप्रियश्चेति क्षमिष्ये न पुनः पुनः। निश्चितं त्वां प्रहेष्यामि वत्सलस्यान्तिकं पितुः॥
सज्जो भव दिनैरेव जानीहि प्राप्तमत्र माम्। इत्युक्त्वा प्रेष्य दूतं तं यात्रां भीमभटो व्यधात्॥
तस्मिन्गजाद्रिमारूढे राजेन्द्रावुदयोज्ज्वले। क्षुभ्यन्नुदचलद्दृद्धनादः सैन्यमहाम्बुधिः॥
समापूर्यन्त चासंख्यैरुपसंख्यामुपस्थितैः। सामन्तै राजपुत्रैश्च प्रस्थितैः सबलैर्दिशः॥
साकम्पा संपतद्भूरिगजवाजिजवाकुला। भराद्विदलनत्रासादिव रौति स्म मेदिनी॥
एवं भीमभटो गत्वा स राढाभ्यर्णमाप्तवान्। कुर्वन्सेनारजोराजिमुषितार्कप्रभं नभः॥
तावच्च सोऽपि समरभटो बुद्ध्वा नृपोऽक्षमी। संनह्य सेनया तस्य निरगाद्योद्धुमग्रतः॥
मिलतः स्म च तौ सैन्यजलधी पूर्वपश्चिमौ। प्रावर्तत च शूराणामाहवप्रलयो महान्॥
सशब्दखड्गसंपातजन्मा तत्रानलो नभः। कुप्यत्कृतान्तदन्ताग्रदलनोत्थ इवावृणोत्॥
वहन्ति स्म च नाराचास्तीक्ष्णाग्रायतपक्ष्मलाः। वीरावलोकिनाकस्त्रीलोचनापातविभ्रमाः॥
ततो रेणुवितानां सा सैन्यनिर्घोषवादिता। नृत्यत्कबन्धा व्यरुचत्सङ्ग्रामाङ्गणरङ्गभूः॥
करङ्कवाहिनी चात्र प्रमत्ता मुण्डमालिनी। अहरत्कालरात्रीव जन्तुचक्रमसृङ्नदी॥
क्षणाच्च शङ्खदत्तेन तेनाक्षक्षपणेन च। तैश्च चण्डभुजंगाद्यैर्बाहुयुद्धविशारदैः॥
समं महाबलैः शूरैर्दुर्मदैर्द्विरदैरिव। स तद्भीमभटोऽभाङ्क्षीत्परसैन्यं धनुर्धरः॥
भग्ने च सैन्ये समरभटः सोऽथ रथस्थितः। प्रधाव्यारभत क्रुद्धो रणाब्धौ मन्दरायितम्॥
ततो भीमभटस्तस्य वारणस्थोऽभिपत्य सः। धनुश्छित्त्वावधीद्बाणैश्चतुरोऽपि रथे हयान्॥
विरथोऽप्यथ धावित्वा तोमरेण गजोत्तमम्। हन्ति स्म कुम्भे समरभटो भीमभटस्य सः॥
स च तत्तोमरहतो गजस्तस्यापतद्भुवि। ततस्तौ विरथौ द्वावप्यभूतां पादचारिणौ॥
गृहीतचर्मखड्गौ च पदाती एव तौ तदा। द्वन्द्वयुद्धेन नृपती अयुध्येताममर्षणौ॥
विद्यावशाददृश्यत्वं कृत्वा शक्तोऽपि तद्वधे। धर्मापेक्षी न तं शत्रुं तथा भीमभटोऽवधीत्॥
प्रसह्य युध्यमानस्तु तस्य मूर्धानमच्छिनत्। खड्गेन खड्गयुद्धज्ञो नर्तकीतनयस्य सः॥
हते च तस्मिन्समरभटे सम्यक्ससैनिके। प्रवृत्ते साधुवादे च गगनात्सिद्धचारणैः॥
गते समाप्तिं सङ्ग्रामे बन्दिमागधसंस्तुतः। राढापुरीं भीमभटः प्राविशत्सखिभिः सह॥
चिरप्रवासोपयातो हतारिस्तत्र मातरम्। स राम इव कौशल्यां दर्शनोत्कामनन्दयत्॥
पौराभिनन्दितश्चाथ कृती सिंहासने पितुः। उपाविशत्तत्सचिवैः पूज्यमानो गुणप्रियैः॥
संमान्य प्रकृतीः कृत्स्नास्ततश्च विहितोत्सवः। शुभेऽह्नि शङ्खदत्ताय लाटराज्यं स दत्तवान्॥
तं प्रेष्य लाटविषयं तद्देशजबलान्वितम्। तेभ्योऽक्षक्षपणादिभ्यो ददौ ग्रामान्वसूनि च॥
तैर्युक्तोऽथ स तत्रासीत्प्रशासन्पैतृकं पदम्। लाटेन्द्रसुतया देव्या हंसावल्या तया सह॥
क्रमाच्च जित्वा पृथिवीमाहृत्य नृपकन्यकाः। तत्संभोगैकसक्तोऽभूत्सोऽथ भीमभटो नृपः॥
मन्त्रिषु न्यस्तभारश्च क्रीडन्नन्तःपुरैः सह। अभ्यन्तरान्न निरगात्पानादिव्यसनेन सः॥
अथैकदा मुनिर्द्रष्टुं तमुत्तङ्को यदृच्छया। पूर्वशर्वसमादेशपाककाल इवागमत्॥
द्वारं प्राप्ते मुनौ चास्मिन्द्वाःस्थेष्वावेदयत्सु च। राजा रागमदैश्वर्यदर्पान्धो न किलाशृणोत्॥
ततः क्रुद्धो मुनिः सोऽस्मै राज्ञे शापमदादिमम्। मदान्ध राज्याद्भ्रष्टस्त्वं वन्यो हस्ती भविष्यसि॥
तच्छ्रुत्वा स भयाद्भ्रष्टमदो निर्गत्य भूपतिः। दीनैः प्रासादयद्वाक्यैर्मुनिं तं चरणानतः॥
ततः स शान्तकोपः सन्महर्षिस्तमभाषत। भविष्यसि द्विपस्तावद्राजन्न स्यात्तदन्यथा॥
किं तु प्रचण्डशक्त्याख्यं नागशापावसादितम्। मृगाङ्कदत्तसचिवं चक्षुर्वैकल्यमागतम्॥
समाश्वास्यातिथीभूतं यदा तस्मै प्रवक्ष्यसि। स्ववृत्तान्तं तदैतस्मान्मोक्षं प्राप्स्यसि शापतः॥

ागिरिशादिष्टं गन्धर्वत्वमवाप्स्यसि । स चातिथिस्ते चक्षुष्मानेव संपद्यते तदा ॥ ३१२
ैव मुनिः प्रायादुक्तङ्कः स यथागतम् । सोऽपि भीमभटो हस्ती संपन्नो राज्यविच्युतः ॥ ३१३
मां गजीभूतं विद्धि भीमभटं सखे । स च प्रचण्डशक्तिस्त्वं जाने शापान्त एष मे ॥ ३१४
त्वा गजाकारं त्यक्त्वा भीमभटोऽत्र सः । तत्क्षणं दिव्यविभवो गन्धर्वः समपद्यत ॥ ३१५
शक्तिश्चोत्पन्नलोचनालोकनोत्सवः । तत्कालमेव संजज्ञे पश्यन्गन्धर्वमत्र तम् ॥ ३१६
वल्लीजालान्तः स्थितः श्रुत्वा तयोः कथाम् । सहितोऽन्यैः स सचिवैः सुहृढोत्पन्ननिश्चयः ॥ ३१७
दत्तः कालज्ञः प्रधाव्य रभसाद्भुतम् । प्रचण्डशक्तिं जग्राह कण्ठे तं निजमन्त्रिणम् ॥ ३१८
ाकाण्डसुधावर्षसिक्ताङ्ग इव वीक्ष्य तम् । प्रचण्डशक्तिः सहसा पादयोरग्रहीत्प्रभुम् ॥ ३१९
चिरविश्लिष्टसंश्लिष्टौ भृशदुःखितौ । स भीमभटगन्धर्वो रुदन्तौ पर्यसान्त्वयत् ॥ ३२०
दत्तोऽपि स तं गन्धर्वं प्रणतोऽब्रवीत् । यदस्माभिरयं लब्धः सखा यच्चामुना पुनः ॥ ३२१
ात्त्वमवाप्तं तत्त्वन्माहात्म्यान्नमोऽस्तु ते । श्रुत्वैतत्सोऽपि गन्धर्वो राजपुत्रमुवाच तम् ॥ ३२२
ात्सचिवाञ्शेषांल्लब्ध्वा कृत्स्नानवाप्स्यसि । तां शशाङ्कवतीं भार्यां साम्राज्यं च महीतले ॥ ३२३
। न कार्यं ते कल्याणिन्साधयाम्यहम् । तदा च संनिधास्ये ते यदा त्वं मां स्मरिष्यसि ॥ ३२४

इति स विगतशापः प्राप्तकल्याणतोषः प्रकटितसखिभावो राजपुत्रं तमुक्त्वा ।
प्रसभमुदपतद्द्यां चारुकेयूरहारक्वणितमुखरिताशोऽनन्यगन्धर्वधुर्यः ॥ ३२५

सोऽपि प्रचण्डशक्तिं प्राप्य वने तत्र मन्त्रिभिः सहितः ।
अनयन्मृगाङ्कदत्तो जातधृतिर्नृपसुतस्तदहः ॥ ३२६

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके सप्तमस्तरङ्गः ।

---

अष्टमस्तरङ्गः ।

## ( वेतालपञ्चविंशतिका । )

विघ्नजिता यस्य पुष्पवृष्टिरिवाम्बरात् । तारावली कराघातच्युता पतति नृत्यतः ॥ १
तिवाह्य रात्रिं तां प्रभाते काननात्ततः । प्रचण्डशक्तिप्रमुखैः प्रस्थितः सचिवैः सह ॥ २
शाङ्कवतीहेतोः पुनरुज्जयिनीं प्रति । मृगाङ्कदत्तः प्रययौ चिन्वञ्शेषान्स्वमन्त्रिणः ॥ ३
ता ददृशे तेन मार्गे विक्रमकेसरी । मन्त्री पुंसातिविकृतेनोह्यमानो नभस्तले ॥ ४
चान्यमन्त्रिभ्यो यावत्तेन स संभ्रमात् । तावत्स मन्त्री गगनात्तत्समीपेऽवतीर्णवान् ॥ ५
ह्य च तस्याशु पुंसः स्कन्धादुपेत्य सः । मृगाङ्कदत्तं जग्राह पादयोः साश्रुलोचनः ॥ ६
श्लिष्टश्च हृष्टेन तथा तन्मन्त्रिभिः क्रमात् । विससर्ज पुमांसं तं स्मृतोऽभ्येष्यसि मामिति ॥ ७
मृगाङ्कदत्तेन कौतुकादुपविश्य सः । पृष्टः स्वोदन्तमाचख्यौ वने विक्रमकेसरी ॥ ८
भवद्भ्यो विभ्रष्टो नागशापात्परिभ्रमन् । बहून्यहानि चिन्वानो युष्मानहमचिन्तयम् ॥ ९
ाम्युज्जयिनीं तत्र गन्तव्यं तैर्ध्रुवं यतः । एवं निश्चित्य च प्रायामहं तां नगरीं प्रति ॥ १०
तन्निकटं प्राप्य ग्रामं ब्रह्मस्थलाभिधम् । वापीतटेऽहमेकस्मिन्वृक्षमूल उपाविशम् ॥ ११
सर्पदंशार्तो वृद्धो मां ब्राह्मणोऽब्रवीत् । इत उत्तिष्ठ मा पुत्र मदीयां गतिमाप्स्यसि ॥ १२
त हि महासर्पो येन दष्टो रुजार्दितः । उद्यतोऽस्यां महावाप्यामेषोऽहं देहमुज्झितुम् ॥ १३
हवन्तं कृपया देहत्यागान्निवार्य तम् । तत्राकार्षमहं विप्रं निर्विषं विषविद्यया ॥ १४
स विप्रः साकूतमुदन्तं कृत्स्नमादरात् । पृष्ट्वा मां प्रीतिमानेवं विदितार्थोऽभ्यभाषत ॥ १५
स्त्वया मम प्रत्ता तत्प्रवीर गृहाण मे । वेतालसाधनं मन्त्रमिमं प्राप्तं मया पितुः ॥ १६
शामुपयुक्तोऽयं सिद्धिकृत्सत्त्वशालिनाम् । मादृशाः पुनरेतेन क्लीबाः किं नाम कुर्वते ॥ १७
ऋस्तेन तमहं प्रत्यवोचं द्विजोत्तमम् । मृगाङ्कदत्तवियुतो वेतालैः किं करोम्यहम् ॥ १८
त्वा स विहस्यैवं विप्रो मां पुनरब्रवीत् । किं न जानास्यभीष्टं यद्वेतालात्सर्वमाप्यते ॥ १९

अपि विद्याधरैश्वर्यं वेतालस्य प्रसादतः । किं त्रिविक्रमसेनेन न प्राप्तं भूभुजा पुरा ॥
तथा च कथयाम्येतां तदीयां ते कथां शृणु । प्रतिष्ठानाभिधानोऽस्ति देशो गोदावरीतटे ॥
तत्र विक्रमसेनस्य पुत्रः शक्रपराक्रमः । प्राक्त्रिविक्रमसेनाख्यः ख्यातकीर्तिरभून्नृपः ॥
तस्य प्रत्यहमास्थानगतस्योपेत्य भूपतेः । सेवार्थं क्षान्तिशीलाख्यो भिक्षुः फलमुपानयत् ॥
सोऽपि राजा तदादाय फलमासन्नवर्तिनः । हस्ते ददौ प्रतिदिनं कोषागाराधिकारिणः ॥
इत्थं गतेषु वर्षेषु दशस्वत्र किलैकदा । दत्त्वा राज्ञे फलं तस्मै भिक्षावास्थानतो गते ॥
स राजा तत्फलं प्रादात्प्रविष्टायात्र दैवतः । क्रीडामर्कटपोताय हस्तभ्रष्टाय रक्षिणाम् ॥
स मर्कटस्तदश्नाति यावत्तावत्फलात्ततः । विभिन्नमध्यान्निरगादनर्घं रत्नमुत्तमम् ॥
तद्दृष्ट्वादाय पप्रच्छ तं भाण्डागारिकं नृपः । भिक्षूपनीतानि मया यानि नित्यं फलानि ते ॥
हस्ते दत्तानि तानि क्व स्थापितानि सदा त्वया । तच्छ्रुत्वा तं स सभयः कोषाध्यक्षो व्यजिज्ञप
क्षिप्तानि तान्यनुद्धाट्य मया गञ्जे गवाक्षतः । यद्यादिशसि तद्देव तमुद्घाट्य गवेषये ॥
इत्यूचिवाननुमतो राज्ञा गत्वा क्षणेन सः । कोषाध्यक्षः समागत्य प्रभुं व्यज्ञापयत्पुनः ॥
शीर्णानि नात्र पश्यामि कोषे तानि फलान्यहम् । रत्नराशिं तु पश्यामि रश्मिज्वालाकुलं विभ
तच्छ्रुत्वा तान्मणीन्दत्त्वा तुष्टोऽस्मै कोषरक्षिणे । राजान्येद्युरपृच्छत्स भिक्षुं तं प्राग्वदागतम्
भिक्षो धनव्ययेनैवं सेवसे मां किमन्वहम् । नेदानीं ते ग्रहीष्यामि फलं यावन्न वक्ष्यसि ॥
इत्युक्तवन्तं राजानं भिक्षुस्तं विजनेऽब्रवीत् । वीरसाचिव्यसापेक्षं मन्त्रसाधनमस्ति मे ॥
तत्र वीरेन्द्र साहाय्यं क्रियमाणं त्वयार्थये । तच्छ्रुत्वा प्रतिपेदे तत्तथेत्यस्य स भूपतिः ॥
ततः स श्रमणस्तुष्टो नृपं पुनरुवाच तम् । तर्हि कृष्णचतुर्दश्यामागामिन्यां निशागमे ॥
इतो महाश्मशानान्तर्वटस्याधः स्थितस्य मे । आगन्तव्यं त्वया देव प्रतिपाल्यतोऽन्तिकम् ॥
बाढमेवं करिष्यामीत्युक्ते तेन महीभुजा । स क्षान्तिशीलः श्रमणो हृष्टः स्वनिलयं ययौ ॥
अथ तां स महासत्त्वः प्राप्य कृष्णचतुर्दशीम् । प्रार्थनां प्रतिपन्नां तां भिक्षोस्तस्य नृपः स्मरन्
प्रदोषे नीलवसनस्तमालकृतशेखरः । निर्ययौ राजधानीतः खड्गपाणिरलक्षितः ॥
ययौ च घोरनिबिडध्वान्तव्रातमलीमसम् । चितानलोग्रनयनज्वालादारुणदर्शनम् ॥
असंख्यनरकङ्कालकपालास्थिविशङ्कटम् । हृष्यत्संनिहितोत्तालभूतवेतालवेष्टितम् ॥
भैरवस्यापरं रूपमिव गम्भीरभीषणम् । स्फूर्जन्महाशिवारावं श्मशानं तदविह्वलः ॥
विचित्य चात्र तं प्राप्य भिक्षुं वटतरोरधः । कुर्वाणं मण्डलन्यासमुपसृत्य जगाद सः ॥
एषोऽहमागतो भिक्षो ब्रूहि किं करवाणि ते । तच्छ्रुत्वा स नृपं दृष्ट्वा हृष्टो भिक्षुरुवाच तम् ।
राजन्कृतः प्रसादश्चेत्तदितो दक्षिणामुखम् । गत्वा विदूरमेकाकी विद्यते शिंशपातरुः ॥
तस्मिन्नुलम्बितमृतः कोऽप्येकः पुरुषः स्थितः । तमिहानय गत्वा त्वं साहाय्यं कुरु वीर मे ॥
तच्छ्रुत्वैव तथेत्युक्त्वा स राजा सत्यसंगरः । दक्षिणां दिशमालम्ब्य प्रवीरः प्रययौ ततः ॥
आत्तदीप्रचितालातलक्षितेन पथात्र सः । गत्वा तमसि तं प्राप कथंचिच्छिंशपातरुम् ॥
तस्य स्कन्धे चिताधूमदग्धस्य क्रव्यगन्धिनः । सोऽपश्यल्लम्बमानं तं भूतस्येव शवं तरोः ॥
आरुह्य चात्र भूमौ तं छिन्नरज्जुमपातयत् । पतितश्चात्र सोऽकस्माच्चक्रन्द व्यथितो यथा ॥
ततोऽवरुह्य कृपया जीवाशङ्की स तस्य यत् । राजाङ्गं प्रामृशत्तेन सोऽट्टहासं व्यधाच्छवः ॥
ततः स राजा मत्वा तं वेतालाधिष्ठितं तदा । किं हससेहि गच्छाव इति यावदकम्पितः ॥
वक्ति तावन्न भूमौ सवेतालं शवमैक्षत । ऐक्षतात्रैव वृक्षे तु लम्बमानं स्थितं पुनः ॥
ततोऽधिरुह्य भूयोऽपि तमवातारयत्ततः । वज्रादपि हि वीराणां चित्तरत्नमखण्डितम् ॥
आरोप्य च सवेतालं स्कन्धे मौनेन तं शवम् । स त्रिविक्रमसेनोऽथ राजा गन्तुं प्रचक्रमे ॥
यान्तं च तं शवान्तःस्थो वेतालोंऽसस्थितोऽब्रवीत् । राजन्नध्वविनोदाय कथामाख्यामि ते शृ

(प्रथमो वेतालः।)

ास्ति वाराणसी नाम पुरारिवसतिः पुरी। स्थलीव कैलासगिरेर्या पुण्यजनसेविता ।। ५९
ारिवारिभृता शश्वदुपकण्ठनिवेशिनी। हारयष्टिरिवाभाति यस्याः स्वर्गतरङ्गिणी ।। ६०
तापानलनिर्दग्धविपक्षकुलकाननः। तस्यां प्रतापमुकुटो नाम राजाभवत्पुरा ।। ६१
स्याभूद्वज्रमुकुटस्तनयो रूपशौर्ययोः। कुर्वाणो दर्पदलनं स्मरस्यारिजनस्य च ।। ६२
ाजपुत्रस्य तस्यात्र मन्त्रिपुत्रो महामतिः। आसीद्बुद्धिशरीराख्यः शरीराभ्यधिकः सखा ।। ६३
न सख्या सह क्रीडन्स कदाचिन्नृपात्मजः। जगाम दूरमध्वानं मृगयातिप्रसङ्गतः ।। ६४
ैर्यश्रीचामराणीव सिंहानां मस्तकानि सः। छिन्दञ्शरैः सटालानि विवेशैकं महावनम् ।। ६५
त्रास्थाने स्मरस्येव पठत्कोकिलबन्दिनि। दत्तोपकारे तरुभिर्मञ्जरीचलचामरैः ।। ६६
ोऽन्वितो मन्त्रिपुत्रेण तेनापश्यत्सरोवरम्। विचित्रकमलोत्पत्तिधामाम्बुधिमिवापरम् ।। ६७
स्मिंस्तदैव सरसि स्नानार्थं काचिदागता। तेन दिव्याकृतिः कन्या ददृशे सपरिच्छदा ।। ६८
ायन्तीव लावण्यनिर्झरेण सरोवरम्। दृष्टिपातैः सृजन्तीव तत्रोत्पलवनं नवम् ।। ६९
ग्रादिशन्तीव मुखेनाम्बुजानि जितेन्दुना। सा जहार मनस्तस्य राजपुत्रस्य तत्क्षणम् ।। ७०
ोऽप्यहार्षीत्तथा तस्या युवा दृष्ट्या विलोचने। यथा नैक्षत सा कन्या लज्जां स्वामप्यलंकृतिम् ।। ७१
नि पश्यति तस्मिन्सा केयं स्यादिति सानुगे। संज्ञां स्वदेशाद्याख्यातुं विलासच्छद्मनाकरोत् ।। ७२
रोति स्मोत्पलं कर्णे गृहीत्वा पुष्पशेखरात्। चिरं च दन्तरचनां चकारादाय च व्यधात् ।। ७३
द्मं शिरसि साकूतं हृदये चादधे करम्। राजपुत्रश्च तस्यास्तां संज्ञां न ज्ञातवांस्तदा ।। ७४
न्त्रिपुत्रस्तु बुबुधे स सखा तस्य बुद्धिमान्। क्षणाच्च सा ययौ कन्या नीयमानानुगैस्ततः ।। ७५
प्य च स्वगृहं तस्थौ पर्यङ्केऽङ्गं निधाय सा। चित्तं तु निजसंज्ञार्थमास्थात्तस्मिन्नृपात्मजे ।। ७६
ाऽपि राजसुतो भ्रष्टविद्यो विद्याधरो यथा। गत्वा स्वनगरीं कृच्छ्रां प्रापावस्थां तया विना ।। ७७
ख्या च मन्त्रिपुत्रेण तेन पृष्टस्तदा रहः। शंसता तामदुष्प्रापां त्यक्तधैर्यो जगाद सः ।। ७८
स्या न नाम न ग्रामो नान्वयो वावबुध्यते। सा कथं प्राप्यते तन्मामाश्वासयसि किं मृषा ।। ७९
युक्तो राजपुत्रेण मन्त्रिपुत्रस्तमभ्यधात्। किं न दृष्टं त्वया तद्यत्संज्ञया सूचितं तया ।। ८०
स्तं यदुत्पलं कर्णे तेनैतत्ते तयोदितम्। कर्णोत्पलस्य राष्ट्रेऽहं निवसामि महीभृतः ।। ८१
ता यद्दन्तरचना तेनैतत्कथितं तया। तत्र जानीहि मां दन्तघाटकस्य सुतामिति ।। ८२
द्मावतीति नामोक्तं तयोत्तंसितपद्मया। त्वयि प्राणा इति प्रोक्तं हृदयार्पितहस्तया ।। ८३
लिङ्गदेशे ह्यस्त्यत्र ख्यातः कर्णोत्पलो नृपः। तस्य प्रसादवित्तोऽस्ति महान्यो दन्तघाटकः ।। ८४
ङ्ग्रामवर्धनाख्यस्य तस्याप्यस्ति जगत्त्रये। रत्नं पद्मावती नाम कन्या प्राणाधिकप्रिया ।। ८५
ाच्च लोकतो देव यथावद्विदितं मम। अतो ज्ञाता मया संज्ञा तस्या देशादिशंसिनी ।। ८६
युक्तो मन्त्रिपुत्रेण तेन राजसुतोऽथ सः। तुतोष तस्मै सुधिये लब्धोपायो जहर्ष च ।। ८७
मन्त्र्य च समं तेन स तद्युक्तः स्वमन्दिरात्। प्रियार्थी मृगयाव्याजात्पुनस्तामगमद्दिशम् ।। ८८
र्मार्गे च वाताश्ववेगवञ्चितसैनिकः। तं मन्त्रिपुत्रैकयुतः कलिङ्गविषयं ययौ ।। ८९
ा तौ प्राप्य नगरं कर्णोत्पलमहीभृतः। अन्विष्य दृष्ट्वा भवनं दन्तघाटस्य तस्य च ।। ९०
दूरे च वासार्थमेकस्या वृद्धयोषितः। गृहं प्राविशतां मन्त्रिपुत्रराजसुतावुभौ ।। ९१
ाम्बुयवसौ वाहौ गुप्तेऽवस्थाप्य चात्र सः। राजपुत्रे स्थिते वृद्धां मन्त्रिपुत्रो जगाद ताम् ।। ९२
वेद्वेत्स्यम्ब सङ्ग्रामवर्धनं दन्तघाटकम्। तच्छ्रुत्वा सा जरद्योषित्ससम्भ्रद्धा तमभाषत ।। ९३
येव धात्री तस्यास्मि स्थापिता तेन चाधुना। पद्मावत्याः स्वदुहितुः पार्श्वे ज्येष्ठतरेत्यहम् ।। ९४
त्वहं न सदा तत्र गच्छाम्युपहताम्बरा। कुपुत्रः कितवो वस्त्रं दृष्ट्वा हि हरते मम ।। ९५
मुक्तवतीं प्रीतः स्वोत्तरीयादिदानतः। संतोष्य सोऽत्र वृद्धां तां मन्त्रिपुत्रोऽब्रवीत्पुनः ।। ९६

माता त्वं तद्वदामस्ते गुप्तं यत्तत्कुरुष्व नः। दन्तघाटसुतामेतां गत्वा पद्मावतीं वद ॥
सोऽत्रागतो राजपुत्रो दृष्टो यः सरसि त्वया। तेन चेह तवाख्यातुं प्रेषिता प्रणयादहम् ॥
तच्छ्रुत्वा सा तथेत्युक्त्वा वृद्धा दानवशीकृता। गत्वा पद्मावतीपार्श्वमाजगाम क्षणान्तरे ॥
पृष्टा जगाद तौ राजसुतमन्त्रिसुतौ च सा। युष्मदागमनं गत्वा गुप्तं तस्या मयोदितम् ॥
तया श्रुत्वा च निर्भर्त्स्य पाणिभ्यामहमाहता। द्वाभ्यां कर्पूरलिप्ताभ्यामुभयोर्गण्डयोर्मुखे ॥
ततः परिभवोद्विग्ना रुदत्यहमिहागता। एतास्तदङ्गुलीमुद्राः पुत्रौ मे पश्यतं मुखे ॥
एवं तयोक्ते नैराश्यविषण्णं तं नृपात्मजम्। जगाद स महाप्राज्ञो मन्त्रिपुत्रो जनान्तिकम् ॥
मा गा विषादं रक्षन्त्या मन्त्रं निर्भर्त्स्य यत्तया। कर्पूरशुभ्रा वक्त्रेऽस्याः स्वाङ्गुलयो दश पातिताः ॥
तदेतदुक्तं पक्षेऽस्मिञ्शुक्ले चन्द्रवतीरिमाः। रात्रीर्दश प्रतीक्षध्वं संगमानुचिता इति ॥
इत्याश्वास्य स तं राजसुतं मन्त्रिसुतस्ततः। विक्रीय गुप्तं हस्तस्थं काञ्चनं किंचिदापणे ॥
वृद्धया साधयामास महार्हं भोजनं तया। ततस्तौ बुभुजाते द्वौ तत्तया सह वृद्धया ॥
एवं नीत्वा दशाहानि जिज्ञासार्थं पुनः स ताम्। पद्मावत्यन्तिकं वृद्धां मन्त्रिपुत्रो विसृष्टवान् ॥
सापि मृष्टान्नपानादिलुब्धा तदनुरोधतः। गत्वा वासगृहं तस्या भूयोऽभ्येत्य जगाद तौ ॥
इतो गत्वाद्य तूष्णीमप्यहं तत्र स्थिता तया। युष्मत्कथापराधं तमुद्गिरन्त्या स्वयं पुनः ॥
सालक्तकाभिस्तिसृभिः कराङ्गुलिभिराहता। उरस्यस्मिन्नथैषाहमिहायाता तदन्तिकात् ॥
तच्छ्रुत्वा राजपुत्रं तं स्वैरं मन्त्रिसुतोऽब्रवीत्। मा कार्षीरन्यथा शङ्कामस्या हि हृदये तया ॥
सालक्तकाङ्गुलीमुद्रात्रयं विन्यस्य युक्तितः। रजस्वला निशास्तिस्रस्थिताहमिति सूचितम् ॥
एवमुक्त्वा नृपसुतं मन्त्रिपुत्रस्त्र्यहे गते। पद्मावत्यै पुनस्तस्यै वृद्धां तां प्रजिघाय सः ॥
सा गता मन्दिरं तस्यास्तया संमान्य भोजिता। प्रीत्या पानादिलीलाभिर्दिनं चात्र विनोदिता ॥
सायं च यावत्सा वृद्धा गृहमागन्तुमिच्छति। उदभूद्भयकृत्तावत्तत्र कोलाहलो बहिः ॥
हा हा भ्रष्टोऽयमालानाज्जनान्मथ्नन्प्रधावति। मत्तहस्तीति लोकस्य तत्राक्रन्दोऽथ शुश्रुवे ॥
ततः पद्मावती सा तां वृद्धामेवमभाषत। स्पष्टेन हस्तिरुद्धेन गन्तुं युक्तं न ते पथा ॥
तत्पीठिकां समारोप्य बद्धालम्बनरज्जुकाम्। बृहद्गवाक्षेणानेन त्वामत्र प्रक्षिपामहे ॥
गृहोद्याने ततो वृक्षमारुह्यामुं विलङ्घ्य च। प्राकारमवरुह्यान्यवृक्षेण स्वगृहं व्रज ॥
इत्युक्त्वा सा गवाक्षेण क्षेपयामास तत्र ताम्। वृद्धां चेटीभिरुद्याने रज्जुपीठिकया ततः ॥
साथ गत्वा यथोक्तेन पथा सर्वं शशंस तत्। यथावद्राजपुत्राय तस्मै मन्त्रिसुताय च ॥
ततः स मन्त्रिपुत्रस्तं राजपुत्रमभाषत। सिद्धं तवेष्टं मार्गो हि युक्त्या ते दर्शितस्तया ॥
तद्गच्छाद्यैव तत्र त्वं प्रदोषेऽस्मिन्नुपागते। एतेनैव पथा तस्याः प्रियाया मन्दिरं विश ॥
इत्युक्तस्तेन तद्युक्तो राजपुत्रो ययौ स तत्। उद्यानं वृद्धयोक्तेन तेन प्राकारवर्त्मना ॥
तत्रापश्यच्च रज्जुं तां लम्बमानां सपीठिकाम्। मार्गोन्मुखाभिश्चेटीभिरुपरिष्टादधिष्ठिताम् ॥
आरूढस्तां च दृष्ट्वैव दासीभिस्ताभिराशु सः। रज्जूत्क्षिप्तो गवाक्षेण प्रविवेश प्रियान्तिकम् ॥
तस्मिन्प्रविष्टे स ययौ मन्त्रिपुत्रः स्वमास्पदम्। राजपुत्रस्तु तां पद्मावतीं तत्र ददर्श सः ॥
पूर्णामृतांशुवदनां प्रसरत्कान्तिचन्द्रिकाम्। कृष्णपक्षभयाद्गुप्तस्थितां राकानिशामिव ॥
सापि दृष्ट्वा तमुत्थाय चिरौत्सुक्योचितैस्ततः। कण्ठग्रहादिभिस्तैस्तैरुपचारैरमानयत् ॥
ततस्तया स गान्धर्वविधिनोढ्या सह। गुप्तं राजसुतस्तस्थौ पूर्णेच्छस्तत्र कान्तया ॥
स्थित्वा चाहानि कतिचिद्रात्रौ तामवदत्प्रियाम्। सखा मम सहायातो मन्त्रिपुत्र इह स्थितः ॥
स चात्र तिष्ठत्येकाकी त्वज्ज्येष्ठतरिकागृहे। गत्वा संभाव्य तं तन्वि पुनरेष्यामि तेऽन्तिकम् ॥
तच्छ्रुत्वा तमवोचत्सा धूर्ता पद्मावती प्रियम्। हन्तार्यपुत्र पृच्छामि ताः संज्ञा मत्कृतास्त्वया ॥
ज्ञाता किं किमु वा तेन सख्या मन्त्रिसुतेन ते। एवमुक्तवतीमेतां राजपुत्रो जगाद सः ॥

ा तन्मया किंचिज्ज्ञात्वा सर्वं च तेन मे । आख्यातं मन्त्रिपुत्रेण दिव्यप्रज्ञानशालिना ॥ १३६
त्वा विचिन्त्यैव भामिनी सा जगाद तम् । तद्युक्तं कृतं यन्मे चिरात्स कथितस्त्वया ॥ १३७
भ्राता सखा यस्ते तस्य च प्रथमं मया । ताम्बूलादिसमाचारः कर्तव्यो हि सदा भवेत् ॥ १३८
त्यानुमतस्तया पूर्वपथेन सः । राजपुत्रोऽन्तिकं तस्य सख्युरागात्ततो निशि ॥ १३९
च कथामध्ये तत्तस्मै यत्तदाश्रयम् । संज्ञाविज्ञानकथनं कृतं तेन प्रियान्तिके ॥ १४०
त्रस्तु सोऽयुक्तमिति न श्रद्दधेऽस्य तत् । तावच्च सा तयोस्तत्र विभाताभूद्विभावरी ॥ १४१
ोर्विधौ सांध्ये निवृत्ते कुर्वतोः कथाः । आगात्पक्वान्नताम्बूलहस्ता पद्मावतीसखी ॥ १४२
न्त्रिपुत्रे कुशलं पृष्ट्वा दत्तोपचारिका । निषेद्धुं राजपुत्रस्य भोजनं तत्र युक्तितः ॥ १४३
रे स्वामिनीं स्वां भोजनादौ तदागमम् । प्रतीक्षमाणामावेद्य क्षणाद्गुप्तं ततो ययौ ॥ १४४
मन्त्रिपुत्रः स राजपुत्रमभाषत । कौतुकं पश्य देवैकं दर्शयाम्यधुना तव ॥ १४५
वा भक्ष्यमेकं स पक्वान्नं दत्तवांस्ततः । सारमेयाय स च तत्खादित्वैव व्यपद्यत ॥ १४६
किमिदं चित्रमिति राजसुतोऽत्र सः । पप्रच्छ मन्त्रिपुत्रं तं स चैतं प्रत्यभाषत ॥ १४७
ानेन धूर्तं मां विदित्वा हन्तुकामया । तया विषान्नं प्रहितं मम त्वदनुरक्तया ॥ १४८
्सति मदेकाग्रो राजपुत्रो भवेदयम् । एतद्वशश्च मुक्त्वा मां नगरीं स्वां व्रजेदिति ॥ १४९
मन्युमेतस्यां बन्धुत्यागान्महात्मनः । कुर्यास्त्वं हरणे युक्तिं वक्ष्याम्यालोच्य यामहम् ॥ १५०
न्तं तं मन्त्रिसुतं राजसुतोऽत्र सः । सत्यं बुद्धिशरीरस्त्वमिति यावत्प्रशंसति ॥ १५१
तं बहिस्तावद्दुःखाकुलजनारवः । हा धिग्राज्ञः सुतो बालो विपन्न इति शुश्रुवे ॥ १५२
ीनहृष्टोऽथ मन्त्रिपुत्रो नृपात्मजम् । जगाद हन्त गच्छाद्य पद्मावत्या गृहं निशि ॥ १५३
पाययेस्तावद्यावत्पानमदेन सा । निःसंज्ञा नष्टचेष्टा च गतजीवेव जायते ॥ १५४
याः सनिद्रायाः शूलेनाङ्कं कटीतटे । दत्त्वाग्नितप्तेनादाय तदाभरणसंचयम् ॥ १५५
ेस्त्वं गवाक्षेण रज्जुलम्बनिविर्गतः । ततः परं यथा भद्रं भवेज्ज्ञास्याम्यहं तथा ॥ १५६
वा कारयित्वा च क्रोडबालनिभाश्रिकम् । मन्त्रिपुत्रो ददौ तस्मै त्रिशूलं राजसूनवे ॥ १५७
ः स हस्ते तत्कृत्वा कुटिलकर्कशम् । कालायसदृढं चित्तमिव कान्तावयस्ययोः ॥ १५८
पूर्ववद्रात्रावगात्पद्मावतीगृहम् । अविचार्य प्रभूणां हि शुचेर्वाक्यं स्वमन्त्रिणः ॥ १५९
मद्यनिश्चेष्टां शूलेन जघनेऽङ्किताम् । हृतालंकरणां कृत्वा तस्यागात्सख्युरन्तिकम् ॥ १६०
भरणस्तस्मै शशंस च यथाकृतम् । ततः स मन्त्रिपुत्रोऽपि सिद्धं मेने मनीषितम् ॥ १६१
वा श्मशानं च सोऽभूत्तापसवेषभृत् । स्वैरं राजसुतं तं च विदधे शिष्यरूपिणम् ॥ १६२
तं च गच्छैकमितोऽलंकरणादिमाम् । मुक्तावलीं समादाय त्वं विक्रेतुमिवापणे ॥ १६३
ं वदेश्चास्या येनैतां नैव कश्चन । गृह्णीयाद्भ्राम्यमाणां च सर्वः कोऽपि विलोकयेत् ॥ १६४
मम विक्रेतुमियं दत्तेत्यनाकुलः । ब्रूयाश्च यदि गृह्णीयुरत्र त्वां पुररक्षिणः ॥ १६५
प्रेषितस्तेन गत्वा राजसुतस्तदा । अतिष्ठदापणे भ्राम्यन्व्यक्तं मुक्तावलीं दधत् ॥ १६६
तश्च जगृहे स दृष्ट्वा पुररक्षिभिः । दन्तघाटसुतामोषज्ञप्तैश्चौरगवेषिभिः ॥ १६७
व नगराध्यक्षनिकटं तैः स तत्क्षणात् । स च तं तापसाकारं दृष्ट्वा पप्रच्छ सान्त्वतः ॥ १६८
क्तावलीयं ते भगवन्निह हारिता । दन्तघाटककन्याया हृतं ह्याभरणं निशि ॥ १६९
ा राजपुत्रस्तं सोऽवादीत्तापसाकृतिः । गुरुणा मम दत्तेयमेत्यासौ पृच्छयतामिति ॥ १७०
ेत्य तं नत्वा पप्रच्छ नगराधिपः । मुक्तावलीयं भगवन्कुतस्ते शिष्यहस्तगा ॥ १७१
द्रुजनं कृत्वा स धूर्तस्तमभाषत । अहं तपस्वी भ्राम्यामि सदारण्येष्वितस्ततः ॥ १७२
दैवादिह प्राप्तः श्मशानेऽत्र स्थितो निशि । अपश्यं योगिनीचक्रं समागतमितस्ततः ॥ १७३
चैकयानीय योगिन्या राजपुत्रकः । उद्घाटितहृदम्भोजो भैरवाय निवेदितः ॥ १७४

पानमत्ता च सा हर्तुं जपतो मेऽक्षमालिकाम्। प्रावर्तत महामाया विकारान्कुर्वती मुखे ॥
अतिप्रवृत्ता च मया क्रुद्धेन जघनस्थले। अङ्किता सा त्रिशूलेन मन्त्रप्रज्वालिताग्निणा ॥
हृता मुक्तावली चेयं तस्याः कण्ठान्मया तदा। सैषाद्य तापसानर्हा विक्रेया मम वर्तते ॥
एतच्छ्रुत्वा पुराध्यक्ष्यो गत्वा भूपं व्यजिज्ञपत्। भूपोऽप्याकर्ण्य तत्तां च बुद्ध्वा तन्मौक्तिकावलीम्
प्रेक्षणप्रेषितायातवृद्धाप्तवनितामुखात्। श्रुत्वा च दृश्यशूलाङ्कां जघने सत्यमेव ताम् ॥
ग्रस्तः सुतो मे डाकिन्या तयेत्युत्पन्ननिश्चयः। स्वयं तस्यान्तिकं गत्वा मन्त्रिपुत्रतपस्विनः ॥
पृष्ट्वा च निग्रहं तस्याः पद्मावत्याः स तद्गिरा। पितृभ्यां शोच्यमानायाः पुरान्निर्वासनं व्यधात् ॥
निर्वासिताटवीस्था सा विन्नापि न जहौ तनुम्। उपायं मन्त्रिपुत्रेण तं संभाव्य तथा कृतम् ॥
दिनान्ते तां च शोचन्तीमश्वारूढावुपेयतुः। त्यक्ततापसवेषौ तौ मन्त्रिपुत्रनृपात्मजौ ॥
आश्वास्यारोप्य तुरगे स्वराष्ट्रं निन्यतुश्च ताम्। तत्र तस्थौ तया साकं राजपुत्रः स निर्वृतः ॥
दन्तघाटस्त्वरण्ये तां क्रव्यादैर्भक्षितां सुताम्। मत्वा व्यपादि शोकेन भार्या च्चानुजगाम तम् ॥
इत्याख्याय स भूयस्तं वेतालो नृपमब्रवीत्। तन्मेऽत्र संशयं छिन्द्धि दंपत्योस्तयोर्वधात् ॥
मन्त्रिपुत्रस्य किं पापं राजपुत्रस्य किं नु वा। पद्मावत्याः किमथवा त्वं हि बुद्धिमतां वरः ॥
जानानश्च न चेद्राजन्मम तत्त्वं वदिष्यसि। तदेष शतधा मूर्धा निश्चितं ते स्फुटिष्यति ॥
इत्युक्तवन्तं वेतालं विजानञ्शापभीतितः। स त्रिविक्रमसेनस्तमेवं प्रत्यब्रवीन्नृपः ॥
योगेश्वर किमज्ञेयमेतन्नैषां हि पातकम्। त्रयाणामपि राज्ञस्तु पापं कर्णोत्पलस्य तत् ॥
वेतालोऽप्याह राज्ञः किं ते हि तत्कारिणस्त्रयः। काकाः किमपराध्यन्ति हंसैर्जग्धेषु शालिषु ॥
राजा ततोऽब्रवीच्चैनं न दुष्यन्ति त्रयोऽपि ते। मन्त्रिसूनोर्हि तत्तावत्प्रभुकार्यमपातकम् ॥
पद्मावतीराजपुत्रौ तौ हि कामशराग्निना। संतप्तावविचारार्हावदोषौ स्वार्थमुद्यतौ ॥
कर्णोत्पलस्तु राजा स नीतिशास्त्रेष्वशिक्षितः। चारैः प्रजास्वनन्विष्यंस्तत्त्वशुद्धिं निजास्वपि ॥
अजानन्धूर्तचरितानीङ्गिताद्यविचक्षणः। तथा तन्निर्विचारं यश्चक्रे तेन स पापभाक् ॥

इत्याकर्ण्य विमुक्तमौनमुदिते सम्यङ् नृपेणोत्तरे
स्कन्धात्तस्य स दार्ढ्यमाकलयितुं मायाबलात्तत्क्षणम्।
वेतालो नृकलेवरान्तरगतः क्वाप्यप्रतर्क्यो ययौ
निष्कम्पः स च भूपतिः पुनरमुं प्राप्तुं व्यधान्निश्चयम् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बकेऽष्टमस्तरङ्गः।

---

नवमस्तरङ्गः।

( द्वितीयो वेतालः। )

ततोऽत्र पुनरानेतुं तं वेतालमगान्नृपः। स त्रिविक्रमसेनस्तच्छिंशपापादपान्तिकम् ॥
प्राप्तोऽत्र वीक्षते यावच्चितालोकवशान्निशि। तावद्ददर्श तं भूमौ कूजन्तं पतितं शवम् ॥
अथ तं मृतदेहस्थं वेतालं स महीपतिः। आरोप्य स्कन्धमानेतुं तूष्णीं प्रववृते जवात् ॥
ततः स्कन्धात्स वेतालो भूयस्तं नृपमब्रवीत्। राजन्महत्यनुचिते क्लेशेऽस्मिन्पतितो भवान् ॥
अतस्तव विनोदाय कथयामि कथां शृणु। अस्त्यग्रहारः कालिन्दीकूले ब्रह्मस्थलाभिधः ॥
अग्निस्वामीति तत्रासीद्ब्राह्मणो वेदपारगः। तस्यातिरूपा मन्दारवतीत्यजनि कन्यका ॥
यां निर्माय नवानर्घलावण्यां नियतं विधिः। स्वर्गस्त्रीपूर्वनिर्माणं निजमेवाजुगुप्सत ॥
तस्यां च यौवनस्थायामाययुः कान्यकुब्जतः। समसर्वगुणास्तत्र त्रयो ब्राह्मणपुत्रकाः ॥
तेषां चात्मार्थमेकैकस्तत्पितुस्तामयाचत। अनिच्छन्दानमन्यस्मै तस्याः प्राणव्ययादपि ॥
तत्पिता स तु तन्मध्यान्नैकस्मायपि तां ददौ। भीतोऽन्यथोर्वधात्तेन तस्थौ कन्यैव सा ततः ॥

पि तद्वक्त्रचन्द्रैकासक्तदृष्टयः । चकोरव्रतमालम्ब्य तत्रैवासन्दिवानिशम् ॥ ११
नामुत्पन्नदाहज्वरवशेन सा । जगाम मन्दारवती कुमारी किल पञ्चताम् ॥ १२
सुत्रास्ते परासुं शोकविक्लवाः । कृतप्रसाधनां नीत्वा श्मशानं चक्रुरग्निसात् ॥ १३
स्तत्रैव विधाय मठिकां ततः । कृततद्भस्मशय्यः सन्नास्तायाचितभैक्षभुक् ॥ १४
न्युपादाय तस्या भागीरथीं ययौ । तृतीयस्तापसो भूत्वा भ्रान्तुं देशान्तराण्यगात् ॥ १५
पसः प्राप ग्रामं वक्रोलकाभिधम् । तत्रातिथिः सन्कस्यापि विप्रस्य प्राविशद्गृहम् ॥ १६
यावच्च भोक्तुं तत्र प्रचक्रमे । तावदेकः शिशुस्तत्र प्रवृत्तोऽभूत्प्ररोदितुम् ॥ १७
नोऽपि यदा न व्यरंसीत्तदा क्रुधा । बाहावादाय गृहिणी ज्वलत्यग्नौ तमक्षिपत् ॥ १८
मृद्वङ्गो भस्मीभावमवाप्तवान् । तद्दृष्ट्वा जातरोमाञ्चः सोऽब्रवीत्तापसोऽतिथिः ॥ १९
विष्टोऽस्मि ब्रह्मराक्षसवेश्मनि । तन्मूर्तं किल्बिषमिदं न भोक्ष्येऽन्नमिहाधुना ॥ २०
सोऽत्र गृहस्थः प्राह पश्य मे । शक्तिं पठितसिद्धस्य मन्त्रस्य मृतजीवनीम् ॥ २१
तन्मन्त्रपुस्तिकामनुवाच्य च । तत्र भस्मनि चिक्षेप स धूलिमभिमन्त्रिताम् ॥ २२
रूप एव जीवन्स बालकः । ततः स निर्वृतस्तत्र भुक्तवान्विप्रतापसः ॥ २३
तां नागदन्तेऽवस्थाप्य पुस्तिकाम् । भुक्त्वा च शयनं भेजे रात्रौ तत्रैव तद्युतः ॥ २४
स्तस्मिन्स्वैरमुत्थाय शङ्कितः । स प्रियाजीवितार्थी तां पुस्तिकां तापसोऽग्रहीत् ॥ २५
निर्गत्य ततो रात्रिदिनं व्रजन् । क्रमाच्छ्मशानं तत्प्राप यत्र दग्धास्य सा प्रिया ॥ २६
स्तत्कालं तं द्वितीयमुपागतम् । यः स गङ्गाम्भसि क्षेप्तुं तदस्थीनि गतोऽभवत् ॥ २७
याद्यं च तस्या भस्मनि शायिनम् । निबद्धमठिकं तत्र द्वावप्येतौ जगाद सः ॥ २८
तामेषा यावदुत्थापयामि ताम् । जीवन्तीं भस्मतः कान्तां मन्त्रशक्त्या कयाप्यहम् ॥ २९
निर्बन्धान्निर्लोड्य मठिकां च सः । उद्घाट्य तापसो विप्रः पुस्तिकां तामवाचयत् ॥ ३०
मन्त्रेण धूलिं भस्मन्यवाक्षिपत् । उदतिष्ठच्च जीवन्ती सा मन्दारवती ततः ॥ ३१
निष्क्रान्तं वपुः पूर्वाधिकद्युति । तदा बभार सा कन्या काञ्चनेनेव निर्मितम् ॥ ३२
पुनर्जातां ते दृष्ट्वैव स्मरातुराः । प्राप्तुकामास्त्रयोऽप्येवमन्योन्यं कलहं व्यधुः ॥ ३३
यं भार्या मम मन्त्रबलार्जिता । तीर्थप्रभावजा भार्या ममेयमिति चापरः ॥ ३४
तपसा जीवितेयं मयेह यत् । तदेषा मम भार्येति तृतीयोऽत्र जगाद सः ॥ ३५
सेषां त्वं तावन्मे महीपते । निश्चयं ब्रूहि कस्यैषा कन्या भार्योपपद्यते ॥ ३६
मूर्धा ते यदि जानन्न वक्ष्यति । इति वेतालतः श्रुत्वा तं स राजैवमभ्यधात् ॥ ३७
यापि मन्त्रेणैतामजीवयत् । पिता स तस्यास्तत्कार्यकरणान्न पुनः पतिः ॥ ३८
निनायास्या गङ्गायां स सुतो मतः । यस्तु तद्भस्मशय्यां तामाश्लिष्यासीत्तपश्चरन् ॥ ३९
स्तत्प्रीत्या भर्ता तस्याः स उच्यते । कृतं तदनुरूपं हि तेन गाढानुरागिणा ॥ ४०

एवं नृपात्त्रिविक्रमसेनाच्छ्रुत्वैव मुक्तमौनात्सः ।
तस्य स्कन्धादगमद्वेतालोऽतर्कितः स्वपदम् ॥ ४१

राजाथ भिक्ष्वर्थसमुद्यतस्तं प्राप्तुं स भूयोऽपि मनो बबन्ध ।
प्राणात्ययेऽपि प्रतिपन्नमर्थं तिष्ठन्त्यनिर्वाह्य न धीरसत्त्वाः ॥ ४२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके नवमस्तरङ्गः ।

---

दशमस्तरङ्गः ।

( तृतीयो वेतालः । )

वेतालमानेतुं नृपसत्तमः । स त्रिविक्रमसेनस्तमुपागाच्छिंशपातरुम् ॥ १
प्राप्य मृतदेहगतं पुनः । स्कन्धे गृहीत्वैवागन्तुं तूष्णीं प्रववृते ततः ॥ २

प्रयान्तं च तमाह स्म स वेतालोऽस्य पृष्ठगः । चित्रं नोद्विजसे राजन्निशि कुर्वन्गमागमम् ॥
तदखेदाय भूयस्ते वर्णयामि कथां शृणु । अस्ति पाटलिपुत्राख्यं ख्यातं भूमण्डले पुरम् ॥
तत्रासीन्नृपतिः पूर्वं नाम्ना विक्रमकेसरी । गुणानामिव रत्नानामाश्रयं यं व्यधाद्विधिः ॥
तत्र शापावतीर्णोऽभूद्दिव्यविज्ञानवाञ्शुकः । विदग्धचूडामणिरित्याख्यया सर्वशास्त्रवित् ॥
तेनोपदिष्टां सदृशीं राजपुत्रीं नृपात्मजः । मागधीमुपयेमे स भार्यां चन्द्रप्रभाभिधाम् ॥
तस्या अपि तथाभूता सर्वविज्ञानशालिनी । शारिका सोमिका नाम राजपुत्र्याः किलाभवत् ॥
ते चैकपञ्जरस्थे द्वे तत्रास्तां शुकशारिके । सेवमाने स्वविज्ञानैर्दंपती तौ निजप्रभू ॥
एकदा साभिलाषस्तां शारिकां सोऽब्रवीच्छुकः । एकशय्यासनाहारं सुभगे भज मामिति ॥
नाहं पुरुषसंसर्गमिच्छामि पुरुषा यतः । दुष्टाः कृतघ्ना इति सा शारिका प्रत्युवाच तम् ॥
न दुष्टाः पुरुषा दुष्टा नृशंसहृदयाः स्त्रियः । इति भूयः शुकेनोक्ते विवादोऽत्रालगत्तयोः ॥
कृतदासत्वभार्यात्वपणौ तौ शकुनी मिथः । निश्चयायाथ सभ्यं तं राजपुत्रमुपेयतुः ॥
स विवादपदं श्रुत्वा तयोरास्थानगः पितुः । कथं कृतघ्नाः पुरुषा ब्रूहीत्याह स्म शारिकाम् ॥
ततः सा शृणुतेत्युक्त्वा निजपक्षप्रसिद्धये । पुंदोषाख्यायिनीमेतां शारिकाकथयत्कथाम् ॥
अस्ति कामन्दिका नाम या महानगरी भुवि । अर्थदत्ताभिधानोऽस्ति वणिक्तस्यां महाधनः ॥
धनदत्ताभिधानश्च पुत्रस्तस्योदपद्यत । पितर्युपरते सोऽपि बभूवोच्छृङ्खलो युवा ॥
द्यूतादिसङ्गे धूर्ताश्च मिलित्वा तमपातयन् । कामं व्यसनवृक्षस्य मूलं दुर्जनसंगतिः ॥
अचिराद्व्यसनक्षीणधनो दौर्गत्यलज्जया । सोऽथ त्यक्त्वा स्वदेशं तं भ्रान्तुं देशान्तराण्यगात् ॥
गच्छंश्च चन्दनपुरं नाम स्थानमवाप्य सः । विवेश भोजनार्थी सन्नेकस्य वणिजो गृहम् ॥
स वणिक्सुकुमारं तं दृष्ट्वा पृष्ट्वान्वयादिकम् । ज्ञात्वा कुलीनं सत्कृत्य स्वीचक्रे दैवयोगतः ॥
ददौ च सधनां तस्मै नाम्ना रत्नावलीं सुताम् । ततः स धनदत्तोऽत्र तस्थौ श्वशुरवेश्मनि ॥
दिनेष्वेव च यातेषु सुखविस्मृतदुर्गतिः । स्वदेशं गन्तुकामोऽभूत्प्राप्तार्थो व्यसनोन्मुखः ॥
ततोऽनुमान्य कथमप्यवशं श्वशुरं शठः । तं दुहित्रेकसंतानं गृहीत्वा तामलंकृताम् ॥
भार्यां रत्नावलीं युक्तामेकया वृद्धया स्त्रिया । स आत्मना तृतीयः सन्देशात्प्रस्थितवांस्ततः ॥
क्रमात्प्राप्याटवीं दूरामुक्त्वा तस्करजां भियम् । गृहीत्वाभरणं तस्या भार्यायाः स्वीचकार सः ॥
दृश्यतां द्यूतवेश्यादिकष्टव्यसनसङ्गिनाम् । हृदयं हा कृतघ्नानां पुंसां निस्त्रिंशकर्कशम् ॥
सोऽथ पापोऽर्थहेतोस्तां भार्यां गुणवतीमपि । हन्तुं श्वभ्रे निचिक्षेप तया वृद्धस्त्रिया युताम् ॥
क्षिप्त्वैव च गते तस्मिन्स्तत्र वृद्धा व्यपद्यत । तद्भार्या तु लतागुल्मविलग्ना न व्यपादि सा ॥
उत्तस्थौ च ततः श्वभ्रात्क्रोशन्ती करुणं शनैः । आलम्ब्य तृणगुल्मादि सशेषत्वात्किलायुषः ॥ ३
आययौ विक्षताङ्गी च पृष्ट्वा मार्गं पदे पदे । यथागतेनैव पथा कृच्छ्रात्तत्सदनं पितुः ॥ ३
तत्राकस्मात्तथाभूता प्राप्ता पृष्टाससंभ्रमम् । मात्रा पित्रा च रुदती साध्वी सैवमभाषत ॥ ३
मुषिताः स्मः पथि स्तेनैर्नीतो बद्ध्वा च मत्पतिः । वृद्धा मृता निपत्यापि श्वभ्रे नाहं मृता पुनः ॥ ३
अथागतेन केनापि पथिकेन कृपालुना । उद्धृताहं ततः श्वभ्रात्प्राप्तास्मीह च दैवतः ॥ ३
एवमुक्तवती मात्रा पित्रा चाश्वासिता ततः । भर्तृचिन्तैव सा तस्थौ तत्र रत्नावली सती ॥ ३
याति काले च तद्भर्ता स स्वदेशगतः पुनः । द्यूतक्षपिततद्वित्तो धनदत्तो व्यचिन्तयत् ॥ ३
आनयामि पुनर्गत्वा मार्गित्वा श्वशुराद्धनम् । गृहे स्थिता मे त्वत्पुत्रीत्यभिधास्ये च तत्र तम् ॥ ३
एवं स हृदये ध्यात्वा प्रायाच्छ्वशुरवेश्म तत् । प्राप्तं च तत्र तं दूरात्स्वभार्या पश्यति स्म सा ॥ ३
धावित्वा चापतत्तस्य सा पापस्यापि पादयोः । दुष्टेऽपि पत्यौ साध्वीनां नान्यथावृत्ति मानसम् ॥ ३
भीताय च ततस्तस्मै तदशेषं न्यवेदयत् । यन्मृषा चौरपातादि पित्रोः प्राग्वर्णितं तया ॥ ४

१. अस्मादग्रे किंचित्त्रुटितमिव भाति.

।या समं तत्र निर्भयः श्वाशुरे गृहे । प्रविष्टः श्वशुराभ्यां स हर्षाद्दृष्ट्वाभ्यनन्द्यत ॥ ४१
' जीवन्नयं मुक्तश्चौरैरिति महोत्सवः । तेन तच्छ्वशुरेणाथ चक्रे मिलितबन्धुना ॥ ४२
स धनदत्तोऽत्र भुञ्जानः श्वशुरश्रियम् । रत्नावल्या तया साकमासीत्पत्न्या यथासुखम् ॥ ४३
। तत्र रात्रौ च स नृशंसश्चकार यत् । कथोपरोधतः शान्तमवाच्यमपि कथ्यते ॥ ४४
द्रसुप्तां भार्यां तां तदाभरणसंचयम् । अपहृत्य ततः प्रायात्स स्वदेशमलक्षितः ॥ ४५
: पुरुषाः पापा इति शारिकयोदिते । त्वमिदानीं वदेत्याह राजपुत्रस्तदा शुकम् ॥ ४६
जगाद स शुको देव दुःसहसाहसाः । स्त्रियो दुश्चरिताः पापास्तथा च श्रूयतां कथा ॥ ४७
हर्षवती नाम नगरी तत्र चाभवत् । अग्रणीर्धर्मदत्ताख्यो बहुकोटीश्वरो वणिक् ॥ ४८
ताभिधाना च रूपेऽनन्यसमा सुता । बभूव तस्य वणिजः प्राणेभ्योऽप्यधिकप्रिया ॥ ४९
' तेन समानाय रूपयौवनशालिने । दत्ता वराङ्गनानेत्रचकोरामृतरश्मये ॥ ५०
समुद्रदत्ताय वणिक्पुत्राय साधवे । नगर्यामार्यजुष्टायां ताम्रलिप्त्यां निवासिने ॥ ५१
वत्सा स्वदेशस्थे पत्यौ स्वस्य पितुर्गृहे । स्थिता वणिक्सुता दूरात्कंचित्पुरुषमैक्षत ॥ ५२
।नं सुकान्तं सा चपला मारमोहिता । गुप्तं सखीमुखानीतं भेजे प्रच्छन्नकामुकम् ॥ ५३
।भृति तेनैव सह तत्र सदा रहः । रात्रौ रात्रावरंस्तासौ तदेकासक्तमानसा ॥ ५४
च स कौमारः पतिस्तस्याः स्वदेशतः । आजगामात्र तत्पित्रोः प्रमोद इव मूर्तिमान् ॥ ५५
त्रे च दिने तस्मिन्सा नक्तं कृतमण्डना । मात्रानुप्रेषिता भेजे शय्यास्थापि न तं पतिम् ॥ ५६
। तेन चालीकसुप्तं चक्रेऽन्यमानसा । पानमत्तोऽध्वखिन्नश्च सोऽपि जह्रेऽथ निद्रया ॥ ५७
सुप्ते सर्वस्मिन्भुक्तपीते जने शनैः । संधिं भित्त्वा विवेशात्र चौरो वासगृहान्तरे ॥ ५८
ऽ तमपश्यन्तीं साप्युत्थाय वणिक्सुता । स्वजारकृतसंकेता निरगान्निभृतं ततः ॥ ५९
क्य स चौरोऽत्र विघ्नितेच्छो व्यचिन्तयत् । येषामर्थे प्रविष्टोऽहं तैरेवाभरणैर्वृता ॥ ६०
। निर्गतैषा तद्वीक्षेऽहं सा क्व गच्छति । इत्याकलय्य निर्गत्य स चौरस्तां वणिक्सुताम् ॥ ६१
।ामनु ययौ दत्तदृष्टिरलक्षितः । सापि पुष्पादिहस्तैकससंकेतसखीयुता ॥ ६२
बाह्यं प्रविष्टाभूदुद्यानं नातिदूरगम् । तत्रापश्यच्च तं वृक्षे लम्बमानं स्वकामुकम् ॥ ६३
कागतं रात्रौ लब्ध्वा नगररक्षिभिः । उल्लम्बितं चौरबुद्ध्या पाशकण्ठं मृतं स्थितम् ॥ ६४
।ा विह्वलोद्भ्रान्ता हा हतास्मीति वादिनी । पपात भूमौ कृपणं विलपन्ती रुरोद च ॥ ६५
र्याथ वृक्षात्तं गतासुं निजकामुकम् । उपवेश्याङ्गरागेण पुष्पैश्चालंचकार सा ॥ ६६
ङ्गथ च निःसंज्ञं रागशोकान्धमानसा । उन्नमय्य मुखं यावत्तस्यार्ता परिचुम्बति ॥ ६७
तस्याः सहसा निर्जीवः परपूरुषः । वेतालानुप्रविष्टः सन्दन्तैश्चिच्छेद नासिकाम् ॥ ६८
। विह्वला तस्मात्सव्यथापसृताप्यहो । किंस्विज्जीवेदिति हता पुनरेत्य तमैक्षत ॥ ६९
। वीतवेतालं निश्चेष्टं मृतमेव तम् । सा भीता परिभूता च चचाल रुदती शनैः ॥ ७०
ान्नः स्थितः सोऽथ चौरः सर्वं व्यलोकयत् । अचिन्तयच्च किमिदं पापया कृतमेतया ॥ ७१
ताशयः स्त्रीणां भीषणो घनतामसः । अन्धकूप इवागाधः पाताय गहनः परम् ॥ ७२
ीमियं किं नु कुर्यादिति विचिन्त्य सः । कौतुकाद्दूरतश्चौरो भूयोऽप्यनुससार ताम् ॥ ७३
ात्वा प्रविश्यैव तत्सुप्तस्थितभर्तृकम् । गृहं तदा स्वकं प्रोच्चैः प्ररुदत्येवमब्रवीत् ॥ ७४
ध्वमेतेन दुष्टेन मम नासिका । छिन्ना निरपराधाया भर्तृरूपेण शत्रुणा ॥ ७५
मुहुराक्रन्दं तस्याः सर्वे ससंभ्रमम् । उदतिष्ठन्प्रबुध्यात्र पतिः परिजनः पिता ॥ ७६
तत्पिता दृष्ट्वा तामार्द्रच्छिन्ननासिकाम् । क्रुद्धस्तं बन्धयामास भार्याद्रोहीति तत्पतिम् ॥ ७७
ावाब्रवीत्किंचिद्बध्यमानोऽपि मूकवत् । विपर्यस्तेषु सर्वेषु शृण्वत्सु श्वशुरादिषु ॥ ७८
त्वैव तच्चौरे तस्मिन्नपसृते लघु । कोलाहलेन तस्यां च व्यतीतायां क्रमान्निशि ॥ ७९

स निन्ये वणिजा तेन श्वशुरेण वणिक्सुतः। राजान्तिकं तया सार्धं भार्यया छिन्ननासया ॥
राजा च कृतविज्ञप्तिः स्वदारद्रोह्यसाविति। तस्यादिशद्वणिक्सूनोर्वधं न्यक्कृततद्वचाः ॥
ततो वध्यभुवं तस्मिन्नीयमाने सडिण्डिमम्। उपागम्य स चौरोऽत्र बभाषे राजपूरुषान् ॥
निष्कारणं न वध्योऽयं यथावृत्तं तु वेद्म्यहम्। मां प्रापयत राजाग्रं यावत्सर्वं वदाम्यतः ॥
इत्यूचिवान्स नीतस्तैर्नृपस्याग्रं वृताभयः। आ मूलाद्रात्रिवृत्तान्तं चौरः सर्वं न्यवेदयत् ॥
अब्रवीच्च न चेद्देव मद्वाचि प्रत्ययस्तव। तत्सा नासा मुखे तस्य शवस्याद्यापि वीक्ष्यताम् ॥
तच्छ्रुत्वा वीक्षितुं भृत्यान्प्रेष्य सत्यमवेत्य तत्। स राजा तं वणिक्पुत्रं मुक्तवान्वधनिग्रहात् ॥
तां च कर्णावपि च्छित्वा दुष्टां देशान्निरस्तवान्। तद्भार्याश्वशुरं चास्य तं सर्वस्वमदण्डयत् ॥
चौरं च तं पुराध्यक्षं तुष्टश्चक्रे स भूपतिः। एवं स्त्रियो भवन्तीह निसर्गविषमाः शठाः ॥
इत्युक्तवानेव शुको भूत्वा चित्ररथाभिधः। क्षीणेन्द्रशापो गन्धर्वो दिव्यरूपो दिवं ययौ ॥
शारिका सापि तत्कालं भूत्वा स्वःस्त्री तिलोत्तमा। तथैव क्षीणतच्छापा जगाम सहसा दिवम् ॥
विवादश्चाप्यनिर्णीतः सभायां सोऽभवत्तयोः। इत्याख्याय कथां भूयस्तं वेतालोऽब्रवीन्नृपम् ॥
तद्ब्रवान्वक्तु किं पापाः पुरुषाः किमुत स्त्रियः। अजल्पतो जानतस्ते शिरो यास्यति खण्डशः ॥

एतन्निशम्य वचनं वेतालस्यांसवर्तिनस्तस्य।
स जगाद भूपतिस्तं योगेश्वर योषितः पापाः ॥
पुरुषः कोऽपि हि तादृक्क्वापि कदाचिद्भवेद्दुराचारः।
प्रायः सर्वत्र सदा स्त्रियस्तु तादृग्विधा एव ॥
इत्युक्तवतो नृपतेः प्राग्वत्स्कन्धात्स तस्य वेतालः।
नष्टोऽभूत्स च राजा जग्राह पुनस्तदानयनयत्नम् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके दशमस्तरङ्गः।

---

एकादशस्तरङ्गः।

(चतुर्थो वेतालः)

ततो गत्वा पुनस्तस्य निकटं शिंशपातरोः। स त्रिविक्रमसेनोऽत्र श्मशानं निशि भूपतिः ॥
लब्ध्वा मुक्ताट्टहासं तं वेतालं नृशरीरगम्। निष्कम्पः स्कन्धमारोप्य तूष्णीमुदचलत्ततः ॥
चलन्तं च तमंसस्थो वेतालः सोऽब्रवीत्पुनः। राजन्कुभिक्षोरेतस्य कृते कोऽयं तव श्रमः ॥
आयासे निष्फलेऽमुष्मिन्विवेको बत नास्ति ते। तदिमां शृणु मत्तस्त्वं कथां पथि विनोदिनीम् ॥
अस्ति शोभावती नाम सत्याख्या नगरी भुवि। तस्यां च शूद्रकाख्योऽभूद्भूपतिः प्राज्यविक्रमः ॥
यस्य जज्वाल जयिनः प्रतापज्वलनोऽनिशम्। बन्दीकृतारिललनाधूतचामरमारुतैः ॥
अलुप्तधर्मचरणस्फीता मन्ये वसुंधरा। राज्ञि यस्मिन्विसस्मार रामादीनपि भूपतीन् ॥
तं कदाचिन्महीपालं प्रियशूरमुपाययौ। सेवार्थं मालवादेको नाम्ना वीरवरो द्विजः ॥
यस्य धर्मवती नाम भार्या सत्त्ववरः सुतः। कन्या वीरवती चेति त्रयं गृहपरिच्छदः ॥
सेवापरिच्छदश्चान्यत्त्रयं कट्यां कृपाणिका। करे करतलैकत्र चारु चर्म परत्र च ॥ १०
तावन्मात्रपरीवारो दीनारशतपञ्चकम्। प्रत्यहं प्रार्थयामास राज्ञस्तस्मात्स वृत्तये ॥ ११
राजापि स तमाकारसूचितोदारपौरुषम्। वीक्ष्य तस्मै ददौ वृत्तिं शूद्रकस्तां यथेप्सिताम् ॥ १२
अल्पे परिकरेऽप्येभिरियद्भिः स्वर्णरूपकैः। किमेष व्यसनं पुष्णात्यथ कंचन सद्व्ययम् ॥ १३
इत्यन्वेष्टुं समाचारं कौतुकात्स महीपतिः। प्रच्छन्नान्स्थापयामास चारानस्यात्र पृष्ठतः ॥ १४
स च वीरवरः प्रातः कृत्वा भूपस्य दर्शनम्। स्थित्वा च तस्या मध्याह्नं सिंहद्वारे धृतायुधः ॥ १५
गत्वा स्ववृत्तिलब्धानां दीनाराणां शतं गृहे। भोजनार्थं स्वभार्याया हस्ते प्रादात्किलान्वहम् ॥ १६

ाङ्गरागताम्बूलं क्रीणाति स्म शतेन च । शतं स्नात्वा च पूजार्थं व्यधाद्विष्णोः शिवस्य च ॥ १७
भ्यः कृपणेभ्यश्च ददौ दानं शतद्वयम् । एवं विभेजे पञ्चापि तानि नित्यं शतान्यसौ ॥ १८
: कृत्वाग्निकार्यादि भुक्त्वा गत्वैकको निशि । सिंहद्वारे पुनस्तस्थौ पाणौ करतलं दधत् ॥ १९
सततचर्यां च तस्य वीरवरस्य सः । राजा चारमुखाच्छ्रुत्वा तुतोष हृदि शूद्रकः ॥ २०
ारयामास च तांश्चारांस्तस्यानुमार्गगान् । मेने विशेषपूजार्हं पुरुषातिशयं च तम् ॥ २१
यातेषु दिवसेष्ववहेलावलङ्घिते । ग्रीष्मे वीरवरेणात्र सुप्रचण्डार्कतेजसि ॥ २२
ष्यात इवोद्धूतविद्युत्करतलं दधत् । धाराप्रहारी निनदन्नाजगाम घनागमः ॥ २३
च घोरमेघौघे प्रवर्षति दिवानिशम् । सिंहद्वारे तथैवासीत्सोऽत्र वीरवरोऽचलः ॥ २४
। दृष्ट्वा दिवा राजा प्रासादाग्रात्स शूद्रकः । निशि भूयस्तदारोहज्जिज्ञासुस्तस्य तां स्थितिम् ॥ २५
द च ततः को नु सिंहद्वारे स्थितोऽत्र भोः । तच्छ्रुत्वाहं स्थितोऽत्रेति सोऽपि वीरवरोऽब्रवीत् ॥ २६
सुदृढसत्त्वोऽयं भक्तो वीरवरो मयि । तदेष प्रापणीयो मेऽवश्यमेव महत्पदम् ॥ २७
संचिन्त्य नृपतिः प्रासादादवतीर्य सः । शूद्रकः शयनं भेजे प्रविश्यान्तःपुरं ततः ॥ २८
ेद्युश्च भृशं मेघे धारासारेण वर्षति । प्रदोषे गुप्तभवने काले तमसि जृम्भिते ॥ २९
स राजा जिज्ञासुः प्रासादमधिरुह्य तम् । सिंहद्वारे स्थितः कोऽत्रेत्येकाकी प्राह तं स्फुटम् ॥ ३०
स्थित इति प्रोक्ते पुनर्वीरवरेण च । यावद्विस्मयते सोऽत्र राजा तद्धैर्यदर्शनात् ॥ ३१
द्विदूरे शुश्राव सहसा रुदतीं स्त्रियम् । विषादविकलामेकां प्रलापकरुणस्वनम् ॥ ३२
राष्ट्रे पराभूतो न दरिद्रो न दुःखितः । कश्चिदस्ति तदेषा का रोदित्येकाकिनी निशि ॥ ३३
चाचिन्तयच्छ्रुत्वा स जातकरुणो नृपः । आदिदेश च तं वीरवरमेकमधःस्थितम् ॥ ३४
ीरवर शृण्वेषा दूरे स्त्री कापि रोदिति । कासौ रोदिति किं चेति त्वया गत्वा निरूप्यताम् ॥ ३५
त्वा स तथेत्युक्त्वा गन्तुं वीरवरस्ततः । प्रावर्तत निबद्धासिधेनुःकरतलाकरः ॥ ३६
मेघान्धकारं तज्ज्वलद्विद्युद्विलोचनम् । स्थूलधाराशिलावर्षि रक्षोरूपमजीगणत् ॥ ३७
तं वीक्ष्य तादृश्यां तस्यां रात्रौ तमेककम् । करुणाकौतुकाविष्टो राजा प्रासादपृष्ठतः ॥ ३८
ीर्य गृहीतासिरेकाकी तस्य पृष्ठतः । सोऽपि प्रतस्थे तत्रैव शूद्रकोऽनुपलक्षितः ॥ ३९
। वीरवरो गत्वा रुदितानुसृतिक्रियः । बहिर्नगर्याः प्रापैकं सरस्तत्र ददर्श च ॥ ४०
ूर हा कृपालो हा त्यागिञ्शून्या त्वया कथम् । वत्स्यामीत्यादिरुदतीं तां स्त्रियं वारिमध्यगाम् ॥ ४१
वं रोदिषि किं चैवमित्यन्वक्प्राप्तभूपतिः । पप्रच्छ तां च साश्चर्यस्ततः साप्येवमभ्यधात् ॥ ४२
ीरवर जानीहि वत्स मां पृथिवीमिमाम् । तस्या ममाधुना राजा शूद्रको धार्मिकः पतिः ॥ ४३
ये च दिने तस्य राज्ञो मृत्युर्भविष्यति । तादृशं च पतिं प्राप्स्याम्यहमन्यं नृपं कुतः ॥ ४४
तमनुशोचामि दुःखितात्मानमेव च । एतच्छ्रुत्वा स तां त्रस्त इव वीरवरोऽब्रवीत् ॥ ४५
वे कश्चिदप्यस्ति कोऽप्युपायः स तादृशः । येनास्य न भवेन्मृत्युर्जगद्रक्षामणेः प्रभोः ॥ ४६
तद्वचनं श्रुत्वा सा जगाद वसुंधरा । एकोऽस्त्युपायस्तं चैकः कर्तुं शक्तो भवानिति ॥ ४७
वीरवरोऽवादीत्तर्हि देवि वद द्रुतम् । यावत्तत्साधयाम्याशु कोऽर्थः प्राणैर्ममान्यथा ॥ ४८
लोवाच वसुधा वीरः कोऽन्यस्त्वया समः । स्वामिभक्तस्तदेतस्य शर्मोपायमिमं शृणु ॥ ४९
कृतप्रतिष्ठास्ति येषा राजकुलान्तिके । उत्तमा चण्डिका देवीसांनिध्योत्कर्षशालिनी ॥ ५०
सत्त्ववरं पुत्रमुपहारीकरोषि चेत् । तन्नैष राजा म्रियते जीवत्यन्यत्समाशतम् ॥ ५१
। चैतद्भवता कृतं चेदस्ति तच्छिवम् । अन्यथास्य तृतीयेऽह्नि प्राप्ते नास्त्येव जीवितम् ॥ ५२
ः स तया पृथ्व्या वीरो वीरवरस्तदा । यामि देवि करोम्येतदधुनैवेत्यभाषत ॥ ५३
भद्रं तवेत्युक्त्वा वसुधा सा तिरोदधे । तच्च सर्वं स शुश्राव गुप्तमन्वक्स्थितो नृपः ॥ ५४
। गूढे जिज्ञासौ तस्मिन्राज्यनुगच्छति । शूद्रके त्वरितं गेहं निशि वीरवरो ययौ ॥ ५५

तत्र पुत्रोपहारोऽस्य राजार्थे धरया यथा । उक्तस्तथाब्रवीत्पत्न्यै धर्मवत्यै विबोध्य सः ॥
तच्छ्रुत्वा सा तमाह स नाथ कार्यं शिवं प्रभोः । तत्प्रबोध्य सुतस्यास्य शिशोर्वक्तुं भवानिति ॥
ततः प्रबोध्य सुप्तं तं बालं सत्त्ववरं सुतम् । आख्याय तं च वृत्तान्तमेवं वीरवरोऽब्रवीत् ॥
तत्पुत्र चण्डिकादेव्या उपहारीकृते त्वयि । राजा जीवत्यसौ नो चेत्तृतीयेऽह्नि विपद्यते ॥
एतच्छ्रुत्वैव बालोऽपि यथार्थं नाम दर्शयन् । अक्लीबचित्तः पितरं तं स सत्ववरोऽब्रवीत् ॥
कृतार्थोऽहं मम प्राणै राजा चेत्तात जीवति । भुक्तस्य हि तदन्नस्य दत्ता स्यान्निष्कृतिर्मया ॥
तत्किं विलम्ब्यते नीत्वा भगवत्याः पुरोऽधुना । उपहारीकुरुध्वं मामस्तु शान्तिर्मया प्रभोः ॥
इति सत्त्ववरेणोक्ते तेन वीरवरोऽत्र सः । साधु सत्यं प्रसूतोऽसि मत्तः पुत्रेत्यभाषत ॥
एतत्सोऽन्वागतो राजा सर्वं श्रुत्वा बहिः स्थितः । अहो एषां समं सत्त्वं सर्वेषामित्यचिन्तयत् ॥
ततो वीरवरः स्कन्धे कृत्वा सत्त्ववरं सुतम् । भार्या धर्मवती चास्य कन्यां वीरवतीमपि ॥
उभौ तौ ययतुस्तस्यां रात्रौ तच्चण्डिकागृहम् । राजापि शूद्रकश्छन्नः पृष्ठतः स तयोर्ययौ ॥
तत्र देव्या पुरः स्कन्धात्सोऽथ पित्रावतारितः । देवीं सत्त्ववरो नत्वा धैर्यराशिर्व्यजिज्ञपत् ॥
मम मूर्धोपहारेण राजा जीवतु शूद्रकः । अन्यद्वर्षशतं देवि कुर्याद्राज्यमकण्टकम् ॥
एवमुक्तवतस्तस्य साधु साध्वित्युदीर्य सः । सूनोः सत्त्ववरस्याथ कृष्ट्वा करतलां शिशोः ॥
छित्त्वा शिरश्चण्डिकायै देव्यै वीरवरो ददौ । मत्पुत्रेणोपहारेण राजा जीवत्विति ब्रुवन् ॥
साधु कः स्वामिभक्तोऽन्यः समो वीरवर त्वया । येनैवमेकसत्पुत्रप्राणव्ययविधायिना ॥
दत्तो जीवश्च राज्यं च शूद्रकस्यास्य भूपतेः । इत्यन्तरिक्षादुदगात्तत्क्षणं तत्र भारती ॥
तच्च सर्वं नृपे तस्मिंश्छन्ने शृण्वति पश्यति । कन्या वीरवती सा तु बाला वीरवरात्मजा ॥
उपेत्याश्लिष्य मूर्धानं तस्य भ्रातुर्हतस्य तम् । विलपन्त्युरुशोकान्धा हृत्स्फोटेन व्यपद्यत ॥
ततो वीरवरं भार्या धर्मवत्येवमब्रवीत् । राज्ञस्तावत्कृतं श्रेयस्तदिदानीं वदामि ते ॥
निर्ज्ञाना यत्र बालापि भ्रातृशोकादियं मृता । नष्टेऽपत्यद्वयेऽप्यस्मिंस्तत्र किं जीवितेन मे ॥
प्रागेव राज्ञः श्रेयोऽर्थं मूढया स्वशिरो मया । देव्यै नोपहृतं तस्माद्देह्यनुज्ञां ममाधुना ॥
प्रविशाम्यनलं तावदात्तापत्यकलेवरा । इत्याग्रहाद्वदन्तीं तां सोऽथ वीरवरोऽब्रवीत् ॥
एवं कुरुष्व भद्रं ते का हि संप्रति ते रतिः । अपत्यदुःखैकमये जीवितव्ये मनस्विनि ॥
किं न दत्तो मयैवात्मेत्येषा मा भूच्च ते व्यथा । दद्यां किं नाहमात्मानमन्यसाध्यं भवेद्यदि ॥
तत्प्रतीक्षस्व यावत्ते चितामत्र करोम्यहम् । अमीभिर्दारुभिर्देवीक्षेत्रनिर्माणसंभृतैः ॥
इत्युक्त्वा दारुभिस्तैः स कृत्वा वीरवरश्चिताम् । दीपाग्नेर्ज्वालयामास न्यस्तापत्यशवद्वयाम् ॥
ततो धर्मवती पत्नी पतित्वा सास्य पादयोः । प्रणम्य देवीं चण्डीं तां व्यजिज्ञपदपांसुला ॥
जन्मान्तरेऽप्ययं भूयादार्यपुत्रः पतिर्मम । एतत्प्रभोस्तु राज्ञोऽस्तु मद्देहेनामुना शिवम् ॥
इत्युदीर्यैव सा साध्वी तस्मिन्नम्भोवहेलया । ज्वालाकलापजटिले निपपात चितानले ॥
ततश्च चिन्तयामास वीरो वीरवरोऽत्र सः । निष्पन्नं राजकार्यं मे वाग्दिव्या श्रुद्रता यथा ॥
भुक्तस्य चान्नपिण्डस्य जातोऽहमनृणः प्रभोः । तदिदानीं ममैकस्य केयं जीवितगृध्नुता ॥
भरणीयं प्रियं कृत्स्नं व्ययीकृत्य कुटुम्बकम् । जीवयन्नेकमात्मानं मादृशः को हि शोभते ॥
तत्किमात्मोपहारेणाप्येतां प्रीणामि नाम्बिकाम् । इत्यालोच्य स देवीं तां स्तुत्या प्रागुपतस्थिवान् ॥

जय महिषासुरमारिणि दारिणि रुरुदानवस्य शूलकरे ।
जय विबुधोत्सवकारिणि धारिणि भुवनत्रयस्य मातृवरे ॥
जय जगदर्चितचरणे शरणे निःश्रेयसस्य भक्तानाम् ।
जय धृतभास्करकिरणे हरणे दुरितान्धकारवृन्दानाम् ॥
जय कालि जय कपालिनि जय कङ्कालिनि शिवे नमस्तेऽस्तु ।
शूद्रकनृपतेरधुना प्रसीद मन्मस्तकोपहारेण ॥

देव्यां स तस्यां वीरवरः पुनः । सद्यः करतलाघातेनोत्तमाङ्गं स्वमच्छिनत् ॥ ९३
खिलं तत्र च्छन्नस्थः शूद्रको नृपः । साकुलश्च सदुःखश्च साश्चर्यश्च व्यचिन्तयत् ॥ ९४
न्ययनेनैतदन्यत्रादृष्टमश्रुतम् । साधुना सकुटुम्बेन दुष्करं मत्कृते कृतम् ॥ ९५
त्र संसारे धीरः स्यादीदृशः कुतः । अख्यापयन्प्रभोरर्थे परोक्षं यो ददात्यसून् ॥ ९६
कारस्य न कुर्यां सदृशं यदि । तन्मे का प्रभुता किं च जीवितव्यं पशोरिवं ॥ ९७
स्य नृपतिः खड्गमाकृष्य कोषतः । उपेत्य शूद्रको देवीं तां प्रवीरो व्यजिज्ञपत् ॥ ९८
स्य भगवत्यधुनामुना । मम मूर्धोपहारेण सुप्रीता कुर्वनुग्रहम् ॥ ९९
रो विप्रो नामानुगुणचेष्टितः । मदर्थमुज्झितप्राणः सकुटुम्बोऽपि जीवतु ॥ १००
ना राजा शिरश्छेत्तुं स शूद्रकः । यावत्प्रवर्तते तावदुदभूद्भारती दिवः ॥ १०१
कथास्तुष्टा सत्त्वेनानेन ते ह्यहम् । प्रत्युज्जीवतु सापत्यदारो वीरवरो द्विजः ॥ १०२
यरमद्राक्सा स चोत्तस्थौ सपुत्रकः । साकं दुहित्रा पत्न्या च जीवन्वीरवरोऽक्षतः ॥ १०३
द्भुतं राजा छन्नो भूत्वा पुनश्च सः । पश्यन्नतृप्तस्तामासीद्दृष्ट्या हर्षाश्रुपूर्णया ॥ १०४
वरो दृष्ट्वा सुप्तोत्थित इवाशु तम् । पुत्रदारं तथात्मानमभूद्विभ्रान्तमानसः ॥ १०५
पृथङ्नामग्राहं दारसुतान्स तान् । भस्मीभूताः कथं यूयं जीवन्तः पुनरुत्थिताः ॥ १०६
शिरश्छिन्नं जीवाम्येष च किं न्विदम् । किं विभ्रमोऽयमाहोस्वित्सुस्पष्टो देव्यनुग्रहः ॥ १०७
तैरूचे दारापत्यैरलक्षितः । देव्यनुग्रह एवायं जीवामो यदमी इति ॥ १०८
तथा मत्वा नत्वा वीरवरोऽम्बिकाम् । आदाय पुत्रदारांस्तान्सिद्धकार्यो गृहं ययौ ॥ १०९
पुत्रं तं भार्यां दुहितरं च ताम् । सिंहद्वारमगाद्राज्ञो रात्रौ तस्यां स पूर्ववत् ॥ ११०
द्रकोऽप्येतद्दृष्ट्वा सर्वमलक्षितः । गत्वारुरोह स्वावासप्रासादं तं पुनस्तदा ॥ १११
स्थितः कोऽत्र सिंहद्वारीति पृष्टतः । ततो वीरवरोऽवादीत्सैष तिष्ठाम्यहं प्रभो ॥ ११२
श्चाहमभूवं तां स्त्रियं प्रति । राक्षसीव च सा कापि दृष्टनष्टैव मे गता ॥ ११३
चस्तस्य राजा वीरवरस्य सः । सुतरां विस्मयाविष्टो दृष्टोदन्तो व्यचिन्तयत् ॥ ११४
गम्भीरधीरचित्ता मनस्विनः । कृत्वाप्यनन्यसामान्यमुल्लेखं नोद्गिरन्ति ये ॥ ११५
यंस्तूष्णीं प्रासादादवरुह्य सः । प्रविश्यान्तःपुरं राजा रात्रिशेषं निनाय तम् ॥ ११६
समये दर्शनोपगतस्थिते । तस्मिन्वीरवरे प्रीतस्तथा कृत्स्नं स भूपतिः ॥ ११७
वृत्तान्तं मन्त्रिभ्यस्तमवर्णयत् । यथा बभूवुराश्चर्यमोहिता इव तेऽखिलाः ॥ ११८
पुत्राय प्रीत्या वीरवराय च । लाटदेशे ततो राज्यं स कर्णाटयुते नृपः ॥ ११९
य विभवावन्योन्यस्योपकारिणौ । आसतां तौ सुखं वीरवरशूद्रकभूपती ॥ १२०
कथामेतां वेतालोऽत्यद्भुतां तदा । तं त्रिविक्रमसेनं स राजानमवदत्पुनः ॥ १२१
तेषु वीरः सर्वेषु कोऽधिकः । पूर्व एव स शापस्ते यदि जानन्न वक्ष्यसि ॥ १२२
भूपालो वेतालं प्रत्युवाच तम् । एतेषु शूद्रको राजा प्रवीरः सोऽखिलेष्विति ॥ १२३
वेतालो राजन्वीरवरो न किम् । सोऽधिको यस्य तुल्योऽस्यां पृथ्व्यामेव न जायते ॥ १२४
का किं वा स्त्रीभूता यान्वमन्यत । तथोपहारपशुतां सूनोः प्रत्यक्षदर्शिनी ॥ १२५
वरो नात्र तत्पुत्रोऽभ्यधिकः कथम् । बालस्यापि सतो यस्य सत्त्वोत्कर्षः स तादृशः ॥ १२६
द्रकं भूपमेभ्यस्त्वं भाषसेऽधिकम् । इत्युक्तवन्तं वेतालं स जगाद पुनर्नृपः ॥ १२७
स्तावत्स तादृकुलपुत्रकः । तस्य प्राणैः सुतैर्दारैः स्वामिसंरक्षणं व्रतम् ॥ १२८
पि कुलजा साध्वी पत्येकदेवता । भर्तृवर्त्मानुसारेण तस्या धर्मोऽस्तु कोऽपरः ॥ १२९

---

दग्ने 'सत्त्वभ्रंशो ह्ययशसे केवलं न त्वपैति तम्' इति पुस्तकान्तरेऽधिकमस्ति.

ताभ्यां जातस्तु तद्रूप एव सत्त्ववरोऽपि सः। यादृशास्तन्तवः कामं तादृशो जायते पटः॥ १
येषां प्राणैस्तु भृत्यानां नृपैरात्माभिरक्ष्यते। तेषामर्थे त्यजन्देहं शूद्रकोऽत्र विशिष्यते॥ १

इत्याकर्ण्य वचः स तस्य नृपतेरंसादसंलक्षितो
वेतालः सहसा ययौ निजपदं भूयोऽपि तन्मायया।
राजाप्युच्चलितो बभूव पुनरप्यानेतुमेतं पथा
पूर्वेणैव सुनिश्चितः पितृवने तस्मिन्स तस्यां निशि॥ १

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके एकादशस्तरङ्गः।

---

द्वादशस्तरङ्गः।

( पञ्चमो वेतालः। )

ततस्तस्य पुनर्गत्वा शिंशपाशाखिनोऽन्तिकम्। तथैवोल्लम्बमानं तं दृष्ट्वा नरशरीरगम्॥
वेतालमवतार्यैव कृत्वास्मै बहु वैकृतम्। स त्रिविक्रमसेनो द्रागगन्तुं प्रववृते ततः॥
आगच्छन्तं च तं तूष्णीं वेतालः पूर्ववत्पथि। रात्रौ महाश्मशानेऽत्र स्कन्धस्थो व्याजहार सः॥
राजन्नभिनिविष्टोऽसि कष्टेऽत्यन्तप्रियोऽसि च। तत्ते चेतोविनोदाय वर्णयामि कथां शृणु॥
उज्जयिन्यामभूद्विप्रः पुण्यसेनस्य भूपतेः। अनुजीवी प्रियोऽमात्यो हरिस्वामीति सद्गुणः॥
तस्यात्मनोऽनुरूपायां भार्यायां गृहमेधिनः। गुणवान्सदृशः पुत्रो देवस्वामीत्यजायत॥
तद्वच्चानन्यसामान्यरूपलावण्यविश्रुता। कन्या सोमप्रभा नाम तस्यान्वर्थोदपद्यत॥
सा प्रदेया सती कन्या रूपोत्कर्षाभिमानिनी। मातुर्मुखेन पितरं भ्रातरं च जगाद तम्॥
शूरस्य ज्ञानिनो वाहं देया विज्ञानिनोऽपि वा। अन्यस्मै नास्मि दातव्या कार्यं मज्जीवितेन चेत्॥
तच्छ्रुत्वा तादृशं तस्याश्चिन्वन्नेकतमं वरम्। तत्पिता स हरिस्वामी यावच्चिन्तां वहत्यलम्॥ १०
तावद्व्यसर्जि राज्ञा स पुण्यसेनेन दूत्यया। संध्यर्थं विग्रहायातदाक्षिणात्यनृपान्तिकम्॥ ११
कृतकार्यश्च तत्रासावेकेनाभ्येत्य तां सुताम्। याचितोऽभूद्द्विजाग्र्येण श्रुततद्रूपसंपदा॥ १२
विज्ञानिनो ज्ञानिनो वा शूराद्वा नापरं पतिम्। मत्पुत्रीच्छति तत्तेषां मध्यात्कथय को भवान्॥ १३
इत्युक्तस्तेन भार्यार्थी स हरिस्वामिना द्विजः। अहं जानामि विज्ञानमिति तं प्रत्यभाषत॥ १४
तर्हि तद्दर्शयस्वेति पुनरुक्तश्च तेन सः। विज्ञानी कल्पयामास स्वशक्त्या द्युचरं रथम्॥ १५
मायायन्त्ररथे तत्र तं हरिस्वामिनं क्षणात्। आरोप्य नीत्वा स्वर्गादींल्लोकांस्तस्मायदर्शयत्॥ १६
आनिनाय च तुष्टं तं तत्रैव कटकं पुनः। दाक्षिणात्यस्य नृपतेर्यत्रायातः स कार्यतः॥ १७
ततः सोऽस्मै हरिस्वामी प्रतिशुश्राव तां सुताम्। विज्ञानिने विवाहं च निश्चिकायाह्नि सप्तमे॥ १८
तत्कालमुज्जयिन्यामप्यन्येनैत्य द्विजन्मना। देवस्वामी स तत्पुत्रः स्वसारं तामयाच्यत॥ १९
ज्ञानिविज्ञानिशूरेभ्यो नान्यमिच्छति सा पतिम्। इति तेनापि सोऽप्युक्तः शूरमात्मानमभ्यधात्॥ २०
ततो दर्शितशस्त्रास्त्रश्रिये तस्मै द्विजोऽनुजाम्। देवस्वामी स शूराय दातुं तां प्रत्यपद्यत॥ २१
सप्तमेऽह्नि च तत्रैव विवाहं गणकोक्तितः। तस्यापि सोऽभ्यधान्मातुः परोक्षं कृतनिश्चयः॥ २२
तन्मातापि हरिस्वामिभार्या तत्कालमेव सा। केनाप्येत्य तृतीयेन सुतां तां याचिता पृथक्॥ २३
ज्ञानी शूरोऽथ विज्ञानी भर्तास्मद्दुहितुर्मतः। इत्युक्तश्च तया मातरहं ज्ञानीति सोऽभ्यधात्॥ २४
पृष्ट्वा भूतं भविष्यच्च तस्मै तां ज्ञानिने सुताम्। प्रतिजज्ञे प्रदातुं साप्यह्नि तत्रैव सप्तमे॥ २५
अन्येद्युश्चागतः सोऽत्र हरिस्वामी यथाकृतम्। पत्न्यै पुत्राय चाचख्यौ तं कन्यादाननिश्चयम्॥ २६
तौ च तं स्वकृतं तस्मै भिन्नं भिन्नमवोचताम्। सोऽपि तेनाकुलो जज्ञे वरत्रयनिमन्त्रणात्॥ २७
अथोद्वाहदिने तस्मिन्हरिस्वामिगृहे वराः। आययुर्ज्ञानिविज्ञानिशूरास्तत्र त्रयोऽपि ते॥ २८
तत्कालं चात्र सा चित्रं कन्या सोमप्रभा वधूः। अशङ्कितं गता क्वापि न विचित्याप्यलभ्यत॥ २९

ब्रवीद्धरिस्वामी ज्ञानिनं तं ससंभ्रमः । ज्ञानिन्निदानीं ब्रूह्याशु दुहिता मे क्व सा गता ॥ ३०
त्रा सोऽवदज्ज्ञानी राक्षसेनापहृत्य सा । नीता विन्ध्याटवीं धूमशिखेन वसतिं निजाम् ॥ ३१
ो ज्ञानिना भीतो हरिस्वामी जगाद सः । हा धिक्कथं सा प्राप्येत विवाहश्चापि हा कथम् ॥ ३२
त्प्राह विज्ञानी धीरो भव नयामि वः । तत्राधुनैव यत्रैष ज्ञानी वदति तां स्थिताम् ॥ ३३
त्वा तत्क्षणं कृत्वा रथं सर्वास्त्रसंयुतम् । तत्रारोप्य हरिस्वामिज्ञानिशूरान्खगामिनि ॥ ३४
संप्रापयामास क्षणाद्विन्ध्याटवीभुवि । ज्ञानिना तां समाख्यातां वसतिं तत्र रक्षसः ॥ ३५
राक्षसं क्रुद्धं ज्ञातवृत्तान्तनिर्गतम् । शूरोऽथ योधयामास हरिस्वामिपुरस्कृतः ॥ ३६
र्यमभूद्युद्धं तयोर्मानुषरक्षसोः । चित्रास्त्रयोधिनोः स्त्र्यर्थे रामरावणयोरिव ॥ ३७
च स सङ्ग्रामदुर्मदस्यापि रक्षसः । अर्धचन्द्रेण बाणेन शूरस्तस्याच्छिनच्छिरः ॥ ३८
क्षसि तां सोमप्रभामाप्तां तदास्पदात् । आदाय विज्ञानिरथेनाजग्मुस्ते ततोऽखिलाः ॥ ३९
ामिगृहं प्राप्य तेषां लग्नेऽप्युपस्थिते । ज्ञानिविज्ञानिशूराणां विवाद उदभून्महान् ॥ ४०
जगाद नाहं चेज्ज्ञानीयां तदियं कथम् । प्राप्येत कन्या गूढस्था देया मह्यमसावितः ॥ ४१
ो त्ववदन्नाहं कुर्यां चेद्व्योमगं रथम् । गमागमौ कथं स्यातां देवानामिव वः क्षणात् ॥ ४२
ाचारथं युद्धं रथिना रक्षसा सह । तस्मान्मह्यमियं देया लग्नो ह्येष मयार्जितः ॥ ४३
युवाच हन्यां चेन्नाहं तं राक्षसं रणे । तद्युवाभ्यां कृते यत्नेऽप्येतां कन्यां क आनयेत् ॥ ४४
मेपा दातव्येत्येवं तेषु विवादिषु । हरिस्वामी क्षणं तूष्णीमासीदुद्भ्रान्तमानसः ॥ ४५
। सात्र देयेति राजन्वदतु मे भवान् । न वदिष्यसि जानंश्चेत्तत्ते मूर्धा स्फुटिष्यति ॥ ४६
ालतस्तस्माच्छ्रुत्वा मौनं विहाय च । स त्रिविक्रमसेनस्तमुवाचैवं महीपतिः ॥ ४७
सा प्रदातव्या येन प्राणपणोद्यमात् । अर्जिता बाहुवीर्येण हत्वा तं युधि राक्षसम् ॥ ४८
ज्ञानिनौ त्वस्य धात्रा कर्मकरौ कृतौ । सदा गणकतक्षाणौ परोपकरणे न किम् ॥ ४९
इत्युक्तं मनुजपतेर्निशम्य तस्य स्कन्धाग्रात्सपदि स पूर्ववज्जगाम ।
वेतालो निजपदमेव सोऽपि राजानुद्वेगः पुनरपि तं प्रति प्रतस्थे ॥ ५०

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके द्वादशस्तरङ्गः ।

---

त्रयोदशस्तरङ्गः ।

( षष्ठो वेतालः । )

त्वा पुनस्तस्मात्प्राप्य तं शिंशपातरोः । वेतालं प्राग्वदादाय स्कन्धे मौनेन भूपतिः ॥ १
क्रमसेनोऽत्र यावदागच्छति द्रुतम् । [1]तावत्पथि स वेतालो भूयोऽप्येवमुवाच तम् ॥ २
धीः सुसत्त्वश्च भवांस्तेन प्रियोऽसि मे । अतो विनोदिनीं वच्मि कथां प्रश्नं च मे शृणु ॥ ३
ाजा यशःकेतुरिति ख्यातो महीतले । तस्य शोभवती नाम राजधान्यभवत्पुरी ॥ ४
भून्नगर्यां च गौर्यायतनमुत्तमम् । तस्य दक्षिणतश्चासीद्गौरीतीर्थाभिधं सरः ॥ ५
ढचतुर्दश्यां शुक्लायां प्रतिवत्सरम् । यात्रायां स्नातुमेति स्म नानादिग्भ्यो महाजनः ॥ ६
च तिथौ तस्यां स्नातुमत्राययौ युवा । रजको धवलो नाम ग्रामाद्ब्रह्मस्थलाभिधात् ॥ ७
यद्रजकस्यात्र तीर्थे स्नानागतां सुताम् । कन्यां शुद्धपटाख्यस्य नाम्ना मदनसुन्दरीम् ॥ ८
वण्यहारिण्या तया स हृतमानसः । अन्विष्य तन्नामकुले कामार्तोऽथ गृहं ययौ ॥ ९
स्थितस्तिष्ठन्निराहारस्तया विना । पृष्टो मात्रार्तया तस्यै तच्छशंस मनोगतम् ॥ १०
ा विमलाख्याय तत्स्वभर्त्रे न्यवेदयत् । सोऽप्यागत्य तथावस्थं दृष्ट्वा तं सुतमभ्यधात् ॥ ११
ोदसि पुत्रैवमदुष्प्राप्येऽपि वाञ्छिते । स हि मद्याचितः शुद्धपटो दास्यति ते सुताम् ॥ १२

---

तमेवमब्रवीत्तावत्स वेतालोंऽसपृष्ठगः' इति पुस्तकान्तरपाठः.

अन्यूना हि वयं तस्मात्कुलेनार्थेन कर्मणा। तं वेद्म्यहं स मां वेत्ति तेनैतन्मे न दुष्करम्॥
इत्याश्वास्य स तं पुत्रमाहारादौ प्रवर्त्य च। तद्युक्तो विमलोऽन्येद्युर्ययौ शुद्धपटास्पदम्॥
ययाचे चात्र पुत्रस्य तस्यार्थे धवलस्य सः। कन्यां तस्मात्स चास्मै तां प्रतिशुश्राव सादरम्॥
लग्नं निश्चित्य चान्येद्युस्तां स शुद्धपटः सुताम्। धवलाय ददौ तस्मै तुल्यां मदनसुन्दरीम्॥
कृतोद्वाहश्च स तया सार्कं दर्शनसक्तया। भार्यया स्वपितुर्गेहं जगाम धवलः कृती॥
सुखस्थितस्य तस्याथ कदाचिच्छ्वशुरात्मजः। तस्या मदनसुन्दर्या भ्राता तत्रागतोऽभवत्॥
स कृतप्रश्रयः सर्वैः स्वस्राश्लिष्याभिनन्दितः। संबन्धिपृष्टकुशलो विश्रान्तश्च जगाद तान्॥
अहं मदनसुन्दर्या जामातुश्च निमन्त्रणे। तातेन प्रेषितो यस्माद्देवीपूजोत्सवोऽस्ति नः॥
श्रद्धाय चैतत्तद्वाक्यं यथार्हैः पानभोजनैः। ते संबन्ध्यादयः सर्वे तदहस्तमुपाचरन्॥
प्रातर्मदनसुन्दर्या श्वशुर्येण च तेन सः। सहितो धवलः प्रायाद्गृहं तच्छ्वाशुरं प्रति॥
प्राप्य शोभावतीं तां च पुरीमात्मतृतीयकः। ददर्श निकटं प्राप्य स गौर्यायतनं महत्॥
निजगाद च तौ भार्याश्वशुर्यौ श्रद्धया ततः। एतमेतां भगवतीं पश्यामो देवतामिह॥
तच्छ्रुत्वा स श्वशुर्यस्तं निषेधन्प्रत्यभाषत। इयन्तो रिक्तहस्ताः किं पश्यामो देवतामिति॥
अहं तावद्व्रजाम्येको युवामत्रैव तिष्ठतम्। इत्युक्त्वा धवलो द्रष्टुं देवीं तां स ततो ययौ॥
प्रविश्यायतनं तस्याः प्रणम्य च विभाव्य च। तामष्टादशदोर्दण्डखण्डितोच्चण्डदानवाम्॥
पादपद्मतलाक्षिप्तमहिषासुरमर्दिनीम्। स विधिप्रेरणोत्पन्नबुद्धिरेवमचिन्तयत्॥
जीवोपहारैर्विविधैरिमां देवीं जनोऽर्चति। अहं तु सिद्ध्यै किं नैतां प्रीणयाम्यात्मोपहारतः॥
इति ध्यात्वैव तद्गर्भगृहादादाय निर्जनात्। खड्गं सांयात्रिकैः कैश्चिद्देव्याः प्राक्प्राभृतीकृतम्॥
बद्ध्वा शिरोरुहैर्घण्टाशृङ्खलायां निजं शिरः। चिच्छेदैतेन खड्गेन तच्छिन्नं चापतद्भुवि॥
चिरं यावत्स नायाति तावद्गत्वा तमीक्षितुम्। तत्रैव देवीभवने तच्छ्वशुर्यो विवेश सः॥
सोऽपि दृष्ट्वा तमुत्कृत्तमूर्धानं भगिनीपतिम्। व्यामोहितस्तथैव स्वं शिरस्तेनासिनाच्छिनत्॥
सोऽपि यावच्च नायाति तावदुद्भ्रान्तमानसा। तद्देवीभवनं सापि ययौ मदनसुन्दरी॥
प्रविश्य दृष्ट्वैव पतिं भ्रातरं च तथागतौ। हा किमेतद्धतास्मीति विलपन्त्यपतद्भुवि॥
क्षणाच्चोत्थाय शोचन्ती तावकाण्डहतावुभौ। किं ममाप्यधुनानेन जीवितेनेत्यचिन्तयत्॥
व्यजिज्ञपच्च देवीं तां देहत्यागोन्मुखी सती। देवि सौभाग्यचारित्रविधानैकाधिदेवते॥
अध्यासितशरीरार्धे भर्तुर्मारारिपोरपि। अशेषललनालोकशरण्ये दुःखहारिणि॥
हृतावेकपदे कस्माद्भर्ता भ्राता च मे त्वया। न युक्तमेतन्मयि ते नित्यभक्ता ह्यहं त्वयि॥
तन्मे श्रितायाः शरणं शृण्वेकं कृपणं वचः। एतां तावत्त्यजाम्यत्र दौर्भाग्योपहतां तनुम्॥
जनिष्ये देवि भूयस्तु यत्र कुत्रापि जन्मनि। तत्रैतावेव भूयास्तां द्वौ भर्तृभ्रातरौ मम॥
इति संस्तुत्य विज्ञप्य देवीं नत्वा च तां पुनः। पाशं विरचयामास लतयाशोकपादपे॥
तत्रार्पयति यावच्च पाशे कण्ठं वितत्य सा। तावत्तत्रोच्चचारैवं भारती गगनाङ्गणात्॥
मा कृथाः साहसं पुत्रि बालाया अपि तेऽमुना। सत्त्वोत्कर्षेण तुष्टास्मि पाशमेतं परित्यज॥
संश्लेषय शिरः स्वं स्वं भर्तृभ्रातृकबन्धयोः। उत्तिष्ठतां ते जीवन्तावेतौ द्वावपि मद्वरात्॥
एतच्छ्रुत्वैव संत्यज्य पाशं हर्षादुपेत्य सा। अविभाव्यातिरभसाक्रान्ता मदनसुन्दरी॥
बाला भर्तृशिरो भ्रातृदेहेन समयोजयत्। भर्तृदेहेन च भ्रातृशिरो विधिनियोगतः॥
ततोऽक्षताङ्गौ जीवन्तावुभावुत्तस्थतुश्च तौ। शिरोविनिमयाज्जातसंकरौ काययोर्मिथः॥
अथान्योन्योदितस्वस्वयथावृत्तान्ततोषिणः। प्रणम्य देवीं शर्वाणीं यथेष्टं ते ययुस्त्रयः॥
यान्ती च दृष्ट्वा स्वकृतं शिरोविनिमयं तयोः। विग्ना किंकार्यतामूढा साभून्मदनसुन्दरी॥
तद्ब्रूहि राजन्को भर्ता तस्याः संकीर्णयोस्तयोः। पूर्वोक्तः स्यात्स शापस्ते जानानो न ब्रवीषि चेत्॥

थाप्रश्नं राजा वेतालतस्ततः। स त्रिविक्रमसेनोऽत्र तमेवं प्रत्यभाषत ॥ ५२
तिशिरः सैष तस्याः पतिस्तयोः। प्रधानं च शिरोऽङ्गेषु प्रत्यभिज्ञा च तद्गता ॥ ५३
इत्युक्तवतो नृपतेस्तस्यांसात्पुनरतर्कितः स ययौ।
वेतालः स च राजा जगाम भूयस्तमानेतुम् ॥ ५४

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके त्रयोदशस्तरङ्गः।

---

चतुर्दशस्तरङ्गः।

( सप्तमो वेतालः। )

ुनः प्राप्य वेतालं शिंशपातरोः। स त्रिविक्रमसेनस्तं स्कन्धे जग्राह भूपतिः ॥ १
थतं तं च वेतालः सोऽब्रवीत्पथि। राजञ्श्रमविनोदार्थं कथामाख्यामि ते शृणु ॥ २
लिप्तीति पुरी पूर्वाम्बुधेस्तटे। चण्डसेनाभिधानश्च राजा तस्यामभूत्पुरि ॥ ३
रस्त्रीषु यो न सङ्ग्रामभूमिषु। हर्ता च शत्रुलक्ष्मीणां न परद्रव्यसंपदाम् ॥ ४
क्षिणात्यो राजपुत्रो जनप्रियः। आययौ सत्त्वशीलाख्यः सिंहद्वारेऽत्र भूपतेः ॥ ५
मावेद्य नैर्धन्यात्तं नृपं प्रति। कर्पटं पाटयामास राजपुत्रैः सहापरैः ॥ ६
को भूत्वा बहून्यब्दानि तत्र सः। तस्थौ कुर्वन्सदा सेवां नैव प्राप फलं नृपात् ॥ ७
ये जन्म निर्धनत्वं किमीदृशम्। निर्धनत्वेऽपि किं धात्रा कृतेयं मे महेच्छता ॥ ८
मानं मामेवं क्लिष्टपरिच्छदम्। चिरं क्षुधावसीदन्तं राजा नाद्यापि वीक्षते ॥ ९
स ध्यायत्यत्र कार्पटिकस्ततः। तावदाखेटकार्थं स निरगादेकदा नृपः ॥ १०
के धावत्यग्रे लगुडवाहिनि। जगाम चाश्वपादातयुतः सोऽथ मृगाटवीम् ॥ ११
त्रारान्महान्तं मत्तसूकरम्। अनुधावन्क्षणात्प्रापदतिदूरं वनान्तरम् ॥ १२
च्छन्नमार्गे हारितसूकरः। श्रान्तो महावने सोऽथ राजा दिङ्मोहमाययौ ॥ १३
कश्चाथ स तं वाताश्वपृष्ठगम्। प्राणानपेक्षोऽनुययौ पदातिः क्षुत्तृषार्दितः ॥ १४
थाभूतमन्वायातं स भूपतिः। सस्नेहमवदत्कच्चिद्वेत्सि मार्गं यथागतम् ॥ १५
लिं बद्ध्वा स तं कार्पटिकोऽभ्यधात्। वेद्मि किं च क्षणं तावदिह विश्राम्यतु प्रभुः ॥ १६
मध्यमणिरेष हि संप्रति। देदीप्यते स्फुरद्रश्मिशिखाजालोऽब्जिनीपतिः ॥ १७
राजा तं सोपरोधमभाषत। तर्हि क्वापीह पानीयं भवता प्रेक्ष्यतामिति ॥ १८
ततस्तुङ्गं कार्पटिकस्तरुम्। नदीं दृष्ट्वावरुह्याथ नृपं तत्र निनाय तम् ॥ १९
र्याणीकृतं कृतविवर्तनम्। दत्ताम्बुशष्पकवलं विदधे विगतश्रमम् ॥ २०
ाझे च प्रोन्मुच्य वसनाञ्चलात्। प्रक्षाल्योपानयत्तस्मै हृद्यान्यामलकानि सः ॥ २१
इत्येतं पृच्छन्तं स च भूपतिम्। एवं व्यजिज्ञपज्जानुस्थितः सामलकाञ्जलिः ॥ २२
नित्यं व्यतीतदशवत्सरः। चराम्याराधयन्देवमनेकान्तमुनिव्रतम् ॥ २३
नामा त्वं सत्त्वशीलः किमुच्यते। इत्युक्त्वा स कृपाक्रान्तो ह्रीतश्चाचिन्तयन्नृपः ॥ २४
ष्टमक्लिष्टं ये भृत्येषु न जानते। धिक्तं परिवारं यो न ज्ञापयति तांस्तथा ॥ २५
जग्राह स राजामलकद्वयम्। हस्तात्कार्पटिकस्याथ कथंचिदनुबन्धतः ॥ २६
निपीयाम्बु विशश्रामात्र स क्षणम्। जग्धामलकसंपीतजलकार्पटिकान्वितः ॥ २७
तेन वाहं कार्पटिकेन सः। आरुह्याग्रेसरे तस्मिन्नेव मार्गप्रदर्शिनि ॥ २८
ारूढे हयस्याभ्यर्थितेऽप्यलम्। ययौ स राजा स्वपुरीं पथि प्राप्तात्मसैनिकः ॥ २९

---

पुस्तकान्तरे 'कस्त्वं कथमिहायात इति प्राहाथ सोऽब्रवीत्। देवास्मि दाक्षिणात्योऽहं राजपुत्रोऽनुगस्तव ॥
जा तं सोपरोधमभाषत। सस्नेहं चापि कच्चित्त्वं वेत्सि······॥' इत्यधिकमस्ति.

तत्र प्रख्याप्य तद्भक्तिं वसुभिर्विषयैश्च तम्। अपूरयत्कार्पटिकं न चामन्यत निष्कृतिम्॥
ततः कृतार्थः पार्श्वेऽस्य चण्डसिंहस्य भूपतेः। मुक्तकार्पटिकाचारः सत्त्वशीलः स तस्थिवान्॥
एकदा तेन राज्ञा च स सिंहलपतेः सुताम्। याचितुं सिंहलद्वीपमात्मार्थं प्रेषितोऽभवत्॥
तत्राब्धिवर्त्मना गच्छन्नर्चिताभीष्टदेवतः। आरुरोह प्रवहणं राजादिष्टैः सह द्विजैः॥
गते तस्मिन्प्रवहणे मध्यभागमशङ्कितम्। उत्तस्थौ जलधेस्तस्माद्ध्वजो जनितविस्मयः॥
अभ्रंलिहाग्रः सुमहाञ्जाम्बूनदविनिर्मितः। विचित्रवर्णविचलद्वैजयन्तीविराजितः॥
तत्कालं चात्र सहसा समुन्नम्य घनावली। भृशं वर्षितुमारेभे ववौ तीव्रश्च मारुतः॥
तैर्वर्षवातैः स बलादाकृष्याधोरणैरिव। आसज्यत ध्वजस्तम्भे तस्मिन्प्रवहणद्विपः॥
तावच्च स ध्वजस्तस्मिन्वारिधौ वीचिविप्लुते। वहनेन समं तेन प्रावर्तत निमज्जितुम्॥
ततो द्विजास्ते तत्रस्थाश्चण्डसिंहं स्वभूपतिम्। उद्दिश्योद्धोषयामासुरब्रह्मण्यं भयाकुलाः॥
तदाकर्ण्यासहिष्णुश्च स्वामिभक्तेरनुध्वजम्। स सत्त्वशीलो निस्त्रिंशहस्तो बद्धोत्तरीयकः॥
आत्मानमक्षिपत्तत्र निरपेक्षो महोदधौ। उदधेः कारणाशङ्की वीरः प्रतिविधित्सया॥
मग्ने च तस्मिन्वातोर्मिदूरोत्क्षिप्तमभज्यत। वहनं तच्च तत्स्थाश्च निपेतुर्यादसां मुखे॥
स च मग्नोऽम्बुधौ तत्र सत्त्वशीलो निरीक्षते। यावत्तावद्ददर्शात्र पुरीं दिव्यां न वारिधिम्॥
तस्मिन्मणिमयस्तम्भैर्भास्वरे हेममन्दिरे। सद्रत्नबद्धसोपानवापीकोद्यानशोभिनि॥
नानामणिशिलाभित्तिरत्नचित्रोच्छ्रितध्वजम्। कात्यायनीदेवगृहं मेरुप्रोन्नतमैक्षत॥
तत्र प्रणम्य देवीं तां स्तुत्वाभ्यर्च्य तदग्रतः। इन्द्रजालं किमेतत्स्यादित्याश्चर्यादुपाविशत्॥
तावच्च देव्यग्रगतप्रभामण्डलकान्तरात्। अकस्मान्निरगात्कन्या दिव्योद्धाट्य कवाटकम्॥
इन्दीवराक्षी फुल्लाब्जवदना कुसुमस्मिता। मृणालनालमृद्वङ्गी जङ्गमेव सरोजिनी॥
स्त्रीसहस्रपरीवारा देवीगर्भगृहं च सा। विवेश सत्त्वशीलस्य हृदयं च ततः समम्॥
निरगात्कृतपूजा च देवीगर्भगृहात्ततः। न पुनः सत्त्वशीलस्य हृदयात्सा कथंचन॥
प्राविशत्सा च तत्रैव प्रभामण्डलकान्तरे। सत्त्वशीलोऽप्यसौ तस्याः पश्चात्तत्र प्रविष्टवान्॥
प्रविश्य च ददर्शान्तरन्यद्देवोत्तमं पुरम्। संकेतोद्यानमिव यत्सर्वासां भोगसंपदाम्॥
तत्रान्तर्मणिपर्यङ्कनिषण्णां तां विलोक्य सः। कन्यामुपेत्य तत्पार्श्वे सत्त्वशील उपाविशत्॥
आसीच्च तन्मुखासक्तलोचनो लिखितो यथा। अङ्गैः सोत्कम्पपुलकैर्वदन्नालिङ्गनोत्कताम्॥
दृष्ट्वा च तं स्मराविष्टं चेटीनामत्र सा मुखम्। अद्राक्षीत्ताश्च तत्कालमिङ्गितज्ञास्तमब्रुवन्॥
अतिथिस्त्वमिह प्राप्तस्तदस्मत्स्वामिनीकृतम्। भजस्वातिथ्यमुत्तिष्ठ स्नाहि भुङ्क्ष्व ततः परम्॥
तच्छ्रुत्वा सोऽवलम्ब्याशां कथमप्युत्थितस्ततः। ययौ प्रदर्शितां ताभिरेकामुद्यानवापिकाम्॥
तस्यां निमग्नश्चोत्तस्थौ ताम्रलिप्त्यां स तत्क्षणात्। चण्डसिंहनृपोद्यानवापीमध्यात्ससंभ्रमः॥
तत्र प्राप्तमकस्माच्च वीक्ष्यात्मानमचिन्तयत्। अहो किमेतत्क्वोद्यानमिदं दिव्यं क्व तत्पुरम्॥
तत्रामृतासारसमं क्व तत्तस्याश्च दर्शनम्। क्व चानन्तरमेवेदं तद्विश्लेषमहाविषम्॥
स्वप्नश्च नायं सुस्पष्टो विनिद्रोऽनुभवो हि मे। ध्रुवं पातालकन्याभिस्ताभिर्मूढोऽस्मि वञ्चितः॥
इति ध्यायन्विना तां स कन्यामुन्मादवानिव। उद्याने तत्र बभ्राम कामार्तो विललाप च॥
तदवस्थं च तं दृष्ट्वा पिशङ्गैः पुष्परेणुभिः। वातोद्धूतैः परीताङ्गं विप्रयोगानलैरिव॥
उद्यानपाला गत्वैव चण्डसिंहमहीभृतम्। व्यजिज्ञपन्स चोद्भ्रान्तः स्वयमेत्य ददर्श तम्॥
सान्त्वयित्वा च पप्रच्छ किमिदं ब्रूहि नः सखे। क्व प्रस्थितस्त्वं क्व प्राप्तः कास्तः क्व पतितः शरः॥
तच्छ्रुत्वा स स्ववृत्तान्तं तस्मै सर्वं शशंस तम्। सत्त्वशीलो नृपतये सोऽप्यथैवमचिन्तयत्॥
हन्त वीरोऽपि मत्पुण्यैः कामेनैष विडम्बितः। आनृण्यं गन्तुमेतस्य लब्धो ह्यवसरो मया॥
इत्यन्तश्चिन्तयित्वा स वीरो राजा जगाद तम्। तर्हि मुञ्च मुधा शोकमहं त्वां प्रापयामि ताम्॥

तेनैव मार्गेण प्रियामसुरकन्यकाम् । इति चाश्वासयामास तं स स्नानादिना नृपः ॥ ६९
मंत्रिविन्यस्तराज्यस्तेन समं च सः । प्रायात्प्रवहणारूढस्तद्दर्शितपथोऽम्बुधिम् ॥ ७०
न्मध्यभागं च दृष्ट्वा तं प्राग्वदुत्थितम् । सपताकं ध्वजं सत्त्वशीलस्तं नृपमभ्यधात् ॥ ७१
भ्युत्थितो दिव्यप्रभावोऽत्र महाध्वजः । मयि मग्नेऽत्र मङ्क्तव्यं देवेनैतमनुध्वजम् ॥ ७२
ा निकटं प्राप्य ध्वजस्यास्य निमज्जतः । मार्गे स सत्त्वशीलोऽसौ पूर्वमात्मानमक्षिपत् ॥ ७३
जापि चिक्षेप तत्रात्मानं तथैव सः । अन्तर्मग्नौ च तौ क्षिप्रं तद्दिव्यं प्रापतुः पुरम् ॥ ७४
ट्वा स साश्चर्यो राजा देवीं प्रणम्य ताम् । पार्वतीं सत्त्वशीलेन सहितः समुपाविशत् ॥ ७५
निरगात्तत्र सा सखीजनसंगता । रूपिणीव प्रभा कन्या प्रभामण्डलकात्ततः ॥ ७६
सुमुखीत्युक्ते सत्त्वशीलेन तां नृपः । दृष्ट्वा युक्तमभिष्वङ्गं तस्य तस्याममन्यत ॥ ७७
ां वीक्ष्य राजानं शुभशारीरलक्षणम् । पुरुषातिशयोऽपूर्वः कोऽयं स्यादित्यचिन्तयत् ॥ ७८
चाम्बिकाधाम पूजायै सा नृपोऽपि सः । जगामोद्यानमादाय सत्त्वशीलमवज्ञया ॥ ७९
कृतपूजा सा निरगाद्दैत्यकन्यका । याचित्वा सत्पतिप्राप्तिं देव्या गर्भगृहान्तरात् ॥ ८०
सा जगादैकां सखीं सखि गवेष्यताम् । योऽसाविह मया दृष्टो महात्मा क्व स तिष्ठति ॥ ८१
यं गृह्यतामेत्य प्रसादः क्रियतां त्वया । इति चैषोऽर्थ्यतां पूज्यः पुमान्कोऽप्युत्तमो ह्यसौ ॥ ८२
खी तयोक्ता सा विचित्योद्यानवर्तिने । स्वस्वामिनीनिदेशं तं प्रह्वा तस्मै न्यवेदयत् ॥ ८३
स नृपो वीरः सावहेलमुवाच ताम् । एषैवातिथ्यमस्माकमन्यत्किमुपयुज्यते ॥ ८४
वा तया गत्वा सख्या सा श्राविता तदा । मेने मान्यमुदारं तं सर्वथा दैत्यकन्यका ॥ ८५
ष्यमाणेव धैर्यपाशेन तेन सा । नृपेण मानुषायोग्येऽप्यातिथ्ये निःस्पृहात्मना ॥ ८६
ार्वतीसेवापरिपाकसमर्पितम् । मत्वा तत्स्वयमुद्यानं विवेशासुरपुत्रिका ॥ ८७
शकुनालापैर्वाताञ्चितलताभुजैः । विकीर्णकुसुमैराराज्ञन्यमानेव पादपैः ॥ ८८
च सा तत्र यथावत्प्रश्रयानता । आतिथ्यग्रहणार्थं तं प्रार्थयामास पार्थिवम् ॥ ८९
सत्त्वशीलं तमुद्दिश्योवाच तां नृपः । अनेन कथितां देवीमिहाहं द्रष्टुमागतः ॥ ९०
जपथप्राप्यपरमाद्भुतकेतनाम् । सा दृष्टा तदनु त्वं च कान्यातिथ्यार्थितात्र नः ॥ ९१
साब्रवीत्कन्या कौतुकात्तर्हि वीक्षितुम् । आगम्यतां द्वितीयं मे पुरं त्रिजगदद्भुतम् ॥ ९२
वतीं तां च स विहस्य नृपोऽब्रवीत् । तदप्यनेनैवोक्तं मे यत्र सा स्नानवापिका ॥ ९३
कन्यकावादीद्देव मा स्मैवमादिश । न विडम्बनशीलाहं का वा पूज्ये विडम्बना ॥ ९४
सत्वोत्कर्षेण युष्माकं किंकरीकृता । तन्मम प्रार्थनाभङ्गं नैवैवं कर्तुमर्हथ ॥ ९५
त्रा तथेत्युक्त्वा सत्त्वशीलसखः स तत् । प्रभामण्डलकोपान्तं ययौ राजा तया सह ॥ ९६
कवाटे च तस्मिन्नन्तस्तथैव सः । प्रवेशितो ददर्शास्यास्तद्दिव्यमपरं पुरम् ॥ ९७
नद्धसर्वर्तु सदापुष्पफलद्रुमम् । मेरुपृष्ठमिवाशेषं निर्मितं रत्नकाञ्चनैः ॥ ९८
े महार्हे तं राजानमुपवेश्य सा । यथोचितोपनीतार्घ्या दैत्यराजसुताब्रवीत् ॥ ९९
मसुरेन्द्रस्य कालनेमेर्महात्मनः । चक्रायुधेन च स मे स्वर्गतिं प्रापितः पिता ॥ १००
र्कृतं चेदं पैतृकं मे पुरद्वयम् । न जरात्र न मृत्युश्च बाधते सर्वकामदे ॥ १०१
च पिता त्वं मे सपुराहं वशे तव । इत्यर्पितात्मसर्वस्वां तामुवाच स भूपतिः ॥ १०२
त्सुते ह्यस्मै मया दत्तास्यनिन्दिते । सत्वशीलाय वीराय सुहृदे बान्धवाय च ॥ १०३
प्रसादेन मूर्तेनेव नृपेण सा । उक्ता गुणज्ञा विनता तत्तथेत्यन्वमन्यत ॥ १०४
तार्थे तं तस्याः कृतपाणिग्रहं नृपः । दत्तासुरपुरैश्वर्यं सत्वशीलमुवाच सः ॥ १०५
ामलकयोस्तयोरेकं मया तव । संशोधितमसंशुद्धाद्दणी तेऽहं द्वितीयतः ॥ १०६
ातमुक्त्वा तं दैत्यपुत्रीं जगाद ताम् । मार्गो मे दर्श्यतां येन स्वपुरीं प्राप्नुयामिति ॥ १०७

ततोऽपराजितं नाम खङ्गं भक्ष्यं फलं च सा। एकं जरामृत्युहरं तस्मै दैत्यसुता ददौ ॥
ताभ्यां युक्तस्तयोक्तायां वाप्यां मग्नः स्वदेशतः। उत्थाय सर्वसंसिद्धकामोऽभूत्स क्रमान्नृपः ॥
सत्त्वशीलोऽपि दैत्यस्त्रीपुरराज्यं शशास सः। तद्ब्रूहि कोऽब्धिपतने द्वयोः सत्त्वाधिकोऽनयोः ॥
इति श्रुत्वा तथाप्रश्नं वेतालाच्छापभीतितः। स त्रिविक्रमसेनस्तं भूपतिः प्रत्यभाषत ॥
एतयोः सत्त्वशीलोऽत्र स मे सत्त्वाधिको मतः। स ह्यविज्ञाततत्त्वार्थो निरास्थः पतितोऽम्बुधौ ॥
राजा तु तत्त्वं विज्ञाय विवेशाम्भोधिमास्थया। दैत्यकन्यां च नावाञ्छदसाध्या स्पृहयेति सः ॥

इति तस्याकर्ण्य वचो निरस्तमौनस्य भूपतेः स्कन्धात्।
स जगाम पूर्ववत्तं वेतालः शिंशपातरुं स्वपदम् ॥
राजापि तथैव स तं पुनरप्यानेतुमनुजगाम जवात्।
प्रारब्धे ह्यसमाप्ते कार्ये शिथिलीभवन्ति किं सुधियः ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके चतुर्दशस्तरङ्गः।

---

पञ्चदशस्तरङ्गः।

( अष्टमो वेतालः। )

गत्वा तां शिंशपां भूयो वेतालं प्राप्य भूमिपः। तं त्रिविक्रमसेनोऽत्र स्कन्धे कृत्वोच्चचाल सः ॥
प्रयान्तं स पुनस्तं च वेतालं स्कन्धतोऽब्रवीत्। श्रमविस्मृतये राजन्मत्तः प्रश्नमिमं शृणु ॥
अङ्गदेशेऽग्रहारोऽस्ति महान्वृक्षघटाभिधः। विष्णुस्वामीति तत्रासीद्द्विजो यज्वा महाधनः ॥
तस्य च स्वानुरूपायां पत्न्यां जाताः क्रमात्त्रयः। बभूवुस्तरुणाः पुत्रा दिव्यवैदग्ध्यशालिनः ॥
ते पित्रा प्रेषितास्तेन कूर्महेतोः कदाचन। प्रारब्धयज्ञेन ययुस्ते त्रयो भ्रातरोऽम्बुधिम् ॥
प्राप्य कूर्मं ततो ज्यायान्कनिष्ठौ तावभाषत। गृह्णातु युवयोरेकः कूर्मं क्रतुकृते पितुः ॥
अहमेतं न शक्नोमि ग्रहीतुं विस्रपिच्छलम्। इत्युक्तवन्तं तं ज्येष्ठं कनिष्ठौ ताववोचताम् ॥
तवात्र विचिकित्सा चेन्नावयोरपि सा कथम्। तच्छ्रुत्वा सोऽब्रवीज्ज्येष्ठो गृह्णीतं कच्छपं युवाम् ॥
पितुर्यज्ञक्रियालोपो भवेद्युष्मत्कृतोऽन्यथा। ततो नरकपातः स्याद्युवयोस्तस्य च ध्रुवम् ॥
इत्युक्तावनुजौ तेन तौ विहस्य तमूचतुः। धर्मं वेत्स्यावयोरेव समानमपि नात्मनः ॥
ततो ज्येष्ठोऽब्रवीत्किं मे जानीथो नैव चङ्गताम्। अहं भोजनचङ्गोऽस्मि नाहं स्प्रष्टुं जुगुप्सितम् ॥
एतत्तस्य वचः श्रुत्वा भ्रातरं मध्यमोऽब्रवीत्। अहं तर्ह्यधिकश्चङ्गो नारीचङ्गो विचक्षणः ॥
मध्यमेनैवमुक्ते तु ज्यायान्पुनरुवाच सः। कूर्मं गृह्णातु तर्ह्येष कनीयानावयोरिति ॥
ततः स भ्रुकुटिं कृत्वा कनीयानप्युवाच तौ। हे मूर्खौ तूलिकाचङ्गश्चङ्गोऽहं हि विशेषतः ॥
एवं ते कलहासक्तास्त्रयोऽपि भ्रातरो मिथः। निर्णयायाभिमानैकग्रस्ताः कूर्मं विहाय तम् ॥
राज्ञः प्रसेनजिन्नाम्नस्तत्प्रदेशभुवोऽन्तिकम्। नगरं सहसा जग्मुर्विटङ्कपुरनामकम् ॥
तत्र प्रतीहारमुखेनावेद्यान्तः प्रविश्य च। नृपं विज्ञापयामासुः स्ववृत्तान्तं तथैव ते ॥
तिष्ठतेहैव यावद्वः परीक्षिष्ये क्रमादहम्। इत्युक्तास्तेन राज्ञा च तस्थुस्तत्र तथेति ते ॥
स्वाहारकाले चानाय्य तेभ्यः सोऽग्रासनं नृपः। राजार्हं दापयामास षड्रसं स्वादुभोजनम् ॥
भुञ्जानेषु च सर्वेषु तदैको बुभुजे न सः। विप्रो भोजनचङ्गोऽत्र जुगुप्साकूणिताननः ॥
कथं न भोजनं भुङ्क्षे ब्रह्मन्स्वादु सुगन्ध्यपि। इति राज्ञा स्वयं पृष्टः शनैर्विप्रो जगाद सः ॥
शवधूमदुरामोदः शालिभक्तेऽत्र विद्यते। तेन नाहमिदं भोक्तुमुत्सहे स्वाद्वपि प्रभो ॥
इत्युक्ते तेन सर्वेऽपि तत्राघ्राय नृपाज्ञया। ऊचुः कलमशाल्यन्नमदोषं तत्सुगन्धि च ॥
स तु भोजनचङ्गस्तन्नाश्नात्पिहितनासिकः। ततः स राजा संचिन्त्य यावदन्विष्यति क्रमात् ॥
तावन्नियोगिजनतस्तदन्नं बुबुधे तथा। ग्रामश्मशाननिकटक्षेत्रसंभवशालिजम् ॥

तेविस्मितस्तुष्टः स राजा तमभाषत । सत्यं भोजनचङ्गस्त्वं तदन्यद्भुज्यतामिति ॥ २६
रश्च स नृपो विप्रान्वासगृहेषु तान् । विसृज्यानाययामास स्वामिकां गणिकोत्तमाम् ॥ २७
तस्मै द्वितीयस्मै प्राहिणोत्कृतमण्डनाम् । विप्राय नारीचङ्गाय सायं सर्वाङ्गसुन्दरीम् ॥ २८
वासगृहं तस्य राजभृत्यान्विता ययौ । राकानिशेव पूर्णेन्दुमुखी कंदर्पदीपिनी ॥ २९
यां च तस्यां स प्रभाभासितवेश्मनि । उत्पन्नमूर्छः संरुद्धनासाग्रो वामपाणिना ॥ ३०
ङ्गोऽब्रवीद्राजभृत्यान्निष्कास्यतामिति । न चेन्मृतोऽहं निर्याति गन्धोऽस्याश्छागलो यतः ॥ ३१
ास्तेन निन्युस्ते विप्रां तां राजपूरुषाः । राज्ञोऽन्तिकं वारवधूं वृत्तान्तं जगदुश्च तम् ॥ ३२
ानाय्य तत्कालं नारीचङ्गमुवाच तम् । येयं श्रीखण्डकर्पूरकालागुरुमदोत्तमैः ॥ ३३
ाधना दिक्षु प्रसरच्चारुसौरभा । तस्या वारविलासिन्या गन्धः स्याच्छागलः कुतः ॥ ३४
ोऽपि स राज्ञा तन्नारीचङ्गस्तदा न यत् । प्रतिपेदे तदा राजा विचारपतितोऽभवत् ॥ ३५
ा युक्त्या बुबुधे तामजक्षीरवर्धिताम् । तन्मुखादेव बालत्वे मातृधात्रीवियोगतः ॥ ३६
ेविस्मितस्तस्य नारीचङ्गस्य चङ्गताम् । प्रशंसन्नृपतिस्तस्मै तृतीयाय द्विजन्मने ॥ ३७
तूलिकाचङ्गायाशु शय्यामदापयत् । पर्यङ्कोपरि विन्यस्तसप्तसंख्याकतूलिकाम् ॥ ३८
च तूलिकाचङ्गो महार्हे वासवेश्मनि । सुष्वाप धौतसुश्लक्ष्णपटप्रच्छदवाससि ॥ ३९
एवं च गते स रात्रौ शयनात्ततः । उत्तस्थौ पाण्यवष्टब्धपार्श्वः क्रन्दन्व्यथार्दितः ॥ ४०
तस्य पार्श्वे च तत्रत्यै राजपूरुषैः । गाढलग्नस्य बालस्य मुद्रेव कुटिलारुणा ॥ ४१
व तैस्तदाख्यातं राज्ञे राजाप्युवाच तान् । तूलिकानां तले किंचिन्मा स्यात्तद्वीक्ष्यतामिति ॥ ४२
न्ते च ते यावदेकैकं तूलिकातलम् । तावत्सर्वतलादापुर्बालं पर्यङ्कपृष्ठतः ॥ ४३
च्चादर्शयन्राज्ञे सोऽप्यानीतस्य वीक्ष्य तत् । तद्रूपं तूलिकाचङ्गस्याङ्गं राजा विसिस्मिये ॥ ४४
स्तूलिकाभ्योऽस्य बालो लग्नस्तनौ कथम् । इति चिन्तयमाणस्तां राजा रात्रिं निनाय सः ॥ ४५
द्भुतवैदग्ध्यसौकुमार्या अमी इति । तेभ्यस्त्रिभ्योऽपि चङ्गेभ्यो हेमलक्षत्रयं ददौ ॥ ४६
सुखितास्तत्र तस्थुर्विस्मृतकच्छपाः । पितुर्विघ्नितयज्ञार्थफलोपार्जितपातकाः ॥ ४७

इत्याख्याय कथाद्भुतमंसनिषण्णः पुनः स वेतालः ।
प्रपच्छ तं त्रिविक्रमसेनं पृथ्वीपतिं प्रश्नम् ॥ ४८
राजन्विचिन्त्य शापं पूर्वोक्तं ब्रूहि मे त्वमेतेषाम् ।
भोजननारीशय्याचङ्गानां कोऽधिकश्चङ्गः ॥ ४९
तच्छ्रुत्वैव स धीमान्वेतालं प्रत्युवाच तं नृपतिः ।
अहमेषां निष्कैतवमधिकं जानामि तूलिकाचङ्गम् ॥ ५०
यस्याङ्गे प्रत्यक्षं बालप्रतिबिम्बमुद्गतं दृष्टम् ।
इतराभ्यां हि भवेत्तत्पूर्वं ज्ञात्वन्यतोऽवगतम् ॥ ५१
इति तस्योक्तवतोऽसाद्वेतालो भूपतेर्ययौ प्राग्वत् ।
सोऽपि तथैव च राजा तमन्वयासीदनिर्विण्णः ॥ ५२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके पञ्चदशस्तरङ्गः ।

---

षोडशस्तरङ्गः ।

( नवमो वेतालः । )

त्वा पुनस्तस्माच्छिंशपापादपान्नृपः । स त्रिविक्रमसेनस्तं स्कन्धे वेतालमग्रहीत् ॥ १
ध ततस्तेन वेतालेनाभ्यधायि सः । राजन्क राज्यं कैतस्मिन्श्मशाने भ्रमणं निशि ॥ २
क्षसे भूतसंकुलं रात्रिभीषणम् । चिताधूमैरिव ध्वान्तैर्निरुद्धं पितृकाननम् ॥ ३
ग्ग्रहोऽयं ते भिक्षोस्तस्यानुरोधतः । तदिमं शृणु तावन्मे प्रश्नं मार्गविनोदनम् ॥ ४

अवन्तिष्वस्ति नगरी युगादौ देवनिर्मिता । शैवी तनुरिवोद्दामभोगिभूतिविभूषिता ॥
पद्मावती भोगवती या हिरण्यवतीति च । कृतादिषु त्रिषु ख्याता कलावुज्जयिनीति च ॥
तस्यां च वीरदेवाख्यो राजाभूद्भूभृतां वरः । तस्य पद्मरतिर्नाम महादेवी बभूव च ॥
सोऽथ राजा तया साकं गत्वा मन्दाकिनीतटे । हरमाराधयामास तपसा पुत्रकाम्यया ॥
चिरं तपःस्थितश्चात्र परितुष्टेश्वरोदिताम् । कृतस्नानार्चनविधिः शुश्रावेमां गिरं दिवः ॥
राजन्नुत्पत्स्यते पुत्रः शूरस्तव कुलोद्भवः । कन्या चानन्यसामान्यलावण्यन्यक्कृताप्सराः ॥
श्रुत्वैतां नाभसीं वाणीं सिद्धाभीष्टः स भूपतिः । वीरदेवः स्वनगरीमाययौ महिषीसखः ॥
तत्रास्य शूरदेवाख्ये जाते प्रथममात्मजे । तस्यां पद्मरतौ देव्यां क्रमादजनि कन्यका ॥
अनङ्गस्यापि रूपेण रतिमुत्पादयेदियम् । इत्यनङ्गरतिर्नाम्ना पित्रा तेन व्यधायि सा ॥
वृद्धिं गतायास्तस्याश्च स पिता सदृशं वरम् । प्रेप्सुरानाययत्पृथ्व्यां पटेषु लिखितान्नृपान् ॥
तेष्वेकोऽपि न यत्तस्य तत्तुल्यः प्रत्यभासत । तेन राजा स वात्सल्यात्तां सुतां प्रत्यभाषत ॥
अहं तावन्न पश्यामि सदृशं पुत्रि ते वरम् । तत्कुरुष्व नृपान्सर्वान्मेलयित्वा स्वयंवरम् ॥
एतत्पितृवचः श्रुत्वा राजपुत्री जगाद सा । तात स्वयंवरं कर्तुं त्रपणान्नाहमुत्सहे ॥
किं त्वेकं वेत्ति योऽपूर्वं विज्ञानं स्वाकृतिर्युवा । तस्मै त्वयाहं दातव्या नार्थोऽन्येनाधिकेन मे ॥
इत्यनङ्गरतेस्तस्याः श्रुत्वा स्वदुहितुर्वचः । तादृशं तद्वरं यावदन्विष्यति स भूपतिः ॥
तावत्तल्लोकतो बुद्ध्वा चत्वारस्तमुपाययुः । वीरा विज्ञानिनो भव्याः पुरुषा दक्षिणापथात् ॥
ते राज्ञा पूजितास्तस्मै स्वं स्वं विज्ञानमेकशः । शशंसुः संनिधौ तस्या राजपुत्र्यास्तदर्थिनः ॥
एको जगाद शूद्रोऽहमाख्यया पञ्चपट्टिकः । पञ्चाग्र्यवस्त्रयुग्मानि करोम्येकोऽहमन्वहम् ॥
तेभ्य एकं प्रयच्छामि देवायैकं द्विजन्मने । एकं च परिगृह्णामि वाससोरात्मनः कृते ॥
एकं ददामि भार्यायै यदि सा भवतीह मे । एकं विक्रीय चाहारपानादि विदधाम्यहम् ॥
एवंविज्ञानिनेऽनङ्गरतिर्मे दीयतामिति । इत्येकेनोदिते तेन द्वितीयः पुरुषोऽब्रवीत् ॥
भाषाज्ञो नाम वैश्योऽहं सर्वेषां मृगपक्षिणाम् । रुतं वेद्मि तदेषा मे राजपुत्री प्रदीयताम् ॥
एवमुक्ते द्वितीयेन तृतीयः प्रोक्तवांस्ततः । अहं खड्गधरो नाम दोःशाली क्षत्रियो नृप ॥
न खड्गविद्याविज्ञाने प्रतिमल्लोऽस्ति मे क्षितौ । तदेषा तनया राजंस्त्वया मह्यं वितीर्यताम् ॥
इत्युक्ते तु तृतीयेन चतुर्थ इदमभ्यधात् । विप्रोऽहं जीवदत्ताख्यो विज्ञानं च ममेदृशम् ॥
जन्तून्मृतानप्यानीय दर्शयाम्याशु जीवतः । तद्वीरचर्यासिद्धं मां पतिमेषा प्रपद्यताम् ॥
एवंवक्तॄन्स तान्पश्यन्दिव्यवेषाकृतीन्नृपः । वीरदेवः सुतायुक्तो दोलारूढ इवाभवत् ॥
इत्याख्याय कथामेतां वेतालः पृष्टवान्नृपम् । स त्रिविक्रमसेनं तं दत्तपूर्वोक्तशापभीः ॥
तद्भवान्वक्तु तावन्मे कस्मै देया विशांपते । तेषां चतुर्णां मध्यात्सा कन्यानङ्गरतिर्भवेत् ॥
एतच्छ्रुत्वा स राजा तं वेतालं प्रत्यभाषत । मौनं त्याजयति प्रायः कालक्षेपाय मां भवान् ॥
अन्यथा गहनः कोऽयं प्रश्नो योगेश्वरोच्यताम् । शूद्राय हि कुविन्दाय क्षत्रिया दीयते कथम् ॥
वैश्यायापि कथं देया क्षत्रिया यच्च तद्गतम् । मृगादिभाषाविज्ञानं कार्ये तत्कोपयुज्यते ॥
योऽपि विप्रस्तृतीयोऽत्र तेनापि पतितेन किम् । स्वकर्मप्रच्युतेनेन्द्रजालिना वीरमानिना ॥
तस्मात्तस्मै क्षत्रियाय चतुर्थाय समाय सा । देया खड्गधरायैव स्वविद्यावीर्यशालिने ॥

एतत्तस्य वचो निशम्य नृपतेरंसस्थलात्पूर्ववे-
द्वेतालः स जगाम योगबलतः स्वस्थानमेवाशु तत् ।
भूपालोऽपि स तं तथैव पुनरप्यानेतुमन्वग्ययया-
वुत्साहैकघने हि वीरहृदये नाप्नोति खेदोऽन्तरम् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके षोडशस्तरङ्गः ।

---

सप्तदशस्तरङ्गः ।

( दशमो वेतालः । )

त्रिविक्रमसेनोऽथ गत्वा तं शिंशपातरोः । राजा जग्राह वेतालं पुनरंसे चचाल च ॥ १
न्तं च तमाह स्म वेतालः सोंऽसपृष्ठगः । श्रान्तोऽसि राजंस्तदिमां शृणु श्रमहरां कथाम् ॥ २
त्सकलभूपालमस्तकन्यस्तशासनः । वीरबाहुरिति ख्यातो नाम्ना पार्थिवसत्तमः ॥ ३
ानङ्गपुरं नाम बभूव नगरोत्तमम् । तत्रासीदर्थदत्ताख्यः सार्थवाहो महाधनः ॥ ४
ासीद्धनदत्ताख्यज्येष्ठपुत्रकनीयसी । सुता मदनसेनेति कन्यारत्नं वणिक्पतेः ॥ ५
कदा निजोद्याने क्रीडन्तीं ससखीजनाम् । ददर्श धर्मदत्ताख्यो भ्रातृमित्रं वणिक्सुतः ॥ ६
ामालोक्य लावण्यरसनिर्भरनिर्झराम् । आलक्ष्यकुचकुम्भाग्रां वलित्रयतरङ्गिताम् ॥ ७
नद्विरदस्येव क्रीडामज्जनवापिकाम् । सद्योऽभूत्स्मरबाणौघसंतापहृतचेतनः ॥ ८
धाराधिरूढेन रूपेण द्योतितामुना । इयं मे मानसं भेत्तुं भल्ली मारेण निर्मिता ॥ ९
दि यावद्ध्यायन्स निर्वर्णयति तां चिरम् । तावत्तस्यातिचक्राम चक्राह्वस्येव वासरः ॥ १०
मदनसेना सा विवेश स्वगृहान्तरम् । चित्तं च धर्मदत्तस्य तदनालोकनव्यथा ॥ ११
र्शनदुःखाग्निसंतापेनेव च ज्वलन् । लोहितो निपपाताशु भास्वानप्यपराम्बुधौ ॥ १२
ज्ञायैव सुमुखीं नक्तमभ्यन्तरे गताम् । उदियाय शनैश्चन्द्रस्तन्मुखाब्जविनिर्जितः ॥ १३
त्वा गृहं तां स धर्मदत्तोऽनुचिन्तयन् । तस्थौ निपत्य शयने चन्द्रपादाहतो लुठन् ॥ १४
पृच्छ्यमानोऽपि सखिभिर्बन्धुभिस्तथा । न किंचित्कथयामास स्मरग्रहविमोहितः ॥ १५
कृच्छ्राच्च संप्राप्तनिद्रः स्वप्ने तथैव ताम् । पश्यन्ननुनयन्कान्तां किं किं चक्रे न सोत्सुकः ॥ १६
प्रबुद्धो गत्वा च ददर्शैकाकिनीं रहः । सखीं प्रतीक्षमाणां तां तत्रोद्यानस्थितां पुनः ॥ १७
च परिष्वङ्गलालसः प्रेमपेशलैः । तामुपच्छन्दयामास वचोभिश्चरणानतः ॥ १८
ाहं परदाराश्च न तवास्मीह सांप्रतम् । पित्रा समुद्रदत्ताय दत्ताहं वणिजे यतः ॥ १९
कतिपयैरेव विवाहो भविता च मे । तद्गच्छ तूष्णीं मा कश्चित्पश्येद्दोषो भवेत्ततः ॥ २०
ः स तयात्यर्थं धर्मदत्तो जगाद ताम् । यदस्तु मे न जीवेयं विना हि भवतीमहम् ॥ २१
त्वा सा वणिक्कन्या बलात्कारभयाकुला । तमुवाच विवाहो मे तावत्संपद्यतामिह ॥ २२
ादानफलं तातः प्राप्नोतु चिरकाङ्क्षितम् । ततोऽहं त्वामुपैष्यामि निश्चितं प्रणयार्जिता ॥ २३
त्तोऽब्रवीन्नेष्टा ह्यन्यपूर्वा मम प्रिया । परभुक्ते हि कमले किमलेर्जायते रतिः ॥ २४
ा तेन सावादीत्कृतोद्वाहैव तद्ध्यहम् । पूर्वं त्वामुपयास्यामि ततोऽभ्येष्यामि तं पतिम् ॥ २५
क्तवतीं तस्मिन्नोज्झति प्रत्ययं विना । वणिक्पुत्रे सशपथं सत्यवाचं बबन्ध सा ॥ २६
नोज्झिता विग्ना सा विवेश स्वमन्दिरम् । प्राप्ते च लग्नदिवसे निर्वृत्तोद्वाहमङ्गला ॥ २७
पतिगृहं नीत्वा सोत्सवेन च तद्दिनम् । सा पत्या सममध्यास्त शयनीयगृहं निशि ॥ २८
शय्यानिषण्णापि न तस्य प्रत्यपद्यत । पत्युः समुद्रदत्तस्य परिष्वङ्गमसंमुखी ॥ २९
ुनीयमानापि यदुदश्रुर्बभूव सा । ततस नाभिमतोऽस्म्यस्या नूनमित्यकरोद्धृदि ॥ ३०
चानभिमतो यद्यहं तव सुन्दरि । तन्मे नार्थस्त्वया गच्छ यः प्रियस्तव तं प्रति ॥ ३१
त्वा सा नतमुखी शनैरेवमुवाच तम् । त्वं मे प्राणाधिकः प्रेयान्विज्ञप्तिं किं तु मे शृणु ॥ ३२
ेष्ठ सहर्षं च प्रयच्छ च ममाभयम् । कुरुष्व शपथं यावदार्यपुत्र वदामि ते ॥ ३३
क्तवती कृच्छ्रात्तथा तेन कृते पुनः । सलज्जं सविषादं च सभयं च जगाद सा ॥ ३४
केनीं गृहोद्याने दृष्ट्वा मामेकदा युवा । अरुणद्धर्मदत्ताख्यः सखा भ्रातुः स्मरातुरः ॥ ३५
या सपरीवादं कन्यादानफलं पितुः । मया हठप्रवृत्तस्य तस्य वाक्संयमः कृतः ॥ ३६
ृतविवाहा त्वामुपैष्यामि ततः प्रियम् । तन्मे सत्यवचः पालयमनुमन्यस्व तत्प्रभो ॥ ३७

यावत्तन्निकटं गत्वा क्षणेनोपैमि तेऽन्तिकम् । नहि शक्नोम्यतिक्रान्तुं सत्यमाबाल्यसेवितम् ॥
इति तस्या वचोवज्रपातेन सहसा हतः । समुद्रदत्तः सत्येन बद्धः क्षणमचिन्तयत् ॥
अहो धिगन्यरक्तेयं गन्तव्यं ध्रुवमेतया । तत्सत्यं हन्मि किं यातु कोऽस्याः परिणयग्रहः ॥
इत्यालोच्यानुमेने तां यथेष्टगमनाय सः । साप्युत्थाय ततस्तस्मान्निर्ययौ पतिवेश्मनः ॥
तावदत्रोदयाद्रीन्द्रहर्म्याग्रं हिमदीधितिः । आरुरोह कराक्रान्तहसत्पूर्वदिगङ्गनः ॥
ततस्तमःस्वप्याश्लिष्य स्थितेष्वद्रिदरीप्रियाः । सेवमानेषु भृङ्गेष्वप्यपरं कुमुदाकरम् ॥
यान्ती मदनसेना सा मार्गे दृष्टैकका निशि । चौरेणाधाव्य केनापि रुरुधे वसनाञ्चले ॥
का त्वं ब्रूहि क यासीति तेनोक्ता बिभ्यती च सा । उवाच किं तवानेन मुञ्च कार्यमिहास्ति मे ॥
ततश्चौरोऽब्रवीन्मत्तश्चौरात्वं मुच्यसे कथम् । तच्छ्रुत्वा सावदत्तं च गृहाणाभरणानि मे ॥
अथ चौरोऽभ्यधान्मुग्धे किमेभिरुपलैर्मम । चन्द्रकान्ताननां तार्क्ष्यरत्नासितशिरोरुहाम् ॥
वज्रमध्यां सुवर्णाङ्गीं पद्मरागाङ्घ्रिहारिणीम् । जगदाभरणं नैव मोक्ष्यामि भवतीमहम् ॥
इत्युक्ता तेन चौरेण विवशा सा वणिक्सुता । आख्याय निजवृत्तान्तमेवं प्रार्थयते स्म तम् ॥
क्षमस्व मे क्षणं यावत्कृत्वा सत्यानुपालनम् । इहस्थस्यैव ते पार्श्वमागमिष्यामि सत्वरम् ॥
नाहमुल्लङ्घयिष्यामि भद्र सत्यामिमां गिरम् । श्रुत्वैतत्सत्यसंधां तां मत्वा चौरो मुमोच सः ॥
तस्थौ प्रतीक्षमाणश्च तत्रैव स तदागमम् । सापि तस्यान्तिकं धर्मदत्तस्य वणिजो ययौ ॥
स चाभीष्टामपि प्राप्तां तथा तां विजने स्थिताम् । दृष्ट्वा पृष्ट्वा यथावृत्तं विचिन्त्य क्षणमब्रवीत् ॥
सत्येन तव तुष्टोऽस्मि किं त्वया मे परस्त्रिया । यावत्त्वां नेक्षते कश्चित्तावद्गच्छ यथागतम् ॥
इति तेन परित्यक्ता सा तथेत्याययौ ततः । चौरस्य निकटं तस्य प्रतिपालयतः पथि ॥
ब्रूहि कस्तेऽत्र वृत्तान्तो गताया इति पृच्छते । तस्मै सा तेन वणिजा यथा मुक्ता तथाब्रवीत् ॥
ततः स चौरोऽवादीत्तां यद्येवं तन्मयाप्यसि । विमुक्ता सत्यतुष्टेन गृहं साभरणा व्रज ॥
एवं तेनापि सा त्यक्ता रक्षिता चानुयायिना । अलुप्तशीला मुदिता पत्युरेवाययौ गृहम् ॥
तत्र गुप्तं प्रविष्टा सा प्रहृष्टोपागता सती । दृष्ट्वा पृष्टवते तस्मै पत्ये सर्वमवर्णयत् ॥
सोऽप्यलुप्तमुखच्छायां तामसंभोगलक्षणाम् । संभाव्याभग्नचारित्रां सत्यलाभरतां सतीम् ॥
अदुष्टमनसं भार्यामभिनन्द्य कुलोचितम् । तस्थौ समुद्रदत्तोऽथ तया सह यथासुखम् ॥

इति तत्र कथामुक्त्वा पितृवनभूमौ तदा स वेतालः ॥
वदति स्म तं त्रिविक्रमसेनं वसुधाधिपं भूयः ॥
तद्ब्रूहि चौरवणिजामेषां मध्यान्नरेन्द्र कस्त्यागी ।
जानन्यदि न वदिष्यसि विदलिष्यति ते शिरः शतधा ॥
तच्छ्रुत्वा स महीपतिरुज्झितमौनस्तमाह वेतालम् ।
एषां चौरस्त्यागी न पुनर्वणिजावुभावपि तौ ॥
यो हि पतिस्तामजहादत्याज्यां तादृशीं विवाह्यापि ।
कुलजः सोऽन्यासक्तां भार्यां जानन्कथं वहतु ॥
योऽप्यपरः स भयात्तामत्याक्षीत्कालजीर्णसंवेगः ।
विदितार्थो भर्तास्याः प्रातर्ब्रूयान्नृपायेति ॥
चौरस्तु गुप्तचारी निरपेक्षः पापकर्मकृत्प्राप्तम् ।
स्त्रीरत्नं यदमुञ्चत्साभरणं तेन स त्यागी ॥
एतच्छ्रुत्वैवांसतस्तस्य राज्ञो वेतालोऽगात्पूर्ववत्स्वं पदं सः ।
राजा भूयोऽप्यत्र संप्राप्तुमेतं प्रायादेवाखण्डितोद्दामधैर्यः ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके सप्तदशस्तरङ्गः ।

---

अष्टादशस्तरङ्गः ।

( एकादशो वेतालः ।)

ततो गत्वा पुनः प्राप्य शिंशपातोऽग्रहीन्नृपः । स त्रिविक्रमसेनोंऽसे वेतालं तं चचाल च ॥
आयान्तं च तमंसस्थो वेतालः सोऽब्रवीन्नृपम् । राजन्विचित्रामेकां ते वर्णयामि कथां शृणु ॥
उज्जयिन्यामभूत्पूर्वं नाम्ना धर्मध्वजो नृपः । तिस्रस्तस्याभवन्भार्या राजपुत्र्योऽतिवल्लभाः ॥
एका तास्विन्दुलेखेति तारावल्यपरा तथा । नाम्ना मृगाङ्कवत्यन्या निःसामान्यवपुर्गुणाः ॥
ताभिः स विहरन्राजा राज्ञीभिस्तिसृभिः सह । आसांचक्रे कृती तत्र जिताशेषरिपुः सुखम् ॥
एकदा तत्र संप्राप्ते वसन्तसमयोत्सवे । प्रियाभिः सहितस्ताभिरुद्यानं क्रीडितुं ययौ ॥
तत्रालिमालामौर्वीकाः पश्यन्पुष्पानता लताः । चापयष्टीरनङ्गस्य मधुना सज्जिता इव ॥
शृण्वंश्च तद्द्रुमाग्रस्थकोकिलोदीरितां गिरम् । संभोगैकरसस्याज्ञामिव मानसजन्मनः ॥
सिषेवेऽन्तःपुरैः साकं स राजा वासवोपमः । पानं मदस्य कंदर्पजीवितस्यापि जीवितम् ॥
तन्निःश्वाससुगन्धीनि तद्बिम्बौष्ठरुचीनि च । प्रियापीतावशेषाणि पिबन्रेमे मधूनि सः ॥
तत्र तस्येन्दुलेखाया राज्ञः केलिकचग्रहात् । तस्याः पपात कर्णाग्रादुत्सङ्गे लङ्गदुत्पलम् ॥
तेनोरुपृष्ठे सहसा क्षते जातेऽभिघातजे । अभिजाता महादेवी हाहेत्युक्त्वा मुमूर्छ सा ॥
तद्दृष्ट्वा विह्वलेनार्ता राज्ञा परिजनेन च । समाश्वास्यत राज्ञी सा शनैः शीताम्बुमारुतैः ॥
ततो नीत्वा स राजा तां राजधानीं भिषक्कृतैः । प्रियामुपाचरद्दिव्यैरामुक्तव्रणपट्टिकाम् ॥
रात्रौ च सुस्थितां दृष्ट्वा तां स राजा द्वितीयया । तारावल्या सहारोहच्चन्द्रप्रासादमीश्वरः ॥
तत्र तस्याङ्कसुप्ताया राज्ञस्तस्या हिमत्विषः । करा जालपथैः पेतुरङ्गे चलितवाससि ॥
ततः क्षणात्प्रबुद्धा सा हा दग्धास्मीति वादिनी । शयनात्सहसोत्तस्थौ तदङ्गपरिमर्शिनी ॥
किमेतदिति संभ्रान्तः प्रबुद्धोऽथ ददर्श सः । उत्थाय राजा विस्फोटानङ्गे तस्या विनिर्गतान् ॥
पृच्छन्तं सा च तं प्राह राज्ञी तारावली तदा । नग्नाङ्गे पतितैरिन्दोः करैरेतत्कृतं मम ॥
इत्युक्तवत्याः क्रन्दन्त्याः सार्तैराह्वयति स्म सः । तस्याः परिजनं राजा विह्वलाकुलधावितम् ॥
तेनास्याः कारयामास सजलैर्नलिनीदलैः । शय्यामदापयच्चाङ्गे श्रीखण्डार्द्रविलेपनम् ॥
तावद्बुद्ध्वा तृतीयास्य सा मृगाङ्कवती प्रिया । तत्पार्श्वमागन्तुमना निर्ययौ निजमन्दिरात् ॥
निर्गता साशृणोत्कापि गृहे धान्यावघातजम् । निःशब्दायां निशि व्यक्तं विदूरे मुसलध्वनिम् ॥
श्रुत्वैव हा मृतास्मीति ब्रुवाणा धुन्वती करौ । उपाविशद्यथाक्रान्ता मार्गे सा मृगलोचना ॥
ततः प्रतिनिवृत्यैव नीत्वा परिजनेन सा । स्वमेवान्तःपुरं बाला रुदती शयनेऽपतत् ॥
ददर्श तत्र तस्याश्च चिन्वन्साश्रुः परिच्छदः । आलीनभ्रमरौ पद्माविव हस्तौ किणाङ्कितौ ॥
गत्वा च सोऽब्रवीद्राज्ञे राजाप्यागत्य विह्वलः । किमेतदिति पप्रच्छ सोऽथ धर्मध्वजः प्रियाम् ॥
सापि प्रदर्श्य हस्तौ तमित्युवाच रुजान्विता । श्रुते मुसलशब्दे मे जातावेतौ किणाङ्कितौ ॥
ततः स दाहशमनं दापयामास हस्तयोः । तस्याश्चन्दनलेपादि राजाद्भुतविषादवान् ॥
एकस्या उत्पलेनापि पतता क्षतमाहितम् । द्वितीयस्याः पुनर्दग्धमङ्गं शशिकरैरपि ॥
एतस्यास्तु तृतीयस्याः श्रुतेनापि विनिर्गताः । कष्टं मुसलशब्देन हस्तयोरीदृशाः किणाः ॥
अहो युगपदेतासां प्रेयसीनां ममाधुना । गुणोऽप्यत्यभिजातत्वं जातो दोषाय दैवतः ॥
इति चिन्तयतस्तस्य भ्रमतोऽन्तःपुरेषु च । त्रियामा शतयामेव कृच्छ्रात्सा नृपतेर्ययौ ॥
प्रातश्च स भिषक्छल्यहर्तृभिः सह संव्यधात् । तथा यथाभूदचिरात्स्वस्थान्तःपुरनिर्वृतः ॥
एवमेतां कथामुक्त्वा वेतालोऽत्यद्भुतां तदा । स त्रिविक्रमसेनं तं पप्रच्छांसस्थितो नृपम् ॥
अभिजाततरैतासु राजन्राज्ञीषु का वद । पूर्वोक्तः सोऽस्तु शापस्ते जानन्यदि न जल्पसि ॥

तच्छ्रुत्वा सोऽब्रवीद्राजा सुकुमारतरात्र सा । अस्पृष्टे मुसले यस्याः शब्देनैवोद्गताः किणाः ॥
उत्पलेन्दुकरैः स्पर्शे वृत्ते त्वितरयोर्द्वयोः । संजाता व्रणविस्फोटास्तेन तस्या न ते समे ॥

इति तस्योक्तवतोऽसाद्राज्ञो भूयो जगाम स स्वपदम् ।
वेतालः स च राजा तथैव तं सुदृढनिश्चयोऽनुययौ ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बकेऽष्टादशस्तरङ्गः ।

---

एकोनविंशस्तरङ्गः ।

( द्वादशो वेतालः । )

स त्रिविक्रमसेनोऽथ पुनस्तं शिंशपातरुम् । गत्वा प्राप्य च वेतालं राजा स्कन्धे चकार तम् ॥
प्रतस्थे च तमादाय तूष्णीमेव स पूर्ववत् । ततो भूयस्तमाह स्म वेतालः सोऽसपृष्ठतः ॥
राजन्नेवमनुद्विग्नः पर्याप्तमसि मे प्रियः । तदेतां शृण्वखेदाय हृद्यामाख्यामि ते कथाम् ॥
अङ्गदेशे यशःकेतुरिति राजाभवत्पुरा । क्ष्मामाश्रितोऽङ्गशुध्यर्थमदग्धोऽन्य इव स्मरः ॥
बाहुवीर्यजिताशेषवैरिवर्गस्य तस्य च । दीर्घदर्शीत्यभून्मन्त्री शक्रस्येव बृहस्पतिः ॥
तस्मिन्मन्त्रिणि विन्यस्य राज्यं स हतकण्टकम् । शनैः सुखैकसक्तोऽभूद्वयोरूपमदान्नृपः ॥
तस्थावन्तःपुरे शश्वन्नास्थाने प्रमदास्पदे । शुश्राव रक्तिमद्गीतं वचनं न हितैषिणाम् ॥
रज्यति स्म च निश्चिन्तो जालवातायनेषु सः । न पुना राजकार्येषु बहुच्छिद्रेषु जात्वपि ॥
दीर्घदर्शी तु तद्राज्यचिन्ताभारं समुद्वहन् । अतिष्ठत्स महामन्त्री दिवानिशमतन्द्रितः ॥
नाममात्रे कृतधृतिं प्रक्षिप्य व्यसने नृपम् । मन्त्री राज्ञः श्रियं भुङ्क्ते दीर्घदर्शीह सांप्रतम् ॥
इत्युत्पन्ने महत्यत्र जनवादेऽथ गेहिनीम् । स्वैरं मेधाविनीं नाम दीर्घदर्शी जगाद सः ॥
प्रिये राज्ञि सुखासक्ते तद्भारं वहतोऽपि मे । राज्यं भक्षितमेतेनेत्युत्पन्नमयशो जने ॥
लोकवादश्च मिथ्यापि महतामिह दोषकृत् । त्याजितः किं न रामोऽपि जनवादेन जानकीम् ॥
तदत्र किं मया कार्यमित्युक्ते तेन मन्त्रिणा । भार्या मेधाविनी धीरा सान्वर्था तमभाषत ॥
तीर्थयात्रापदेशेन युक्त्यापृच्छ्य महीपतिम् । कंचित्कालं विदेशं ते गन्तुं युक्तं महामते ॥
एवं ते निःस्पृहस्यैष जनवादो निवर्त्स्यति । त्वय्यस्थिते ततो राज्यमुद्वक्ष्यति नृपः स्वयम् ॥
ततश्चास्य शनैरेतद्व्यसनं ह्रानिमेष्यति । आगतस्यात्र निर्गर्हा भवित्री मन्त्रिता च ते ॥
इत्युक्तो भार्यया गत्वा दीर्घदर्शी तथेति सः । कथाप्रसङ्गे तं भूपं यशःकेतुं व्यजिज्ञपत् ॥
अनुजानीहि मां राजन्दिवसान्कांश्चिदप्यहम् । व्रजामि तीर्थयात्रायै धर्मो हि प्रेप्सितः स मे ॥
तच्छ्रुत्वा सोऽब्रवीद्राजा मैवं तीर्थैर्विना परः । दानादिः किं न धर्मोऽस्ति स्वर्ग्यस्ते स्वगृहेष्वपि ॥
अथावोचत्स मन्त्री तमर्थशुद्ध्यादि मृग्यते । दानादौ नित्यशुद्धानि तीर्थानि नृपते पुनः ॥
यावच्च यौवनं राजंस्तावद्गम्यानि धीमता । अविश्वास्ये शरीरे हि संगमस्तैः कुतोऽन्यदा ॥
इति तस्मिन्वदत्येव राज्ञि चैवं निषेधति । प्रविश्यात्र प्रतीहारो राजानं तं व्यजिज्ञपत् ॥
देव व्योमसरोमध्यमंशुमाली विगाहते । तदुत्तिष्ठत सैषा वः स्नानवेलातिवर्तते ॥
श्रुत्वैतत्सहसा स्नातुमुदतिष्ठन्महीपतिः । यात्रोन्मुखः स मन्त्री च तं प्रणम्य गृहं ययौ ॥
तत्रावस्थाप्य भार्यां तामनुयात्रानिवारिताम् । स प्रतस्थे ततो युक्त्या स्वभृत्यैरप्यतर्कितः ॥
एकाकी च भ्रमंस्तांस्तान्देशांस्तीर्थानि च व्रजन् । स प्राप पुण्ड्रविषयं दीर्घदर्शी सुनिश्चयः ॥
तत्र पत्तन एकस्मिन्नदूरेऽब्धेः प्रविश्य सः । एकं देवकुलं शैवं तत्प्राङ्गण उपाविशत् ॥
तत्रार्ककरसंतापक्लान्तं दूराध्वधूसरम् । ददर्श निधिदत्ताख्यो वणिग्देवार्चनागतः ॥
स तं तथाविधं दृष्ट्वा सोपवीतं सुलक्षणम् । संभाव्य चोत्तमं विप्रमातिथेयोऽनयद्गृहम् ॥
तत्र चापूजयत्स्नानभोजनाद्यैस्तमुत्तमैः । कः कुतस्त्वं क यासीति विश्रान्तं च स पृष्टवान् ॥
दीर्घदर्शीति विप्रोऽहमङ्गदेशादिहागतः । तीर्थयात्रार्थमित्येव गाम्भीर्यात्सोऽप्युवाच तम् ॥

ंदत्तोऽपि तं जगाद महावणिक् । सुवर्णद्वीपगमनायोद्यतोऽहं वणिज्यया ॥ ३३
मद्गेहे यावदेष्याम्यहं ततः । तीर्थयात्रापरिश्रान्तो विश्रान्तो ह्यथ यास्यसि ॥ ३४
ऽब्रवीद्दीर्घदर्शी तर्हि ममेह किम् । त्वयैव सह यास्यामि सार्थवाह यथासुखम् ॥ ३५
तेनोक्ते साधुना सोऽथ तद्गृहे । चिरादवाप्तशयनो निशां मन्त्री निनाय ताम् ॥ ३६
ेनैव वणिजा सह वारिधिम् । गत्वारुरोह तद्भाण्डपूर्णं प्रवहणं च सः ॥ ३७
वहणेनाब्धिमद्भुतभीषणम् । विलोकयन्स संप्राप स्वर्णद्वीपं क्रमेण तत् ॥ ३८
ाता चास्य क वाध्वोल्लङ्घिताम्बुधिः । अयशोभीरवः किं न कुर्वते बत साधवः ॥ ३९
मं तेन कंचित्कालमुवास सः । वणिजा निधिदत्तेन कुर्वता क्रयविक्रयौ ॥ ४०
ततोऽकस्मात्तद्युक्तो वहनस्थितः । कल्पवृक्षं ददर्शाब्धावूर्मेः पश्चात्समुत्थितम् ॥ ४१
सुभगैः स्कन्धैर्जाम्बूनदोज्ज्वलैः । फलैर्मणिमयैः कान्तैः कुसुमैश्चोपशोभितम् ॥ ४२
च सद्रत्नपर्यङ्कोत्सङ्गवर्तिनीम् । कन्यामत्यद्भुताकारकमनीयामवैक्षत ॥ ४३
द्रित्येवं यावद्ध्यायति स क्षणम् । तावत्सा वीणिनी कन्या गातुमेवं प्रचक्रमे ॥ ४४

यत्कर्मबीजमुप्तं येन पुरा निश्चितं स तद्भुङ्क्ते ।
पूर्वकृतस्य हि शक्यो विधिनापि न कर्तुमन्यथाभावः ॥ ४५

गात्तस्मिन्नम्भोधौ दिव्यकन्यका । सकलपद्रुमपर्यङ्कशय्यात्रैव ममज्ज सा ॥ ४६
सेदं मया दृष्टमिहाद्भुतम् । काब्धिः क दृष्टनष्टोऽत्र गायद्दिव्याङ्गनस्तरुः ॥ ४७
य एषोऽब्धिराकरः शश्वदीदृशाम् । लक्ष्मीन्दुपारिजाताद्या नास्मात्ते ते किमुद्गताः ॥ ४८
तयन्तं च तत्क्षणं दीर्घदर्शिनम् । विलोक्य विस्मयाविष्टं कर्णधारादयोऽब्रुवन् ॥ ४९
वेह दृश्यते वरकन्यका । निमज्जति च तत्कालं तवैतद्दर्शनं नवम् ॥ ५०
ामं तेन निधिदत्तेन स क्रमात् । मन्त्री चित्रीयमाणोऽब्धेस्तीरं पोतगतोऽभ्यगात् ॥ ५१
ाण्डेन तेनैव वणिजा सह । जगाम हृष्टभृत्येन सोत्सवं सोऽथ तद्गृहम् ॥ ५२
चिरं तत्र निधिदत्तमुवाच तम् । सार्थवाह भवद्गेहे विश्रान्तोऽहं चिरं सुखम् ॥ ५३
मिच्छामि स्वदेशं भद्रमस्तु ते । इत्युक्त्वा तमनिच्छन्तमप्यामन्त्र्य वणिक्पतिम् ॥ ५४
सत्त्वैकसहायः प्रस्थितस्ततः । क्रमोल्लङ्घितदूराध्वा प्रापाङ्गविषयं निजम् ॥ ५५
ुश्चारा बहिर्नगरमागतम् । ये यशःकेतुना राज्ञा प्राङ्न्यस्तास्तद्गवेषणे ॥ ५६
त विज्ञप्तश्चारै राजा तमभ्यगात् । स्वयं निर्गत्य नगरात्तद्विश्लेषसुदुःखितः ॥ ५७
रेष्वङ्गपूर्वं तमभिनन्द्य सः । निनायाभ्यन्तरं भूपश्चिराध्वक्षामधूसरम् ॥ ५८
ंक त्वया नीतं न परं बत मानसम् । यावच्छरीरमप्येतन्निःस्नेहपरुषां दशाम् ॥ ५९
ततो वेत्ति भवितव्यस्य को गतिम् । यदकस्मात्तवैषाभूत्तीर्थादिगमने मतिः ॥ ६०
ाया भ्रान्ता देशा दृष्टं च किं नवम् । इति तत्र च तं राजा स जगाद स्वमन्त्रिणम् ॥ ६१
ोपान्तं सोऽध्वानं वर्णयन्क्रमात् । अब्धावुद्गमिनीं तस्मै तां दृष्टां दिव्यकन्यकाम् ॥ ६२
जगत्सारभूतां कल्पतरुस्थिताम् । यथावत्कथयामास दीर्घदर्शी महीभृते ॥ ६३
ा च नृपस्तथा स्मरवशोऽभवत् । यथा तया विना मेने निष्फले राज्यजीविते ॥ ६४
मेकान्ते नीत्वा स्वसचिवं तदा । द्रष्टव्यासौ मयावश्यं जीवितं नास्ति मेऽन्यथा ॥ ६५
न्न पथा प्रणम्य भवितव्यताम् । निवारणीयो नाहं ते नानुगम्यश्च सर्वथा ॥ ६६
यास्यामि राज्यं रक्ष्यं तु मे त्वया । मद्वचो मान्यथा कार्षीः शापितोऽसि ममासुभिः ॥ ६७
त्प्रतिवचो निरस्य विससर्ज तम् । मन्त्रिणं स्वगृहं राजा चिरोत्कं स्वजनं प्रति ॥ ६८
ावेऽप्यासीद्दीर्घदर्शी सुदुर्मनाः । स्वामिन्यसाध्यव्यसने सुखं सन्मन्त्रिणां कुतः ॥ ६९
ा तद्वत्तन्यस्तराज्यभरो नृपः । यशःकेतुस्ततः प्रायान्निशि तापसवेषभृत् ॥ ७०

गच्छंश्च कुशनाभाख्यं मुनिं मार्गे ददर्श सः। सोऽत्र तं तापसाकल्पं प्रणतं मुनिरादिशत् ॥
लक्ष्मीदत्तेन वणिजा सह पोतेन वारिधौ। गत्वा प्राप्स्यसि तामिष्टां कन्यां व्रज निराकुलः ॥
इति तद्वचसा प्रीतस्तं प्रणम्य स पार्थिवः। गच्छन्देशान्नदीरद्रीन्क्रान्त्वा तं प्रापदम्बुधिम् ॥
सुतारशङ्खधवलैर्वीचिभ्रूभिर्विकस्वरैः। वीक्षमाणमिवावर्तनेत्रैरातिथ्यसंभ्रमात् ॥
तत्तीरे वणिजा तेन मुनिप्रोक्तेन संगतिः। लक्ष्मीदत्तेन जज्ञेऽस्य स्वर्णद्वीपं यियासुना ॥
तेनैव सह चक्राङ्कपादमुद्रादिदर्शनात्। प्रह्वेणारुह्य वहनं प्रतस्थे सोऽम्बुधौ नृपः ॥
मध्यमब्धेश्च संप्राप्ते वहने वारिमध्यतः। उदगात्कल्पविटपिस्कन्धस्था सात्र कन्यका ॥
यावत्पश्यति तां राजा चकोर इव चन्द्रिकाम्। तावत्सा गायति स्मैवं वल्लकीवाद्यसुन्दरम् ॥

यत्कर्मबीजमुप्तं येन पुरा निश्चितं स तद्भुङ्क्ते।
पूर्वकृतस्य हि शक्यो विधिनापि न कर्तुमन्यथाभावः ॥
तस्माद्यत्र यथा यद्भवितव्यं यस्य दैवयोगेन।
तत्र तथा तत्प्राप्त्यै विवशोऽसौ नीयतेऽत्र न भ्रान्तिः ॥

इति सूचितभव्यार्थां गायन्तीं तां विभावयन्। निःस्पन्दः स क्षणं तस्थौ राजा स्मरशराहतः ॥
रत्नाकर नमः सत्यमगाधहृदयाय ते। येन त्वयैतां प्रच्छाद्य विप्रलब्धो हरिः श्रिया ॥
तत्सुरैरप्यलभ्यान्तं सपक्षक्ष्माभृदाश्रयम्। शरणं त्वां प्रपन्नोऽहमिष्टसिद्धिं विधत्स्व मे ॥
एवं यावत्समुद्रं तं स नतः स्तौति भूमिपः। तावत्सा कन्यका तत्र निममज्ज सपादपा ॥
तद्दृष्ट्वैवानुमार्गेऽस्याः स राजात्मानमक्षिपत्। वारिधावत्र कामाग्निसंतापस्येव शान्तये ॥
तद्वीक्ष्याशङ्कितं मत्वा विनष्टं तं स सज्जनः। लक्ष्मीदत्तो वणिग्दुःखाद्देहत्यागोद्यतोऽभवत् ॥
मा कार्षीः साहसं नास्ति मग्नस्यास्याम्बुधौ भयम्। एष राजा यशःकेतुर्नाम्ना तापसवेषभृत् ॥
एतत्कन्यार्थमायातः पूर्वभार्येयमस्य च। एतां प्राप्य पुनश्चासावङ्गराज्यं समेष्यति ॥
इत्यथाश्वासितो वाचा तत्कालं गगनोत्थया। सार्थवाहो यथाकामं स जगामेष्टसिद्धये ॥
स राजापि यशःकेतुर्निमग्नोऽन्तर्महोदधौ। अकस्मान्नगरं दिव्यमपश्यज्जातविस्मयः ॥
भास्वन्मणिमयस्तम्भैः काञ्चनोज्ज्वलभित्तिभिः। विराजमानं प्रासादैर्मुक्ताजालगवाक्षकैः ॥
नानारत्नशिलापट्टबद्धसोपानवापिकैः। कामदैः कल्पवृक्षाढ्यैरुद्यानैरुपशोभितम् ॥
समृद्धेऽपि पुरे तत्र निर्जनेऽथ गृहं गृहम्। अनुप्रविश्य न यदा तां ददर्श प्रियां क्वचित् ॥
तदा विचिन्वन्दृष्ट्वैकमुत्तुङ्गं मणिमन्दिरम्। आरुह्य द्वारमुद्घाट्य प्रविवेश स भूपतिः ॥
प्रविश्य चान्तः सद्रत्नपर्यङ्कस्थितमेककम्। वस्त्राच्छादितसर्वाङ्गं शयानं कंचिदैक्षत ॥
किं स्यात्सैवेति सोत्कण्ठमुद्घाटयति तन्मुखम्। यावत्तावदपश्यत्तां स्वेप्सितामेव सोऽङ्गनाम् ॥
स्रस्तनीलांशुकध्वान्तहसन्मुखशशिश्रियम्। ज्योत्स्नावदातां पातालगतामिव दिवा निशाम् ॥
तद्दर्शनेन चास्याभूदवस्था कापि सा तदा। ग्रीष्मर्तौ मरुपान्थस्य सरित्संदर्शनेन या ॥
साप्युन्मीलितचक्षुस्तं कल्याणाकृतिलक्षणम्। वीक्ष्याकस्मात्तथाप्राप्तं संभ्रमाच्छयनं जहौ ॥
कृतातिथ्या नतमुखी पूजयन्तीव पादयोः। फुल्लेक्षणोत्पलन्यासैः शनैरेतमुवाच च ॥
को भवान्किमगम्यं च प्रविष्टोऽसि रसातलम्। राजचिह्नाङ्किततनोः किं च ते तापसव्रतम् ॥
इत्यादिश महाभाग प्रसादो यदि ते मयि। एवं तस्या वचः श्रुत्वा स राजा प्रत्युवाच ताम् ॥
अङ्गराजो यशःकेतुरिति नाम्नास्मि सुन्दरि। आप्तादन्वहदृश्यां च त्वामश्रौषमिहाम्बुधौ ॥
ततस्त्वदर्थं कृत्वेमं वेषं राज्यं विमुच्य च। आगत्यैव प्रविष्टोऽहमनुमार्गेण तेऽम्बुधिम् ॥
तन्मे कथय कासि त्वमित्युक्ते तेन चाथ सा। सलज्जा सानुरागा च सानन्दा चैवमभ्यधात् ॥
मृगाङ्कसेन इत्यस्ति श्रीमान्विद्याधराधिपः। मां मृगाङ्कवतीं नाम्ना विद्धि तस्य सुतामिमाम् ॥
स मामस्मिन्स्वनगरे विमुच्यैकाकिनीं पिता। न जाने हेतुना केन गतः क्वापि सपौरकः ॥

ाहं शून्यवसतेर्निर्विण्णोन्मज्ज्य वारिधेः । यत्रकल्पद्रुमारूढा गायामि भवितव्यताम् ॥ १०८
मुक्तवती तेन स्मरता तन्मुनेर्वचः । तथाऽश्रूयत सा राज्ञा वचोभिः प्रेमपेशलैः ॥ १०९
ानुरागविवशा भार्यात्वं तस्य तत्क्षणम् । अङ्गीचकार वीरस्य समयं त्वेकमभ्यधात् ॥ ११०
ःकृष्णचतुर्दश्यामष्टम्यां चार्यपुत्र ते । प्रतिमाससमनायत्ता चतुरो दिवसानहम् ॥ १११
क्वापि दिनेष्वेषु गच्छन्ती चास्मि न त्वया । प्रष्टव्या न निषेद्धव्या कारणं ह्यत्र विद्यते ॥ ११२
तामुक्तसमयां स राजा दिव्यकन्यकाम् । तथेत्युक्त्वैव गान्धर्वविधिना परिणीतवान् ॥ ११३
ा ततश्च संभोगसुखं तत्र तया सह । यथाभूदन्य एवास्या मान्मथो मण्डनक्रमः ॥ ११४
ाषु स्रस्तमाल्येषु कचग्रहनखावली । बिम्बाधरेऽथ निष्पीतनीरागे दशनक्षतिः ॥ ११५
ःयोः करजश्रेणिर्भिन्नमाणिक्यमालयोः । लुप्ताङ्गरागेष्वङ्गेषु गाढालिङ्गनरागिता ॥ ११६
तद्दिव्यसंभोगसुखावस्थितमत्र तम् । सा मृगाङ्कवती भार्या भूपं प्राहेदमेकदा ॥ ११७
िहैव प्रतीक्षेथाः कार्यार्थे क्वापि याम्यहम् । अद्य सैषा हि संप्राप्ता मम कृष्णचतुर्दशी ॥ ११८
श्चस्त्वार्यपुत्रामुं मा स्म गाः स्फाटिकं गृहम् । मात्र वाप्यां निपतितो भूलोकं त्वं गमिष्यसि ॥ ११९
ःक्त्वा सा तमामन्त्र्य ययौ तस्मात्पुराद्बहिः । राजापि प्राप्तखड्गस्तां छन्नो जिज्ञासुरन्वगात् ॥ १२०
ापश्यत्तमःश्यामं व्यात्तवक्त्रबिलं च सः । साकारमिव पातालमायान्तं राक्षसं नृपः ॥ १२१
राक्षसो निपत्यैव मुक्तघोररवस्तदा । तां मृगाङ्कवतीं वक्त्रे निक्षिप्यैव निगीर्णवान् ॥ १२२
ष्ट्वैवातिकोपेन सहसा स ज्वलन्निव । निर्मोकमुक्तभुजगश्यामलेन महासिना ॥ १२३
ाकृष्टेन धावित्वा राजसिंहोऽभिधावतः । चिच्छेद रक्षसस्तस्य संदष्टौष्ठपुटं शिरः ॥ १२४
ःकबन्धवान्तेन राज्ञस्तस्यास्रवारिणा । क्रोधजोऽथ शशामाग्निर्न तु कान्तावियोगजः ॥ १२५
मोहनिशान्धेऽस्मिन्विनष्टगतिके नृपे । अकस्मान्मेघमलिनस्याङ्गं भित्त्वैव रक्षसः ॥ १२६
ोद्द्योतितदिक्चक्रा चन्द्रमूर्तिरिवामला । सा मृगाङ्कवती जीवन्त्यक्षताङ्गी विनिर्ययौ ॥ १२७
तथा संकटोत्तीर्णां दृष्ट्वा कान्तां ससंभ्रमम् । एह्येहीति वदन्राजा प्रधाव्यैवालिलिङ्ग सः ॥ १२८
किमेतत्स्वप्नोऽयमुत मायेति तेन सा । पृष्टा नृपेण संस्मृत्य विद्याधर्येवमब्रवीत् ॥ १२९
वार्यपुत्र न स्वप्नो न मायेयमयं पुनः । विद्याधरेन्द्रात्स्वपितुः शापोऽभूदीदृशो मम ॥ १३०
ुत्रोऽपि स हि मे पिता पूर्वं वसन्निह । मया विनातिवात्सल्यान्नाहारमकरोत्सदा ॥ १३१
ञ्च सर्वदा शर्वपूजासक्तेह निर्जने । चतुर्दश्योरथाष्टम्योरागच्छं पक्षयोर्द्वयोः ॥ १३२
दा च चतुर्दश्यामिहागत्य रसान्मम । चिरं गौरीं समर्चन्त्या दैवादवसितं दिनम् ॥ १३३
ङ्मत्प्रतीक्षः सन्क्षुधितोऽपि स मत्पिता । नाभुङ्क्त नापिबत्किंचिदासीत्क्रुद्धस्तु मां प्रति ॥ १३४
रात्रावुपेतां मां सापराधामधोमुखीम् । भवितव्यबलग्रस्तमत्स्नेहः शपति स्म सः ॥ १३५
ा त्वदवलेपेन ग्रस्तोऽद्याहमयं क्षुधा । मासि मासि तथाष्टम्योश्चतुर्दश्योश्च केवलम् ॥ १३६
र्चनरसाद्यान्तीमत्रैव त्वां बहिः पुरे । नाम्ना कृतान्तसंत्रासो राक्षसो निगरिष्यति ॥ १३७
ःत्वा भित्त्वास्य हृदयं जीवन्ती च निरेष्यसि । न स्मरिष्यसि शापं च न तां निगरणव्यथाम् ॥ १३८
स्यस्येकाकिनी चात्रेत्युक्तशापवचाः शनैः । सोऽनुनीतो मया ध्यात्वा शापान्तं मेऽब्रवीत्पिता ॥ १३९
ा भूत्वा यशःकेतुनामाङ्कनृपतिर्यदा । राक्षसेन निगीर्णां त्वां दृष्ट्वा तं निहनिष्यति ॥ १४०
त्वं मोक्ष्यसे शापाद्धृदयात्तस्य निर्गता । संस्मरिष्यसि शापादि विद्याः सर्वास्तथा निजाः ॥ १४१
ादिश्य स शापान्तं त्यक्त्वा मामेककामिह । निषधाद्रिं गतस्तातो भूलोकं सपरिच्छदः ॥ १४२
तथा चरन्ती च शापमोहादिहावसम् । क्षीणश्चैष स शापो मे जाता सर्वत्र च स्मृतिः ॥ १४३
ात्तपार्श्वमधुना निषधाद्रिं व्रजाम्यहम् । शापान्ते स्वां गतिं याम इत्येष समयो हि नः ॥ १४४
िहास्व स्वराष्ट्रं वा व्रज स्वातन्त्र्यमत्र ते । एवं तयोक्ते स नृपो दुःखितोऽर्थयते स्म ताम् ॥ १४५
ाद्दानि न गन्तव्यं प्रसीद सुमुखि त्वया । क्षिपावस्तावदौत्सुक्यमुद्याने क्रीडनैरिह ॥ १४६

त्वं गच्छाथ पितुः स्थानं यास्याम्यहमपि स्वकम्। एतत्तद्वचनं मुग्धा तथेत्यङ्गीचकार सा ॥ १४७
ततोऽत्र रेमे स तया सहोद्यानेषु कान्तया। सजलोत्पलनेत्रासु वापीसु षडहं नृपः ॥ १४८
मा स्म यातं विहायास्मानिति पूत्कुर्वतीष्विव। उत्क्षिप्तवीचिहस्तासु हंससारसनिःस्वनैः ॥ १४९
सप्तमेऽह्नि स युक्त्या तां प्रियां तत्रानयद्गृहे। भूलोकप्रापिणी यत्र सा यन्त्रद्वारवापिका ॥ १५०
तत्र कण्ठे गृहीत्वा तां तस्यां वाप्यां निपत्य सः। उत्तस्थौ स्वपुरोद्यानवापीमध्यात्तया सह ॥ १५१
तत्र कान्तासखं प्राप्तं तं दृष्ट्वोद्यानपालकाः। हृष्टास्तन्मन्त्रिणे गत्वा जगदुर्दीर्घदर्शिने ॥ १५२
सोऽप्येत्य पादपतितस्तमानीतेप्सिताङ्गनम्। दृष्ट्वा प्रावेशयन्मन्त्री सपौरोऽभ्यन्तरं नृपम् ॥ १५३
अहो सैषा कथं प्राप्ता राज्ञा दिव्याङ्गनामुना। व्योम्नीव विद्युदिव या क्षणदृश्या मयेक्षिता ॥ १५४
यद्यस्य लिखितं धात्रा ललाटाक्षरपङ्क्तिषु। तदवश्यमसंभाव्यमपि तस्योपतिष्ठते ॥ १५५
इत्यत्र मन्त्रिमुख्येऽस्मिन्ध्यायत्यन्यजनेऽपि च। दिव्यस्त्रीप्राप्तिसाश्चर्ये राजागमनसोत्सवे ॥ १५६
सा मृगाङ्कवती दृष्ट्वा तं स्वदेशागतं नृपम्। इयेष पूर्णसप्ताहा यातुं वैद्याधरीं गतिम् ॥ १५७
नाविरासीच्च विद्यास्याः स्मृताप्युत्पतनी तदा। ततः सा मुषितेवात्र विषादमगमत्परम् ॥ १५८
किमकस्माद्विषण्णेव दृश्यसे वद मे प्रिये। इत्युक्ता तेन राज्ञा सा विद्याधर्येवमब्रवीत् ॥ १५९
स्थिताहं शापमुक्तापि त्वत्स्नेहाद्यदियच्चिरम्। तेन विद्या मम भ्रष्टा नष्टा दिव्या च सा गतिः ॥ १६०
तच्छ्रुत्वा हन्त सिद्धेयं मम विद्याधरीति सः। राजा ततो यशःकेतुः पूर्णं चक्रे महोत्सवम् ॥ १६१
तद्दृष्ट्वा दीर्घदर्शी स मन्त्री गत्वा गृहं निशि। शयनीयगतोऽकस्माद्धृत्स्फोटेन व्यपद्यत ॥ १६२
ततोऽनुभूय तच्छोकं धृतराज्यभरः स्वयम्। यशःकेतुश्चिरं तस्थौ स मृगाङ्कवतीयुतः ॥ १६३

इत्येतां कथयित्वा मार्गे तस्मै कथां स वेतालः।
अवदत्पुनस्त्रिविक्रमसेनं नृपतिं तमंसगतः ॥ १६४
तद्ब्रूहि भूपते ते संपन्ने स्वामिनस्तथाभ्युदये।
हृदयं सपदि स्फुटितं तस्य महामन्त्रिणः किमिति ॥ १६५
दिव्यस्त्री न मया किं प्राप्तेति शुचास्फुटद्धृदयम्।
किं वा राज्यमभीप्सो राजागमजेन दुःखेन ॥ १६६
एतच्च यदि न वक्ष्यसि मह्यं जानन्नपीह तद्राजन्।
धर्मश्च तव विनङ्क्ष्यति यास्यति दलशश्च झटिति शिरः ॥ १६७
श्रुत्वेति तु त्रिविक्रमसेनो राजा जगाद वेतालम्।
नैतत्तस्मिन्द्वयमपि शुभचरिते युज्यते हि मन्त्रिवरे ॥ १६८
किं तु स्त्रीमात्ररसादुपेक्षितं येन भूभुजा राज्यम्।
तस्याधुना तु दिव्यस्त्रीरक्तस्यात्र का वार्ता ॥ १६९
तन्मे कष्टेऽपि कृते प्रत्युत दोषो बताधिकीभूतः।
इति तस्य विभावयतो हृदयं तन्मन्त्रिणः स्फुटितम् ॥ १७०

इत्युक्ते नरपतिना पुनः स मायी वेतालो निजपदमेव तज्जगाम।
राजापि प्रसभमवाप्तुमन्वधावद्भूयोऽपि द्रुतमथ तं स धीरचेताः ॥ १७१

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके एकोनविंशस्तरङ्गः।

---

विंशस्तरङ्गः।

(त्रयोदशो वेतालः।)

अथ गत्वा पुनः प्राप्य शिंशपातस्ततो नृपः। स त्रिविक्रमसेनस्तं स्कन्धे वेतालमाददे ॥ १
आयान्तं च स वेतालो भूयस्तं नृपमब्रवीत्। राजञ्शृणु कथामेकां संक्षिप्तां वर्णयामि ते ॥ २

ाराणसी नाम पुरी हरनिवासभूः । देवस्वामीति तत्रासीन्मान्यो नरपतेर्द्विजः ॥ ३
स्य तस्यैको हरिस्वामीत्यभूत्सुतः । तस्य भार्या च लावण्यवतीत्यत्युत्तमाभवत् ॥ ४
ादिनाकस्त्रीनिर्माणे प्राप्तकौशलः । अनर्घरूपलावण्यां मन्ये यां निर्ममे विधिः ॥ ५
कान्तया सार्कं हरिस्वामी कदाचन । रतिश्रान्तो ययौ निद्रां हर्म्ये चन्द्रांशुशीतले ॥ ६
तेन मार्गेण कामचारी विहायसा । आगान्मदनवेगाख्यो विद्याधरकुमारकः ॥ ७
लावण्यवतीं पत्युः पार्श्वे ददर्श ताम् । सुप्तां रतिक्लमस्रस्तवस्त्रव्यक्ताङ्गसौष्ठवाम् ॥ ८
चित्तः सन्मदनान्धः स तत्क्षणम् । सुप्तामेव निपत्यैतां गृहीत्वा नभसा ययौ ॥ ९
ुद्धोऽथ युवा हरिस्वामी स तत्पतिः । प्राणेश्वरीमपश्यंस्तामुदतिष्ठत्ससंभ्रमः ॥ १०
मेतत्क गता कुपिता सा नु किं मयि । छन्ना जिज्ञासितुं किं मे चित्तं परिहसत्युत ॥ ११
वेकल्पौघव्याकुलस्तामितस्ततः । हर्म्यप्रासादवलभीष्वन्विष्यन्सोऽभ्रमन्निशि ॥ १२
ानतश्चिन्वन्यन्न प्राप कुतोऽपि ताम् । तत्स शोकाग्निसंतप्तो विललापाश्रुगद्गदम् ॥ १३
बिम्बवदने हा ज्योत्स्नागौरि हा प्रिये । रात्र्या तुल्यगुणाद्वेषात्किं नु सोढासि नानया ॥ १४
ान्त्या जितो बिभ्यदिव चन्दनशीतलैः । करैरसुखयद्यो मां सोऽयमिन्दुस्त्वया विना ॥ १५
र इवेदानीं तैरेव तुदति प्रिये । प्रज्वलद्भिरिवाङ्गारैर्विषदिग्धैरिवाशुगैः ॥ १६
क्रन्दतस्तस्य सा हरिस्वामिनस्तदा । कृच्छ्राद्व्यतीयाय निशा न पुनर्विरहव्यथा ॥ १७
द विश्वस्य करैः संतमसं रविः । भेत्तुं न चक्षमे तस्य मोहान्धतमसं पुनः ॥ १८
इव चक्राह्वैस्तस्य तीर्णनिशैस्तदा । भेजे शतगुणीभावं करुणाक्रन्दितध्वनिः ॥ १९
सान्त्व्यमानोऽपि वियोगानलदीपितः । न च लेभे द्विजयुवा धृतिं तां प्रेयसीं विना ॥ २०
ामिह स्नातं कृतमत्र प्रसाधनम् । विहृतं च तयात्रेति ययौ स्थित इतो रुदन् ॥ २१
वन्न सा तत्किमात्मैवं हन्यते त्वया । अवश्यं तामवाप्नासि जीवञ्जातु कुतश्चन ॥ २२
ालम्बस्व तां गवेषय च प्रियाम् । अप्राप्यं नाम नेहास्ति धीरस्य व्यवसायिनः ॥ २३
ुसुहृद्वाक्यैर्बोधितः सोऽथ कृच्छ्रतः । दिनैः कैश्चिद्धरिस्वामी बबन्ध धृतिमास्थया ॥ २४
प्रच सर्वस्वं कृत्वा ब्राह्मणसादहम् । भ्रमामि तावत्तीर्थानि क्षपयाम्यघसंचयम् ॥ २५
ाद्धि तां जातु प्रियां भ्राम्यन्नवाप्नुयाम् । इत्यालोच्य यथावस्थं स्नानाद्युत्थाय सोऽकरोत् ॥ २६
 विचित्रान्नपानं सत्रे द्विजन्मनाम् । चकारावारितं किं च ददौ धनमशेषतः ॥ २७
मात्रवित्तश्च निर्गत्यैव स्वदेशतः । प्रियाप्राप्तीच्छया सोऽथ तीर्थानि भ्रमितुं ययौ ॥ २८
श्च जगामास्य भीमो ग्रीष्मर्तुकेसरी । प्रचण्डादित्यवदनो दीप्ततद्रश्मिकेसरः ॥ २९
हसंतप्तपान्थनिःश्वासमारुतैः । न्यस्तोष्माण इवात्युष्णा वान्ति स्म च समीरणाः ॥ ३०
ीर्णपङ्काश्च हृदयैः स्फुटितैरिव । जलाशया ददृशिरे घर्मलुप्ताम्बुसंपदः ॥ ३१
ःकार मुखरास्तापम्लानदलाधराः । मधुश्रीविरहान्मार्गेष्वरुदन्निव पादपाः ॥ ३२
ालेऽर्कतापेन वियोगेन क्षुधा तृषा । नित्याध्वना च स क्लान्तो विरूक्षक्षामधूसरः ॥ ३३
र्री हरिस्वामी प्राप ग्रामं कचिद्भ्रमन् । पद्मनाभाभिधानस्य गृहं विप्रस्य सत्रिणः ॥ ३४
ा स भुञ्जानान्विप्रानभ्यन्तरे बहून् । द्वारशाखां समालम्ब्य तस्थौ निःशब्दनिश्चलः ॥ ३५
ं तमालोक्य सत्रिणस्तस्य गेहिनी । पद्मनाभस्य संजातदया साध्वी व्यचिन्तयत् ॥ ३६
ाम गुर्व्येषा न कुर्यात्कस्य लाघवम् । यदेवमयमन्नार्थी कोऽप्यास्ते द्वार्यधोमुखः ॥ ३७
्यागतः स्नातस्तावत्क्षीणेन्द्रियः क्षुधा । तदेष चान्नदानस्य पात्रमित्यवधार्य सा ॥ ३८
ृतं साध्वी तस्मै सघृतशर्करम् । पात्रमुत्क्षिप्य पाणिभ्यामानीय प्रश्रिता ददौ ॥ ३९
वैतं भुङ्क्ष्वैतद्गत्वा वापीतटे कचित् । इदं स्थानं समुच्छिष्टं भुञ्जानैर्ब्राह्मणैर्वृतम् ॥ ४०
ोऽन्नपात्रं तद्गृहीत्वा नातिदूरतः । गत्वा स्थापितवान्वाप्यास्तटे वटतरोरधः ॥ ४१

प्रक्षाल्य पाणिपादं च वाप्यामाचम्य चात्र सः । यावद्भक्षयितुं तुष्टः परमान्नमुपैति तत् ॥ ४२
तावद्गृहीत्वा कृष्णाहिं चञ्च्वा पादयुगेन च । श्येनः कुतश्चिदागत्य तरौ तस्मिन्नुपाविशत् ॥ ४३
तेन तस्योह्यमानस्य सर्पस्याक्रम्य पक्षिणा । उत्क्रान्तजीवितस्यास्याद्विषलाला विनिर्ययौ ॥ ४४
सा तत्राधःस्थिते तस्मिन्नन्नपात्रेऽपतत्तदा । तच्चादृष्ट्वा हरिस्वामी स एत्यान्नमभुङ्क्त तत् ॥ ४५
क्षुधार्तस्य तदा तस्य मृष्टान्नं तत्क्षणेन तत् । कृत्स्नं भुक्तवतस्तीव्रा प्रोदभूद्विषवेदना ॥ ४६
अहो विधौ विपर्यस्ते न विपर्यस्यतीह किम् । यद्विषीभूतमन्नं मे सक्षीरघृतशर्करम् ॥ ४७
इति जल्पन्विषार्तः स हरिस्वामी परिस्खलन् । गत्वा तां सत्त्रिणस्तस्य विप्रस्योवाच गेहिनीम् ॥ ४८
त्वद्दत्ताद्विषमन्नान्मे जातं तद्विषमन्त्रिणम् । कंचिन्ममानय क्षिप्रं ब्रह्महत्यान्यथास्ति ते ॥ ४९
इत्युक्त्वैव स तां साध्वीं किमेतदिति विह्वलाम् । हरिस्वामी परावृत्तनेत्रः प्राणैर्व्ययुज्यत ॥ ५०
ततः सा तेन निर्दोषाप्यातिथेय्यपि सत्त्रिणा । भार्या निष्कालिता गेहान्मिथ्यातिथिवधक्रुधा ॥ ५१
साप्युत्पन्नमृषावद्या सुशुभादपि कर्मणः । जातावमाना तपसे साध्वी तीर्थमशिश्रियत् ॥ ५२
कस्य विप्रवधः सोऽस्तु सर्पश्येनान्नदेष्विति । तदाभूद्धर्मराजाग्रे वादो नासीत्तु निर्णयः ॥ ५३
तत्त्रिविक्रमसेन त्वं राजन्ब्रूहि ममाधुना । कस्य सा ब्रह्महत्येति पूर्वः शापः स तेऽन्यथा ॥ ५४
इति वेतालतः श्रुत्वा राजा शापनियन्त्रितः । स त्रिविक्रमसेनस्तं मुक्तमौनोऽब्रवीदिदम् ॥ ५५
तस्य तत्पातकं तावत्सर्पस्य यदि वास्य कः । विवशस्यापराधोऽस्ति भक्ष्यमाणस्य शत्रुणा ॥ ५६
अथ श्येनस्य तेनापि किं दुष्टं क्षुधितात्मना । अकस्मात्प्राप्तमानीय भक्ष्यं भक्षयता निजम् ॥ ५७
दंपत्योरन्नदात्रोर्वा तयोरेकस्य वा कुतः । अभाव्यदोषौ धर्मैकप्रवृत्तौ तावुभौ यतः ॥ ५८
तदहं तस्य मन्ये सा ब्रह्महत्या जडात्मनः । अविचार्यैव यो ब्रूयादेषामेकतमस्य ताम् ॥ ५९

इत्युक्तवतोऽस्य नृपस्यांसाद्भूयोऽप्यगात्स वेतालः ।
निजपदमेव नृपोऽपि स पुनरपि धीरस्तमन्वगादेव ॥ ६०

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके विंशस्तरङ्गः ।

---

एकविंशस्तरङ्गः ।

(चतुर्दशो वेतालः ।)

स त्रिविक्रमसेनोऽथ गत्वा तं शिंशपातरोः । भूयोऽप्यासाद्य वेतालं स्कन्धे जग्राह भूपतिः ॥ १
प्रस्थितं च तमुर्वीशं स वेतालोऽभ्यधात्पुनः । राजञ्श्रान्तोऽसि तच्चित्रां कथामाख्यामि ते शृणु ॥ २
अस्त्ययोध्येति नगरी राजधानी बभूव या । रक्षःकुलकृतान्तस्य रामरूपस्य शार्ङ्गिणः ॥ ३
तस्यां राजाभवद्वीरकेतुर्नाम ररक्ष यः । क्षोणीमिमां महाबाहुः प्राकारो नगरीमिव ॥ ४
तस्मिन्महीपतावस्यां पुर्यामेको महावणिक् । रत्नदत्ताभिधानोऽभूद्वणिङ्निवहनायकः ॥ ५
नन्दयन्त्यभिधानायां पत्न्यां तस्योदपद्यत । सुता रत्नवती नाम देवताराधनार्जिता ॥ ६
सा च तस्य पितुर्वेश्मन्यवर्धत मनस्विनी । रूपलावण्यविनयैः सहैव सहजैर्गुणैः ॥ ७
यौवनस्थां च तां तस्माद्रत्नदत्तान्न केवलम् । महान्तो वणिजो यावद्राजानोऽपि ययाचिरे ॥ ८
सा तु पुंद्वेषिणी नैच्छद्भर्तारमपि वासवम् । प्राणत्यागोद्यता सेहे न विवाहकथामपि ॥ ९
तेन तस्याः पिता तूष्णीं तस्थौ वात्सल्यदुःस्थितः । स च प्रवादोऽयोध्यायां तस्यां सर्वत्र पप्रथे ॥ १०
अत्रान्तरे सदा चौरैर्मुष्यमाणाः किलाखिलाः । संभूयात्र नृपं पौरा वीरकेतुं व्यजिज्ञपन् ॥ ११
नित्यं मुष्यामहे चौरै रात्रौ रात्राविह प्रभो । लक्ष्यन्ते ते च नास्माभिस्तद्देवो वेत्तु यत्परम् ॥ १२
इति पौरैः स विज्ञप्तो राजा तामभितः पुरीम् । तस्करान्वेषणे छन्नानादिशद्रात्रिरक्षकान् ॥ १३
--पुर्नयच्चौरान्पुरी सामुष्यतैव च । तदैकदा स्वयं राजा निशि स्वैरं विनिर्ययौ ॥ १४
वात्तशस्त्रोऽत्र भ्रमन्सोऽपश्यदेकतः । एकं प्राकारपृष्ठेन यान्तं कमपि पूरुषम् ॥ १५

ब्दपदविन्यासविचित्रगतिकौशलम् । सशङ्कलोलनयनं पश्यन्तं पृष्ठतो मुहुः ॥ १६
स नूनं चौरो मे मुष्णात्येकचरः पुरीम् । इति मत्वैव निकटं स तस्योपययौ नृपः ॥ १७
स चौरो दृष्ट्वा तं नृपं कोऽसीत्यभाषत । चौरोऽहमिति राजा तं चौरं प्रत्यब्रवीत्स तम् ॥ १८
थ चौरोऽभ्यधाद्दृष्ट्वा तर्हि तुल्योऽसि मे सुहृत् । तदेहि मद्गृहं तावन्मित्राचारं करोमि ते ॥ १९
त्वा स तथेत्युक्त्वा तेनैव सह भूपतिः । ययौ वनान्तर्धरणीखातान्तर्वर्ति तद्गृहम् ॥ २०
भोगशोभाढ्यं भास्वद्दीपप्रकाशितम् । नवीनमिव पातालं बलिराजानधिष्ठितम् ॥ २१
प्रविष्टे तस्मिंश्च कृतासनपरिग्रहे । राज्ञि सोऽभ्यन्तरगृहं प्रविवेशाथ तस्करः ॥ २२
गं च तमेत्यैका दासी तत्रावदन्नृपम् । महाभाग प्रविष्टस्त्वमिह मृत्युमुखे कथम् ॥ २३
ौरो ह्यसौ पापं निर्गत्यातः करिष्यति । ध्रुवं विश्वासघातीति तदितस्त्वरितं व्रज ॥ २४
ः स तया राजा निर्गत्यैव ततो द्रुतम् । गत्वा स्वराजधानीं च निशि सैन्यान्यसज्जयत् ॥ २५
सैन्यश्चागत्य दस्योस्तस्य रुरोध तत् । भूगृहद्वारविवरं रसत्तूर्याकुलैर्बलैः ॥ २६
रुद्धे गृहे वृत्तं प्रतिभेदमवेत्य सः । मरणे निश्चितश्चौरः शूरो युद्धाय निर्ययौ ॥ २७
तश्च रणे चक्रे पराक्रममानुषम् । करांश्चकर्त करिणां जङ्घाश्चिच्छेद वाजिनाम् ॥ २८
च शिरांस्येको भटानां खड्गचर्मभृत् । ततस्तं क्षपितानीकमभ्यधावत्स्वयं नृपः ॥ २९
स्य खड्गविद्याज्ञो राजा करणयुक्तितः । हस्ताज्जहार निस्त्रिंशमथ तां क्षुरिकामपि ॥ ३०
त्रं मुक्तशस्त्रोऽथ बाहुयुद्धेन तं नृपः । चौरं निहत्य धरणौ सजीवग्राहमग्रहीत् ॥ ३१
य तं च संयम्य सधनं नगरीं निजाम् । प्रातश्चाज्ञापयत्तस्य शूलारोपणनिग्रहम् ॥ ३२
मानं च तं वध्यभूमिं चौरं सडिण्डिमम् । ददर्श सा रत्नवती वणिक्कन्यात्र हर्म्यतः ॥ ३३
तं धूलिलिप्ताङ्गमप्येतं मारमोहिता । दृष्ट्वैव गत्वा पितरं रत्नदत्तमुवाच सा ॥ ३४
नीयते योऽयमेष भर्ता वृतो मया । तन्नृपाद्रक्ष तातैनं न चेदेनमनु म्रिये ॥ ३५
त्वा तां पितावादीत्किमिदं पुत्रि भाषसे । या त्वं नेच्छसि भूपालमपि भर्तॄनभीप्सतः ॥ ३६
ापं तस्करमिमं वाञ्छस्यापद्गतं कथम् । इत्यादि पित्रा प्रोक्तापि निश्चयान्न चचाल सा ॥ ३७
स तत्पिता गत्वा तस्य चौरस्य सत्वरम् । सर्वस्वेनापि राजानं वधान्मोक्षमयाचत ॥ ३८
तु तं न तत्याज हेमकोटिशतैरपि । स्वशरीरपणानीतं चौरं सर्वापहारिणम् ॥ ३९
पितर्युपायाते विमुखे सा वणिक्सुता । अनुमर्तुं कृतस्नाना वार्यमाणापि बन्धुभिः ॥ ४०
ह्य शिबिकां तस्य दस्योर्वध्यभुवं ययौ । अन्वीयमाना रुदता पित्रा मात्रा जनेन च ॥ ४१
वधकैः सोऽत्र चौरः शूलेऽधिरोपितः । तां ददर्श गलत्प्राणस्तथा सज्ञातिमागताम् ॥ ४२
च्छ्रुत्वा च वृत्तान्तमश्रु मुक्त्वा क्षणं ततः । हसन्स चौरः किमपि प्राणाञ्शूलगतो जहौ ॥ ४३
ऽवतारितं शूलात्सा तच्चौरकलेवरम् । आदाय चारुरोहात्र चितां साध्वी वणिक्सुता ॥ ४४
णं च श्मशानेऽत्र भैरवः कृतसंनिधिः । अदृश्यो भगवानेवं तामुवाचान्तरिक्षतः ॥ ४५
न्स्वयंवरपतावेवं भक्त्या तवानया । तुष्टोऽस्मि तद्वरं मत्तः प्रार्थयस्व पतिव्रते ॥ ४६
त्वैव वरं देवादेवं वव्रे प्रणम्य सा । नाथ पुत्रशतं भूयादपुत्रस्यापि मत्पितुः ॥ ४७
तन्यसुतो नैष प्राणाञ्जह्यान्मया विना । इति प्रोक्तवतीमेनां साध्वीं देवोऽब्रवीत्पुनः ॥ ४८
पुत्रशतं तेऽस्तु वरमन्यं वृणीष्व च । त्वादृशी दृढसत्त्वा हि नैतावन्मात्रमर्हति ॥ ४९
कर्ण्याथ सावादीत्प्रसन्नो मयि चेत्प्रभुः । तज्जीवत्वेष भर्ता मे धार्मिकश्च सदास्त्विति ॥ ५०
ास्त्वक्षतो जीवन्नुत्तिष्ठत्वेष ते पतिः । धार्मिकश्चास्तु राजास्य वीरकेतुश्च तुष्यतु ॥ ५१
कवत्यनालक्ष्यमूर्तौ शर्वे नभःस्थिते । उत्तस्थावक्षताङ्गोऽत्र चौरो जीवंस्तदैव सः ॥ ५२
विस्मितहृष्टः सन्रत्नदत्तः सुतां वणिक् । आदाय तां रत्नवतीं चौरं जामातरं च तम् ॥ ५३

, 'या त्वं पूर्वं गुणैर्युक्तान्वरान्पञ्चशरोपमान् । नैषीः साद्य कथं चौरपतिं निन्दितमिच्छसि ॥' इति पुस्तकान्तरपाठः.

प्रहृष्टैर्बान्धवैः साकं प्रविश्य निजमन्दिरम्। लब्धपुत्रवरश्चक्रे स्वानन्दोचितमुत्सवम्॥ ८
ज्ञातवृत्तान्ततुष्टश्च तदैवानाय्य तं नृपः। एकवीरं वीरकेतुश्चौरं सेनापतिं व्यधात्॥ ८
चौर्यान्निवृत्तोऽथ स तां परिणीय वणिक्सुताम्। एकवीरः सुखं तस्थौ मार्गस्थो राजसंमतः॥ ८

इति कथयित्वा स कथां वेतालो दत्तपूर्वशापभयम्।
अंसस्थितस्त्रिविक्रमसेनं पप्रच्छ तं क्षितिपम्॥ ८

राजन्ब्रूहि सपितृकामुपस्थितां तां वणिक्सुतां दृष्ट्वा।
चौरेण शूलपृष्ठे रुदितं हसितं च किं तेन॥ ५

अथ राजा प्रत्यवदद्रुदितं चौरेण दुःखतस्तेन।
नास्यानृण्यमकारणबन्धोर्यातोऽस्मि वणिज इति॥ ५

आश्चर्यतश्च हसितं किमियं कन्या नृपान्वरान्हित्वा।
मय्यस्मिन्ननुरक्ता स्त्रीचित्तमहो विचित्रमिति॥ ६

इत्युक्तवाक्यस्य महीभृतोऽसान्मायी स्वशक्त्यैव तदा जगाम।
स्वं धाम वेतालवरः स राजाप्येतं पुनः पूर्ववदन्वगच्छत्॥ ६

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बक एकविंशस्तरङ्गः।

---

द्वाविंशस्तरङ्गः।

( पञ्चदशो वेतालः। )

ततो गत्वा पुनः प्राप्य वेतालं शिंशपातरोः। स त्रिविक्रमसेनस्तमादायोदचलत्पुनः॥
आयान्तं तं च राजानं स वेतालोंऽसपृष्ठगः। जगाद भूयोऽप्येतां ते राजन्वच्मि कथां शृणु॥
अभून्नेपालविषये नाम्ना शिवपुरं पुरम्। यथार्थनामा तत्रासीद्यशःकेतुः पुरा नृपः॥
स मन्त्रिणि न्यस्य भरं प्रज्ञासागरसंज्ञके। चन्द्रप्रभाख्यया देव्या सार्धं भोगानसेवत॥
कालेन तस्यां देव्यां च तस्याजायत कन्यका। राज्ञः शशिप्रभा नाम जगन्नेत्रशशिप्रभा॥
क्रमेण यौवनस्था सा मधुमासे कदाचन। ययौ यात्रोत्सवं द्रष्टुमुद्यानं सपरिच्छदा॥
तत्रैकदेशेऽपश्यत्तां कुसुमावचयोद्यताम्। उत्क्षिप्तबाहुलतिकालक्षितैकपयोधराम्॥
प्रसूनवृन्तविगलत्संदंशकरशोभिनीम्। आढ्यपुत्रो मनःस्वामी नाम यात्रागतो द्विजः॥
स तया दृष्टया सद्यो हृतस्य मनसो युवा। मनःस्वाम्यपि नैवाभूत्स्वामी मदनमोहितः॥
मार्गणानां कृते किंस्विद्रतिरेषा मनोभुवः। वसन्तसंभृतानीह पुष्पाण्युच्चिनुते स्वयम्॥ १०
किं वार्चयितुकामेयं माधवं वनदेवता। इति संचिन्तयन्तं तं साप्यपश्यन्नृपात्मजा॥ ११
दृष्टमात्रे च सा तस्मिन्साङ्गे नव इव स्मरे। न पुष्पाणि न चाङ्गानि सोत्का नात्मानमस्मरत्॥ १२
इत्यन्योन्यनवप्रेमसरसौ यावदत्र तौ। तिष्ठतस्तावदुद्भूद्धाहाहेति महारवः॥ १३
किमेतदिति चोत्क्षिप्तकंधरं पश्यतोस्तयोः। आयादत्रोपलब्धान्यगजगन्धोत्थया रुषा॥ १४
भग्नालानो विनिर्गत्य मत्तो मार्गद्रुमान्रुजन्। पतिताधोरणो धावँल्लम्बमानाङ्कुशः करी॥ १५
ततः परिजने त्रस्तविद्रुते तां ससंभ्रमम्। राजपुत्रीं प्रधाव्यैव दोर्भ्यामुत्क्षिप्य चैककाम्॥ १६
अङ्गैः किंचित्कृताश्लेषां भयप्रेमत्रपाकुलाम्। निनाय स मनःस्वामी सुदूरं गजगोचरात्॥ १७
अथागतैः परिजनैः स्तुवद्भिस्तं द्विजोत्तमम्। मुहुर्विवृत्य पश्यन्ती सा निन्ये निजमन्दिरम्॥ १८
तत्र तस्थौ तमेवार्ता स्मरन्ती प्राणदायिनम्। स्मराग्निपुटपाकेन पच्यमाना दिवानिशम्॥ १९
सोऽप्युद्यानान्मनःस्वामी तदा तस्मादनुव्रजन्। स्वान्तःपुरप्रविष्टां तां दृष्ट्वा सोत्को व्यचिन्तयत्॥ २०
नैतां विनाधुना स्थातुं जीवितुं वाहमुत्सहे। तन्मे श्रीमूलदेवोऽत्र धूर्तः सिद्धो गुरुर्गतिः॥ २१
इति संचिन्त्य कथमप्यस्मिन्नवसिते दिने। प्रातर्ययौ गुरोस्तस्य मूलदेवस्य सोऽन्तिकम्॥ २२

ं तं च मित्रेण शशिना नित्यसंगतम् । सिद्धमायाद्भुतपथं सशरीरमिवाम्बरम् ॥ २३
ादयच्च तत्तस्यै प्रणम्य स्वमनीषितम् । सोऽपि साधयितुं तस्य प्रतिपेदे विहस्य तत् ॥ २४
स योगगुलिकां क्षिप्त्वा धूर्तपतिर्मुखे । मूलदेवो व्यधाद्वृद्धब्राह्मणाकृतिमात्मनः ॥ २५
ीयां गुलिकां दत्त्वा मुखक्षेप्यां चकार च । सुकान्तकन्यकारूपं तं मनःस्वामिनं द्विजम् ॥ २६
ं तं समादाय गत्वा धूर्ताधिपोऽथ सः । तत्प्रियाजनकं भूपमास्थाने तं व्यजिज्ञपत् ॥ २७
ेकोऽस्ति मे पुत्रः कन्या दूराच्च तत्कृते । मयैषा याचितानीता स च क्वापि गतोऽधुना ॥ २८
न्वेष्टुमहं यामि तदेषा रक्ष्यतां त्वया । आनयामि सुतं यावत्त्वं हि विश्वस्य रक्षिता ॥ २९
त्वा शापभीत्या च प्रतिपद्य स भूपतिः । सुतामानाययामास यशःकेतुः शशिप्रभाम् ॥ ३०
ाद चैतां पुत्रीमां कन्यां रक्षेः स्वमन्दिरे । स्वपार्श्व एव चाहारं शय्यां चास्याः प्रकल्पयेः ॥ ३१
पित्रोक्तया निन्ये कन्यारूपस्तथेति सः । अन्तःपुरं मनःस्वामी राजपुत्र्या तया निजम् ॥ ३२
ारुचि ततो याते मूलदेवे द्विजाकृतौ । कन्यारूपः स तत्रासीन्मनःस्वामी प्रियान्तिके ॥ ३३
श्च तां सखीप्रीतिविस्रम्भं सम्यगागताम् । एकदा विरहक्षामां शयनीयलुठत्तनुम् ॥ ३४
ो रहो राजसुतामासन्नशयनस्थितः । कन्यारूपप्रतिच्छन्नो मनःस्वामी स पृष्टवान् ॥ ३५
त्र किं पाण्डुरच्छाया क्षीयमाणा दिने दिने । कान्तपक्षवियुक्तेव दुःखितासि शशिप्रभे ॥ ३६
ः मे को ह्यविश्वासः स्निग्धमुग्धे सखीजने । इदानीं नैव भोक्ष्येऽहं न वदिष्यसि चेन्मम ॥ ३७
त्वा सा विनिःश्वस्य शनै राजसुताब्रवीत् । किं मे त्वय्यप्यविश्वासः शृणु तत्सखि वच्मि ते ॥ ३८
दाहं मधूद्यानयात्रां द्रष्टुं गताभवम् । तत्रापश्यं च सुभगं कंचिद्ब्राह्मणपुत्रकम् ॥ ३९
मुक्तेन्दुसश्रीकं दर्शनोद्दीपितस्मरम् । मधुमासमिवालोकक्रीडालंकृतकाननम् ॥ ४०
ोरायितुमेते च प्रवृत्ते यावदुन्मुखे । तन्मुखेन्दुद्युतिसुधापायिनी मे विलोचने ॥ ४१
त्स्रवन्मदजलस्तत्राकस्मान्निरर्गलः । अकालकालमेघाभो गर्जन्नागान्महागजः ॥ ४२
ाभ्रमात्परिजने नष्टेऽहं भयविह्वला । उत्क्षिप्य विप्रपुत्रेण नीता तेनैव दूरतः ॥ ४३
ब्रण्डेनानुलिप्तेव सिक्तेव सुधया तथा । अहं तदङ्गस्पर्शेन न जाने कां दशामगाम् ॥ ४४
ाच्च परिवारेण मिलितेनावशा ततः । इहानीतास्मि निक्षिप्ता स्वर्गादिव भुवस्तले ॥ ४५
प्रभृति संकल्पैस्तैस्तैः कल्पितसंगमम् । पश्यामि तं प्रबुद्धापि पार्श्वस्थं प्राणदं पतिम् ॥ ४६
। स्वप्ने च कुर्वाणं चाटून्यालोकयामि तम् । त्याजयन्तं हठाल्लज्जां चुम्बनालिङ्गनादिभिः ॥ ४७
न प्राप्नोम्यभव्या तं नामाद्यज्ञानमोहिता । तदेवं मां दहत्येष प्राणेशविरहानलः ॥ ४८
वाक्सुधया तस्याः पूर्णस्वश्रवणोदरः । सानन्दः स मनःस्वामी विप्रकन्यावपुर्धरः ॥ ४९
ार्थमानी मत्वा तं कालमात्मप्रकाशने । स्वरूपं प्रकटीचक्रे निष्कृष्य गुलिकां मुखात् ॥ ५०
ाद च विलोलाक्षि सोऽहमेवैष यस्त्वया । उद्याने दर्शनक्रीतो नीतो निर्व्याजदासताम् ॥ ५१
ंस्तवक्षणभ्रंशात्क्लेशं तं चाप्तवानहम् । यस्यैष परिणामो मे कन्यारूपग्रहोऽभवत् ॥ ५२
ात्सफलयैतां मे विसोढां विरहव्यथाम् । आत्मनश्च न तन्वङ्गि क्षमतेऽतःपरं स्मरः ॥ ५३
वदन्तं सहसा प्राणेशं तं विलोक्य सा । आसीद्राजसुता क्षिप्रं स्नेहाश्चर्यत्रपाकुला ॥ ५४
ात्यौत्सुक्यनिर्वृत्तगान्धर्वोद्वाहयोस्तयोः । प्रेम्णस्तस्य मतो यादृक्तादृशोऽभूद्रतोत्सवः ॥ ५५
सोऽत्र मनःस्वामी कृती तस्थौ द्विरूपभृत् । दिवा सुगुलिकः कन्या रात्रावगुलिकः पुमान् ॥ ५६
ऽथ दिनेष्वत्र यशःकेतोर्महीपतेः । मृगाङ्कदत्तसंज्ञेन श्वशुर्येण निजा सुता ॥ ५७
। मृगाङ्कदत्ताख्या महार्हविभवोत्तरा । द्विजातये महामन्त्रिप्रज्ञासागरसूनवे ॥ ५८
मन्मातुलपुत्र्याः सा राजपुत्री शशिप्रभा । विवाहे मातुलगृहं तज्जगाम निमन्त्रिता ॥ ५९
। सह ययौ सोऽपि कन्यकापरिवारया । विप्रपुत्रो मनःस्वामी कान्तकन्यास्वरूपधृत् ॥ ६०
तं कन्यकारूपधरं मन्त्रिसुतोऽथ सः । दृष्ट्वा किल स्मरव्याधगाढबाणाहतोऽभवत् ॥ ६१

ततो मुषितचित्तः संस्तया कपटकन्यया। ययौ मन्त्रिसुतः शून्यं स्वगृहं स्ववधूसखः॥ ६२
तत्र तन्मुखलावण्यध्यानासक्तो जगाम सः। तीव्ररागमहाव्यालदष्टो मोहमशङ्कितम्॥ ६३
किमेतदिति संभ्रान्ते जने तत्रोत्सवोज्झिते। तमुपागाद्द्रुतं बुद्धा स प्रज्ञासागरः पिता॥ ६४
तेन चाश्वास्यमानोऽपि पित्रा मोहात्प्रबुध्य सः। प्रलपन्निव सोन्मादमुज्जगार मनोगतम्॥ ६५
अस्वाधीनं च तन्मत्वा तत्पितर्यतिविह्वले। तस्मिन्राजापि तद्बुद्धा तत्रैव समुपाययौ॥ ६६
स तं दृष्ट्वा झटित्येव गाढाभिष्वङ्गतो गतम्। सप्तमीं मदनावस्थां जगाद प्रकृतीर्नृपः॥ ६७
कथं ब्राह्मणनिक्षेपः कन्या सास्मै प्रदीयते। तया विना च नियतं पश्चिमामेत्यसौ दशाम्॥ ६८
अस्मिन्नष्टे पितास्यैष मम मन्त्री विनङ्क्ष्यति। एतन्नाशे राज्यनाशस्तदिह ब्रूत का गतिः॥ ६९
इत्युक्तास्तेन राज्ञा ताः सर्वाः प्रकृतयोऽब्रुवन्। राज्ञो धर्मं निजं प्राहुः प्रजानां धर्मरक्षणम्॥ ७०
मूलं तस्य विदुर्मन्त्रं स च मन्त्रिष्ववस्थितः। मन्त्रिनाशे मूलनाशाद्ध्रुवं धर्मक्षतिर्ध्रुवम्॥ ७१
पापं च स्याद्द्विजस्यास्य ससूनोर्मन्त्रिणोर्वधात्। तस्माद्रक्ष्योऽयमासन्नोऽवश्यं ते धर्मविप्लवः॥ ७२
दातव्या मन्त्रिपुत्राय विप्रन्यस्ता कुमारिका। कालान्तरागते विप्रे क्रुद्धे प्रतिविधास्यते॥ ७३
एवमुक्तः प्रकृतिभिस्तथेति प्रत्यपद्यत। स राजा मन्त्रिपुत्राय दातुं तां कूटकन्यकाम्॥ ७४
आनीतश्च स निश्चित्य लग्नं राजसुताग्रहात्। कन्यारूपो मनःस्वामी तं जगाद महीपतिम्॥ ७५
अन्येनान्यार्थमानीतामन्यस्मै मां ददासि चेत्। कामं तदस्तु राजा त्वं धर्माधर्मौ तवाद्य तौ॥ ७६
अहं विवाहमिच्छामि समयेनेदृशेन तु। एकशय्यां न नेतव्या पत्या तावदहं हठात्॥ ७७
यावत्तीर्थानि षण्मासान्परिभ्रम्य स नागतः। एवं न चेत्कृत्तजिह्वां दन्तैर्जानीहि मां मृताम्॥ ७८
इत्युक्ते समये तेन यूना कन्यावपुर्भृता। राज्ञा स बोधितः प्राप निर्वृतिं मन्त्रिपुत्रकः॥ ७९
तथेति प्रतिपद्यैतत्कृत्वोद्वाहं किलाशु तम्। एकस्मिन्स्थापयित्वा च वासके ते सुरक्षिते॥ ८०
तां मृगाङ्कवतीमाद्यां वधूं कूटवधूं च ताम्। जगाम तीर्थयात्रायै मूढः कान्ताप्रियेच्छया॥ ८१
स चोवास मनःस्वामी स्त्रीरूपोऽत्र तया सह। मृगाङ्कवत्यैकगृहे समानशयनासनः॥ ८२
तथा स्थितं कदाचित्तं सा मृगाङ्कवती निशि। शय्यागृहे रहोऽवादीद्बहिःसुप्ते परिच्छदे॥ ८३
कथां कांचित्त्वमाख्याहि निद्रा नास्ति हि मे सखि। तच्छ्रुत्वाकथयत्सोऽस्यै स्त्रीरूपस्तां कथां युवा॥ ८४
यत्रेलाख्यस्य राजर्षेः सूर्यवंशभुवः पुरा। प्राप्तस्य गौरीशापेन स्त्रीत्वं विश्वैकमोहनम्॥ ८५
अन्योन्यदर्शनप्रीत्या देवोद्यानवनान्तरे। अभूद्बुधेन संयोगः समभूच्च पुरूरवाः॥ ८६
तां कथां कथयित्वा च धूर्तः पुनरुवाच सः। तदेवं देवतादेशान्मन्त्रौषधवशेन वा॥ ८७
पुरुषः स्त्री कदाचित्स्यात्स्त्री वा जातु पुमान्भवेत्। भवन्ति चैवं संयोगाः कामजा महतामपि॥ ८८
श्रुत्वैतत्तरुणी मुग्धा विवाहप्रोषितानुका। सा मृगाङ्कवती स्माह विश्वस्ता सहवासतः॥ ८९
श्रुत्वैतां मे कथामेतदङ्गं सिमिसिमायते। हृदयं सीदतीवेदं तदेतत्सखि किं वद॥ ९०
तच्छ्रुत्वा सोऽङ्गनारूपो विप्रः पुनरुवाच ताम्। एतानि कामचिह्नानि नन्वपूर्वाणि ते सखि॥ ९१
मयैतान्यनुभूतानि निगूहे नह्यहं तव। इति तेनोदितावादीत्सा मृगाङ्कवती शनैः॥ ९२
सखि प्राणसमा त्वं मे तत्कालज्ञा न वच्मि किम्। अपि पुंसः प्रवेशः स्यादुपायेन हि केनचित्॥ ९३
एवमुक्तवतीमेतां स च लब्धाशयस्तदा। प्राह धूर्तपतेः शिष्यो यद्येवं तद्वदामि ते॥ ९४
वैष्णवोऽस्ति प्रसादो मे येनाहं स्वेच्छया निशि। पुरुषः स्यां तदेषोऽद्य भवामि त्वत्कृते पुमान्॥ ९५
इत्युक्त्वा स मनःस्वामी निष्कृष्य गुलिकां मुखात्। यौवनोद्दाममात्मानं तस्यै कान्तमदर्शयत्॥ ९६
ततः कथितविस्रम्भः सर्वस्वगतयन्त्रणः। कालोचितरसः कोऽपि तयोरासीद्रतोत्सवः॥ ९७
अथ तत्र तया साकं स मन्त्रिसुतभार्यया। तस्थौ द्विजो दिवा नारी रात्रौ च पुरुषो भवन्॥ ९८
आसन्नागमनं तं च बुद्धा मन्त्रिसुतं दिनैः। तामादाय निशि स्वैरं पलाय्य स ययौ ततः॥ ९९
। कथासंधौ मूलदेवः स तद्गुरुः। बुद्धा तदखिलं भूत्वा भूयो वृद्धद्विजाकृतिः॥ १००

शिनानुगतः सख्या तरुणद्विजरूपिणा । आगत्य तं यशःकेतुं प्रह्वो राजानमब्रवीत् ॥ १०१
ानीतोऽयं मया पुत्रो देहि मे तां स्नुषामिति । ततः संमन्त्र्य स नृपः शापभीतस्तमभ्यधात् ॥ १०२
ह्मन्न जाने क गता सा स्नुषा ते क्षमस्व तत् । अपराधात्सुतस्यार्थे ददामि स्वसुतां तव ॥ १०३
्युक्त्वा धूर्तराजं तं कृतकक्रोधनिष्ठुरम् । विब्रुवाणं जरद्विप्ररूपं प्रार्थ्य स भूपतिः ॥ १०४
त्सख्ये कृततत्पुत्रव्यपदेशाय तां ददौ । तनयां शशिने तस्मै यथाविधि शशिप्रभाम् ॥ १०५
तः स मूलदेवस्तौ यथाभूतौ वधूवरौ । आदाय स्वास्पदं प्रायाद्राजार्थेष्वकृतस्पृहः ॥ १०६
त्र तस्मिंश्च मिलिते मनःस्वामिन्यभून्महान् । विवादो मूलदेवाग्रे शशिनस्तस्य चोभयोः ॥ १०७
नःस्वाम्यब्रवीदेषा दीयतां मे शशिप्रभा । कन्यैव हि मयोढा प्रागसौ गुर्वनुग्रहात् ॥ १०८
शी जगाद कोऽस्यास्त्वं मूर्ख दारा इयं मम । अग्निसाक्षिकमेषा हि पित्रा मे प्रतिपादिता ॥ १०९
वं मायाबलप्राप्तराजपुत्रीनिमित्ततः । विवादासक्तयोर्नासीत्परिच्छेदस्तयोर्द्वयोः ॥ ११०
द्राजंस्त्वं मम ब्रूहि तावत्कस्योपपद्यते । भार्या सा संशयं छिन्धि पूर्वोक्तः समयोऽस्ति ते ॥ १११
ते वेतालतः श्रुत्वा तस्मात्स्कन्धाग्रवर्तिनः । स त्रिविक्रमसेनस्तं नृपतिः प्रत्यभाषत ॥ ११२
न्ये शशिन एवासौ भार्या न्याय्या नृपात्मजा । यस्मै प्रदत्ता प्रकटं पित्रा धर्म्येण वर्त्मना ॥ ११३
नःस्वामी तु तां भेजे चौर्याद्गान्धर्वधर्मतः । चौरस्य तु परस्वेषु स्वत्वं न्याय्यं न जातुचित् ॥ ११४

इति तस्य वचो निशम्य राज्ञो वेतालः स ययौ पुनस्तदेव ।
सहसैव तदंसतः स्वधाम क्षितिपः सोऽपि तमन्वियाय तूर्णम् ॥ ११५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके द्वाविंशस्तरङ्गः ।

---

## त्रयोविंशस्तरङ्गः ।

(षोडशो वेतालः ।)

थ गत्वा पुनः स्कन्धे वेतालं शिंशपाद्रुमात् । स त्रिविक्रमसेनस्तमादायोदचलत्ततः ॥ १
ागच्छन्तं च तं भूपं स वेतालोऽब्रवीत्पुनः । राजञ्शृणु कथामेकामुदारां कथयामि ते ॥ २
स्तीह हिमवान्नाम नगेन्द्रः सर्वरत्नभूः । यो गौरीगङ्गयोस्तुल्यः प्रभवो हरकान्तयोः ॥ ३
रासंस्पृष्टपृष्ठश्च यो मध्ये कुलभूभृताम् । अभिमानोन्नतः सत्यं गीयते भुवनत्रये ॥ ४
स्यास्ति सानुन्यन्वर्थं तत्काञ्चनपुरं पुरम् । न्यासीकृतमिवार्केण रश्मिवृन्दं विभाति यत् ॥ ५
ीमूतकेतुरित्यासीत्तस्मिन्पुरवरे पुरा । विद्याधरेश्वरः श्रीमान्मेराविव शतक्रतुः ॥ ६
स्यासीत्स्वगृहोद्याने कल्पवृक्षोऽन्वयागतः । यथार्थनामा प्रथितो यो मनोरथदायकः ॥ ७
प्रार्थ्य देवतात्मानं स राजा तत्प्रसादतः । प्राप जातिस्मरं पुत्रं बोधिसत्त्वांशसंभवम् ॥ ८
नवीरं महासत्त्वं सर्वभूतानुकम्पिनम् । गुरुशुश्रूषणपरं नाम्ना जीमूतवाहनम् ॥ ९
प्राप्तयौवनं तं च यौवराज्येऽभिषिक्तवान् । तनयं प्रेरितः सद्भिस्तद्गुणैः सचिवैश्च सः ॥ १०
वराज्यस्थितश्चैष जातु जीमूतवाहनः । हितैषिभिरुपागत्य जगदे पितृमन्त्रिभिः ॥ ११
्र कल्पतरुर्योऽयमस्ति वः सर्वकामदः । अधृष्यः सर्वभूतानां सैष पूज्यः सदा तव ॥ १२
स्मिन्सति हि शक्रोऽपि बाधेतास्मान्कुतोऽपरः । एतच्छ्रुत्वा स जीमूतवाहनोऽन्तरचिन्तयत् ॥ १३
हो बतेदृशमिमं संप्राप्यामरपादपम् । नासादितं किमप्यस्मात्पूर्वैर्नस्तादृशं फलम् ॥ १४
वलं कैश्चिदप्यर्थैरर्थितैः कृपणोचितैः । आत्मा चैष महात्मा च नीतौ द्वावपि लाघवम् ॥ १५
दहं साधयिष्यामि काममस्मान्मनोगतम् । इति निश्चित्य स ययौ महासत्त्वोऽन्तिकं पितुः ॥ १६
त्र संविहिताशेषशुश्रूषापरितोषितम् । सुखासीनं तमेकान्ते पितरं स व्यजिज्ञपत् ॥ १७
त त्वमेव जानासि यदेतस्मिन्भवाम्बुधौ । आशरीरमिदं सर्वं वीचिविभ्रमचञ्चलम् ॥ १८
शेषेणाचिरस्थायिप्रकाशप्रविलायिनी । संध्या विद्युच्च लक्ष्मीश्च दृष्टा कुत्र कदा स्थिरा ॥ १९

पादयोस्तं च ववन्दे सोऽपि तं मुनिः । कल्पितातिथ्यविश्रान्तं ज्ञानी क्षिप्रादभाषत ॥ ३८
न्द्रावलोकैतच्छृणु यद्वच्मि ते हितम् । जानासि यादृक्संसारे प्राणिनां मृत्युतो भयम् ॥ ३९
ारणमेवैतान्वराकान्हंसि किं मृगान् । शस्त्रं हि भीतरक्षार्थं धात्रा क्षत्रस्य निर्मितम् ॥ ४०
रक्ष धर्मेण समुन्मूलय कण्टकान् । हस्त्यश्वास्त्रादियोग्याभिश्चललक्ष्यादि साधय ॥ ४१
ाज्यसुखं देहि धनं दिक्षु यशः किर । कृतान्तक्रीडितं हिंस्रं मृगयाव्यसनं त्यज ॥ ४२
्यस्य चान्यस्य यत्र तुल्या प्रमादिता । किं तेन बह्वनर्थेन पाण्डोर्वृत्तं न किं श्रुतम् ॥ ४३
ण्वमुनेर्वाक्यं श्रुत्वा समभिनन्द्य च । राजा चन्द्रावलोकस्तमर्थज्ञः प्रत्यभाषत ॥ ४४
ष्टोऽस्मि भगवन्कृतो मेऽनुग्रहः परः । मृगयाया निवृत्तोऽहं प्राणिनः सन्तु निर्भयाः ॥ ४५
ोवाच स मुनिस्तुष्टोऽहममुना तव । प्राणिष्वभयदानेन तद्वृणीष्वेप्सितं वरम् ॥ ४६
स्तेन मुनिना कालज्ञः स नृपोऽभ्यधात् । तुष्टोऽसि चेत्सुतां देहि मह्यमिन्दीवरप्रभाम् ॥ ४७
तवते सोऽसौ राज्ञे स्नातागतां मुनिः । अप्सरःसंभवां कन्यां तां ददावनुरूपिकाम् ॥ ४८
ृतविवाहस्तां मुनिभार्याप्रसाधिताम् । कृतानुयात्रामुद्बाष्पैस्तापसैरा निजाश्रमात् ॥ ४९
रप्रभां भार्यामादायारुह्य वाजिनम् । चन्द्रावलोकस्तरसा प्रतस्थे स ततो नृपः ॥ ५०
श्चास्य विततं दृष्ट्वा तद्दिनचेष्टितम् । रविः खिन्न इवास्ताद्रिमस्तके समुपाविशत् ॥ ५१
मृगनेत्रा च क्रमादुद्रिक्तमन्मथा । ध्वान्तनीलपटच्छन्नरूपा रात्र्यभिसारिका ॥ ५२
काले पथि प्राप स राजाश्वत्थपादपम् । सज्जनाशयसुस्वच्छवापीजलतटस्थितम् ॥ ५३
नत्रौघसंछन्नशाद्वलश्यामलस्थलम् । दृष्ट्वा च तं वसामीह रात्रिमित्यकरोद्धृदि ॥ ५४
ातीर्य तुरगाद्त्त्वा तस्मै तृणोदकम् । विश्रम्य पुलिने वाप्या उपयुक्ताम्बुमारुतः ॥ ५५
त्रेकया सार्धं तया तस्य तरोस्तले । प्रियया पुष्पशय्यायां संविवेश स भूपतिः ॥ ५६
च समाक्रम्य तिमिरांशुकहारिणा । सरागमाननं प्राच्याश्चुचुम्बे शशलक्ष्मणा ॥ ५७
श्चन्द्रकिरणैः समाश्लिष्य प्रसारिताः । वीतमानावकाशाश्चाशेषा वितमसो दिशः ॥ ५८
तरे लतागुल्मविवरप्रसृतैः करैः । ऐन्दवै रत्नदीपाभैस्तरुमूले विभासिते ॥ ५९
राजा सिषेवे तामाश्लिष्येन्दीवरप्रभाम् । नवसंगमसोत्कण्ठसरसं सुरतोत्सवम् ॥ ६०
ायामास शनैर्नीवीं तस्यास्त्रपामिव । अखण्डयच्च दशनैर्मुग्धभावमिवाधरम् ॥ ६१
मास कुचयोर्यौवनद्विपकुम्भयोः । करजक्षतसद्रत्ननवनक्षत्रमालिकाम् ॥ ६२
कपोलौ नयने मुहुः परिचुचुम्ब च । लावण्यामृतनिःष्यन्दमापिबन्निव सर्वतः ॥ ६३
तेधुवनक्रीडासुखेन स तया सह । निनाय कान्तया तत्र राजा क्षणमिव क्षपाम् ॥ ६४
मुक्तशयनः सांध्यस्यानन्तरं विधेः । स्वसैन्यावाप्तये यातुमुन्मुखोऽभूद्वधूसखः ॥ ६५
नक्तं लुप्ताब्जखण्डशोभं निशापतिम् । भियेवास्ताद्रिकुहरप्रलीनं ध्वस्ततेजसम् ॥ ६६
ाम इव क्रोधादाताम्रतररोचिषि । प्रसारितकरोत्क्षिप्तमण्डलाग्रे विवस्वति ॥ ६७
ोदाजगामात्र विद्युत्पिङ्गशिरोरुहः । कज्जलश्यामलः कालमेघाभो ब्रह्मराक्षसः ॥ ६८
ालाकृतोत्तंसः केशयज्ञोपवीतभृत् । खादन्नरशिरोमांसं कपालेन पिबन्नसृक् ॥ ६९
हासं विमुच्योग्रं मुखेनाग्निं वमन्क्रुधा । दंष्ट्राकरालो राजानं भर्त्सयन्निजगाद तम् ॥ ७०
वालामुखं नाम विद्धि मां ब्रह्मराक्षसम् । निवासश्चैव मेऽश्वत्थो देवैरपि न लङ्घ्यते ॥ ७१
त्वया समाक्रम्य परिभुक्तः स्त्रिया सह । रात्रिचर्यागतस्याद्य तद्भुङ्क्ष्वाविनयात्फलम् ॥ ७२
हं ते दुराचार कामोपहतचेतसः । उत्पाट्य हृदयं भोक्ष्ये पास्याम्येव च शोणितम् ॥ ७३
वैव तथा घोरं तमवध्यमवेक्ष्य च । त्रस्ताङ्गनः सविनयं भयात्प्रत्यब्रवीन्नृपः ॥ ७४
ृतापराद्धं यन्मया ते तत्क्षमस्व मे । तवाहमाश्रमे ह्यस्मिन्नतिथिः शरणाश्रितः ॥ ७५

---

योग्या अभ्यासः.

दास्यामि चेप्सितं तुभ्यमानीय पुरुषं पशुम्। येन ते भविता तृप्तिस्तत्प्रसीद क्रुधं त्यज ॥
इति राज्ञो वचः श्रुत्वा शान्तः स ब्रह्मराक्षसः। अस्तु को दोष इत्यन्तर्विचिन्त्यैवमभाषत ॥
यः सप्तवर्षदेश्योऽपि महासत्त्वो विवेकवान्। त्वदर्थे स्वेच्छयात्मानं दद्याद्ब्राह्मणपुत्रकः ॥
हन्यमानं च यं माता हस्तयोः पादयोः पिता। अवष्टभ्यातिसुदृढं संनिवेश्य महीतले ॥
तादृशं पुरुषं मह्यमुपहारीकरोषि चेत्। स्वयं खड्गप्रहारेण हत्वा सप्तदिनान्तरे ॥
तत्ते क्षमिष्ये न्यक्कारमन्यथा तु महीपते। सद्यो विनाशयिष्यामि त्वामहं सपरिच्छदम् ॥
श्रुत्वैतत्स भयाद्राजा प्रतिपेदे तथेति तत्। तिरोबभूव च ब्रह्मराक्षसः सोऽपि तत्क्षणम् ॥
अथ चन्द्रावलोकोऽसौ राजा सेन्दीवरप्रभः। हयारूढस्ततः प्रायात्सैन्यं चिन्वन्सुदुर्मनाः ॥
अहो अहं मृगयया मदनेन च मोहितः। गतः पाण्डुरिवाकाण्डे विनाशं बत बालिशः ॥
प्राप्यते ह्युपहारोऽस्य राक्षसस्तादृशः कुतः। तन्निजं नगरं तावद्यामि पश्यामि भावि किम् ॥
इति ध्यायन्स च प्राप स्वसैन्यं चिन्वदागतम्। तद्युक्तश्च सदारः स्वं चित्रकूटमगात्पुरम् ॥
तत्र तस्योचितां भार्याप्राप्तिं वीक्ष्य कृतोत्सवे। राष्ट्रेऽन्तर्गतदुःखस्य दिनशेषो जगाम सः ॥
द्वितीयेऽह्नि रहः सर्वं स्ववृत्तान्तं शशंस सः। मन्त्रिभ्यस्तेषु चैकस्तं मन्त्री सुमतिरब्रवीत् ॥
विषादो देव ते मा भूदुपहारं हि तादृशम्। आनेष्याम्यहमन्विष्य बह्वाश्चर्या हि मेदिनी ॥
एवमाश्वास्य राजानं स सौवर्णीमकारयत्। मन्त्री सप्ताब्ददेशीयबालकप्रतिमां द्रुतम् ॥
रत्नैरलंकृतां तां च कृत्वा कर्णीरथार्पिताम्। भ्रामयामास नगरग्रामघोषेष्वितस्ततः ॥
यः सप्तवर्षदेशीयः स्वेच्छया विप्रपुत्रकः। ददाति सर्वसत्त्वार्थमात्मानं ब्रह्मरक्षसे ॥
उपहाराय सत्वस्थो मातापित्रोरनुज्ञया। हन्यमानश्च यस्ताभ्यां हस्तपादे प्रगृह्यते ॥
तस्मै ग्रामशतोपेतां हेमरत्नमयीमिमाम्। ददाति प्रतिमां राजा पित्रोरुपचिकीर्षवे ॥
इति च भ्राम्यमाणायास्तस्याः प्रतिकृतेः शिशोः। पटहोद्घोषणां मन्त्री सोऽग्रेऽजस्रमदापयत् ॥
तावच्छ्रुत्वा तदेकस्मिन्नग्रहारे द्विजार्भकः। कोऽपि सप्ताब्ददेशीयोऽप्यतिधीरोऽद्भुताकृतिः ॥
पूर्वाभ्यासेन बाल्येऽपि सदा परहिते रतः। प्रजापुण्यपरीपाक इव साकारतां गतः ॥
उवाचोद्घोषकानेत्य युष्मदर्थे ददाम्यहम्। आत्मानं पितरौ गत्वा बोधयित्वाभ्युपैमि च ॥
इत्यूचिवांस्तान्मुदितान्स बालोऽनुमतश्च तैः। गत्वा गृहं जगाद स्वौ पितरौ रचिताञ्जलिः ॥
ददामि सर्वसत्त्वार्थे देहमेतं विनश्वरम्। तन्मामभ्यनुजानीतं हर्तां चापदमात्मनः ॥
आत्मप्रतिकृतिं ह्येतां गृहीत्वा वितरामि वाम्। हेमरत्नमयीं राज्ञा दत्तां ग्रामशतान्विताम् ॥
एवं मे युष्मदानृण्यं परार्थश्चैव सिध्यति। युवां च ध्वस्तदारिद्र्यौ बहून्पुत्रानवाप्स्यथः ॥
इत्युक्तवन्तं सहसा पितरौ तौ तमूचतुः। किमेतद्भाषसे पुत्र वातेन क्षुभितोऽसि किम् ॥
किं वा ग्रहगृहीतोऽसि प्रलपस्यन्यथा कथम्। को ह्यर्थैर्घातयेत्पुत्रं देहं दद्याच्च कः शिशुः ॥
एतत्पित्रोर्वचः श्रुत्वा बालः पुनरुवाच सः। न बुद्धिमोहाज्जल्पामि शृणुतं मेऽर्थवद्वचः ॥
अवाच्याशुचिसंपूर्णमुत्पत्त्यैव जुगुप्सितम्। दुःखक्षेत्रं विनाश्येव शरीरमचिरादिदम् ॥
तदेतेनाल्पसारेण सुकृतं यदुपार्ज्यते। तदेव सारं संसारे कृतबुद्धिभिरुच्यते ॥
सर्वभूतोपकाराच्च किमन्यत्सुकृतं परम्। तत्रापि पित्रोर्भक्तिश्चेत्किं देहाद्दृश्यते फलम् ॥
इत्यादिवाक्यैः स शिशुः शोचन्तौ दृढनिश्चयः। तावङ्गीकारयामास पितरौ स्वमनीषितम् ॥
गत्वा च राजभृत्येभ्यः प्रतिमां तां हिरण्मयीम्। आनीय प्रददौ ताभ्यां सग्रामशतशासनाम् ॥
ततः कृत्वाग्रतो राजभृत्यांस्तानेव स द्रुतम्। पितृभ्यामन्वितः प्रायाच्चित्रकूटं नृपान्तिकम् ॥
तत्र चन्द्रावलोकस्तं वीक्ष्याखण्डिततेजसम्। रक्षारत्नमिव प्राप्तं बालं राजा ननन्द सः ॥
आरोप्य गजपृष्ठं च रचितस्रग्विलेपनम्। निनाय तं सपितृकं केतनं ब्रह्मरक्षसः ॥
तत्र मण्डलमालिख्य तस्याश्वत्थस्य पार्श्वतः। विहितोचितपूजेन हुते वह्नौ पुरोधसा ॥

ाविर्बभूव मुक्ताट्टहासः सोऽध्ययनं पठन् । घूर्णन्रक्तासवक्षीबो जृम्भमाणो मुहुः श्वसन् ॥ ११५
लन्नेत्रो दिशः कुर्वन्देहच्छायान्धकारिताः । ज्वालामुखो महारौद्रदर्शनो ब्रह्मराक्षसः ॥ ११६
तश्चन्द्रावलोकस्तं दृष्ट्वा प्रह्वोऽब्रवीन्नृपः । नरोपहारो भगवन्नानीतः स मया तव ॥ ११७
समो दिवसश्चाद्य प्रतिज्ञातस्य सोऽस्य ते । तत्प्रसीद गृहाणैतमुपहारं यथाविधि ॥ ११८
ते राज्ञार्थितो विप्रकुमारं ब्रह्मराक्षसः । स तमालोकयामास जिह्वया सृक्किणी लिहन् ॥ ११९
तत्क्षणं स महासत्त्वो बालो हृष्यन्नचिन्तयत् । स्वदेहदानेनानेन सुकृतं यन्मयार्जितम् ॥ १२०
न मा भून्मम स्वर्गो मोक्षो वा निरुपक्रियः । भूयात्तु मे परार्थाय देहो जन्मनि जन्मनि ॥ १२१
ति संकल्पयत्येव तस्मिन्नापूर्यत क्षणात् । विमानैः सुरसंघानां पुष्पवृष्टिमुचां नभः ॥ १२२
थाग्रे प्रापितं तस्य बालं तं ब्रह्मरक्षसः । माता जग्राह करयोः पिता चरणयोस्तथा ॥ १२३
तो यावत्तमाकृष्टखड्गो राजा जिघांसति । तावज्जहास स शिशुस्तथा सर्वेऽत्र ते यथा ॥ १२४
ब्रह्मराक्षसास्त्यक्त्वा स्वं स्वं कर्म सविस्मयाः । रचिताञ्जलयः प्रह्वास्तन्मुखप्रेक्षिणोऽभवन् ॥ १२५
ति व्याख्याय वेतालो विचित्रसरसां कथाम् । तं त्रिविक्रमसेनं स निजगाद नृपं पुनः ॥ १२६
ब्रूहि राजन्को हेतुर्यत्तेन हसितं तदा । बालेनैतादृशेऽप्यस्मिन्प्राणान्तसमयेऽप्यहो ॥ १२७
कौतुकं च महन्मेऽत्र तदेतच्चेन्न वक्ष्यसि । जानानोऽपि ततो मूर्धा शतधा ते स्फुटिष्यति ॥ १२८
इति वेतालतः श्रुत्वा स राजा प्रत्युवाच तम् । शृणु योऽभूदभिप्रायो हासे तस्य शिशोस्तदा ॥ १२९
यो नाम दुर्बलो जन्तुः स भये प्रत्युपस्थिते । क्रन्दति प्राणहेतोः स्वं पितरं मातरं तथा ॥ १३०
तद्व्यपाये च राजानमार्तत्राणाय निर्मितम् । तदलाभेऽपि यद्यत्र यथासंभवि दैवतम् ॥ १३१
तस्य त्वेकस्थमप्येतत्सर्वं संजातमन्यथा । पितृभ्यां हस्तपादं हि रुद्धं तस्यार्थतृष्णया ॥ १३२
राजा च त्रातुमात्मानं स्वयं तं हन्तुमुद्यतः । दैवतं तत्र यद्ब्रह्मरक्षस्तत्तस्य भक्षकम् ॥ १३३
अध्रुवस्यान्तविरसस्याधिव्याधिक्षतस्य च । देहस्यार्थे विमूढानां तेषामीदृग्विडम्बना ॥ १३४
ब्रह्मेन्द्रविष्णुरुद्राद्या यत्रावश्यं विनाशिनः । तत्रैषामीदृशी कापि शरीरस्थैर्यवासना ॥ १३५
एतत्तन्मोहवैचित्र्यं दृष्ट्वा मत्वा च वाञ्छितम् । सिद्धमाश्चर्यहर्षाभ्यां स जहास द्विजार्भकः ॥ १३६

इत्युक्त्वा विरतस्य तस्य नृपतेरंसात्स भूयोऽपि त-
द्वेतालो झगिति स्वकं पदमगादन्तर्हितो मायया ।
राजा सोऽप्यविकल्पमेव पुनरप्यन्वगयौ तं जवा-
दक्षोभ्यं हृदयं बतेह महतामम्भोनिधीनामिव ॥ १३७

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके सप्तविंशस्तरङ्गः ।

---

अष्टाविंशस्तरङ्गः ।

( एकविंशो वेतालः । )

अथ गत्वा पुनः प्राप्य शिंशपातस्ततोऽग्रहीत् । स त्रिविक्रमसेनोंऽसे वेतालं तं नराधिपः ॥ १
आगच्छन्तं च तं भूयः स वेतालोऽब्रवीन्नृपम् । राजन्नुद्दामकंदर्पां शृण्वेकां वच्मि ते कथाम् ॥ २
अस्ति शक्रपुरीवान्या धात्रा सुकृतिनां कृते । दिवश्च्युतानां विहिता विशालाख्या पुरी भुवि ॥ ३
तस्यां बभूव नृपतिः पद्मनाभ इति श्रुतः । सच्चक्रनन्दकः श्रीमानाक्रान्तबलिराजकः ॥ ४
तस्मिन्पृथ्वीपतौ तस्यां नगर्यां सुमहावणिक् । अर्थदत्ताभिधानोऽभूद्धनैर्विजितवित्तपः ॥ ५
तस्यैका च सुतानङ्गमञ्जरीत्युदपद्यत । स्वःसुन्दरीप्रतिकृतिर्भुवि धात्रेव दर्शिता ॥ ६
दत्ता च तेन वणिजा वणिग्वरसुताय सा । मणिवर्माभिधानाय ताम्रलिप्तीनिवासिने ॥ ७
एकापत्यतया चातिवत्सलः स न तां वणिक् । भर्तृयुक्तां सुतां गेहात्तत्याजानङ्गमञ्जरीम् ॥ ८
तस्याश्चानङ्गमञ्जर्याः पतिर्द्वेष्यो बभूव सः । मणिवर्मा सरोगस्य कटुतिक्तमिवौषधम् ॥ ९
तस्याश्चानङ्गमञ्जर्याः पतिर्द्वेष्यो बभूव सः ।

पत्युस्तु सास्य सुमुखी जीवितादप्यभूत्प्रिया । धनर्द्धिः कृपणस्येव कृच्छ्रात्सुचिरसंचिता ॥
एकदा चान्तिकं पित्रोस्ताम्रलिप्तीं निजं गृहम् । उत्कण्ठादिनिमित्तेन मणिवर्मा जगाम सः ॥
ततो दिनेषु यातेषु तीक्ष्णसूर्यांशुसायकैः । प्रोषितानां निरुद्धाध्वा घर्मकाल इहाभ्यगात् ॥
वसन्तविरहादुष्णा निःश्वासाः ककुभामिव । मल्लिकापाटलामोदमेदुरा मरुतो ववुः ॥
उत्पेतुः पवनोद्धूता गगने रेणुराजयः । दूत्यो घनागमायेव प्रहितास्तप्तया भुवा ॥
आकाङ्क्षिततरुच्छायाः कठोरातपतापिताः । पथिका इव यान्ति स्म चिरेण दिवसा अपि ॥
चन्द्रांशुपाण्डुरुचयो गाढाश्लेषसुखप्रदम् । विना हेमन्तमगमन्प्रतिदुर्बलतां निशाः ॥
तत्कालं चन्दनालेपधवला सा वणिक्सुता । संवीततनुकौशेयशोभितानङ्गमञ्जरी ॥
ददर्श स्वगृहोत्तुङ्गवातायनगतैकदा । आप्तसख्या युता भव्यं युवानं विप्रपुत्रकम् ॥
संचरन्तं रतिप्राप्त्यै नवोत्पन्नमिव स्मरम् । कमलाकरनामानं पुत्रं राजपुरोधसः ॥
सोऽपीन्दोरिव मूर्तिं तां कान्तां दृष्ट्वोपरिस्थिताम् । कुमुदाकरतां भेजे सानन्दः कमलाकरः ॥
तयोरभूदमूल्यं तन्मनःसंवननं तदा । स्मरगुर्वाज्ञया यूनोरन्योन्यस्यावलोकनम् ॥
उन्मूलितह्रियौ तौ च दूरविक्षिप्तचेतसा । रजोभिभूतौ जह्राते मन्मथावेगवात्यया ॥
दृष्ट्वा च मदनाविष्टः सख्या स कमलाकरः । सहस्थितेन नीतोऽभूत्कथंचिद्भवनं निजम् ॥
सापि तं नामतोऽन्विष्य विवशानङ्गमञ्जरी । तया स्वया समं सख्या प्राविशद्वासकं शनैः ॥
तत्र संचिन्तयन्ती च कान्तं कामज्वरातुरा । नापश्यन्नाशृणोत्किंचिल्लुठन्ती शयनीयके ॥
गतेष्वहःसु द्वित्रेषु सत्रपा सभया च सा । असह्यं विरहोन्मादं विसोढुं कृशपाण्डुरा ॥
दुष्प्रापप्रियसंयोगनिरास्था नक्तमेकदा । गवाक्षप्रेरितकरेणाकृष्टेव हिमांशुना ॥
सुप्ते परिजने स्वैरं निर्गत्य मरणोन्मुखी । जगाम स्वगृहोद्यानवापीं तरुलतावृताम् ॥
तत्र पित्रा कृतोदारप्रतिष्ठां कुलदेवताम् । उपेत्य चण्डिकां देवीं नत्वा स्तुत्वा व्यजिज्ञपत् ॥
अस्मिञ्जन्मनि चेद्भर्ता न मया कमलाकरः । प्राप्तस्तद्देवि भूयान्मे सोऽन्यस्मिन्नपि जन्मनि ॥
इत्युक्त्वा पुरतस्तस्या देव्याः साशोकपादपे । पाशं विरचयामास स्वोत्तरीयेण रागिणी ॥
तावदाप्ता सखी तस्याः सा प्रबुध्यात्र वासके । तामदृष्ट्वा तदुद्यानं दैवादागाद्विचिन्वती ॥
तत्र दृष्ट्वा च तां पाशमर्पयन्तीं तथा गले । मामेत्युक्त्वा प्रधाव्यैव पाशं तस्यास्तमच्छिनत् ॥
सापि तां वीक्ष्य संप्राप्तां कृत्तपाशां निजां सखीम् । अनङ्गमञ्जरी भूमौ पपाताधिकदुःखिता ॥
आश्वासिता स्वसख्या च तया पृष्टा च सा क्षणात् । दुःखहेतुं समाख्याय पुनरेतामभाषत ॥
सखि मालतिके तन्मे दुर्लभे प्रियसंगमे । गुर्वादिपरतन्त्राया न सुखं मरणात्परम् ॥
इति ब्रुवाणैवानङ्गशराग्निज्वलिता भृशम् । सानङ्गमञ्जरी मोहं ययौ नैराश्यनिःसहा ॥
कष्टं स्मराज्ञा दुर्लङ्घ्या यया नीता दशामिमाम् । अन्याविनीतवनिताहासिनीयं सखी मम ॥
इत्यादि विलपन्तीं च तां सा मालतिका सखी । शनैराश्वासयामास शीताम्बुपवनादिभिः ॥
तापोपशान्तये चास्याश्चकार नलिनीदलैः । शय्यां ददौ च हृदये हारं तुहिनशीतलम् ॥
ततः साश्रुरुवाचैतां सखीं सानङ्गमञ्जरी । सखि हारादिभिर्नायं दाहोऽन्तर्मम शाम्यति ॥
येन प्रशाम्यति पुनः स्वबुद्ध्यैव विधत्स्व तत् । मां संयोजय कान्तेन जीवितं मे यदीच्छसि ।
एवमुक्तवतीं तां सा स्नेहान्मालतिकाब्रवीत् । सखि भूयिष्ठयाताद्य रात्रिः प्रातरहं पुनः ॥
इहैव कृतसंकेतमानेष्यामि प्रियं तव । तदालम्ब्य धृतिं तावन्निजं प्रविश मन्दिरम् ॥
इत्युक्तवत्यै संतुष्य तस्यै सानङ्गमञ्जरी । हारं स्वकण्ठादाकृष्य प्रददौ पारितोषिकम् ॥
गच्छाधुनैव स्वगृहं प्रातः सिद्ध्यै ततो व्रज । इति चैतां सखीं प्रेष्य सा विवेश स्ववासकम् ॥
प्रातश्च सा मालतिका केनाप्यनुपलक्षिता । तत्सखी तस्य कमलाकरस्य भवनं ययौ ॥
चिन्वती तत्र चोद्याने तरुमूले ददर्श तम् । चन्दनार्द्राम्बुरुहिणीपत्रशय्याविवर्तिनम् ॥

स्यधारिणैकेन कदलीदलमारुतैः । आश्वास्यमानं सुहृदा दह्यमानं स्मराग्निना ॥ ४९
या विनेयमस्य स्यात्कामावस्थेदृशीति सा । विचिन्त्य तस्थौ प्रच्छन्ना ज्ञातुं तत्र विनिश्चयम् ॥ ५०
च्च सुहृदा तेन स ऊचे कमलाकरः । क्षणमेकमिहोद्याने दत्त्वा दृष्टिं मनोरमे ॥ ५१
नोदय मनो मित्र मात्र विक्लवतामगाः । तच्छ्रुत्वा तं स्वसुहृदं विप्रपुत्रो जगाद सः ॥ ५२
ममानङ्गमञ्जर्या वणिक्पुत्र्या तया हृतम् । विनोदयामि तदिदं कुतः शून्याशयो मनः ॥ ५३
रेण शून्यहृदयो बाणतूणीकृतो ह्यहम् । तत्प्राप्स्यामि मनश्चौरीं तां यथा कुरु मे तथा ॥ ५४
युक्ते विप्रपुत्रेण तेनात्मानं प्रदर्श्य सा । हृष्टा मालतिकाभ्येत्य तमुवाचास्तसंशया ॥ ५५
ास्म्यनङ्गमञ्जर्या सुभग प्रहितान्तिकम् । संदेशं चाहमेवैषा विस्पष्टार्थं ब्रवीमि ते ॥ ५६
प कः शिष्टधर्मो यत्प्रविश्य हृदयं हठात् । मनो मुषित्वा मुग्धाया गम्यते स्थगितात्मना ॥ ५७
त्रं च यद्वामदृशा तुभ्यमेव तयाधुना । मनोहराय देहोऽपि दातुं प्राणैः सहेष्यते ॥ ५८
ःश्वासान्सा हि संतप्तान्विमुञ्चति दिवानिशम् । ज्वलतो हृदि कंदर्पवह्नेर्धूमोद्गमानिव ॥ ५९
पतन्ति मुहुश्चास्याः साञ्जना बाष्पबिन्दवः । वह्नाम्भोजसौगन्ध्यलुब्धा मधुकरा इव ॥ ६०
द्यदीच्छसि तद्वच्मि शिवं वामुभयोरहम् । इत्युक्तो मालतिकया सोऽब्रवीत्कमलाकरः ॥ ६१
द्रे भयं करोत्येषा वाक्तवाश्वासयत्यपि । वदन्ती विधुरावस्थां बद्धभावां च मे प्रियाम् ॥ ६२
देका गतिरत्र त्वं यथा वेत्सि तथा कुरु । इत्युक्तवाक्ये कमलाकरे मालतिकाब्रवीत् ॥ ६३
मनङ्गमञ्जरीमद्य गुप्तं तां प्रापयाम्यहम् । नक्तं स्वभवनोद्यानं त्वं तिष्ठेस्तत्र बाह्यतः ॥ ६४
तः प्रवेशयिष्यामि त्वामत्रान्तः स्वयुक्तितः । एवं यथेष्टो युवयोर्भविष्यति समागमः ॥ ६५
इत्युक्त्वानन्द्य तं विप्रपुत्रं मालतिका ततः । गत्वा कृतार्था सानङ्गमञ्जरीमप्यनन्दयत् ॥ ६६
अथाह्ना सह यातेऽर्के क्वापि संध्यानुरागिणि । ऐन्द्र्या दिशेन्दुतिलकेनानने सुप्रसाधिते ॥ ६७
त्यक्तपद्माकरा प्राप्ता श्रीर्मयेतीव हर्षतः । हसत्युत्फुल्लवदने विशदे कुमुदाकरे ॥ ६८
कृतप्रसाधनः सोत्कः स्वैरं स कमलाकरः । कामी कान्तागृहोद्यानद्वारबाह्यमुपागमत् ॥ ६९
तावच्च सा मालतिका तां युक्त्यानङ्गमञ्जरीम् । आनिनाय तदुद्यानं कृच्छ्राद्गमितवासराम् ॥ ७०
उपवेश्य च तां मध्ये गुल्मके चूतशाखिनाम् । प्रावेशयत्तं निर्गत्य तत्रैव कमलाकरम् ॥ ७१
स च प्रविश्य पत्रौघघनपादपमध्यगाम् । तामध्वग इव च्छायां ददर्शानङ्गमञ्जरीम् ॥ ७२
उपैति यावच्च स तां तावद्दृष्ट्वा प्रधाव्य सा । कामवेगहृतव्रीडा कण्ठे तं सहसाग्रहीत् ॥ ७३
क्व यासि लब्धोऽसि ममेत्यालपन्ती च तत्क्षणम् । सातिहर्षभरस्तब्धनिःश्वासा पञ्चतामगात् ॥ ७४
पपात च महीपृष्ठे वातरुग्णा लतेव सा । विचित्रो बत कामस्य विपाकविषमः क्रमः ॥ ७५
तद्दृष्ट्वाशनिपातोग्रं सद्यः स कमलाकरः । हा हा किमेतदित्युक्त्वा मूर्छितो न्यपतद्भुवि ॥ ७६
लब्धसंज्ञः क्षणेनाथ तामङ्कारोपितां प्रियाम् । आलिङ्गन्परिचुम्बंश्च तत्तच्च विलपन्बहु ॥ ७७
तथा दुःखातिभारेण स प्रसह्य निपीडितः । यथा तस्य टसत्कृत्य क्षणाद्धृदयमस्फुटत् ॥ ७८
अथ तौ मालतिकया शोच्यमानावुभावपि । दृष्ट्वा प्राप्तक्षयौ शोकादिव क्षीणाभवत्क्षपा ॥ ७९
प्रातरुद्यानपालेभ्यो ज्ञात्वा बन्धुजनस्तयोः । तत्राययौ त्रपाश्चर्यदुःखमोहाकुलीकृतः ॥ ८०
आसीत्कर्तव्यतामूढश्चिरं खेदादवाङ्मुखः । कष्टाः कुलखलीकारहेतवो बत कुस्त्रियः ॥ ८१
तावच्च ताम्रलिप्तीतः स तस्याः पतिरागमत् । सोत्कण्ठोऽनङ्गमञ्जर्या मणिवर्मा पितुर्गृहात् ॥ ८२
स श्वाशुरं गृहं प्राप्य यथातत्त्वमवेत्य तत् । बाष्पान्धलोचनो ध्यायंस्तदेवोद्यानमाययौ ॥ ८३
तत्र भार्यां गतासुं तां दृष्ट्वान्यसहितामपि । शोकाग्निज्वलितो रागी सद्यः सोऽपि जहावसून् ॥ ८४
ततः क्रन्दति तत्रस्थे जने कोलाहलाकुलाः । आययुर्ज्ञातवृत्तान्ताः पौराः सर्वेऽत्र विस्मिताः ॥ ८५
अथात्रानङ्गमञ्जर्या पित्रा पूर्वावतारिता । देवी संनिहिता चण्डी विज्ञप्ताभून्निजैर्गणैः ॥ ८६
त्वदाकारप्रतिष्ठाकृदर्थदत्तः सदैष ते । भक्तो वणिक्तदस्यास्मिन्दुःखे देवि दयां कुरु ॥ ८७

एतद्गणेभ्यः श्रुत्वा सा शरण्या शंकरप्रिया। शान्तानङ्गस्त्रयोऽप्येते जीवन्त्विति समादिशत् ॥
अथ सर्वेऽपि ते सुप्तप्रतिबुद्धा इव क्षणात्। तत्प्रसादात्समुत्तस्थुर्जीवन्तो वीतमन्मथाः ॥
ततो दृष्ट्वा तदाश्चर्यं सानन्दे सकले जने। लज्जानतमुखः प्रायात्स्वगृहं कमलाकरः ॥
अर्थदत्तोऽपि तां ह्रीतामादायानङ्गमञ्जरीम्। सुतां स्वभर्तृसहितां ययौ बद्धोत्सवो गृहान् ॥

इति कथयित्वा तस्यां रात्रौ मार्गे कथां स वेतालः।
निजगाद तं त्रिविक्रमसेनं क्षोणीपतिं भूयः ॥
राजन्कस्य वदैतेष्वधिको मोहोऽनुरागमूढेषु।
सोऽत्र च पूर्वोक्तस्ते शापो जानन्न चेद्वदसि ॥
इत्येतद्वेतालाच्छ्रुत्वा स प्रत्युवाच तं नृपतिः।
एतेषु रागमूढः प्रतिभाति ममाधिकः स मणिवर्मा ॥
इतरौ हि तावुभावपि कालक्रमपक्वमन्मथावस्थौ।
अन्योन्यसानुरागौ यदि जीवितमुज्झतः स्म तद्भवतु ॥
मणिवर्मा त्वतिमूढो यो भार्यामन्यपुरुषसक्तमृताम्।
दृष्ट्वैव कोपकाले प्रत्युत रक्तः शुचामुचत्प्राणान् ॥
इति गदितवतः स तस्य राज्ञो बत वेतालपतिः पुनर्जगाम।
निजमेव पदं तदंसपीठादथ राजापि तमन्वगात्स भूयः ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बकेऽष्टाविंशस्तरङ्गः।

---

एकोनत्रिंशस्तरङ्गः।
( द्वाविंशो वेतालः।)

ततो राजा पुनर्गत्वा वेतालं शिंशपाग्रतः। स त्रिविक्रमसेनस्तं प्राप्यांसारोपितं व्यधात् ॥
आयान्तं तं च राजानं स वेतालोऽब्रवीत्पथि। राजन्साधुः सुसत्त्वस्त्वं तदपूर्वां कथां शृणु ॥
बभूव पूर्वं कुसुमपुराख्यनगरेश्वरः। पृथ्वीतलेऽस्मिन्धरणीवराहो नाम भूपतिः ॥
तस्य ब्राह्मणभूयिष्ठे राष्ट्रे ब्रह्मस्थलाभिधः। अग्रहारोऽभवत्तत्र विष्णुस्वामीत्यभूद्द्विजः ॥
तस्यानुरूपा भार्याभूद्यथा स्वाहा हविर्भुजः। तस्यां च तस्य चत्वारः क्रमादुत्पेदिरे सुताः ॥
अधीतवेदेषूत्क्रान्तशैशवेषु च तेषु सः। विष्णुस्वामी दिवं प्रायाद्भार्ययानुगतस्तया ॥
ततस्ते तत्र तत्पुत्राः सर्वेऽप्यानाथ्यदुःस्थिताः। गोत्रजैर्हृतसर्वस्वा मन्त्रयांचक्रिरे मिथः ॥
नास्तीह गतिरस्माकं तद्व्रजामो वयं न किम्। इतो मातामहगृहं ग्रामं यज्ञस्थलाभिधम् ॥
एतदेव विनिश्चित्य प्रस्थिता भैक्ष्यभोजनाः। मातामहगृहं प्रापुस्तेऽथ तद्बहुभिर्दिनैः ॥
तत्र मातामहाभावान्मातुलैर्दत्तसंश्रयाः। भुञ्जानास्तद्गृहे तस्थुः स्वाध्यायाभ्यासतत्पराः ॥
कालक्रमाच्च तेषां ते मातुलानामकिंचनाः। अवज्ञापात्रतां जग्मुर्भोजनाच्छादनादिषु ॥
ततः स्वजनसंस्फूर्जदवमानहतात्मनाम्। तेषां रहः सचिन्तानां ज्येष्ठो भ्राताब्रवीदिदम् ॥
भो भ्रातरः किं क्रियते सर्वमाचेष्टते विधिः। न शक्यं पुरुषस्येह कचित्किंचित्कदाचन ॥
अहं ह्युद्वेगतो भ्राम्यन्प्राप्तोऽद्य पितृकानने। विपन्नस्थितमद्राक्षं त्रस्ताङ्गं पुरुषं भुवि ॥
अचिन्तयं च दृष्ट्वा तमहं तां स्पृहयन्गतिम्। धन्योऽयमेवं विश्रान्तो दुःखभारं विमुच्य यः ॥
इति संचिन्त्य तत्कालं कृत्वा मरणनिश्चयम्। वृक्षाग्रसङ्गिना पाशेनात्मानमुदलम्बयम् ॥
यावच्च मे विसंज्ञस्य तदा निर्यान्ति नासवः। तावत्त्रुटितपाशोऽत्र पतितोऽस्मि महीतले ॥
लब्धसंज्ञश्च केनापि पुंसा क्षिप्रात्कृपालुना। आश्वास्यमानमात्मानमपश्यं पटमारुतैः ॥
सखे कथय विद्वानप्येवं कं प्रति खिद्यसे। सुखं हि सुकृताद्दुःखं दुष्कृतादेति नान्यतः ॥
दुःखाद्यदि तवोद्वेगः सुकृतं तत्समाचर। कथं तु नारकं दुःखमात्मत्यागेन वाञ्छसि ॥

उक्त्वा मां समाश्वास्य स च क्वापि गतः पुमान् । अहं चेहागतस्त्यक्त्वा तादृशं मरणोद्यमम् ॥ २१
त्वं नेच्छति विधौ न मर्तुमपि लभ्यते । इदानीं च तनुं तीर्थे तपसा दाहयाम्यहम् ॥ २२
न निर्धनतादुःखभागी न स्यामहं पुनः । इत्युक्तवन्तं ज्येष्ठं तं कनिष्ठा भ्रातरोऽब्रुवन् ॥ २३
र्थैर्विना कथं प्राज्ञोऽप्यार्य दुःखेन बाध्यसे । किं न वेत्सि यदर्थानां शरदभ्रचला गतिः ॥ २४
ाहृत्य रक्ष्यमाणापि यत्नेनान्तविरागिणी । असन्मैत्री च वेश्या च श्रीश्च कस्य कदा स्थिरा ॥ २५
दुद्योगेन स गुणः कोऽप्युपार्ज्यो मनस्विना । आनीयन्ते हठाद्बद्ध्वा येनार्थहरिणा मुहुः ॥ २६
युक्तो भ्रातृभिर्धैर्यं क्षणाज्ज्येष्ठोऽवलम्ब्य सः । उवाच को गुणस्तादृगर्जनीयो भवेदिति ॥ २७
तो विचिन्त्य सर्वे ते वदन्ति स्म परस्परम् । विचित्य पृथ्वीं विज्ञानं किंचिच्छिक्षामहे वयम् ॥ २८
ाश्चित्यैतच्च संकेतस्थानमुक्त्वा समागमे । एकैकशस्ते चत्वारश्चतस्रः प्रययुर्दिशः ॥ २९
ाति काले च मिलितास्ते संकेतनिकेतने । किं केन शिक्षितमिति भ्रातरोऽन्योन्यमब्रुवन् ॥ ३०
थात्रैकोऽब्रवीदीदृग्विज्ञानं शिक्षितं मया । येनास्थिशकलं प्राप्य प्राणिनो यस्य कस्यचित् ॥ ३१
त्पादयाम्यहं तस्मिन्मांसं तदुचितं क्षणात् । एतत्तस्य वचः श्रुत्वा द्वितीयस्तेष्वभाषत ॥ ३२
हं तत्रैव संजातमांसेऽस्थिशकले किल । जाने जनयितुं लोमत्वचं तत्प्राणिसंभवि ॥ ३३
तस्तृतीयोऽप्यवदज्जाने तत्रैव चास्थ्यहम् । तत्प्राण्यवयवान्स्रष्टुं जातत्वङ्मांसलोमनि ॥ ३४
ातुर्थश्च ततोऽवादीदुत्पन्नावयवाकृतिम् । तमेव प्राणिनं प्राणैर्युक्तं कर्तुमवैम्यहम् ॥ ३५
एवमुक्त्वा मिथः स्वस्वविज्ञानप्रथनाय ते । चत्वारोऽप्यस्थिखण्डाय प्रययुर्भ्रातरोऽटवीम् ॥ ३६
ात्र सिंहस्य ते प्रापुरस्थिखण्डं विधेर्वशात् । अविज्ञातविशेषाश्च गृह्णन्ति स्म तथैव तत् ॥ ३७
एकश्च तत्समुचितैस्ततो मांसैरयोजयत् । द्वितीयोऽजनयत्तस्य तद्वत्त्वग्लोमसंहतीः ॥ ३८
तृतीयश्चाखिलैरङ्गैस्तद्योग्यैस्तदपूरयत् । चतुर्थश्च ददौ यस्य सिंहीभूतस्य जीवितम् ॥ ३९
उदतिष्ठदथोद्धूतसटाभारोऽतिभैरवः । स दंष्ट्रासंकटमुखः सिंहः खरनखाङ्कुशः ॥ ४०
ाविित्वा च स्वनिर्मातॄंस्तानेव चतुरोऽपि सः । अवधीत्केसरी तृप्तो विवेश च वनं ततः ॥ ४१
एवं ते सिंहनिर्माणदोषान्नष्टा द्विजातयः । दुष्टं हि जन्तुमुत्थाप्य कस्यात्मनि सुखं भवेत् ॥ ४२
इत्थं चोपार्जितो यत्नाद्गुणोऽपि विधुरे विधौ । संपत्तये न न परं जायते तु विपत्तये ॥ ४३
मूले ह्यविकृते दैवे सिक्ते प्रज्ञानवारिणा । नयालवालः फलति प्रायः पौरुषपादपः ॥ ४४

इति तस्यां निशि मार्गे वेतालेनांसतः कथां तेन ।
आख्याय स त्रिविक्रमसेनो राजा पुनर्जगदे ॥ ४५
राजंस्तेष्वपराध्यति चतुर्षु कस्तत्र सिंहनिर्माणे ।
यन्न्यवधीत्तत्कृतो वद समयः सोऽत्र पूर्वस्ते ॥ ४६
इति वेतालाच्छ्रुत्वा राजा सोऽचिन्तयद्विमौनस्य ।
इच्छति गन्तुमयं मे यात्वानेष्याम्यमुं भूयः ॥ ४७
इति हृदि निश्चित्य स तं महीपतिः प्रत्युवाच वेतालम् ।
यस्तस्य जीवदायी सिंहस्य स पापभाक्तेषु ॥ ४८
प्राणिविशेषमबुद्ध्वा मांसत्वग्लोमगात्रनिर्माणम् ।
युक्तिबलात्तु कृतं यैस्तेषां दोषोऽस्ति नाज्ञानात् ॥ ४९
येन तु सिंहाकारं दृष्ट्वा विद्याप्रकाशनोत्केन ।
प्राणास्तस्य वितीर्णास्तेन कृता ब्रह्महत्यास्ताः ॥ ५०
एतत्स राज्ञो वचनं निशम्य स्वधाम वेतालवरो जगाम ।
तस्यांसतस्तत्पुनरेव मायी राजापि तं सोऽनुससार भूयः ॥ ५१

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके एकोनत्रिंशस्तरङ्गः ।

---

त्रिंशस्तरङ्गः ।

( त्रयोविंशो वेतालः । )

ततो गत्वा पुनः प्राप शिंशपापादपात्ततः । स त्रिविक्रमसेनस्तं वेतालं राजसत्तमः ॥
स्कन्धे कृत्वा च तं मौनी दर्शितानेकवैकृतम् । यावत्प्रतिष्ठते तावत्स वेतालस्तमब्रवीत् ॥
राजन्नकार्येऽप्येतस्मिन्दुर्वारोऽयं ग्रहस्तव । तत्ते श्रमविनोदाय कथयामि कथां शृणु ॥
आसीत्कलिङ्गविषये नाम्ना शोभावती पुरी । दिवीव शक्रनगरी वसतिः शुभकर्मणाम् ॥
यां प्रद्युम्न इवैश्वर्यवीर्यातिशयविश्रुतः । प्रद्युम्ननामा नृपतिः शशासोर्जितशासनः ॥
गुणापकर्षश्चापेषु मुरजेषु कराहतिः । युगेष्वश्रूयत कलिर्यस्यां प्रज्ञासु तीक्ष्णता ॥
एकदेशे पुरस्तस्या नृपेण प्रतिपादितः । यज्ञस्थलाभिधानोऽभूदग्रहारो बहुद्विजः ॥
तत्रासीद्यज्ञसोमाख्यो ब्राह्मणो वेदपारगः । महाधनोऽग्निहोत्री च पूजितातिथिदेवतः ॥
तस्य व्यतीते तारुण्ये मनोरथशतैः सुतः । भार्यायामनुरूपायामेक एवोदपद्यत ॥
ववृधे च पितुः सोऽस्य गृहे बालः सुलक्षणः । कृताभिधानो विधिवद्देवसोम इति द्विजैः ॥
प्राप्तषोडशवर्षश्च स विद्याविनयादिभिः । आवर्जितजनोऽकस्माज्ज्वरेण प्राप पञ्चताम् ॥
ततः परासुं स्नेहात्तमाश्लिष्य सह भार्यया । यज्ञसोमः पिता शोचन्न दाहाय जहौ चिरम् ॥
ब्रह्मन्संसारगन्धर्वनगरस्य न वेत्सि किम् । परावरज्ञोऽपि गतिं वारिबुद्बुदभङ्गुराम् ॥
ये सैन्यैः पूरितधरा हर्म्यपृष्ठेषु हारिषु । लसत्संगीतनादेषु रत्नपर्यङ्कवर्तिनः ॥
श्रीखण्डद्रवलिप्ताङ्गा वरस्त्रीपरिवारिताः । व्यलसन्नमरंमन्या भूलोकेऽस्मिन्नराधिपाः ॥
तेऽप्येककाः श्मशानेषु रुदत्प्रेतानुयायिषु । चिताधिशायिनो यत्र जग्धाः क्रव्यात्कृशानुभिः ॥
शिवाभिर्वलितोपान्ताः कालेन कवलीकृताः । न रोद्धुं शकिताः कैश्चित्तत्रान्येषां कथैव का ॥
तदेतं प्रेतमाश्लिष्य विद्वन्वद करोषि किम् । इत्याद्यबोधयन्वृद्धा मिलितास्तं द्विजं ततः ॥
ततस्तेन कथंचित्तं मुक्तमारोप्य तत्सुतम् । शिबिकायां गतप्राणं कृतप्रेतप्रसाधनम् ॥
बान्धवा वैशसोदश्रुमिलद्बन्धुजनान्विताः । श्मशानं प्रापयामासुः कोलाहलसमाकुलाः ॥
अत्रान्तरे च तत्रासीच्छ्मशाने कोऽपि तापसः । वृद्धः पाशुपतो योगी मठिकायां कृतस्थितिः ॥
वयसा तपसा चातिभूयसा सुकृशां तनुम् । बिभ्राणो भङ्गभीत्येव सिराभिः परिवेष्टितम् ॥
नाम्ना वामशिवो भस्मपाण्डुरोमावृताकृतिः । विद्युत्पिङ्गजटाजूटो महेश्वर इवापरः ॥
स तापसोऽत्र तत्कालं दत्तोपालम्भखेदितम् । मूर्खं शठं ध्यानयोगाद्यवलिप्तमहंकृतम् ॥
भिक्षाफलव्रतधरं शिष्यमन्तिकवासिनम् । जगाद दूराच्छ्रुत्वा तं जनकोलाहलं बहिः ॥
उत्तिष्ठ गत्वात्र बहिर्विज्ञायागच्छ सत्वरम् । कुतोऽत्राश्रुतपूर्वोऽयं श्मशाने तुमुलारवः ॥
इत्युक्ते गुरुणा तेन स शिष्यः प्रत्युवाच तम् । नाहं यामि स्वयं याहि भिक्षावेला ह्युपैति मे ।
तच्छ्रुत्वोवाच स गुरुर्धिङ्मूर्खोदरतत्पर । अह्नोऽर्धप्रहरे याते भिक्षावेलात्र का तव ॥
श्रुत्वैवैतत्स तं क्रुद्धः कुशिष्यः प्राह तापसम् । धिग्जराजीर्ण नाहं ते शिष्यो न त्वं गुरुर्मम ।
अहमन्यत्र यास्यामि वह पात्रीमिमां स्वयम् । इत्युक्त्वोत्थाय स प्रायात्स्यक्त्वाग्रे दण्डकुण्डिक
विहसन्नथ निर्गत्य मठिकायाः स तापसः । तत्रागाद्यत्र दाहार्थमानीतः स द्विजार्भकः ॥
दृष्ट्वा च तं जनतया शोच्यमानाग्र्ययौवनम् । योगी प्रवेष्टुं तद्देहं मतिं चक्रे जरार्दितः ॥
गत्वा च द्रुतमेकान्ते मुक्तकण्ठं प्ररुद्य च । ननर्त स ततः क्षिप्रमङ्गहारैर्यथोचितैः ॥
ततो विवेश योगात्तद्द्विजपुत्रकलेवरम् । क्षणात्स स्वतनुं त्यक्त्वा तपस्वी यौवनेच्छया ॥
तत्क्षणं रचितायां च चितायां सहसैव सः । लब्धजीवो द्विजयुवा प्रोत्तस्थौ कृतजृम्भिकः ॥
तद्दृष्ट्वा बन्धुवर्गस्य दिष्ट्या जीवति जीवति । इत्युद्बभूव नादोऽत्र निखिलस्य जनस्य च ॥
अथामोक्ष्यन्व्रतं सर्वान्मृषा योगेश्वरः स तान् । विप्रपुत्रशरीरान्तःप्रविष्टस्तापसोऽब्रवीत् ॥

न्तरगतस्याद्य महापाशुपतव्रतम् । ग्राह्यं साक्षान्ममाभाष्य दत्तं शर्वेण जीवितम् ॥ ३८
व च धार्यं तद्गत्वैकान्ते व्रतं मया । जीवितं मेऽन्यथा नास्ति तद्यूयं यात याम्यहम् ॥ ३९
सर्वान्स तत्रस्थान्संबोध्य दृढनिश्चयः । स्वगृहान्प्रेषयामास हर्षशोकाकुलान्व्रती ॥ ४०
च गत्वा श्वभ्रे तत्क्षिप्त्वा पूर्वकलेवरम् । आत्तव्रतो महायोगी युवीभूतोऽन्यतो ययौ ॥ ४१
व्याख्याय वेतालः कथां निशि तदा पथि । तं त्रिविक्रमसेनं स राजानं पुनरब्रवीत् ॥ ४२
न्ब्रूहि स योगीन्द्रः कस्मात्परपुरे वसन् । प्ररुरोद ननर्ताथ कौतुकं महदत्र मे ॥ ४३
वेतालतः श्रुत्वा शापशङ्की स भूपतिः । विमुच्य मौनमेवं तमवादीद्धीमतां वरः ॥ ४४
तत्र बभूवास्य योऽभिप्रायस्तपस्विनः । सह वृद्धं चिरायेदं शरीरं सिद्धिसाधनम् ॥ ४५
स्यां लालितं बाल्ये त्यजाम्यद्येति दुःखितः । स जरत्तापसोऽरोदीद्देहस्नेहो हि दुस्त्यजः ॥ ४६
देहं प्रवेक्ष्यामि साधयिष्याम्यतोऽधिकम् । इति हर्षादनृत्यच्च कस्य नेष्टं हि यौवनम् ॥ ४७

एतत्तस्य वचो निशम्य नृपतेरंसात्स भूयोऽप्यगा-
द्वेतालो मृतपूरुषान्तरगतस्तं शिंशपापादपम् ।
राजा सोऽपि तमन्वधावदधिकोत्साहः पुनः प्रेप्सया
कल्पान्तेऽप्यचलं कुलाद्रिविजयि स्थैर्यं हि धीरात्मनाम् ॥ ४८

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके त्रिंशस्तरङ्गः ।

---

एकत्रिंशस्तरङ्गः ।

( चतुर्विंशो वेतालः । )

स्तां तिमिरश्यामां चिताग्निज्वलितेक्षणाम् । श्मशाने भीषणे तस्मिन्वीरो रजनिराक्षसीम् ॥ १
रामगणयन्राजा गत्वा तां शिंशपां पुनः । स त्रिविक्रमसेनस्तं तस्या वेतालमाददे ॥ २
न्धे कृत्वा च तं यावत्प्रक्रामति स पूर्ववत् । तावद्भूयः स वेतालो नरदेवमुवाच तम् ॥ ३
राजन्नहमुद्विग्नो न पुनस्त्वं गतागतैः । तदेकं मे महाप्रश्नमिमं कथयतः शृणु ॥ ४
सीन्माण्डलिकः कोऽपि नृपतिर्दक्षिणापथे । धर्माभिधानो धौरेयः साधूनां बहुगोत्रजः ॥ ५
स्य चन्द्रवतीनाम भार्या मालवदेशजा । अभून्महाकुलोत्पन्ना वरस्त्रीमौलिमालिका ॥ ६
स्यां च तस्य भार्यायां भूपतेरुदपद्यत । एकैव लावण्यवती नामान्वर्थाभिधा सुता ॥ ७
द्धायां च तस्यां स सुतायां धर्मभूपतिः । उन्मूलितोऽभून्मिलितैर्दायादै राष्ट्रभेदिभिः ॥ ८
तः पलाय्य निरगात्स देशाद्भार्यया सह । दुहित्रा च तया रात्रावात्तसद्रत्नसंचयः ॥ ९
लवं प्रति च स्वैरं प्रस्थितः श्वशुरास्पदम् । विन्ध्याटवीं तया रात्र्या प्राप भार्यासुतायुतः ॥ १०
स्यां प्रविष्टस्योदश्रुरिवावश्यायशीकरैः । निशानुयात्रां दत्त्वेव ययौ तस्य महीक्षितः ॥ ११
ारुरोहाथ पूर्वाद्रिमुत्क्षिप्ताग्रकरो रविः । मा गाश्चौराटवीमेतामिति तं वारयन्निव ॥ १२
तोऽत्र ससुताजानिः क्षताङ्घ्रिः कुशकण्टकैः । पदातिः स नृपो गच्छन्भिल्लानां प्राप पल्लिकाम् ॥ १३
षां प्राणसर्वस्वहारिभिः पुंभिरावृताम् । वर्जितां धार्मिकैर्दुर्गां कृतान्तनगरीमिव ॥ १४
त्र दृष्ट्वैव तं दूरात्सवस्त्राभरणं नृपम् । मोषितुं बहवोऽधावञ्शबरा विविधायुधाः ॥ १५
ान्विलोक्य सुताभार्ये राजा धर्मो जगाद सः । पुरा स्पृशन्ति वां म्लेच्छास्तदितो विशतं वनम् ॥ १६
ति राज्ञोदिता राज्ञी वनमध्यं विवेश सा । लावण्यवत्या सुतया सार्धं चन्द्रवती भयात् ॥ १७
ाजाप्यभिमुखायातान्खड्गचर्मधरोऽत्र सः । अवधीत्तान्बहूञ्शूरः शबराञ्शरवर्षिणः ॥ १८
ातस्तेनाखिला पल्ली पल्लाङ्गप्रा निपत्य तम् । प्रहारक्षतचर्माणमवधीन्नृपमेककम् ॥ १९
ातस्तेनाखिला पल्ली पत्याज्ञया निपत्य तम् । प्रहारक्षतचर्माणमवधीन्नृपमेककम् ॥ २०
गृहीताभरणे याते दस्युसैन्ये विलोक्य तम् । भर्तारं निहतं दूराद्वनगुल्मान्तरस्थिता ॥ २१
राज्ञी चन्द्रवती सात्र दुहित्रा सह विह्वला । पलायमाना गहनं दूरमन्यदगाद्वनम् ॥

तत्र मध्याह्नतापार्तास्विव मूलानि शाखिनाम्। छायास्वपि प्रविष्टासु शिशिराणि सहाध्वगैः॥
एकदेशेऽब्जसरसस्तीरेऽशोकतरोस्तले। शोकार्ता रुदती श्रान्ता ससुता समुपाविशत्॥
तावत्तद्वनमभ्यर्णनिवासी मृगयाकृते। महामनुष्यः कोऽप्यागादश्वारूढः सपुत्रकः॥
स चण्डसिंहनामा तं पुत्रं सिंहपराक्रमम्। उवाच दृष्ट्वात्र तयोः पांसूत्थे पदपद्धती॥
एते सुरेखे सुभगे अनुसृत्याप्नुवो यदि। स्त्रीयौ ते तत्तयोरेकां स्वीकुरुष्व यथारुचि॥
इत्युक्तवन्तं तं स्माह पुत्रः सिंहपराक्रमः। यस्याः सूक्ष्माविमौ पादौ सा भार्या प्रतिभाति मे॥
सा हि स्वल्पवया नूनं जाने समुचिता मम। बृहत्पादा तु योग्येयमेतज्ज्येष्ठवयास्तव॥
इति सूनोर्वचः श्रुत्वा चण्डसिंहो जगाद तम्। कैषा कथा भवन्माता प्रत्यग्रं हि गता दिवम्॥
तादृशे सुकलत्रे च गते कान्यत्र वासना। तच्छ्रुत्वा सोऽपि पुत्रस्तं चण्डसिंहमभाषत॥
तात मैवमभार्यं हि शून्यं गृहपतेर्गृहम्। अन्यच्च मूलदेवोक्ता गाथा किं न श्रुता त्वया॥

यत्र घनस्तनजघना नास्ते मार्गावलोकिनी कान्ता।
अजडः कस्तदनिगडं प्रविशति गृहसंज्ञकं दुर्गम्॥

तज्जीवितेन मे तात शापितोऽसि न तां यदि। द्वितीयां मदभीष्टाया भार्यार्थे स्वीकरिष्यसि॥
एतत्पुत्रवचः श्रुत्वा प्रतिपद्य च तत्सखः। स चण्डसिंहोऽनुसरन्पदपङ्क्तिं शनैर्ययौ॥
प्राप्य तच्च सरःस्थानं मुक्तातारौघमण्डिताम्। श्यामां चन्द्रवतीं राज्ञीं तां ददर्शावभासिताम्॥
लावण्यवत्या सुतया ज्योत्स्नयेवावदातया। नैशीं द्यामिव मध्याह्ने तरुच्छायामुपाश्रिताम्॥
उपाययौ च पुत्रेण सार्कं तां स सकौतुकः। सापि दृष्ट्वा तमुत्तस्थौ वित्रस्ता चौरशङ्किनी॥
अलं त्रासेन नाम्बैतौ चौरौ सौम्याकृती इमौ। सुवेषौ कौचिदाखेटकृते नूनमिहागतौ॥
इत्युक्ता सुतया राज्ञी यावद्दोलायतेऽत्र सा। तावदश्वावतीर्णस्ते चण्डसिंहोऽब्रवीदुभे॥
किं संभ्रमेण वामावां प्रणयाद्द्रष्टुमागतौ। तद्विश्वस्य निरातङ्कं वदतं के युवामिति॥
हरनेत्रानलज्वालादग्धमन्मथदुःखिते। रतिप्रीती इवारण्यमिदमेवमुपागते॥
प्रविष्टे स्थः कथं चेह बत निर्मानुषे वने। रत्नप्रासादवासार्हमिदं हि युवयोर्वपुः॥
कथं वराङ्गनोत्सङ्गयोग्यौ कण्टकिनीमिमाम्। भुवं वां चरणौ भ्रान्ताविति नौ मनसि व्यथा॥
एषा च चित्रं युवयोः पतन्ती धूलिराननेे। वातोद्धूता हतच्छायमावयोः कुरुते मुखम्॥
भवत्योरेष चाङ्गेऽस्मिन्निपतन्पुष्पपेशले। किरणोष्मा दहत्यस्मानुच्चण्डश्चण्डदीधितेः॥
तद्ब्रूतमात्मवृत्तान्तं दूयते हृदयं हि नः। द्रष्टुं न शक्नुमोऽरण्ये स्थितिं वां श्वापदावृते॥
इत्युक्ते चण्डसिंहेन राज्ञी निःश्वस्य सा शनैः। लज्जाशोकाकुला तस्मै स्वं वृत्तान्तमवर्णयत्॥
ततो निःस्वामिकां मत्वा तामाश्वास्य च सात्मजाम्। स्वीचक्रे मधुरैर्वाक्यैश्चण्डसिंहोऽनुरञ्जयन्॥
आरोप्य चाश्वयोः पृष्ठं सपुत्रस्तां सपुत्रिकाम्। निनाय वित्तपपुरीसमृद्धां वसतिं निजाम्॥
सापि जन्मान्तरगतेवावशाङ्गीचकार तम्। अनाथा कृच्छ्रपतिता विदेशे स्त्री करोति किम्॥
ततस्तां सूक्ष्मपादत्वाद्राज्ञीं सिंहपराक्रमः। चण्डसिंहसुतस्तत्र भार्यां चन्द्रवतीं व्यधात्॥
तत्सुतां तां च लावण्यवतीं नृपतिकन्यकाम्। बृहत्त्वात्पादयोर्भार्यां चण्डसिंहश्चकार सः॥
प्राग्धि सूक्ष्मबृहत्पादमुद्रापङ्क्तिद्वयेक्षणात्। प्रतिपन्नं तथा ताभ्यां सत्यं कश्चातिवर्तते॥
एवं पादविपर्यासात्ते पितापुत्रयोस्तयोः। दुहितामातरौ भार्ये जाते श्वश्रूस्नुषे तदा॥
कालेन च तयोस्ताभ्यां भर्तृभ्यां जज्ञिरे द्वयोः। पुत्रा दुहितरश्चैव तेषामन्येऽप्यथ क्रमात्॥
इत्थं संप्राप्य तौ चण्डसिंहसिंहपराक्रमौ। तस्थतुस्तत्र लावण्यवतीं चन्द्रवतीं च ते॥
इति व्यावर्ण्य वेतालस्तदा पथि कथां निशि। स त्रिविक्रमसेनं तं पप्रच्छ नृपतिं पुनः॥
तयोर्मातादुहित्रोर्ये पुत्रपित्रोस्तयोर्नृप। सकाशाज्जन्तवो जाताः क्रमादुभयपक्षयोः॥
ज्ञात्वेदं ब्रूहि मे तेषामन्योन्यं के भवन्ति ते। पूर्वोक्तः सोऽत्र शापस्ते जानानश्चेन्न वक्ष्यसि॥

ालतः श्रुत्वा विमृशन्बहुधापि सः । नाज्ञासीत्तद्यदा राजा तूष्णीकः प्रययौ तदा ॥ ६०
:सकूटस्थो वेतालो विहसन्हृदि । मृतपूरुषदेहान्तर्निविष्टः समचिन्तयत् ॥ ६१
ाजा महाप्रश्ने वेत्त्यस्मिन्दातुमुत्तरम् । तेन तूष्णीं व्रजत्येष हृष्टोऽतिचतुरैः पदैः ॥ ६२
ञ्चयितुं शक्यः सत्त्वराशिरयं परम् । क्रीडन्भिक्षुः स चास्माभिरियतैव न शाम्यति ॥ ६३
ञ्चयित्वा तं दुरात्मानमुपायतः । तत्सिद्धिं भाविकल्याणे राजन्यस्मिन्निवेशये ॥ ६४
ऽच्य स वेतालो नृपं तमवदत्तदा । राजन्कृष्णनिशाघोरे श्मशानेऽस्मिन्गतागतैः ॥ ६५
क्लिष्टः सुखार्हस्त्वं न विकल्पश्च कोऽपि ते । तदाश्चर्येण धैर्येण तुष्टोऽहममुना तव ॥ ६६
ं नयेदानीं निर्गच्छाम्यमुतो ह्यहम् । इदं तु शृणु यद्वच्मि हितं तव कुरुष्व च ॥ ६७
ामेतद्भवता यस्यार्थे नृकलेवरम् । कुभिक्षुः सोऽद्य मामस्मिन्समाहूयार्चयिष्यति ॥ ६८
ोचिकीर्षुश्च त्वामेव स शठस्ततः । भूमौ प्रणाममष्टाभिरङ्गैः कुर्विति वक्ष्यति ॥ ६९
ादर्शय तावन्मे करिष्येऽहं तथैव तत् । इति सोऽपि महाराज वक्तव्यः श्रमणस्त्वया ॥ ७०
नेपत्य भूतौ स प्रणामं यावदेव ते । दर्शयिष्यति तावत्त्वं छिन्द्यास्तस्यासिना शिरः ॥ ७१
वेद्याधरैश्वर्यसिद्धिर्या तस्य वाञ्छिता । तां त्वं प्राप्स्यसि भुङ्क्ष्वेमां भुवं तदुपहारतः ॥ ७२
ा तु स भिक्षुस्त्वामुपहारीकरिष्यति । एतदर्थं कृतो विघ्नस्तवात्रेयच्चिरं मया ॥ ७३
द्धिरस्तु ते गच्छेत्युक्त्वा तस्यांसपृष्ठगात् । निर्गत्य स ययौ तस्माद्वेतालः प्रेतकायतः ॥ ७४

अथ स नरपतिस्तं प्रीतवेतालवाक्याच्छ्रमणमहितमेव क्षान्तिशीलं विचिन्त्य ।
वटविटपितलं तत्तस्य पार्श्वं प्रतस्थे मृतपुरुषशरीरं तद्गृहीत्वा प्रहृष्टः ॥ ७५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके एकत्रिंशस्तरङ्गः ।

---

द्वात्रिंशस्तरङ्गः ।

(पञ्चविंशो वेतालः । )

ास्यान्तिकं भिक्षोः क्षान्तिशीलस्य भूपतिः । स त्रिविक्रमसेनोऽत्र प्राप स्कन्धे शवं वहन् ॥ १
तं च श्रमणं मार्गाभिमुखमेककम् । कृष्णपक्षक्षपारौद्रे श्मशाने तरुमूलगम् ॥ २
ेलप्तस्थले गौरेणास्थिचूर्णेन निर्मिते । मण्डले दिक्षु विन्यस्तपूर्णशोणितकुम्भके ॥ ३
ैलप्रदीपाढ्ये हुतपार्श्वस्थवह्निनि । संभृतोचितसंभारे स्वेष्टदैवतपूजने ॥ ४
ाच स तं राजा सोऽपि भिक्षुर्विलोक्य तम् । आनीतमटकं हर्षादुत्थायोवाच संस्तुवन् ॥ ५
ो मे महाराज विहितोऽनुग्रहस्त्वया । त्वादृशाः क्व क्व चेष्टेयं देशकालौ क्व चेदृशौ ॥ ६
म्पं सत्यमेवाहुर्मुख्यं त्वां कुलभूभृताम् । एवमात्मानपेक्षेण परार्थो येन साध्यते ॥ ७
व महत्त्वं च महतामुच्यते बुधैः । प्रतिपन्नादचलनं प्राणानामत्ययेऽपि यत् ॥ ८
ब्रुवन्स सिद्धार्थमानी भिक्षुर्महीपतेः । तस्यावतारयामास स्कन्धात्तं मटकं तदा ॥ ९
यित्वा समालभ्य बद्धमाल्यं विधाय च । मटकं मण्डलस्यान्तः स्थापयास तस्य तत् ॥ १०
ोद्धूलितगात्रश्च केशयज्ञोपवीतभृत् । प्रावृतप्रेतवसनो भूत्वा ध्यानस्थितः क्षणम् ॥ ११
न्मन्त्रबलाहूतं प्रवेश्य नृकलेवरे । तं वेतालवरं भिक्षुः पूजयामास स क्रमात् ॥ १२
तस्मै कपालार्घपात्रेणार्घ्यं सुनिर्मलैः । नरदन्तै(रक्तै)स्ततः पुष्पं सुगन्धि च विलेपनम् ॥ १३
ा मानुषनेत्रैश्च धूपं मांसैर्बलिं तथा । समाप्य पूजां राजानं तमुवाच स पार्श्वगम् ॥ १४
न्निहास्य मन्त्राधिराजस्य कृतसंनिधेः । प्रणाममङ्गैरष्टाभिर्निपत्य कुरु भूतले ॥ १५
ाभिप्रेतसिद्धिं ते दास्यत्येष वरप्रदः । श्रुत्वैतत्स्मृतवेतालवचा राजाब्रवीत्स तम् ॥ १६
: जानामि तत्पूर्वं प्रदर्शयतु मे भवान् । ततस्तथैव तदहं करिष्ये भगवन्निति ॥ १७
दर्शयितुं यावत्स भिक्षुः पतितो भुवि । तावत्खङ्गप्रहारेण स राजास्य शिरोऽच्छिनत् ॥ १८

आचकर्ष च हृत्पद्ममुदरादस्य पाटितम्। वेतालाय च तस्मै तच्छिरोहृत्कमलं ददौ ॥
साधुवादे ततो दत्ते प्रीतैर्भूतगणैस्ततः। तुष्टोऽब्रवीत्स वेतालो नृपं तं नृकलेवरात् ॥
राजन्विद्याधरेन्द्रत्वं भिक्षोरासीद्यदीप्सितम्। तत्तावद्भूमिसाम्राज्यभोगान्ते ते भविष्यति ॥
क्लेशितोऽसि मया यत्त्वं तदभीष्टं वरं वृणु। इत्युक्तवन्तं वेतालं स राजा तमभाषत ॥
त्वं चेत्प्रसन्नः को नाम न सिद्धोऽभिमतो वरः। तथाप्यमोघवचनादिदं त्वत्तोऽहमर्थये ॥
आद्याः प्रश्नकथा एता नानाख्यानमनोरमाः। चतुर्विंशतिरेषा च पञ्चविंशी समाप्तिगा ॥
सर्वाः ख्याता भवन्त्वेताः पूजनीयाश्च भूतले। इति तेनार्थितो राज्ञा वेतालो निजगाद सः ॥
एवमस्तु विशेषं च शृणु वक्ष्यत्र भूतले। याश्चतुर्विंशतिः पूर्वा यैषा चैका समापिनी ॥
कथावलीयं वेतालपञ्चविंशतिकाख्यया। ख्याता जगति पूज्या च शिवा चैव भविष्यति ॥
यः श्लोकमात्रमप्यस्याः कथयिष्यति सादरः। यो वा श्रोष्यति तौ सद्यो मुक्तपापौ भविष्यतः ॥
यक्षवेतालकूष्माण्डडाकिनीराक्षसादयः। न तत्र प्रभविष्यन्ति यत्रैषा कीर्तयिष्यते ॥
इत्युक्त्वा स ययौ तस्मान्निर्गत्य नृकेलवरात्। यथाभिरुचितं धाम वेतालो योगमायया ॥
ततस्तत्र सुरैः सार्धं राज्ञस्तस्य महेश्वरः। साक्षादाविरभूत्तुष्टः प्रणतं चादिदेश तम् ॥
साधु वत्स हतोऽद्यायं यत्त्वया कूटतापसः। विद्याधरमहाचक्रवर्तिताहठकामुकः ॥
त्वमादौ विक्रमादित्यः सृष्टोऽभूः स्वांशतो मया। म्लेच्छरूपावतीर्णानामसुराणां प्रशान्तये ॥
अद्य चोद्दामदुर्वृत्तदमनाय मया पुनः। त्वं त्रिविक्रमसेनाख्यो वीरः सृष्टोऽत्र भूपतिः ॥
अतः सद्वीपपातालां स्थापयित्वा महीं वशे। विद्याधराणामचिरादधिराजो भविष्यसि ॥
भुक्त्वा दिव्यांश्चिरं भोगानुद्विग्नः स्वेच्छयैव तान्। त्यक्त्वा ममैव सायुज्यमन्ते यास्यस्यसंशयम्
अपराजितनामानं खड्गं चैतं गृहाण मे। यस्य प्रसादात्सर्वं त्वं प्राप्स्यस्येतद्यथोदितम् ॥
इत्युक्त्वा खड्गरत्नं तद्दत्त्वा तस्मै महीभृते। वाक्पुष्पाभ्यर्चितस्तेन देवः शंभुस्तिरोदधे ॥

अथ दृष्ट्वैव समाप्तं कार्यमशेषं निशि प्रभातायाम्।
प्रविवेश स त्रिविक्रमसेनः स्वपुरं नृपः प्रतिष्ठानम् ॥
तत्र क्रमावगतरात्रिविचेष्टिताभिरभ्यर्चितः प्रकृतिभिर्विततोत्सवाभिः।
स्नानप्रदानगिरिशार्चननृत्तगीतवाद्यादिभिस्तदखिलं स दिनं निनाय ॥
अल्पैरेव च वासरैः स नृपतिः शार्वस्य वीर्याद्सेः
सद्वीपां सरसातलां च बुभुजे निष्कण्टकां मेदिनीम्।
संप्राप्याथ हराज्ञया सुमहतीं विद्याधराधीशतां
भुक्त्वा तां सुचिरं जगाम भगवत्सायुज्यमन्ते कृती ॥

( इति वेतालपञ्चविंशतिका।)

इति विक्रमकेसरी स मन्त्री चिरमिलितः पथि शापविप्रयोगात्।
अभिधाय पुनर्मृगाङ्कदत्तं प्रकृतार्थं निजगाद राजपुत्रम् ॥
एवं देव स वृद्धो विप्रो वेतालपञ्चविंशतिकाम्।
एतामाख्याय कथां ग्रामे तस्मिन्नुवाच मां भूयः ॥
तत्पुत्र स त्रिविक्रमसेनो राजा किलैवमक्लीबः।
वेतालानुग्रहतः किमिव न यत्प्राप्तवानिष्टम् ॥
तस्मादिह त्वमपि मन्त्रमिमं गृहीत्वा मत्तः प्रसादय विमुक्तविषादवृत्तिः।
वेतालमुख्यममुना प्रभुणा मृगाङ्कदत्तेन संगममवाप्स्यसि वीर येन ॥
नह्यप्राप्यं किंचिदुत्साहभाजां भग्नोत्साहो वत्स को नावसीदेत्।
तत्ते प्रीत्या वच्मि यत्तत्कुरुष्व त्वं मे बन्धुः सर्पदंशार्तिहर्ता ॥

इत्युक्तवतस्तस्माद्विप्रादादाय सक्रियं मन्त्रम् ।
तं चामन्त्र्य ततोऽहं देवोज्जयिनीं गतोऽभूवम् ॥ ४७
तत्र श्मशाने मटकं रजन्यामाहृत्य कृत्वा स्नपनादि तस्य ।
आहूय मन्त्रेण च तेन तस्मिन्वेतालमभ्यर्चितवान्यथावत् ॥ ४८
भोज्यं महामांसमदायि तस्मै तृप्त्यै तदा सोऽपि तदाशु जग्ध्वा ।
तृप्तोऽस्मि नैवान्यदुपानयेति मामभ्यधान्मानुषमांसगृध्नुः ॥ ४९
कालं यदा नाक्षमतात्र किंचिदुत्कृत्य मांसानि तदा निजानि ।
प्रादामहं प्रीतिकराणि तस्मै योगेश्वरस्तेन स मेऽभ्यतुष्यत् ॥ ५०
अथाब्रवीन्मां स सखे दृढेन सत्त्वेन तुष्टोऽस्म्यमुनाधुना ते ।
तत्पूर्ववद्वीर भवाक्षताङ्गो वृणीष्व मत्तो वरमीप्सितं च ॥ ५१
इत्युक्तवन्तं तमहं तदैव प्रत्यब्रवं मां नय देव तत्र ।
यत्र प्रभुर्मे स मृगाङ्कदत्तो नातः परोऽन्योऽभिमतो वरो मे ॥ ५२
एतत्स वेतालपतिर्निशम्य मामभ्यधात्तर्हि ममांसपृष्ठम् ।
आरोह यावत्तरसा भवन्तं तस्यान्तिकं स्वस्य विभोर्नयामि ॥ ५३
इत्येव तस्योक्तवतस्तथेति स्कन्धाग्रमारोहमहं प्रसह्य ।
ततो वहन्मां स नभःपथेन प्रातिष्ठत प्रेततनुप्रविष्टः ॥ ५४
आनीय चेहाद्य विलोक्य युष्मान्मार्गेऽवतार्याम्बरतश्च तेन ।
एतेन वेतालवरेण देव संप्रापितोऽहं तव पादमूलम् ॥ ५५
समागतश्च प्रभुणाहमद्य गतः स चाप्येष समाप्तकृत्यः ।
इत्येष मे मानद नागशापाद्भवद्वियुक्तस्य महाननुदन्तः ॥ ५६
इति विक्रमकेसरिणो निजसचिवाच्छ्रुतवियोगवृत्तान्तः ।
मार्गे मृगाङ्कदत्तो गच्छन्कान्तानिमित्तमुज्जयिनीम् ॥ ५७
पारावताख्यशापभ्रष्टक्रममिलितकतिपयामात्यः ।
मुमुदे स राजपुत्रः संभावितसकलसाध्यसंपत्तिः ॥ ५८

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके द्वात्रिंशस्तरङ्गः ।

---

त्रयस्त्रिंशस्तरङ्गः ।

ेम्नजिते यस्य जानुदेशे विवर्तते । कुम्भस्रस्तेव नक्षत्रमाला रात्रिषु नृत्यतः ॥ १
ःथावसाने स मार्गमध्यात्समुत्थितः । मृगाङ्कदत्तो मुदितः प्राप्तविक्रमकेसरी ॥ २
रेण सहितस्तथा विमलबुद्धिना । सविचित्रकथो भीमपराक्रमसमन्वितः ॥ ३
शक्तियुक्तश्च श्रुतधिद्विजसंगतः । प्राप्तशेषान्विचिन्वानः शापविश्लेषितान्सखीन् ॥ ४
वत्याः संप्राप्त्यै प्रागेवोज्जयिनीं प्रति । गन्तुं प्रवृत्तः पुनरप्युच्चचालात्मनाष्टमः ॥ ५
ाप च स ग्रीष्मशुष्कतोयामपादपाम् । अटवीं चण्डमार्तण्डतापसंतप्तवालुकाम् ॥ ६
व्रजन्स सचिवान्राजपुत्रो जगाद तान् । पश्यतैषाटवी कीदृग्दुर्गमायतभैरवा ॥ ७
इ विभ्रष्टपथा जनत्यक्ता निराश्रया । उद्यद्दुःखानलज्वालेवाभिर्मरुमरीचिभिः ॥ ८
ारूक्षकेशेव तृणैरुच्छुष्कमर्मरैः । सिंहव्याघ्रादिवित्राससरोमाञ्चेव कण्टकैः ॥ ९
ातपक्लान्तजलाकाङ्क्षिमृगारवैः । तदेषा त्वरयास्माभिर्लङ्घनीया विशङ्कटा ॥ १०
वान्स तैः सार्धं सचिवैः क्षुत्तृषार्दितैः । द्रुतं मृगाङ्कदत्तस्तामटवीमुदलङ्घयत् ॥ ११
चाग्रे सुमहत्स्वच्छशीतजलैर्भृतम् । सरोऽर्कतापगलितस्यामृतांशोरिव द्रवैः ॥ १२

दिगन्तव्यापिविस्तारं प्रतिबिम्बमिवात्मनः । द्रष्टुं त्रैलोक्यलक्ष्म्येव विहितं मणिदर्पणम् ॥
धार्तराष्ट्रकृतक्षोभं विचित्रार्जुनविभ्रमम् । विश्रान्तिकृत्स्वादुरसं भारतानुकृतिं दधत् ॥
उपकण्ठमिलन्नीलकण्ठपीतविषोत्तमम् । अच्युताश्रितलक्ष्मीकं मन्थकालाब्धिसंनिभम् ॥
सूर्यरश्मिभिरप्राप्तगम्भीरशिशिरान्तरम् । अनन्तपद्मनिलयं पातालमिव भूमिगम् ॥
तस्य तीरे च सरसः पश्चिमे स व्यलोकयत् । राजपुत्रः ससचिवो महान्तं दिव्यपादपम् ॥
वातान्दोलितविस्तारिशाखाभुजकदम्बकम् । मूर्धलग्नाभ्रसरितं नृत्यन्तमिव शंकरम् ॥
अत्युन्नतेन शिरसा व्योमपृष्ठावगाहिना । कौतुकान्नन्दनोद्यानशोभां द्रष्टुमिवोद्यतम् ॥
शोभमानं फलैर्दिव्यरसैः शाखावलम्बिभिः । कल्पद्रुमं सुरानद्धैः पीयूषकलशैरिव ॥
मा मां यथा तथा कश्चित्स्प्राक्षीदिति खगारवैः । व्याहरन्तमिव प्रेङ्खत्पल्लवाग्रकरं मुहुः ॥
यावन्मृगाङ्कदत्तस्तं स निर्वर्णयति प्रभुः । तावत्तन्मन्त्रिणस्तस्मिन्प्रधाव्य क्षुत्तृषार्दिताः ॥
फलानि भोक्तुमारूढास्तस्य दृष्ट्वैव तानि ते । फलत्वं षडपि प्राप्ता मानुषा अप्यशङ्कितम् ॥
ततो मृगाङ्कदत्तस्तानपश्यन्विह्वलः सखीन् । एकैकं स तरौ तत्र नामग्राहमशब्दयत् ॥
यदा ददुर्न वचनं न चादृश्यन्त ते क्वचित् । तदा हा हा हतोऽस्मीति नैराश्यविधुरं वदन् ॥
स राजपुत्रो न्यपतन्मूर्छितोऽत्र महीतले । द्रुमानारूढपार्श्वस्थकेवलश्रुतधिद्विजः ॥
श्रुतधिः स च विप्रस्तमुवाचाश्वास्य तत्क्षणम् । कृतप्रज्ञोऽपि किं देव त्यक्तधैर्योऽवसीदसि ॥
अश्रुते हि स कल्याणं व्यसने यो न मुह्यति । नागशापवियुक्तान्किं नैतान्संप्राप्तवानसि ॥
तथैव पुनरप्येतान्मन्त्रिणोऽन्यांश्च लप्स्यसे । शशाङ्कवत्या संयोगोऽप्यचिरात्ते भविष्यति ॥
एवं श्रुतधिनोक्तः सन्राजपुत्रो जगाद सः । कुत एतदिदं धात्रा नाशायासूत्रितं हि नः ॥
कान्यथा निशि वेतालः क्व च भीमपराक्रमः । क्व शशाङ्कवतीज्ञानं तत्संवादप्रसङ्गतः ॥
तां च प्राप्तुमयोध्यायाः क्व चास्माकं विनिर्गमः । विन्ध्याटव्यां क्व चान्योन्यवियोगो नागशापतः
ततः कतिपयानां नः क्रमशः क्व च संगमः । क्व चाधुना वियोगोऽयमिष्टत्यागः पुनः सखे ॥
ते हि वृक्षेऽत्र भूतेन ग्रस्तास्तैश्च विना मम । का शशाङ्कवती किं च जीवितं तदलं भ्रमैः ॥
इत्यूचिवाञ्शुचा सोऽत्र सरस्यात्मानमुज्झितुम् । मृगाङ्कदत्त उत्तस्थौ श्रुतधौ वारयत्यपि ॥
तावद्वागत्र गगनादुच्चचाराशरीरिणी । मा पुत्र साहसं कार्षीः सर्वं स्वन्तं हि भावि ते ॥
अस्मिन्गणपतिर्देवः स्वयं वसति पादपे । स च त्वत्सचिवैरेतैरज्ञानाद्विमानितः ॥
ते ह्यशुद्धा अनाचान्ता अक्षालितकराङ्घ्रयः । क्षुधार्तास्तन्निवासेऽस्मिन्नारूढाः फललिप्सवः ॥
ततः स्पृष्टेषु तेष्वत्र फलतामेव ते गताः । यश्चित्तास्तद्गतिं गच्छन्त्विवति विघ्नेशशापतः ॥
अन्येऽपि ये त्वत्सचिवाश्चत्वारस्ते पथामुना । आगता एवमेवास्मिन्नारूढाः फलतां गताः ॥
तस्मादाराधयैतं त्वं तपोभिर्गणनायकम् । एतत्प्रसादात्सर्वेष्टसिद्धिस्तव भविष्यति ॥
इत्युक्तः स सुधासारस्रजेवाकाशतो गिरा । मृगाङ्कदत्तो जातास्थो देहत्यागान्न्यवर्तत ॥
कृत्वा च सरसि स्नानं तरौ तस्मिन्गणाधिपम् । अर्चयित्वोज्झिताहारस्तमस्तौषीत्कृताञ्जलिः ॥

जय निजताण्डवडम्बरमर्दभरन्यञ्चितेन भुवनेन ।
समहीशैलवनेन प्रणम्यमानेश गजवदन ॥
जय ससुरासुरमानुषभुवनत्रयपूजिताङ्घ्रिकमलयुग ।
वरविविधसिद्धिनिर्भरनिधान कुम्भोपमाकार ॥
जय युगपदुदितचण्डद्वादशदिनकृत्प्रदीप्ततेजस्क ।
हरहरिसुरपतिदुर्जयदितिजकुलाकालकल्पान्त ॥
जय भक्तवृजिनवारण लीलानीराजनोत्सुकेनेव ।
परशुवरेण विराजितकरतलकलितानलज्वाल ॥

अभिमतसिद्ध्यै भर्तुस्त्रिपुरावजये गणेश गौर्यापि।
यः पूजितोऽसि तं त्वां श्रितोऽस्मि शरणं नमस्तेऽस्तु॥ ४८
ंस्तुतविघ्नेशो निराहारः कुशास्तरे। मृगाङ्कदत्तोऽनैषीत्तां रात्रिं तस्य तरोस्तले॥ ४९
ादशाहानि श्रुतधौ परिचारके। विघ्नेशाराधनपरो राजपुत्रो निनाय सः॥ ५०
ऽह्नि निशि स्वप्ने तं जगाद गणेश्वरः। वत्स तुष्टोऽस्मि ते मुक्तशापान्प्राप्स्यसि मन्त्रिणः॥ ५१
च तैः समं प्राप्य तां शशाङ्कवतीं क्रमात्। प्रत्यावृत्य स्वनगरीं पृथ्वीराज्यं करिष्यसि॥ ५२
ाणेश्वरादिष्टः प्रबुद्धः स निशाक्षये। मृगाङ्कदत्तः स्वप्नं तं दृष्टं श्रुतधयेऽभ्यधात्॥ ५३
भिनन्दितः प्रातः स्नात्वाभ्यर्च्य विनायकम्। तद्वासवृक्षं तं यावत्कुरुते स प्रदक्षिणम्॥ ५४
समं तरोस्तस्मादवतीर्य दशापि ते। फलत्वमुक्ताः सचिवा निपेतुस्तस्य पादयोः॥ ५५
सेनस्तथा स्थूलबाहुर्मेघबलोऽपि च। दृढमुष्टिश्चतुर्थश्च षट् चादौ येऽत्र वर्णिताः॥ ५६
ततः स सकलान्समं सपदि मन्त्रिणः प्राप्य ता-
न्दृशाकुलितया गिरा प्रमदमन्थरारम्भया।
नरेश्वरसुतोऽधिकप्रणयमेकमेकं मुहु-
र्ददर्श परिषस्वजे तदनु संबभाषे कृती॥ ५७
तेऽपि नवेन्दुक्षामं कृततपसं वीक्ष्य तं प्रभुं सास्राः।
श्रुतधिनिगदितयथार्थाः प्रशशंसुर्नाथवन्तमात्मानम्॥ ५८
अथ तत्र स तैर्मृगाङ्कदत्तः सरसि कृताप्लवनादिभिः सहैव।
सचिवैः सुखपारणं सहर्षो विदधे लब्धधृतिः स्वकार्यसिद्ध्यै॥ ५९

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके त्रयस्त्रिंशस्तरङ्गः।

---

चतुस्त्रिंशस्तरङ्गः।

सोऽत्र सरस्तीरे कृतपारणसुस्थितः। मृगाङ्कदत्तस्तैः साकं सचिवैः स्वैरुपाविशत्॥ १
ते तदहः प्राप्ताश्चत्वारो निजमन्त्रिणः। तेनापृच्छ्यन्त विश्लेषकालवृत्तान्तमादरात्॥ २
स व्याघ्रसेनाख्यस्तेषां मध्यात्तमब्रवीत्। देवास्मदीयवृत्तान्तं श्रूयतां वर्णयाम्यहम्॥ ३
पारावताख्यस्य तस्य नागस्य शापतः। भवद्भ्यो दूरविभ्रष्टो जातोऽहं नष्टचेतनः॥ ४
भ्रान्त्वाटवीं रात्रौ लब्धसंज्ञोऽप्यहं चिरात्। न दिशो न च पन्थानमपश्यं तमसा वृतः॥ ५
ाश्च दुःखदीर्घायां गतायां विरतिं निशि। उदिते भगवत्यर्के क्रमादाशाप्रकाशके॥ ६
न्तयमहं हा धिक् क नु यातः स नः प्रभुः। अस्मद्वियुक्तश्चैकाकी कथं सोऽत्र भविष्यति॥ ७
वा तमवाप्स्यामि कुत्रान्विष्यामि का गतिः। वरमुज्जयिनीं यामि तत्र प्राप्येत जातु सः॥ ८
शशाङ्कवतीहेतोर्गन्तव्या तस्य हि स्थिता। इत्याशया शनैः प्रायामहमुज्जयिनीं प्रति॥ ९
मानोऽथ कष्टां तामटवीं दुर्दशामिव। दह्यमानोऽर्ककिरणैरग्निचूर्णोत्करैरिव॥ १०
चित्प्राप्तवानस्मि सरः फुल्लोत्पलेक्षणम्। हंसादिमधुरारावैः संभाषणमिवाचरत्॥ ११
ाटवीचिह्नस्ताग्रं प्रसन्नविपुलाशयम्। दर्शनादेव सर्वार्तिहरं सत्पुरुषं यथा॥ १२
स्नात्वा च भुक्त्वा च बिसान्यापीय वारि च। यावत्स्थितोऽस्मि तावत्त्रीनेतानद्राक्षमागतान्॥ १३
मुष्टिमथ स्थूलबाहुं मेघबलं तथा। समेत्य च भवद्वार्तां मिथोऽस्माभिरपृच्छ्यत॥ १४
ानन्तश्च सर्वेऽपि वयं ते पापशङ्किनः। अकार्ष्म देहत्यागाय मतिं त्वद्विरहासहाः॥ १५
च तस्मिन्सरसि स्नातुं मुनिकुमारकः। आगमद्दीर्घतपसः सुतो नाम्ना महातपाः॥ १६
ाकृतनिजज्वालो भूयोऽग्निरिव खाण्डवम्। दिधक्षुराश्रितो ब्राह्मीं प्रज्वलंस्तेजसा तनुम्॥ १७
ाजिनेन संवीतः सव्येनात्तकमण्डलुः। दक्षिणेन करेणाक्षमालावलयमुद्वहन्॥ १८

सहागतमृगैः शृङ्गप्रोत्खातस्नानमृत्तिकः । युक्तः कतिपयैरन्यैः समानैर्मुनिपुत्रकैः ॥
सोऽस्मानुपागाद्दृष्ट्वैव सरः प्रपतनोद्यतान् । करुणार्द्रा हि सर्वस्य सन्तोऽकारणबान्धवाः ॥
अवदच्च न कार्यं वः पापं कापुरुषोचितम् । दुःखान्धा हि पतन्त्येव विपच्छ्वभ्रेषु कातराः ॥
धीरास्तु दृष्टसन्मार्गा विवेकामलचक्षुषः । न पतन्त्यवटे प्राप्यमवश्यं प्राप्नुवन्ति च ॥
यूयं च भव्याकृतयः कल्याणं प्राप्स्यथ ध्रुवम् । तद्ब्रूत किं नु दुःखं वो मानसं दूयते हि मे ॥
एवमुक्तवते तस्मै मुनिपुत्राय तत्क्षणम् । आमूलान्निजवृत्तान्तं सर्वं कथितवानहम् ॥
ततस्तेन वयं तैस्तैर्वाक्यैरायतिदर्शिभिः । संबोध्य सानुगेनापि देहत्यागान्निवर्तिताः ॥
अथ स्नात्वा ततो नातिदूरं स मुनिपुत्रकः । अस्माननैषीदातिथ्यं विधित्सुः पितुराश्रमम् ॥
तत्रोच्चशाखोर्ध्वभुजैर्वेदिकासूत्थितस्थितैः । प्रारब्धतपसीवार्करश्मिपैः पादपैरपि ॥
उपवेश्यैकदेशेऽस्मान्दत्तार्घ्यान्स मुनेः सुतः । एकैकमाश्रमतरुं गत्वा भिक्षामयाचत ॥
अपूर्यत क्षणात्तस्य फलैस्तेभ्यः स्वतश्च्युतैः । भिक्षापात्रमथागात्तद्गृहीत्वा सोऽस्मदन्तिकम् ॥
अदाच्च दिव्यास्वादानि तान्यस्मभ्यं फलानि सः । यैर्भुक्तैरमृतेनेव तृप्ता जाता वयं तदा ॥
क्षीणेऽह्नि चाब्धौ पतिते सूर्ये ज्योतिर्भिरम्बरे । तत्पातोच्छलितैरम्भःशीकरैरिव पूरिते ॥
तद्वैराग्यादिव प्राचीशैलशृङ्गतपोवनम् । संवीतचन्द्रिकाधौतवल्कले शशिनि श्रिते ॥
एकस्थानोपविष्टानां कृताशेषस्वकर्मणाम् । मुनीनामाश्रमे तत्र दर्शनाय गता वयम् ॥
प्रणिपत्योपविष्टाश्च कृतातिथ्यैः प्रियंवदैः । कुतो यूयमिति क्षिप्रात्पृष्टाः स्मस्तैर्महर्षिभिः ॥
ततो मुनिकुमारेण तेन तेभ्यो निवेदितः । तदाश्रमप्रवेशान्तो वृत्तान्तोऽस्मन्निबन्धनः ॥
अथास्मानत्र कण्वाख्यो ज्ञानी मुनिरभाषत । किमेवं वीरपुरुषा अपि क्लैब्यं गताः स्थ भोः ॥
आपद्यभग्नधैर्यत्वं संपद्यनभिमानिता । यदुत्साहस्य चात्यागस्तद्धि सत्पुरुषव्रतम् ॥
महान्तश्च महान्त्येव कृच्छ्राण्युत्तीर्य धैर्यतः । महतोऽर्थान्समासाद्य महच्छब्दमवाप्नुवन् ॥
इयं सुन्दरसेनस्य तथा च श्रूयतां कथा । यथा मन्दारवत्यर्थे क्लेशस्तेनान्वभूयत ॥
इत्युक्त्वा स मुनिः कण्वः सर्वेष्वत्र महर्षिषु । अस्मासु चोपशृण्वत्सु कथामेतामवर्णयत् ॥
अस्त्यलंकृतकौबेरीदिङ्मुखो निषधाभिधः । देशस्तत्रालका नाम बभूव नगरी पुरा ॥
यस्यां सदैव सर्वार्थसमृद्धिसुखितो जनः । केवलं रत्नदीपानामासीच्छश्वदनिर्वृतिः ॥
तस्यामन्वर्थनामाभून्महासेनो महीपतिः । शरजन्माद्भुताप्युग्रप्रतापप्लुष्टशात्रवः ॥
तस्य राज्ञो महामन्त्री गुणपालित इत्यभूत् । शौर्यालयो महीभारवोढा शेष इवापरः ॥
तस्मिन्न्यस्तभरस्यास्य सुखिनः क्षपितद्विषः । देव्यां शशिप्रभाख्यायामुत्पेदे नृपतेः सुतः ॥
नाम्ना सुन्दरसेनो यः शिशुरेवाशिशुर्गुणैः । शौर्यसौन्दर्यलक्ष्मीभ्यां स्वयंवरपतिर्वृतः ॥
तस्य राजसुतस्यात्र शूरास्तुल्यवयोगुणाः । आ बाल्यात्सह संवृद्धा बभूवुः पञ्च मन्त्रिणः ॥
चण्डप्रभो भीमभुजस्तथा व्याघ्रपराक्रमः । वीरो विक्रमशक्तिश्च दृढबुद्धिश्च पञ्चमः ॥
ते च सर्वे महासत्त्वा बलबुद्धिसमन्विताः । कुलीनाः स्वामिभक्ताश्च रुतज्ञा अपि पक्षिणाम् ॥
तैः समं स उवासात्र राजपुत्रः पितुर्गृहे । अनुरूपां विना भार्यां तरुणोऽप्यपरिग्रहः ॥
अनम्राक्रमणं शौर्यं धनं निजभुजार्जितम् । भार्या रूपानुरूपा च पुरुषस्येह पूज्यते ॥
अन्यथा तु किमेतेन त्रयेणापीत्यचिन्तयत् । स च सुन्दरसेनोऽथ वीरस्तैः सचिवैः सह ॥
एकदा चान्वितः सैन्यैर्वयस्यैस्तैश्च पञ्चभिः । निर्ययौ मृगयाहेतोर्नगर्याः स नृपात्मजः ॥
निर्यान्तं च ददर्शैतं दूरदेशान्तरागता । कापि कात्यायनी नाम प्रौढा प्रव्राजिकोत्तमा ॥
अरोहिणीकश्चन्द्रोऽयं किं वाप्यरतिकः स्मरः । इति चामानुषं वीक्ष्य तद्रूपं सा व्यचिन्तयत् ॥
बुद्ध्वा च राजपुत्रं तं पृष्टात्तत्परिवारतः । धातुः सा सर्गवैचित्र्यं प्रशंसन्ती विसिस्मिये ॥
अथारात्तारदीर्घेण राजपुत्रं स्वरेण तम् । कुमार विजयस्वेति वदन्ती प्रणनाम सा ॥

सुन्दरसेनस्तदनाकर्ण्यैव तत्क्षणम् । ययौ स्वसचिवारब्धकथाव्यग्रेण चेतसा ॥ ५८
ः श्रावयन्ती तं सा क्रुद्धोवाच तापसी । न शृणोष्याशिषं कस्माद्राजपुत्र ममाप्यहो ॥ ५९
ं नार्चिता पृथ्व्यां राज्ञो राजसुतस्य वा । एवमेव च दर्पोऽयं यदि ते यौवनादिभिः ॥ ६०
ारवतीं कन्यां हंसद्वीपेश्वरात्मजाम् । जगल्ललामभूतां च भार्यात्वेन त्वमाप्स्यसि ॥ ६१
ान्ये महेन्द्रादेरपि श्रोष्यसि न ध्रुवम् । मदावलेपाद्वचनं के वराकास्तु मानुषाः ॥ ६२
ऋवतीं श्रुत्वा तामाहूय सकौतुकः । प्रह्वः सुन्दरसेनोऽसौ क्षमयामास तापसीम् ॥ ६३
ाय च भृत्यानां हस्ते विश्रमणाय सः । गृहं विक्रमशक्तेस्तां प्रष्टुकामः स्वमन्त्रिणः ॥ ६४
ात्वा कृताखेटो प्रत्यागत्य कृताह्निकः । तामानाय्य स पप्रच्छ कुमारो भुक्तभोजनाम् ॥ ६५
युच्यतां कैषा त्वयाद्य परिकीर्तिता । कन्या मन्दारवत्याख्या परं कौतूहलं हि नः ॥ ६६
श तापसी सा तमुवाच शृणु वच्म्यदः । तीर्थादिहेतोः सद्वीपां भ्रमामि पृथिवीमिमाम् ॥ ६७
ती प्राप्तवत्यस्मि हंसद्वीपं प्रसङ्गतः । तत्र मन्दारदेवस्य राज्ञो दृष्टा मया सुता ॥ ६८
ोपभोगार्हा दृश्या नापुण्यकर्मभिः । या मन्दारवतीत्याख्यां धत्ते श्रीरिव नान्दनी ॥ ६९
ी हारिणीं मूर्तिं दर्शनोद्दीपितस्मरा । धात्रा सुधामयी सृष्टा या चान्यैवैन्दवी तनुः ॥ ७०
रूपेण सदृशो नास्त्येवान्यत्र भूतले । जानेऽनुहरति त्वेको भवांस्तद्रूपसंपदम् ॥ ७१
ा न दृष्टा विफले तेषां नेत्रे च जन्म च । इति श्रुत्वा च तापस्या मुखाद्राजसुतोऽब्रवीत् ॥ ७२
स्तत्तादृशं रूपं पश्यामोऽम्ब वयं कथम् । एतत्तद्वचनं श्रुत्वा सापि प्रव्राजिकाभ्यधात् ॥ ७३
चेत्रपटे तां च तत्काललिखितां रसात् । वहे वल्गुलिकान्तःस्थां कौतुकं यदि दृश्यताम् ॥ ७४
ऋवती तस्मै तुष्टाय नृपसूनवे । कृष्ट्वा वल्गुलिकातः सा चित्रस्थां तामदर्शयत् ॥ ७५
ें सुन्दरसेनस्तां कन्यां चित्रगतामपि । विचित्ररूपामानन्दनिःस्पन्दं प्रविलोकयन् ॥ ७६
श्वकण्टकचितैरङ्गैरास्ते स्म तत्क्षणम् । कीलितः पुष्पचापस्य बाणैरिव निरन्तरैः ॥ ७७
शृण्वन्नवदन्नपश्यंश्चैव किंचन । तन्मयीभूय चित्रस्थ इव सोऽप्यभवच्चिरम् ॥ ७८
ा मन्त्रिणस्तस्य जगदुस्तां तपस्विनीम् । आर्ये सुन्दरसेनं त्वं देवमत्र पटे लिख ॥ ७९
ालेख्यविज्ञानं तावद्वीक्षामहे तव । तच्छ्रुत्वैव लिलेखैतं कुमारं सा क्षणात्पटे ॥ ८०
ातिसदृशं दृष्ट्वा सर्वेऽप्यत्रैवमब्रुवन् । नास्त्यालेख्यविसंवादो भगवत्या मनागिति ॥ ८१
कुमार एवेति चित्रेऽस्मिञ्जायते हि धीः । तन्मन्दारवतीदेवीरूपं नात्र विसंवदेत् ॥ ८२
ऋवत्सु सचिवेष्वात्तचित्रपटद्वयः । प्रीतः सुन्दरसेनस्तां पूजयामास तापसीम् ॥ ८३
ज्य च यथार्हं तामेकस्थाननिवासिनीम् । विवेशाभ्यन्तरगृहं कान्ताचित्रपटं वहन् ॥ ८४
ुखं किमु कान्त्यास्याः क्षालिताङ्कमलः शशी । राज्याभिषेककलशौ स्मरस्यैतावुत स्तनौ ॥ ८५
ीं रूपजलधेः किमेतास्त्रिवलीलताः । नितम्बः किमयं किं वा विलासशयनं रतेः ॥ ८६
चित्रगतां तत्र प्रत्यङ्गं तां विभावयन् । स मन्दारवतीं तस्थौ निपत्य शयनीयके ॥ ८७
चान्वहं तिष्ठन्नाहारादिपराङ्मुखः । स्मरज्वरभराक्रान्तः सोऽल्पैरेवाभवद्दिनैः ॥ ८८
द्वागत्य पितरौ तस्य पप्रच्छतुः सखीन् । शशिप्रभामहासेनौ स्वैरमस्वास्थ्यकारणम् ॥ ८९
स्याश्च ते ताभ्यां तथा सर्वं तदब्रुवन् । यथात्र हेतुतां प्राप्ता हंसद्वीपनृपात्मजा ॥ ९०
सुन्दरसेनं तं महासेनो जगाद सः । पुत्र किं गूह्यते स्थाने खल्वभिष्वङ्ग एष ते ॥ ९१
ारत्नं हि मन्दारवती योग्या तवैव सा । मित्रं मन्दारदेवश्च परमं तत्पिता मम ॥ ९२
ासाध्ये युक्ते च कस्मिन्नर्थे कदर्थना । एवं तमुक्त्वा संमन्त्र्य कन्यां तां तस्य याचितुम् ॥ ९३
। मन्दारदेवस्य हंसद्वीपं विसृष्टवान् । दूतं सुरतदेवाख्यं स महासेनभूपतिः ॥ ९४
सुन्दरसेनं तं तापस्या लिखितं तया । हस्ते चित्रपटे तस्य रूपोत्कर्षप्रकाशकम् ॥ ९५
तश्चतुरं गत्वा प्राप्याम्बुधितटे पुरम् । महेन्द्रादित्यनृपतेः शशाङ्कपुरसंज्ञकम् ॥ ९६

ततः प्रवहणारूढो हंसद्वीपमवाप तत्। दिनैर्मन्दारदेवस्य नृपतेस्तस्य मन्दिरम्॥
द्वाःस्थैरावेदितस्तत्र प्रविश्यान्तर्विलोक्य सः। यथावृत्तं नृपं दूतो दत्तकोशलिकोऽभ्यधात्॥
संदिष्टं ते महाराज महासेनेन भूभुजा। देहि सुन्दरसेनाय मत्पुत्राय निजां सुताम्॥
पटे च लिखिता सा हि कात्यायन्यभिधानया। तापस्या कन्यकारत्नमित्यानीयेह दर्शिता॥
रूपानुरूप्याचास्माभिर्जातेच्छैर्लिखितं पटे। रूपं सुन्दरसेनस्याप्यत्र प्रहितमीक्ष्यताम्॥
एष चासदृशो रूपे भार्यां स्वसदृशीं विना। नेच्छत्युद्वाहमेका च त्वत्सुतास्यानुकारिणी॥
इति संदिश्य हस्ते मे पटो राज्ञायमर्पितः। दृश्यतां युज्यतां देव मधुना माधवी लता॥
एतद्दूतवचः श्रुत्वा हर्षादानाययन्नृपः। सुतां स मन्दारवतीं देवीं तस्याश्च मातरम्॥
ताभ्यां सह तमुद्घाट्य दृष्ट्वा चित्रपटं च सः। तुल्यो मद्दुहितुः पृथ्व्यां नास्तीत्येतन्मदं जहौ॥
जगाद चामुना राजपुत्रेण यदि युज्यते। तदस्या रूपनिर्माणं सुतायाः सफलं मम॥
अनेन रहिता ह्येषा राजते नानयाप्यसौ। का ह्यब्जिनी विना हंसं कश्च हंसोऽब्जिनीं विना॥
इति राज्ञोदिते राज्यां श्रद्धावत्यामतीव च। सा मन्दारवती जज्ञे सद्यो मदनमोहिता॥
तस्थौ चित्रपटन्यस्तनिश्चलोत्फुल्ललोचना। अधिष्ठितेव सुप्तेव विनिद्रा लिखितेव च॥
ततो मन्दारदेवस्तां सुतां दृष्ट्वा तथाविधाम्। अङ्गीकृत्यैव तद्दानं स तं दूतमपूजयत्॥
अन्येद्युः प्राहिणोत्तं च प्रतिदूतं च स स्वकम्। विप्रं कुमारदत्ताख्यं महासेननृपं प्रति॥
जगाद चोभावपि तौ गत्वा तमलकेश्वरम्। मम वाक्यान्महासेनं राजानं वदतं द्रुतम्॥
सौहार्देन मया तावत्कन्या दत्ता तदुच्यताम्। त्वत्पुत्रः किमिहायातु किं कन्यात्र प्रहीयताम्॥
इति राज्ञोक्तसंदेशौ ततः प्रवहणेन तौ। सह प्रययतुर्दूतावब्धिमार्गेण सत्वरम्॥
शशाङ्कपुरमासाद्य ततः स्थलपथेन तौ। प्रापतुस्तां पुरीमृद्धामलकामलकामिव॥
उपेत्य राजसद्माथ प्रविश्य च यथोचितम्। कृतादरं महासेनं राजानं तावपश्यताम्॥
तं च मन्दारदेवोक्तं प्रतिसंदेशमूचतुः। राज्ञे तस्मै स च श्रुत्वा तुष्टस्तौ द्वावपूजयत्॥
पृष्ट्वा च कन्याजन्मर्क्षं तस्मात्तत्पितृदूततः। लग्नं विवाहे पप्रच्छ सूनोः स गणकान्नृपः॥
ते च मासत्रये शुक्लपञ्चम्यां मासि कार्तिके। लग्नं तस्मै वदन्ति स्म शुभं वध्वा वरस्य च॥
तस्मिँल्लग्ने विवाहं च सूनोश्च प्रेषणं तदा। तस्मै मन्दारदेवाय संदिदेशालकापतिः॥
हस्ते कुमारदत्तस्य तद्दूतस्यापरस्य च। चन्द्रस्वाम्यभिधानस्य स्वस्य लेखेऽभिलिख्य सः॥
तौ च दूतौ ततो गत्वा लेखं दत्त्वा तथैव च। हंसद्वीपेश्वरस्याग्रे तस्य सर्वं शशंसतुः॥
सोऽपि राजा तथेत्युक्त्वा चन्द्रस्वामिनमर्चितम्। व्यसृजत्तं महासेनदूतं स्वस्वामिनोऽन्तिकम्।
प्रत्यागतेऽलकां तस्मिन्नुक्तकार्यविनिश्चये। लग्नप्रतीक्षास्ते तस्थुः सर्वेऽप्युभयपक्षयोः॥
तावच्च हंसद्वीपे सा प्राक्चित्रपटदर्शनात्। जातानुरागा मन्दारवती तं चिरभाविनम्॥
विवाहलग्नं बुद्ध्वा तं तावत्कालक्षमासहा। प्रेयस्युत्सुका गाढं संतेपे मदनाग्निना॥
अङ्गारवर्षमङ्गे च चन्दनैरपि लेपनम्। पद्मिनीपत्रशय्यापि संतप्तसिकतास्तरः॥
दीप्रदावानलशिखाः सुधांशोरपि रश्मयः। तस्याः सुन्दरसेनोत्कचेतसो बत जज्ञिरे॥
मौनस्था वर्जिताहारा विरहव्रतमाश्रिता। आकुलाप्तसखीपृष्टा कृच्छ्रादेवमुवाच सा॥
सखि दूरे विवाहो मे न च शक्नोमि तं विना। वरं प्रतीक्षितुं कालमलकाधिपतेः सुतम्॥
दूरो देशश्च कालश्च विचित्रा च गतिर्विधेः। तदत्र मध्ये को वेत्ति किं कस्येह भविष्यति॥
तन्मे मर्तव्यमेवेति वदन्ती विरहातुरा। जगाम मन्दारवती सद्यः सा विषमां दशाम्॥
तद्बुद्ध्वा तत्सखीवक्त्रात्तां च दृष्ट्वा तथाविधाम्। सभार्यो मन्त्रयामास तत्पिता सह मन्त्रिभिः॥
राजा स मित्रमस्माकं महासेनोऽलकापतिः। एषा च मन्दारवती कालं सोढुमिहाक्षमा॥
तत्का त्रपा यथा चास्तु तत्रैव प्रेष्यतामियम्। कान्तान्तिकस्था धृत्या हि कालक्षेपं सहिष्यते॥

ालोच्य समाश्वास्य तां मन्दारवतीं सुताम् । आरोप्य च प्रवहणे सधनां सपरिच्छदाम् ॥ १३६
ेऽहनि ततो हंसद्वीपादम्बुधिवर्त्मना । विवाहहेतोर्विधिवज्जननीकृतमङ्गलाम् ॥ १३७
ीतमतिनामानं सह दत्त्वा स्वमन्त्रिणम् । राजा मन्दारदेवोऽसौ विससर्जालकां प्रति ॥ १३८
ो दिनानि कतिचिद्यावत्प्रवहणेन सा । प्रयाति मन्दारवती राजपुत्री महोदधौ ॥ १३९
कस्मात्तावदुत्तस्थौ गर्जञ्जलदतस्करः । सशूत्कारमरुद्धोरमुक्तधाराशरोत्करः ॥ १४०
गाच्च दूरमाकृष्य विधिनेव बलीयसा । वातेन तस्या वहनं हन्यमानमभज्यत ॥ १४१
ो तस्मिन्परीवारे विनीतमतिना सह । ममज्ज तस्याः सकलं भाण्डागारं महोदधौ ॥ १४२
त्वब्धिना राजपुत्री जीवन्त्येवोर्मिबाहुना । उत्क्षिप्य नीत्वा निकटे क्षिप्ता वेलावने तदा ॥ १४३
ब्धौ पातः क चात्युच्चेनोर्मिणा प्रापणं वने । भवितव्यस्य नासाध्यं दृश्यते बत दृश्यताम् ॥ १४४
ः सा तादृशी त्रस्तविह्वला विजने वने । दृष्ट्वैकाकिनमात्मानं दुःखाब्धावपतत्पुनः ॥ १४५
प्रस्थितास्मि क प्राप्ता क च मे स परिच्छदः । क विनीतमतिर्वृत्तमकस्मात्किमिदं मम ॥ १४६
दभाग्या क गच्छामि हा हतास्मि करोमि किम् । उत्तारिता हतविधे किमहं जलधेस्त्वया ॥ १४७
तात हाम्ब हा हार्यपुत्र पुत्रालकापतेः । त्वामप्राप्य विपद्येऽहं पश्य किं त्रायसे न माम् ॥ १४८
ादि विलपन्ती च सा मन्दारवती भृशम् । प्ररुरोदाश्रुभिश्छिन्नहारमुक्ताफलोपमैः ॥ १४९
वच्च नातिदूरस्थात्तत्राश्रमपदान्मुनिः । आजगाम मतङ्गाख्यः स्नातुं जलनिधेर्जले ॥ १५०
बालब्रह्मचारिण्या दुहित्रा यमुनाख्यया । अन्वितस्तमृषिस्तस्याः शुश्राव रुदितध्वनिम् ॥ १५१
ेत्य कृपया तां च ददर्श तनयायुतः । यूथभ्रष्टामिव मृगीं दिक्षु क्षिप्तार्तलोचनाम् ॥ १५२
त्वं वनेऽत्र ते प्राप्तिः कथं कस्माच्च रोदिषि । इति तां च स पप्रच्छ महर्षिः स्निग्धया गिरा ॥ १५३
ास्तं सकृपं दृष्ट्वा सा मन्दारवती शनैः । आश्वास्याकथयत्तस्मै स्ववृत्तान्तं त्रपानता ॥ १५४
थ स प्रणिधायैतां मतङ्गमुनिरब्रवीत् । राजपुत्रि विषादेन कृतं धृतिमवाप्नुहि ॥ १५५
ीषपेशलाङ्गीं त्वां बाधते क्लेशविप्लवः । अपेक्षन्ते हि विपदः किं पेलवमपेलवम् ॥ १५६
वती त्वचिरादेव पतिं प्राप्स्यत्यभीप्सितम् । तदागच्छाश्रमं तावन्नातिदूरमितो मम ॥ १५७
ानया मत्सुतया सहास्स्व स्वगृहे यथा । .......................................... ॥ १५८
े तां स समाश्वास्य कृत्वा स्नानं महामुनिः । निनाय मन्दारवतीमाश्रमं स्वं सुतान्वितः ॥ १५९
त्र सा संयता तस्थौ भर्तृसंगमकाङ्क्षिणी । परिचर्याविनोदेन तस्यर्षेस्तत्सुतान्विता ॥ १६०
त्रान्तरे चालकायां दिनानि गणयन्सदा । तस्यां स मन्दारवतीविवाहदिवसोन्मुखः ॥ १६१
ालं सुन्दरसेनोऽपि शिरोत्कण्ठाकृशो नयन् । आसीदाश्वास्यमानः स्वैर्मित्रैश्चण्डप्रभादिभिः ॥ १६२
माच्च लग्नदिवसे प्रत्यासन्ने पिता नृपः । तस्य यात्रासमारम्भं हंसद्वीपं प्रति व्यधात् ॥ १६३
भेऽह्नि च ततः प्रायात्कृतप्रस्थानमङ्गलः । सैन्यैः सुन्दरसेनः क्ष्मां कम्पयन्स नृपात्मजः ॥ १६४
च्छन्क्रमेण च प्राप तुष्टः स्वसचिवान्वितः । तीराभरणमम्भोधेः स शशाङ्कपुरं पुरम् ॥ १६५
त्र प्रत्युद्गतो राज्ञा प्रश्रयावनतेन सः । बुद्ध्वा महेन्द्रादित्येन प्रविवेशानुगैः सह ॥ १६६
ृश्यायमानरूपश्रीः पौरस्त्रीपद्मिनीवनैः । समाससाद चारूढवारणो राजमन्दिरम् ॥ १६७
त्रोपचरितस्तेन महेन्द्रादित्यभूभुजा । प्रतिपन्नानुयात्रेण स विशश्राम तद्दिनम् ॥ १६८
पि वारिधिमुत्तीर्य तामहं प्राप्नुयां प्रियाम् । नवोढासुलभप्रेमलज्जासाध्वसशीलिनीम् ॥ १६९
ालिङ्ग्यमानां मा मेति लपन्तीं शृणुयां च ताम् । इत्यादिभिरनैषीत्तां यामिनीं स मनोरथैः ॥ १७०
ातश्चात्रैव नगरे स्थापयित्वा स्वसैनिकम् । महेन्द्रादित्यसहितः कूलं वारिनिधेर्ययौ ॥ १७१
त्र तेन समं राज्ञा स्वयं प्रवहणं महत् । आरुरोहैकमन्नाम्बुपूर्णं स्वसचिवैर्युतः ॥ १७२
ितीयस्मिन्प्रवहणे राजपुत्रः परिच्छदम् । अवश्यनेयं संक्षिप्तं समारोपितवांश्च सः ॥ १७३
तो मुक्ते प्रवहणे चलवातपटध्वजे । अभिप्रययतुस्ते द्वे दिशं दक्षिणपश्चिमाम् ॥ १७४

द्वित्रेष्वहःसु यातेषु गच्छतोश्चाम्बुधौ तयोः । अकस्मादुदभूत्तत्र महानुत्पातमारुतः ॥
अहो वायुरपूर्वोऽयमित्याश्चर्यवशादिव । व्याघूर्णन्ते स्म जलधेस्तटेषु वनराजयः ॥
व्यत्यस्ताश्च मुहुर्वातादधरोत्तरतां ययुः । वारिधेर्वारिनिचया भावाः कालक्रमादिव ॥
आक्रन्देन समं दत्ते रत्नैरर्घे महाब्धये । प्रयत्नेन सहापास्ते कर्णधारैर्मरुत्पटे ॥
मुक्तासु जीविताशाभिः सह सर्वैः ससंभ्रमैः । शिलासु शृङ्खलाबद्धास्वतिगुर्वीषु सर्वतः ॥
तरङ्गोत्क्षिप्तविक्षिप्ते नागबन्धैरिवाम्बुधौ । प्रभ्रेमतुः प्रवहणे प्रयुद्ध इव ते उभे ॥
ततः सुन्दरसेनस्तद्दृष्ट्वा धैर्यादिवासनात् । चलितस्तमुवाचेदं महेन्द्रादित्यभूपतिम् ॥
ममापुण्यैरकाण्डे वः प्रलयोऽयमुपस्थितः । तन्न शक्नोम्यहं द्रष्टुं क्षिपाम्यात्मानमम्बुधौ ॥
इत्युक्त्वा स्वोत्तरीयेण बद्धा परिकरं द्रुतम् । स राजपुत्रो जलधौ तत्रात्मानमपातयत् ॥
तद्दृष्ट्वा तद्वयस्यास्ते पञ्च चण्डप्रभादयः । महेन्द्रादित्यसहितास्तत्रैवात्मानमक्षिपन् ॥
बाहुभ्यां च तरन्तस्ते नदीनं गतसंभ्रमाः । सर्वेऽपीतस्ततो जग्मुर्विक्षिप्ता वीचिवेगतः ॥
क्षणाच्च शान्ते पवने निःशब्दस्तिमितोऽम्बुधिः । दधौ प्रशान्तकोपस्य सज्जनस्य समानताम् ॥
तावच्च वातेन कुतोऽप्यानीतां यानपात्रिकाम् । प्राप सुन्दरसेनोऽत्र सहितो दृढबुद्धिना ॥
तामारुरोह चैकेन समं तेन स्वमन्त्रिणा । स जीवितप्रमययोरन्तर्दोलामिवापराम् ॥
ततो दिशमजानानः पयोमयमिवाखिलम् । प्रभ्रष्टपौरुषः पश्यन्देवताशरणस्तदा ॥
नावा मन्दानुकूलेन दैवेनेव नभस्वता । संप्रेर्यमाणया तीरं प्रापितोऽभूत्त्रिभिर्दिनैः ॥
ततस्तीरविलग्नायां तस्यामात्मद्वितीयकः । स्थलं च जीविताशां च सममध्यारुरोह सः ॥
तत्रस्थश्च समाश्वस्य दृढबुद्धिमभाषत । उत्तीर्णोऽप्यम्बुधेरस्मि पातालादप्यधो गतः ॥
यतो विक्रमशक्तिं तं तं च व्याघ्रपराक्रमम् । चण्डप्रभं भीमभुजं सचिवांस्तांस्तथाविधान् ॥
महेन्द्रादित्यनृपतिं तं चाकारणबान्धवम् । विनाश्य सर्वानधुना का शोभा जीवितेन मे ॥
इत्युक्तवन्तं तं मन्त्री दृढबुद्धिर्जगाद सः । देव धैर्यं गृहाण त्वं जाने कल्याणमस्ति नः ॥
यथा ह्यावां तथा तेऽपि तरेयुर्जातु वारिधिम् । शक्या हि केन निश्चेतुं दुर्ज्ञाना नियतेर्गतिः ॥
इत्यादि तत्तद्यावत्तं दृढबुद्धिर्ब्रवीति सः । तावदाजग्मतुस्तत्र स्नानार्थं तापसावुभौ ॥
तौ विलोक्य विषण्णं तं राजपुत्रमुपेत्य च । परिपृच्छ्य च वृत्तान्तं साधू सदयमूचतुः ॥
सुमते नान्यथाभावं बलिनः पूर्वकर्मणः । अपि देवाः क्षमाः कर्तुं सुखदुःखप्रदायिनः ॥
हातुमिच्छन्नतो दुःखं धीरः सुकृतमाचरेत् । सा हि प्रतिक्रिया तस्य न शोकः शातनस्तनोः ॥
तद्विषादं जहीहि त्वं शरीरं रक्ष धैर्यतः । शरीरे सति को नाम पुरुषार्थो न सिद्ध्यति ॥
कल्याणलक्षणश्चासि भाव्यवश्यं शुभं तव । इत्युक्त्वा तौ समाश्वास्य निन्यतुः स्वाश्रमं मुनी ॥
तत्र कांश्चिच्च दिवसान्प्रतीक्षन्स नृपात्मजः । तस्थौ सुन्दरसेनोऽथ दृढबुद्धिसमन्वितः ॥
अत्रान्तरे च तन्मन्त्री दोर्भ्यां भीमभुजोऽम्बुधिम् । तीर्त्वा विक्रमशक्तिश्च द्वौ पृथक्प्रापतुस्तटम् ॥
असद्वदुत्तरेज्जातु सोऽपीत्याशावशाच्च तौ । महाटवीं विविशतुश्चिन्वानौ दुःखमोहितौ ॥
शेषौ तत्सचिवौ चण्डप्रभव्याघ्रपराक्रमौ । राजा महेन्द्रादित्यश्च तथैवोत्तीर्य वारिधिम् ॥
आर्ताः सुन्दरसेनं तमन्विष्याप्राप्य दुःखिताः । अलब्धभग्नवहनास्तच्छशाङ्कपुरं ययुः ॥
ततस्तौ मन्त्रिणौ तत्र तच्च प्राक्स्थापितं बलम् । रुदन्तो ज्ञातवृत्तान्ता ययुः स्वामलकां पुरीम् ॥
प्राप्तेष्वराजतनयेष्वनुशोचत्सु तेषु सा । आक्रन्दैकमयी जज्ञे पुरी प्ररुदितप्रजा ॥
महासेननृपश्चात्र सदेवीको निशम्य तत् । सुतोदन्तं न यत्प्राणैर्जहे तद्बलमायुषः ॥
देहत्यागोद्यतं तं च सदेवीकं न्यवारयन् । सचिवा वचनैस्तैस्तैर्दर्शिताशोपपत्तिभिः ॥
ततः स नगरीबाह्ये स्वयंभ्वायतने नृपः । सूनोः प्रवृत्तिं चिन्वानस्तपस्यन्नास्त सानुगः ॥
तावन्मन्दारदेवोऽपि हंसद्वीपे स भूपतिः । जामातुर्दुहितुश्चाब्धिपातोदन्तमबुध्यत ॥

चालकाप्राप्तं जामातृसचिवद्वयम् । महासेननृपं चास्थाधृतप्राणं तपःस्थितम् ॥ २१४
ोऽपि सुताशोककातरो मरणोद्यमात् । वारितो मन्त्रिभिस्तैस्तैस्तेषु न्यस्तभरो नृपः ॥ २१५
ान्नृपस्यागात्पार्श्वे तस्यालकां पुरीम् । समदुःखस्य सहितो देव्या कंदर्पसेनया ॥ २१६
ासुतोदन्तनिश्चयः स करिष्यति । तदेवाहं समं तेन करिष्यामीति निश्चितः ॥ २१७
न्दारवतीवृत्तान्ताधिकदुःखिना । महासेनावनीशेन समागम्यान्वशोचत ॥ २१८
ह तत्रासीत्तपस्यन्नियतेन्द्रियः । मिताशी दर्भशयनो हंसद्वीपेश्वरोऽपि सः ॥ २१९
त्रा विकीर्णेषु तेषु सर्वेष्वितस्ततः । मारुतेनेव पर्णेषु प्रस्थाय स्वाश्रमात्ततः ॥ २२०
न्दरसेनोऽत्र मतङ्गर्ष्याश्रमस्य सः । तस्य प्रापान्तिकं यत्र सा मन्दारवती स्थिता ॥ २२१
नारसानेकपरिपक्कफलानतैः । निरुद्धतीरं तरुभिर्ददर्शाच्छजलं सरः ॥ २२२
तस्मिन्कृतस्नानो भुक्तस्वादुफलस्ततः । दृढबुद्धिसखो गत्वा प्रापैकां वननिम्नगाम् ॥ २२३
ोरेण गच्छंश्च लिङ्गायतनपार्श्वतः । स पुष्पावचयव्यग्रा दृष्टवान्मुनिकन्यकाः ॥ २२४
मध्ये ददर्शैकां कन्यां लोकैकसुन्दरीम् । कान्त्या प्रकाशयन्तीं तज्ज्योत्स्नयेवाखिलं वनम् ॥ २२५
तेन कुर्वाणां फुल्लनीलोत्पला दिशः । तन्वतीं चरणन्यासैरवनौ नलिनीवनम् ॥ २२६
हस्रनयनप्रेक्षणीया किमप्सराः । वनश्रीरथवा पुष्पलग्नाग्रकरपल्लवा ॥ २२७
व्याङ्गनासर्गसिद्धाभ्यासेन वेधसा । एतस्या निर्मितमिदं नूनमत्यद्भुतं वपुः ॥ २२८
ानुहरत्येषा चित्रदृष्टाकृतेरहो । प्रियाया मम मन्दारवत्याः सैव भवेन्नु किम् ॥ २२९
तत्क सा हंसद्वीपे क्वैतद्वनान्तरम् । तन्न जानीमहे केयं कुतः कुत्रेह भामिनी ॥ २३०
ाजसुतस्तं च दृढबुद्धिं जगाद सः । दृढबुद्धिश्च दृष्ट्वा तां वरकन्यां तदाब्रवीत् ॥ २३१
देव काप्यस्या वनपुष्पमयेष्वपि । हारकाञ्चीकलापादिभङ्गिराभरणेष्वियम् ॥ २३२
जायते रूपं सौकुमार्यं च कानने । तद्दिव्या राजकन्या वा काप्येषा नर्षिकन्यका ॥ २३३
ावः क्षणं ज्ञातुमिहेति दृढबुद्धिना । उक्ते तौ तस्थतुस्तत्र पादपान्तरितावुभौ ॥ २३४
ाचितपुष्पास्ता मुनिकन्यास्तया सह । वरकन्यकया स्नातुं सरितं तामवातरन् ॥ २३५
ासु जलक्रीडाप्रवृत्तासु विधेर्वशात् । ग्राहेणागत्य जगृहे सैवात्र वरकन्यका ॥ २३६
क्यैव तत्कालं कन्यास्तास्त्रस्तविह्वलाः । चक्रन्दुरार्तास्त्रायध्वं त्रायध्वं वनदेवताः ॥ २३७
हे मन्दारवती स्नान्ती नद्यामशङ्कितम् । ग्राहेणागत्य तरसा गृहीता हा विपद्यते ॥ २३८
त्वैव किं सैव स्यात्प्रियेति प्रधाव्य सः । द्रुतं सुन्दरसेनस्तं ग्राहं क्षुरिकयावधीत् ॥ २३९
एव मुखात्तस्माद्द्रुतमुत्क्षिप्य रोधसि । आश्वासयामास च तां स मन्दावरतीं ततः ॥ २४०
तीर्णभया दृष्ट्वा सुभगं तमचिन्तयत् । महात्मा प्राणदः कोऽयं मम भाग्यैरिहागतः ॥ २४१
सुसदृशश्चैष चित्रदृष्टस्य तस्य मे । प्राणेशस्यालकानाथतनयस्य सुजन्मनः ॥ २४२
नाम स एव स्याद्धिग्धिग्दुश्चिन्तितं मम । ईदृशः स विदेशस्थः शान्तं मा भूत्कदाचन ॥ २४३
यपुरुषोपान्ते स्थातुं युक्तं ममाधुना । व्रजामि तदितः स्वस्ति भवत्वस्मै महात्मने ॥ २४४
ंचिन्त्य मन्दारवती प्राह स्म ताः सखीः । प्रणम्यैतं महाभागमेत यामोऽधुना वयम् ॥ २४५
ा बहुसाधारो नामश्रवणमात्रतः । प्रागनुच्छिन्नसंदेहो राजपुत्रः स तत्सखीम् ॥ २४६
सुन्दरसेनोऽत्र पप्रच्छाख्यायतां शुभे । कस्यात्मजा कीदृशीयं सखी वः कौतुकं हि मे ॥ २४७
ं पृष्टवन्तं सा मुनिकन्यैवमभ्यधात् । राज्ञो मन्दारदेवस्य हंसद्वीपपतेरियम् ॥ २४८
मन्दारवत्याख्या कुमारी राजसूनवे । दातुं सुन्दरसेनाय नीयमानालकां पुरीम् ॥ २४९
वहणाम्भोधावुत्क्षिप्ता वीचिभिस्तटे । आनीतेह किल प्राप्य मतङ्गमुनिनाश्रमम् ॥ २५०
क्ते तया हर्षविषादाकुलितं सखा । नृत्यन्सुन्दरसेनं तं दृढबुद्धिरुवाच सः ॥ २५१
द्य मन्दारवतीदेवीलाभेन वर्धसे । सैवैषा हि न यास्माकं मनोरथपथेऽप्यभूत् ॥ २५२

इत्युक्त्वा सा सखी तस्याः पृच्छन्तीर्मुनिकन्यकाः। अबोधयत्तं वृत्तान्तं ताः सखीं तामनन्दयन्
ततः सुन्दरसेनस्य ह्यार्यपुत्रेत्युदीर्य सा। पपात मन्दारवती रुदती तस्य पादयोः॥
सोऽप्याश्लिष्य रुरोदैतां रुदतोस्तत्र चैतयोः। अरुदन्करुणार्द्राणि काष्ठान्यपि तृणान्यपि॥
गत्वाथ मुनिकन्याभिस्ताभिः स श्रावितो द्रुतम्। आजगाम मुनिस्तत्र मतङ्गो यमुनान्वितः॥
सोऽत्र सुन्दरसेनं तमाश्वास्य चरणानतम्। मन्दारवत्या सहितं निनाय निजमाश्रमम्॥
तदहश्च तदातिथ्यविश्रान्तं जातनिर्वृतिम्। अन्येद्युः स तमाह स्म राजपुत्रं महामुनिः॥
श्वेतद्वीपे मया पुत्र गन्तव्यं कार्यतोऽधुना। तन्मन्दारवतीयुक्तो गच्छ त्वमलकां प्रति॥
तत्र राजसुतामेतां परिणीयानुपालयेः। सुतेति प्रतिपन्ना हि तुभ्यमेषा मयार्पिता॥
सुचिरं चानया सार्धं पृथ्वीराज्यं करिष्यसि। सचिवांश्च निजान्सर्वानचिरात्तानवाप्स्यसि॥
इत्युक्त्वा सवधूकं तमामन्त्र्य नभसा ययौ। मुनिर्यमुनया साकं दुहित्रा स स्वतुल्यया॥
ततः सुन्दरसेनोऽपि स मन्दारवतीयुतः। दृढबुद्धिसहायश्च प्रोच्चचालाश्रमात्ततः॥
प्राप्य वारिनिधेस्तीरं ददर्श निकटागतम्। केनाप्यधिष्ठितं यूना वणिजा वहनं लघु॥
ययाचे चाश्रयं तस्मिन्नध्वसौकर्यलोभतः। दृढबुद्धिमुखेनाराक्तत्पतिं तं वणिक्सुतम्॥
सोऽपि तीरे तथेत्यस्य वहनं तदढौकयत्। तां मन्दारवतीं पश्यन्कुवणिक्स्मरमोहितः॥
ततः सुन्दरसेनोऽत्र तामारोप्याग्रतः प्रियाम्। तटस्थितः सन्नारोढुमात्मना यावदिच्छति॥
तावत्स कर्णधारस्य संज्ञां कृत्वा वणिग्द्रुतम्। वहनं चालयामास परस्त्रीलोलुभः शठः॥
क्रन्दद्राजसुतं तच्च क्षणेनादृष्टिगोचरम्। अभूत्सुन्दरसेनस्य वहनं तस्य पश्यतः॥
हा धिक्चौरैः प्रमुषितोऽस्मीत्याक्रन्दन्पपात सः। विलपंश्च चिरं सोऽत्र जगदे दृढबुद्धिना॥
उत्तिष्ठ मुञ्च वैक्लव्यं नायं वीरोचितः क्रमः। एहि चौरं तमन्वेष्टुं गच्छावोऽनेन वर्त्मना॥
आपत्काले च कष्टेऽपि नोत्साहस्त्यज्यते बुधैः। ........................................॥
इति प्रबोधितस्तेन कथंचिद्दृढबुद्धिना। तीरात्सुन्दरसेनोऽब्धेरुत्थाय प्रस्थितोऽभवत्॥
गच्छन्क्रमाच्च हा देवि हा मन्दारवतीति सः। विलपन्साश्रुरनिशं संतप्तो विरहाग्निना॥
निराहारः सबाष्पैकदृढबुद्धिपरिच्छदः। विवेश सोन्माद इव व्यामोहेन महद्वनम्॥
न चात्र गणयामास सख्युस्तस्य वचो हितम्। तत्र तत्राभ्यधावत्तु केवलं दयितामयः॥
उन्निद्रपुष्पाभरणा वणिक्चौरात्पलायिता। आगता हि प्रिया सा स्यादिति फुल्लासु वल्लिषु॥
भयात्सरोनिमग्ना किं वदनं पक्ष्मलेक्षणम्। उन्नमय्येक्षते सा मामिति चाब्जेषु सालिषु॥
किं व्याहरति सैषात्र मुग्धा मां मञ्जुभाषिणी। इति पत्रलताच्छन्नकोकिलाकूजितेष्वपि॥
एवं प्रतिपदं मुह्यन्यथार्केण तथेन्दुना। ताप्यमानः स बभ्राम तुल्यनक्तंदिनश्चिरम्॥
कथंचिन्निर्गतस्तस्माद्वनात्सदृढबुद्धिकः। राजपुत्रोऽथ स प्राप मार्गभ्रष्टो महाटवीम्॥
उदग्रखड्गविषमां सिंहाधिष्ठानभीषणाम्। सेनामिव सुदुर्दर्शां दस्युसेनानिषेविताम्॥
तां गाहमानः सुलभानेकापायां निराश्रयाम्। दुर्दशामिव स प्रापि पुलिन्दैरुद्यतायुधैः॥
भगवत्युपहारार्थं चिन्वद्भिः पुरुषान्पशून्। विन्ध्यकेतोः पुलिन्देन्द्रस्याज्ञया तन्निवासिनः॥
विदेशो विरहक्लेशो नीचात्परिभवोऽपि सः। अनाहारोऽध्वसंताप इति पञ्चाग्निविप्लवे॥
असृजद्दस्युसंपातं षष्ठमग्निमहो विधिः। राजपुत्रस्य तस्यात्र धैर्यस्यान्तमवेक्षितुम्॥
स चात्मना द्वितीयस्तान्ग्रहणार्थं प्रधावितान्। पृषत्कवर्षिणो दस्यून्बहून्क्षुरिकयावधीत्॥
तद्बुद्ध्वा प्रैष्यत बलं राज्ञान्यद्विन्ध्यकेतुना। ततोऽपि सुबहूंश्चौरान्युद्धज्ञो निजघान सः॥
ततः स सवयस्योऽपि व्रणितक्लान्तमूर्छितः। बद्ध्वा कारागृहे नीत्वा शबरैस्तैर्निचिक्षिपे॥
तत्र कीटोत्कराकीर्णे जालकारालयाविले। सूच्यमानाहिसंचारे निर्मोकैर्गर्तलम्बिभिः॥
गुल्फदघ्नोच्छलद्धूलावाखुखातबिलोल्बणे। अन्तःक्षिप्तस्थितानेकभीतापन्नजनाकुले॥

गामिवोत्पत्तिधाम्नि द्वौ तावपश्यताम्। मन्त्रिणौ तद्वदेवादौ बद्धानीतस्थितावुभौ ॥ २९२
प्रविशतां तद्वदटवीं तीर्णवारिधी। तमन्वेष्टुं प्रभुं भीमभुजविक्रमशक्तिकौ ॥ २९३
न्तौ परिज्ञाय पेततुस्तस्य पादयोः। सोऽपि तौ प्रत्यभिज्ञातौ कण्ठे बाष्पाकुलोऽग्रहीत् ॥ २९४
ातगुणीभूतदुःखास्तेऽन्योन्यदर्शनात्। आश्वासयद्भिरपरैरूचिरे बन्धनस्थितैः ॥ २९५
ःखेन किं शक्यं पूर्वकर्मातिवर्तितुम्। किं न पश्यथ सर्वेषां सह मृत्युमुपस्थितम् ॥ २९६
ान्यां चतुर्दश्यां पुलिन्दक्ष्माभृतामुना। देव्याः पशूपहारार्थं वयमेते हि संभृताः ॥ २९७
शुचा गतिश्चित्रा जन्तुषु क्रीडतो विधेः। तदभद्रं यथा तद्वद्दद्याद्भद्रं स एव वः ॥ २९८
। बन्धनस्थैस्तै बद्धास्तत्रावतस्थिरे। कष्टं निरनुरोधत्वमापदां सुमहत्स्वपि ॥ २९९
ां च चतुर्दश्यामत्र राजाज्ञया ततः। ते सर्वेऽप्युपहारार्थमनीयन्ताम्बिकागृहम् ॥ ३००
ालाचलज्जिह्वं घण्टालीदन्तमालया। व्यासक्तवीरशिरसा घोरं मृत्युमुखं यथा ॥ ३०१
न्दरसेनस्तां दृष्ट्वा देवीं प्रणम्य सः। भक्तिप्रह्वेन मनसा स्तुवन्नेवं व्यजिज्ञपत् ॥ ३०२
ाहामदैत्येन त्रिशिखेनास्रवर्षिणा। शमितासुरसंतापे प्रणताभयदायिनि ॥ ३०३
य प्रसन्नेन लोचनेनामृतश्च्युता। दृष्ट्वा मां दुःखदावाग्निदग्धं देवि नमोऽस्तु ते ॥ ३०४
ाजसुते तस्मिन्व्याहरत्येव तत्र सः। आगात्पूजयितुं देवीं विन्ध्यकेतुः पुलिन्दराट् ॥ ३०५
व परिज्ञाय भिल्लराजं त्रपानतः। स तान्सुन्दरसेनः स्वान्वयस्यान्स्वैरमब्रवीत् ॥ ३०६
ैष पुलिन्देन्द्रो विन्ध्यकेतुरुपैति यः। तातस्य पार्श्वे सेवार्थं भुङ्क्ते चैतां महाटवीम् ॥ ३०७
ातु न वक्तव्यमस्माभिरिह किंचन। श्रेयान्हि मानिनो मृत्युर्नेदृगात्मप्रकाशनम् ॥ ३०८
ात्र्यते यावत्सखिभिः स नृपात्मजः। तावत्स विन्ध्यकेतुः स्वान्राजा भृत्यानभाषत ॥ ३०९
दर्शयत तं प्रवीरं मे महापशुम्। हताः सुबहवो योधा गृह्यमाणेन येन मे ॥ ३१०
ैव स शुष्कासृग्दिग्धो व्रणितधूसरः। तस्य सुन्दरसेनोऽग्रे तद्भृत्यैः प्रापितोऽभवत् ॥ ३११
दृष्ट्वा पुलिन्देन्द्रः परिज्ञाय मनागिव। ब्रूहि कस्त्वं कुतश्चेति पप्रच्छ परिशङ्कितः ॥ ३१२
यतः कुरुध्वं यत्प्रस्तुतं किमनेन वः। इति सुन्दरसेनोऽपि भिल्लेन्द्रं प्रत्युवाच तम् ॥ ३१३
सम्यगालापात्प्रत्यभिज्ञाय संभ्रमात्। हा हेति जल्पन्नवनौ विन्ध्यकेतुः पपात सः ॥ ३१४
हाराज पापेन महासेन मयाधुना। पश्य युष्मत्प्रसादानामुचितं कीदृशं कृतम् ॥ ३१५
प्राणसमः सूनुर्नीतोऽवस्थामिहेदृशीम्। देवः सुन्दरसेनोऽयं कुतोऽप्येवमिहागतः ॥ ३१६
ाश्लिष्य तं राजपुत्रं स व्यलपत्तथा। विन्ध्यकेतुर्यथा सर्वेऽप्यत्राभूवन्नुदश्रवः ॥ ३१७
बहु यत्पूर्वं प्रत्यभिज्ञातवानसि। राजपुत्रमिमं पश्चाद्वृत्तेऽर्थे किं व्यधास्यथाः ॥ ३१८
विषादो हर्षेऽस्मिन्नित्याश्वास्यत तैश्च सः। हृष्टैः सुन्दरसेनस्य वयस्यैर्भिल्लभूपतिः ॥ ३१९
पादपतितः स राजा सममानयत्। प्रीत्या सुन्दरसेनं तं मोचिताखिलपुंपशुम् ॥ ३२०
वनश्च नीत्वैनं स्वपल्लीं सवयस्यकम्। क्रमादुपाचरत्पथ्यैराबद्धव्रणपट्टिकम् ॥ ३२१
छ चेहागमनं राजपुत्र कथं नु ते। महत्कौतुकमेतद्धि मम तत्कथ्यतामिति ॥ ३२२
सुन्दरसेनेन स्ववृत्तान्तेऽनुवर्णिते। चित्रीयमाणचेतास्तं शबरेन्द्रो जगाद सः ॥ ३२३
न्दारवतीहेतोर्यात्रा पातः क चाम्बुधौ। क मतङ्गाश्रमप्राप्तिः क तया तत्र संगमः ॥ ३२४
ारश्च वणिजा तस्या विश्वासतः पुनः। क चाटवीप्रवेशस्ते कोपहाराय बन्धनम् ॥ ३२५
ास्माभिः प्रत्यभिज्ञा मृत्योरास्याच्च निर्गमः। विचित्रविधये तस्मै सर्वथा विधये नमः ॥ ३२६
कार्या त्वया चिन्ता कान्तां प्रति यतो विधिः। यथेदमकरोत्कर्ता तथैतदपि ते द्रुतम् ॥ ३२७
वादिनमेवैतं पुलिन्देन्द्रं द्रुतागतः। निजसेनापतिः प्रीतः प्रविश्यैवं व्यजिज्ञपत् ॥ ३२८
ाय धनं भूरि स्त्रीरत्नं चातिरूपवत्। प्रविष्टः सानुगजनः कोऽप्येतामटवीं वणिक् ॥ ३२९
। बुद्ध्वा मया गत्वा सबलेन सहानुगः। वष्टभ्य सधनस्त्रीक इहानीतो बहिः स्थितः ॥ ३३०

तच्छ्रुत्वा किं वणिक्स स्यात्सा मन्दारवती च किम्। इति सुन्दरसेनोऽन्तर्विन्ध्यकेतुश्च दध्यतुः
प्रवेश्यतामिहैवासौ स्त्री चेत्युक्तवतोस्तयोः। प्रावेशयच्चमूपस्तं वणिजं तां च योषितम्॥
ततो दृष्ट्वैव तौ सोऽत्र दृढबुद्धिरभाषत। सैव मन्दारवत्येषा देवी सैष च दुर्वणिक्॥
हा देवि धर्मदग्धेव लतावस्थामिमां कथम्। गतास्यपुष्पाभरणा विशुष्काधरपल्लवा॥
इति क्रन्दति तस्मिंश्च दृढबुद्धौ प्रधाव्य सः। प्रियां सुन्दरसेनस्तां कण्ठे सरभसोऽग्रहीत्॥
ततो विरहमालिन्यमश्रुधाराजलेन तौ। क्षालयन्ताविवान्योन्यं प्रियौ रुरुदतुश्चिरम्॥
अथोभौ तौ समाश्वास्य विन्ध्यकेतुरुवाच तत्। वणिजं किं त्वया दारा विश्वस्तस्य हृता इति
ततो जगाद स वणिग्भयगद्गदया गिरा। वृथा मयेदं नाशाय कृतमेषा तु रक्षिता॥
निजेनाधर्षणीयेन महसैव मनस्विनी। वह्निज्वालेव न स्प्रष्टुमप्यसौ शकिता मया॥
किं च नीत्वा निजं देशं शान्तमन्युः प्रसादिता। परिणेतुमभिप्रेता पापस्याभूदियं मम॥
इत्युक्तवन्तमादिष्टवधं तेनात्र भूभुजा। सोऽथ सुन्दरसेनस्तं ररक्ष वणिजं वधात्॥
प्राणाधिकं तु तत्तस्य धनोद्रेकमहारयत्। दिने दिने म्रियन्ते हि गतार्था न गतासवः॥
एवं सुन्दरसेनेन तस्मिन्वणिजि मोचिते। प्राणलाभेन संतुष्टे यथेच्छं कृपणे गते॥
स विन्ध्यकेतुरादाय तां मन्दारवतीं नृपः। युक्तां सुन्दरसेनेन स्वदेवीमन्दिरं ययौ॥
तत्रादिश्य स देवीं तां स्नानवस्त्रानुलेपनैः। संमान्य मन्दारवतीं तद्वत्स्नातमलंकृतम्॥
स्वयं सुन्दरसेनं तमुपवेश्य वरासने। प्राभृतैरर्चयामास मुक्तामृगमदादिभिः॥
चक्रे तयोश्च दंपत्योः संगमाढ्यमुत्सवम्। स राजा मुदिताशेषप्रनृत्तशबराङ्गनम्॥
अथ सुन्दरसेनस्तमन्येद्युर्नृपमभ्यधात्। रूढं व्रणैर्मे सिद्धं च यथेष्टं तदितोऽधुना॥
यामो वयं स्वनगरीं ताताय प्रेषयाशु तत्। लेखहारं सवृत्तान्तं मदागमनशंसिनम्॥
इत्युक्तो राजपुत्रेण स तेन शबरेश्वरः। तथैव दत्तसंदेशं लेखहारं विसृष्टवान्॥
स लेखहारको यावत्तां प्राप्नोत्यलकां पुरीम्। तावत्तत्र महासेनः सदेवीकः स भूपतिः॥
तस्य सुन्दरसेनस्य प्रवृत्त्यज्ञानदुःखितः। अग्निप्रवेशायोद्युक्तः शंकरायतनाग्रतः॥
अभूत्किलानुशोचद्भिः पौरैः परिवृतोऽखिलैः। ............................... ॥
तं दृष्ट्वा स महासेनं नृपतिं लेखहारकः। उपाजगाम शबरो धावन्नावेदितात्मकः॥
धूलीलिप्तो धनुष्पाणिर्लतात्वग्बद्धमूर्धजः। श्यामः कटीनिवसनं बिल्वपत्रमयं दधत्॥
दिष्ट्याद्य वर्धसे देव यन्मन्दारवतीयुतः। पुत्रः सुन्दरसेनस्ते निस्तीर्याम्भोधिमागतः॥
अस्मत्प्रभोर्विन्ध्यकेतोः स हि प्राप्यान्तिकं प्रभो। तेनैव साकमागन्तुं प्रवृत्तः प्रेष्य मां पुरः।
इत्युदीर्य च तस्यात्र राज्ञः पादान्तिके न्यधात्। लेखं स भिल्लभूपाललेखहारो हरञ्शुचम्॥
ततो हृष्टैर्जनैः सर्वैः कृते कलकलारवे। लेखे च वाचिते ज्ञाते यथावृत्ते महाद्भुते॥
सत्कृत्य लेखहारं स त्यक्तशोकः कृतोत्सवः। राजधानीं महासेननृपः सर्वैः सहाविशत्॥
उत्सुकश्च ततोऽन्येद्युः सूनोस्तस्यागमिष्यतः। अग्रतो भवितुं प्रायाद्धंसद्वीपेश्वरान्वितः॥
चचाल चतुरङ्गं च बलं तस्यामितं तथा। असह्यमर्दभीतेव चकम्पे वसुधा यथा॥
तावत्सुन्दरसेनोऽपि स्वगृहाभिमुखं ततः। प्रतस्थे भिल्लपल्लीतः स मन्दारवतीसखः॥
बन्धनागारलब्धेन तेन विक्रमशक्तिना। सख्या भीमभुजेनापि युक्तः सदृढबुद्धिकः॥
वातरंहोहयारूढः सहितो विन्ध्यकेतुना। पुलिन्दसैन्यैः पृथिवीं तन्मयीमिव दर्शयन्॥
गच्छन्कतिपयैरेव दिनैर्मार्गे ददर्श तम्। पितरं संमुखायातं सपरिच्छदबान्धवम्॥
ततोऽवरुह्य तुरगात्सानन्दैर्वीक्षितो जनैः। उपेत्य पादयोस्तस्य सवयस्योऽपतत्पितुः॥
सोऽपि तं पुत्रमालोक्य राकाचन्द्रमिवोदधिः। आत्मन्येव न माति स्म हर्षोल्लासतरङ्गितः॥
दृष्ट्वा च मन्दारवतीं तां पादावनतां स्नुषाम्। आत्मानं कृतिनं मेने कुलं चैव ननन्द च॥

न्द्दढबुद्ध्यादीन्प्रणतान्पुत्रमन्त्रिणः । ततोऽधिकं सोऽभ्यनन्दद्विन्ध्यकेतुं च तं नृपः ॥ ३७०
[रसेनोऽपि पित्रा तेन निवेदितम् । नत्वा मन्दारदेवं तं श्वशुरं मुमुदे परम् ॥ ३७१
ांगतौ चण्डप्रभव्याघ्रपराक्रमौ । दृष्ट्वाङ्क्लिष्टौ सचिवौ पूर्णान्मेने मनोरथान् ॥ ३७२
ात्र सोऽप्यागान्महेन्द्रादित्यभूपतिः । शशाङ्कपुरतः प्रीत्या श्रुतवृत्तान्तहर्षुलः ॥ ३७३

अथ तैः समं समग्रैः सुन्दरसेनः स राजसुतः ।
नडकूबर इव रम्भां मन्दारवतीं वहन्दयिताम् ॥ ३७४
अलकापुरीमयासीन्निजवसतिं वाहनोत्तमारूढः ।
सकलसमृद्धिनिकेतनभूमिं भूयिष्ठपुण्यजनाम् ॥ ३७५

तस्यां च वातायनसंश्रिताभिर्नेत्रोत्पलैः पौरजनाङ्गनाभिः ।
आकीर्यमाणः प्रियया समेतः स राजधानीं स्वपितुर्विवेश ॥ ३७६
आनन्दबाष्पाकुललोचनायाः प्रणम्य मातुश्चरणौ च तत्र ।
स राजपुत्रोऽखिलबन्धुभृत्यबद्धोत्सवं तं दिवसं निनाय ॥ ३७७
अथापरेद्युर्गणकोपदिष्टे लग्ने स तस्याश्चिरकाङ्क्षितं तम् ।
जग्राह पाणिं जनकार्पिताया मन्दारवत्या नरनाथसूनुः ॥ ३७८
ददौ च तस्मै श्वशुरो महार्घाण्यपुत्रको मन्दरदेवभूपः ।
रत्नानि भूयांसि निजं च राज्यं प्रीतः स्वदेहोत्तरकालभावि ॥ ३७९
चकार चेच्छाविभवानुरूपं पिता महासेननृपश्च तस्य ।
अदुग्धगुं मोचितबन्धनस्थं महोत्सवं वृष्टहिरण्यवस्त्रम् ॥ ३८०

दृष्ट्वाथ मन्दारवतीसमागमात्कृतार्थतां सुन्दरसेनमागतम् ।
प्रमोदमासेव्य च तद्विवाहजं प्रगीतनृत्यन्निखिलाङ्गनागणम् ॥ ३८१
ययौ महासेनमहीभृतार्चितः स्वमण्डलं मन्दरदेवभूपतिः ।
शशाङ्कपूर्वं च पुरं स पार्थिवः स विन्ध्यकेतुश्च महाटवीपतिः ॥ ३८२
ततोऽत्र यातेषु दिनेषु सद्गुणं प्रजाप्रियं सुन्दरसेनमात्मजम् ।
अवेक्ष्य राज्ये च निवेश्य तं निजे वनं महासेननृपो जगाम सः ॥ ३८३
संप्राप्य राज्यमथ सुन्दरसेनदेवः सोऽपि स्वबाहुबलनिर्जितवैरिवर्गः ।
तैर्मन्त्रिभिः सह महीमखिलां शशास मन्दारवत्यधिगमप्रसरत्प्रमोदः ॥ ३८४

इति तत्र सरस्तीरे व्याख्याय कथां मृगाङ्कदत्ताय ।
स व्याघ्रसेननामा सचिवो निजगाद तं भूयः ॥ ३८५

एतत्स कण्वो मुनिराश्रमान्तः कथाद्भुतं वर्णितवान्प्रभो नः ।
कथावसाने च दयालुरस्मानाश्वासयन्नेवमसाववोचत् ॥ ३८६

तत्पुत्रकाः सुविषमाणि दुरुत्तराणि कृच्छ्राणि धीरहृदयाः किल ये सहन्ते ।
ते प्राप्नुवन्ति परमित्थमभीप्सितानि नान्ये तु ये गलितसत्त्वविलुप्तचेष्टाः ॥ ३८७
तस्मादिमां त्यजत विक्लवतां प्रयात युष्माकमप्यधिपतिः स मृगाङ्कदत्तः ।
संप्राप्तसर्वसचिवः सुचिरं पृथिव्यां राज्यं करिष्यति समेत्य शशाङ्कवत्या ॥ ३८८

इति तेन वयं महर्षिणोक्ता धृतिमालम्ब्य निशां च तत्र नीत्वा ।
चलितास्तत आश्रमादवाप्ताः क्रमशः काननमेतदध्वखिन्नाः ॥ ३८९
इह चातितृषा क्षुधा च तप्ताः फलहेतोर्गणनाथवृक्षमेतम् ।
अधिरुह्य फलत्वमेव यातास्तपसा देव तवाद्य मोचिताः स्मः ॥ ३९०

इत्यस्माकं नागशापोपनीतो वृत्तान्तोऽयं त्वद्वियोगे चतुर्णाम्।
क्षीणे शापे चाधुनास्माभिरेतैर्युक्तः सर्वैः कार्यसिद्ध्यै प्रयाहि॥
एतन्मृगाङ्कदत्तो निजसचिवाद्व्याघ्रसेनतः श्रुत्वा।
लाभे शशाङ्कवत्या लब्धधृतिस्तां निशामनयत्॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके चतुस्त्रिंशस्तरङ्गः।

---

पञ्चत्रिंशस्तरङ्गः।

ततः प्रातः समुत्थाय तस्माद्वरसरस्तटात्। मृगाङ्कदत्तः सचिवैरशेषैर्मिलितैः सह॥
युक्तः श्रुतधिना तेन प्रायादुज्जयिनीं प्रति। स शशाङ्कवतीं प्रेप्सुर्नत्वा तं विघ्नजिद्द्रुमम्॥
ततस्तास्ता वनभुवो भूयोऽनेकशतह्रदाः। तमालश्यामलाभोगा घनागमनिशा इव॥
अन्याश्च विचरद्भीममत्तेभाभग्नकीचकाः। विपरीतार्जुनाकारा विराटनगरीनिभाः॥
गिरीन्द्रकंदराश्चैव शुद्धाः पुष्पवतीरपि। क्रूरसत्त्वाश्रिताः शान्तैर्मुनिभिः संश्रिता अपि॥
अतिक्रम्य क्रमाद्वीरः स सर्वसचिवान्वितः। प्रापदुज्जयिनीपुर्याः संनिकर्षं नृपात्मजः॥
ततो गन्धवतीं प्राप्य नदीं स्नानहृतक्लमः। तीर्त्वा च तां महाकालश्मशानं प्राप सानुगः॥
ददर्श तच्च नानास्थिकपालशकलाकुलम्। धृतमानुषकङ्कालकरालं वीरसेवितम्॥
बहुभूतगणाकीर्णमाक्रीडडाकिनीप्रियम्। महाभैरवमासन्नचिताधूममलीमसम्॥
तदतिक्रम्य चापश्यत्स तां युगपुरातनीम्। पुरीमुज्जयिनीं गुप्तां कर्मसेनेन भूभुजा॥
अधिष्ठितप्रतोलीकां रक्षिभिर्विविधायुधैः। प्रवीरकुलजानेकराजपुत्राभिरक्षितैः॥
गिरीन्द्रशिखराकारैः प्राकारैः परिवेष्टिताम्। दुष्प्रवेशामविज्ञातैर्हस्त्यश्वरथसंकुलाम्॥
विलोक्य तादृशीं तां च सर्वतोऽप्यतिदुर्गमाम्। मृगाङ्कदत्तो विमनाः सचिवान्स्वानुवाच सः॥
कष्टं क्लेशशतैरेवमभव्यस्यागतस्य मे। प्रवेश एव नास्तीह प्रियाप्राप्तौ तु का गतिः॥
तच्छ्रुत्वा तेऽप्यवोचंस्तं किमेषा प्रतिभाति ते। अस्माकमियतां देव बलसाध्या महापुरी॥
उपायोऽत्र विचेतव्यः स चावश्यं भविष्यति। दैवतैर्बहुशो ह्येतदादिष्टं विस्मृतं कथम्॥
इत्युक्तः सचिवैस्तस्या नगर्या बहिरेव सः। मृगाङ्कदत्तो दिवसान्कांश्चित्तस्थौ परिभ्रमन्॥
प्राक्सिद्धमथ वेतालं दध्यौ विक्रमकेसरी। तन्मन्त्री वासभवनात्तत्प्रियाकर्षणेच्छया॥
सोऽपि कृष्णच्छविः प्रांशुरुष्ट्रग्रीवो गजाननः। महिषाङ्घ्रिरुलूकाक्षो वेतालः खरकर्णकः॥
एत्य तत्र प्रवेष्टुं यन्न शशाक जगाम तत्। शंभोर्वरात्तां नगरीं नाक्रामन्ति तथाविधाः॥
अथामात्यैर्वृतं खिन्नं प्रवेशोन्मुखचेतसम्। मृगाङ्कदत्तं श्रुतधिर्नीतिज्ञः सोऽब्रवीद्द्विजः॥
किं देव नीतितत्त्वज्ञोऽप्यजानन्निव मुह्यसि। स्वपरान्तरमप्रेक्ष्य मतः कस्येह विक्रमः॥
एकैकस्मिन्नगर्यां हि द्वारेष्वस्यां चतुर्ष्वपि। कुञ्जराणां सहस्रे द्वे वाजिनां पञ्चविंशतिः॥
रथानां दश लक्षं च पदातीनां दिवानिशम्। संनद्धमास्ते रक्षार्थं वीराधिष्ठानदुर्जयम्॥
तन्नः कतिपयानां यत्सहसात्र प्रवेशनम्। परं पतङ्गवृत्तिः सा नार्थसिद्धिस्तु काचन॥
सैन्येनापि च नाल्पेन युक्ता क्षेप्तुमियं पुरी। हस्तिपादातयुद्धं तद्विरोधोऽधिबलेन यत्॥
तन्मायावटुना तेन पुलिन्दपृथिवीभृता। सुहृदा नर्मदाग्राहभयात्त्रातेन दारुणात्॥
तन्मित्रेण च मातङ्गराजेनातिबलीयसा। तेन दुर्गपिशाचेन तत्संबन्धानुरागिणा॥
किरातराजेन यथा बालसब्रह्मचारिणा। शक्तिरक्षितसंज्ञेन तेन विक्रमशालिना॥
समेत्य सबलैः सर्वैः सैन्यपूरितदिङ्मुखः। सम्यक्सहायसंपन्नः साधयैतत्समीहितम्॥
किरातराजश्च स ते दूतागमनसंविदम्। प्रतीक्षमाणः स्थित इत्येतत्ते विस्मृतं कथम्॥
मायावटुश्च मातङ्गराजादेशागतो ध्रुवम्। सज्जस्तेन सहैवास्ते संवित्तस्य कृता ह्यसौ॥

तत्तस्य मातङ्गपतेर्विन्ध्यदक्षिणपार्श्वगम् । निवासकोट्टं गच्छामः करभग्रीवनामकम् ॥ ३३
तत्रैवाहूयते राजा कैरातः शक्तिरक्षितः । ततः संभूय सर्वैस्तैरुद्योगः सिद्धये शुभः ॥ ३४
श्रुत्वैतच्छ्रुतधेर्वाक्यमर्थवत्प्राज्ञसंमतम् । मृगाङ्कदत्तः सामात्यस्तथेति श्रद्दधेतराम् ॥ ३५
अन्येद्युश्च नमस्कृत्य गुणिबन्धुं धृतोदयम् । प्रदर्शिताशं विश्वस्य नभोनित्याध्वगं रविम् ॥ ३६
उच्चचाल ततो विन्ध्यपार्श्वं तं दक्षिणं प्रति । तस्य दुर्गपिशाचस्य मातङ्गेन्द्रस्य केतनम् ॥ ३७
तन्मन्त्रिणश्च स व्याघ्रसेनो भीमपराक्रमः । गुणाकरो मेघबलः समं विमलबुद्धिना ॥ ३८
स विचित्रकथः स्थूलबाहुर्विक्रमकेसरी । प्रचण्डशक्तिः श्रुतधिर्दृढमुष्टिस्तमन्वगुः ॥ ३९
तैः समं सोऽतिविस्तीर्णा निजचेष्टा इवाटवीः । गहनांश्च वनोद्देशान्स्वाभिप्रायानिव क्रमात् ॥ ४०
अतिक्रामन्सरस्तीरतरुमूलनिशाश्रयः । प्राप्यारुरोह विन्ध्याद्रिमात्मचित्तमिवोन्नतम् ॥ ४१
तस्याग्राद्दक्षिणं पार्श्वमवरुह्य च दूरतः । दन्तिदन्ताजिनचिता भिल्लपल्लीर्विलोकयन् ॥ ४२
कुत्र स्यादास्पदं तस्य मातङ्गाधिपतेरिह । कुतो ज्ञास्याम इत्यन्तर्दध्यौ राजसुतोऽत्र सः ॥ ४३
तावच्च संमुखायातमेकं मुनिकुमारकम् । स ददर्श सहामात्यैः पप्रच्छ च कृतानतिः ॥ ४४
अपि जानासि कुत्रेह गृहं मातङ्गभूपतेः । सौम्य दुर्गपिशाचस्य द्रष्टव्यो वर्तते हि नः ॥ ४५
तच्छ्रुत्वा स जगादैवं साधुस्तापसपुत्रकः । इतः पञ्चवटीत्यस्ति प्रदेशः क्रोशमात्रके ॥ ४६
नातिदूरे च तस्याभूदगस्त्यस्याश्रमो मुनेः । नाकतः पातितोत्सिक्तनहुषेन्द्रस्य हेलया ॥ ४७
यत्र पित्राज्ञयोपात्तवनवासः सलक्ष्मणः । सीतयानुगतो रामो मुनिमन्वास्त तं चिरम् ॥ ४८
रक्षोविनाशपिशुनौ चन्द्रार्काविव यत्र सः । आस्कन्दितुं प्रवृत्तोऽभूत्कबन्धो रामलक्ष्मणौ ॥ ४९
यत्र योजनबाहोश्च रामो भुजमपातयत् । अगस्त्यप्रार्थनायातनहुषाजगरोपमम् ॥ ५०
यत्र मेघागमेऽद्यापि श्रुत्वा जलधरध्वनिम् । स्मरन्तो रामकोदण्डरवस्याम्बररोधिनः ॥ ५१
वीक्ष्य विष्वग्दिशः शून्या गृह्णन्त्युद्बाष्पलोचनाः । जानकीवर्धिताः शष्पकवलं न जरन्मृगाः ॥ ५२
हतशेषानिव त्रातुं हरिणान्यत्र राघवम् । जहार हेमहरिणो वैदेहीविरहप्रदः ॥ ५३
कावेरीवारिबहले यत्रानेकमहाह्रदे । पीत्वोद्गीर्णमिवागस्त्येनाब्धिपाथः पदे पदे ॥ ५४
तस्याश्रमस्य नात्यन्तदूरे विन्ध्यस्य सानुनि । करभग्रीवनामास्ति कोट्टः कुटिलदुर्गमः ॥ ५५
तत्र प्रतिवसत्यन्तर्भूपालानिर्जितो बली । स मातङ्गपतिर्दुर्गपिशाचश्चण्डविक्रमः ॥ ५६
धनुर्धराणां लक्षस्य तेषामधिपतिश्च सः । योऽथ पञ्चशती येषामेकैकमनुधावति ॥ ५७
तैर्दस्युभिः स मुष्णाति सार्थान्दलयति द्विषः । भुङ्क्ते महाटवीं चैतां तांस्तानगणयन्नृपान् ॥ ५८
एतन्मुनिसुताच्छ्रुत्वा तमामन्त्र्य स सानुगः । मृगाङ्कदत्तस्तेनैव मार्गेण त्वरितं ययौ ॥ ५९
प्रापच्च तस्य करभग्रीवस्य निकटं क्रमात् । मातङ्गराजकोट्टस्य भिल्लपल्लीसमाकुलम् ॥ ६०
ददर्शादूरतश्चात्र शबरौघानितस्ततः । बर्हिबर्हेभदशनव्याघ्रचर्ममृगामिषान् ॥ ६१
तिर्यञ्च इव जीवन्ति पश्यतारण्यवृत्तयः । चित्रं तदप्यमी दुर्गपिशाचं ब्रुवते प्रभुम् ॥ ६२
नास्त्येवाराजकं किंचिद्बत कोऽपि प्रजास्वहो । राजशब्दः सुरैः सृष्टो मात्स्यन्यायभयादयम् ॥ ६३
एवं मृगाङ्कदत्तस्तान्भिल्लान्वीक्ष्य सखीन्ब्रुवन् । यावत्स करभग्रीवकोट्टमार्गं विवित्सति ॥ ६४
तावन्मायावटोस्तस्य तत्रादावभ्युपेयुषः । तं पूर्वदृष्टं ददृशुश्चाराः शबरभूभृतः ॥ ६५
ते मायावटवे तस्मै गत्वा सद्यो न्यवेदयन् । तदागमं ससैन्यश्च सोऽपि प्रत्युज्जगाम तम् ॥ ६६
निकटीभूय दृष्ट्वा च मुक्तवाहः प्रधाव्य सः । पपात पादयोस्तस्य राजसूनोः पुलिन्दराट् ॥ ६७
कृतकण्ठग्रहं राजा स पृष्टकुशलश्च तम् । सामात्यं वाहनारूढमनैषीत्कटकं निजम् ॥ ६८
प्राहिणोच्च प्रतीहारं तदागमनशंसिनम् । तस्मै मातङ्गराजाय निजं स शबराधिपः ॥ ६९
आजगाम च मातङ्गराजः सोऽपि स्वदेशतः । द्रुतं दुर्गपिशाचोऽत्र नाम्नो बिभ्रद्यथार्थताम् ॥ ७०
शिलाकूटकठोराङ्गस्तमालमलिनच्छविः । पुलिन्दाश्रितपादश्च विन्ध्याचल इवापरः ॥ ७१

भ्रुकुट्या भीषणमुखः प्रकृत्यैव त्रिशाखया। स्वीकर्तुं विन्ध्यवासिन्या त्रिशूलेनेव चिह्नितः॥
तरुणः क्षपिताशेषवया अप्यसुदर्शनः। कृष्णोऽप्यनन्यसेवी च भूभृत्पादोपजीव्यपि॥
नवाभ्र इव मायूरपिच्छचित्रधनुर्धरः। हिरण्याक्ष इवोद्दामवराहक्षतविग्रहः॥
घटोत्कच इवोत्सिक्तभीमरूपधरो बली। कलिकाल इवाधर्मनिरतोच्छृङ्खलप्रजः॥
आययौ च बलाभोगस्तस्यापूरितभूतलः। मुक्तोऽर्जुनभुजासङ्गात्प्रवाह इव नार्मदः॥
शिलाकलापो लुठितः किमञ्जनगिरेरयम्। किमुताकालकल्पान्तमेघौघः पतितो भुवि॥
इति शङ्कां स विदधच्चण्डालानीकिनीचयः। प्रससर्पासितच्छायामलिनीकृतदिङ्मुखः॥
उपगम्य च तत्स्वामी दूरान्न्यस्तशिराः क्षितौ। मृगाङ्कदत्तं तं दुर्गपिशाचः प्रणनाम सः॥
उवाच चाद्य देवी मे प्रसन्ना विन्ध्यवासिनी। उचितोचितवंशो यद्गृहान्प्राप्तो भवान्मम॥
तद्धन्योऽस्मि कृतार्थोऽस्मीत्युक्त्वा तस्मायुपायनम्। मातङ्गराजः स ददौ मुक्ताकस्तूरिकादिकम्॥
सोऽप्यभ्यनन्दत्प्रीत्या तं राजपुत्रो यथोचितम्। ततस्तत्रैव सर्वे ते चक्रुः सेनानिवेशनम्॥
आलानबद्धैर्द्विरदैस्तुरगैर्मन्दुराश्रितैः। कृतास्पदैश्च पादातैः स्थगिता सा महाटवी॥
आजन्मापूर्वनगरीभावसंप्राप्तिसंपदा। घूर्णमानेव तत्कालं नैव स्वात्मन्यवर्तत॥
ततोऽत्र काननोद्याने विहितस्नानमङ्गलम्। कृताहारं सुखासीनमेकान्ते सचिवान्वितम्॥
मायाबटौ स्थिते दुर्गपिशाचः स कथान्तरे। मृगाङ्कदत्तमवदत्प्रीतिप्रश्रयपेशलम्॥
मायाबटुरयं राजा बहुकालमिहागतः। त्वन्निदेशप्रतीक्षः सन्स्वामिन्साकं मया स्थितः॥
तद्राजपुत्र युष्माभिः कुत्र स्थितमियच्चिरम्। किं कृतं चेति कार्यं स्वमस्मान्बोधयताधुना॥
एतत्तद्वचनं श्रुत्वा राजपुत्रो जगाद सः। तदा मायाबटोरस्य गृहाद्विमलबुद्धिना॥
गुणाकरेण च समं प्राप्य भीमपराक्रमम्। गत्वा श्रुतधिया साकं चिन्वतान्यान्सखीन्मया॥
प्राप्तः प्रचण्डशक्तिश्च विचित्रकथ एष च। मार्गक्रमेण चैषोऽपि ततो विक्रमकेसरी॥
ततो वरसरस्तीरे प्राप्य विघ्नेशपादपम्। फलार्थमधिरुह्यैते तच्छापात्फलतां गताः॥
आराध्याथ गणेशं तं कथंचिन्मोचिता मया। शेषाश्चादौ तथाभूतास्तत्र मुक्तास्तथैव मे॥
दृढमुष्टिरयं व्याघ्रसेनमेघबलाविमौ। स्थूलबाहुरसौ चेति चत्वारः सचिवा इमे॥
एतैः प्राप्तैः समं सर्वैरहमुज्जयिनीमगाम्। तस्यां च गुप्तद्वारायां प्रवेशोऽप्यभवन्न नः॥
कुतः शशाङ्कवत्यास्तु हरणोपायचिन्तनम्। सैन्यहीनस्य चाभून्मे न दूतप्रेषणार्हता॥
ततः संमन्त्र्य युष्माकमागता निकटं वयम्। इदानीं सिद्धये यूयं प्रमाणमिह नः सखे॥
एवं मृगाङ्कदत्तेन स्ववृत्तान्तेऽभ्युदीरिते। सोऽथ दुर्गपिशाचस्तं समायाबटुरब्रवीत्॥
धीरो भव कियत्कार्यमेतदस्माभिरञ्जसा। प्राणाः प्रथममेवैते त्वदर्थमुपकल्पिताः॥
आनयामोऽत्र तं बद्ध्वा कर्मसेनं महीभृतम्। प्रसह्य च हरामोऽस्य तां शशाङ्कवतीं सुताम्॥
इति मातङ्गराजेन समायाबटुनोदिते। मृगाङ्कदत्तः सप्रीतिबहुमानमभाषत॥
किं न संभाव्यते युष्मास्वियमेव हि वक्ति वः। प्रतिपन्नसुहृत्कार्यनिर्वाहं धीरसत्त्वता॥
दार्ढ्यं विन्ध्याद्रितः शौर्यं व्याघ्रेभ्यो मित्ररागिताम्। वनाब्जिनीभ्यश्चादाय यूयं धात्रेह निर्मिताः
तद्विचार्य यथायुक्तं कुरुध्वमिति वादिनि। मृगाङ्कदत्ते दिनकृद्विशश्रामास्तमस्तके॥
ततस्तत्र त्रियामां तां स्कन्धावारे विशश्रमुः। ते कर्मान्तिककॢप्तेषु निवेशेषु यथोचितम्॥
प्रातर्मृगाङ्कदत्तश्च विससर्ज गुणाकरम्। किरातराजमानेतुं सुहृदं शक्तिरक्षितम्॥
तेन गत्वोक्तवृत्तान्तः स्वल्पैरेव दिनैश्च सः। तद्युक्तोऽतिमहासैन्यः किरातपतिराययौ॥
पदातिलक्षदशकं द्वे लक्षे वाजिनामपि। महावीराधिरूढानामयुतं मत्तदन्तिनाम्॥
अष्टाशीतिसहस्राणि रथानां च महीपतिम्। अन्वाययुर्ध्वजच्छत्रसंछादितनभांसि तम्॥
मृगाङ्कदत्तश्च मुदा प्रत्युद्गम्याभिपूज्य तम्। प्रावेशयत्सकटकं ससुहृत्सचिवो नृपम्॥

तङ्गराजस्य येऽप्यन्ये मित्रबान्धवाः । मायाबटोश्च तद्दत्तदूताः सर्वेऽप्युपाययुः ॥ १११
लसन्नादः संमिलद्वाहिनीशतः । मृगाङ्कदत्तहृदयानन्दः शिबिरवारिधिः ॥ ११२
मदैर्वन्यैर्मांसभारैः फलासवैः । तान्स दुर्गपिशाचोऽत्र नृपतीन्समम‍ानयत् ॥ ११३
लेपनाहारपानशय्याद्यनुत्तमम् । सर्वेभ्यः शबराधीशो मायाबटुरुपाहरत् ॥ ११४
त्तश्चैकत्र बुभुजे निखिलैः सह । तैर्यथोचितभूभागेषूपविष्टैर्नरेश्वरैः ॥ ११५
तङ्गराजं तं सोऽग्रे दूरादभोजयत् । कार्यं देशश्च कालश्च गरीयान्न पुनः पुमान् ॥ ११६
च नवायाते किरातादिबले ततः । मृगाङ्कदत्तः सोऽन्येद्युर्दन्तिदन्तासनस्थितः ॥ ११७
राजलोकस्य यथार्हकृतसत्क्रियः । विजनीकृत्य मातङ्गराजादीन्सुहृदोऽब्रवीत् ॥ ११८
कालहारः किं क्रियते किं न गम्यते । अनेन सर्वसैन्येन शीघ्रमुज्जयिनीं प्रति ॥ ११९
श्रुतधीर्विप्रो राजपुत्रं जगाद तम् । शृणु देव वदाम्यत्र यथा नीतिविदां मतम् ॥ १२०
ार्यविभागः प्राग्बोद्धव्यो विजिगीषुणा । असाध्यं यदुपायेन तदकार्यं परित्यजेत् ॥ १२१
यदुपायेन साध्यं तत्र चतुर्विधः । उपायः साम दानं च भेदो दण्ड इति स्मृतः ॥ १२२
र्वो वरस्तेषां निकृष्टश्च परः परः । तस्मात्सामप्रयोगस्ते पूर्वं देवेह युज्यते ॥ १२३
कर्मसेने हि राज्ञि दानं न सिद्धये । न भेदो नहि सन्त्यस्य क्रुद्धलुब्धावमानिताः ॥ १२४
दुर्गदेशस्थे तस्मिन्नतिबलाधिके । नृपैरजितपूर्वेऽन्यैः प्रयुक्तः संशयावहः ॥ १२५
स्था च युद्धेषु जयश्रीर्बलिनामपि । न च कन्यार्थिनो युक्तः कर्तुं तद्बान्धवक्षयः ॥ १२६
राज्ञः साम्नैव दूतस्तावद्विसृज्यताम् । तदसिद्धौ हठायातो दण्ड एव प्रयोक्ष्यते ॥ १२७
श्रुतधेर्वाक्यं सर्वे तत्र तथेति ते । श्रद्दधुः प्रशशंसुश्च तस्य मन्त्रक्रमज्ञताम् ॥ १२८
मन्त्र्य तैरेव समं दूतगुणान्वितम् । किरातराजानुचरं तदाख्यातं द्विजोत्तमम् ॥ १२९
वेग्रहं नाम कर्मसेनाय भूभृते । मृगाङ्कदत्तो व्यसृजल्लेखसंदेशहारिणम् ॥ १३०
ोज्जयिनीं दूतः प्रतीहारनिवेदितः । वल्गभाश्वद्विपाकीर्णकक्ष्यान्तरमनोरमम् ॥ १३१
राजभवनं सिंहासनगतं नृपम् । ददर्श कर्मसेनं तं मन्त्रिभिः परिवारितम् ॥ १३२
चासनासीनः स पृष्टकुशलः क्रमात् । राज्ञाभिनन्दितस्तेन लेखं तस्मै समर्पयत् ॥ १३३
तं च तन्मन्त्री मुद्राक्षेपप्रसारितम् । प्रज्ञाकोषाभिधानोऽत्र स्पष्टमेवमवाचयत् ॥ १३४
श्रीकरभग्रीवकोट्टमूलाटवीतटात् । महाराजाधिराजस्य पुत्रोऽयोध्यापुरीपतेः ॥ १३५
ऽमरदत्तस्य महीमण्डलमण्डनम् । श्रीमान्मृगाङ्कदत्तोऽत्र प्रह्वोपनतराजकः ॥ १३६
न्यां महाराजकर्मसेनस्य सादरम् । निजवंशपयोधीन्दोरिदं संदिशति स्फुटम् ॥ १३७
तवास्ति सावश्यं देयान्यस्मै प्रयच्छ तत् । मह्यं तां सदृशी सा मे भार्यादिष्टा हि दैवतैः ॥ १३८
बन्धुभावः स्यान्नश्येत्पूर्वा च वैरिता । नो चेन्निजभुजावेव प्रार्थयिष्येऽत्र वस्तुनि ॥ १३९
वाचिते लेखे प्रज्ञाकोषेण मन्त्रिणा । राजा सकोपः सचिवान्कर्मसेनो जगाद सः ॥ १४०
ास्ते सदास्माकमनात्मज्ञेन तेन च । एतत्तथैव संदिष्टं पश्यताद्यासमञ्जसम् ॥ १४१
भिलिखितः पूर्वं वयं पश्चादवज्ञया । दर्पाध्मातेन पर्यन्ते बाहुवीर्यमुदीरितम् ॥ १४२
प्रतिसंदेशो योग्यः कन्याकथैव का । गच्छ दूत भवत्स्वामी यत्स वेत्ति करोतु तत् ॥ १४३
ः कर्मसेनेन राज्ञा दूतोऽत्र स द्विजः । सुविग्रहस्तमोजस्वी क्रमायातमभाषत ॥ १४४
राजपुत्रं तं संप्रत्योजायसे जड । सज्जो भवागते तस्मिन्वेत्स्यसि स्वपरान्तरम् ॥ १४५
ानोदिते राजसभा क्षोभमियाय सा । गच्छावध्योऽसि किं कुर्म इति क्रुद्धोऽभ्यधान्नृपः ॥ १४६
त्र दन्तदष्टौष्ठा मृद्नन्तः स्वान्करान्करैः । किं नाधुनैव गत्वा तं हन्म इत्यब्रुवन्मिथः ॥ १४७
ं बटुवाचाटस्यास्य किं कुप्यते गिरा । द्रक्ष्यते यत्करिष्याम इत्यूचुर्धैर्यतः परे ॥ १४८
ः केचिदासन्नचापरोपणसूचनम् । कुर्वन्त इव निःशब्दं तस्थुः कोपारुणैर्मुखैः ॥ १४९

एवं सभायां क्रुद्धायां स निर्गत्य सुविग्रहः। दूतो मृगाङ्कदत्तस्य पार्श्वं स्वकटकं ययौ ॥ १
तस्मै स कर्मसेनोक्तं समित्राय शशंस तत्। सोऽप्यादिदेश तच्छ्रुत्वा यात्रां सैन्ये नृपात्मजः ॥ १

ततः स्वाम्यादेशप्रबलपवनापातविधुतो बलाम्भोधिर्धावन्नरतुरगमातङ्गमकरः।
सपक्षाणां तन्वन्मनसि परितोषं क्षितिभृतां स संप्राप क्षोभं प्रतिभयकरं कातरनृणाम् ॥ १

क्षितिमथ विदधद्बलाश्वलालागजमदकर्दमितां मृगाङ्कदत्तः।
बधिरितभुवनः स तूर्यनादैरुदचलदुज्जयिनीं शनैर्जयाय ॥ १

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके पञ्चत्रिंशस्तरङ्गः।

---

षट्त्रिंशस्तरङ्गः।

ततः स विन्ध्यमुल्लङ्घ्य प्राप संनद्धसैनिकः। मृगाङ्कदत्तः सीमान्तमुज्जयिन्याः सुहृद्युतः ॥
तद्बुद्ध्वा कर्मसेनोऽपि राजास्य सबलोऽग्रतः। धीरो युद्धाय संनह्य नगर्या निरगात्ततः ॥
निकटीभूय चान्योन्यदर्शिन्योरुभयोस्तयोः। तत्सेनयोः प्रववृते सङ्ग्रामो वीरहर्षणः ॥
नृसिंहनादवित्रस्तभग्नक्लीबासुराकुलः। सोऽभूद्धिरण्यकशिपोर्निवास इव संगरः ॥
संतता विनिकृन्तन्तो घना गगनगामिनः। सुभटेष्विषवः पेतुः सस्येषु शलभा इव ॥
खड्गाहतेभकुम्भोत्थो बभौ मुक्ताफलोत्करः। संरम्भत्रुटितो हार इव तत्समरश्रियः ॥
तीक्ष्णकुन्ताग्रदशनं ग्रस्ताश्वनरकुञ्जरम्। कृतान्तस्येव वदनं तद्विरेजे रणाजिरम् ॥
उत्पेतुर्भल्ललूनानि शिरांसि भुजशालिनाम्। दिवि दत्तोर्ध्वझम्पानि दिव्यस्त्रीरिव चुम्बितुम् ॥
कबन्धा ननृतुश्चात्र सुभटानां पदे पदे। निर्भासितोत्तमस्वामिसंगरप्रमदादिव ॥
एवं च पञ्चदिवसान्वहच्छोणितनिम्नगः। आसीत्करङ्ककूटाढ्यः स शूरान्तकरो रणः ॥
पञ्चमेऽह्नि रहः सायं तं समेतं स्वमन्त्रिभिः। मृगाङ्कदत्तं श्रुतधिर्विप्रोऽभ्येत्य जगाद सः ॥
युष्मासु समरव्यग्रेष्वितो भिक्षुकरूपिणा। गत्वा निराकुलद्वारां प्रविश्योज्जयिनीं मया ॥
निकटादप्यदृश्येन भूत्वा विद्याप्रभावतः। यदन्विष्टं यथावत्तच्छृणु देव वदामि ते ॥
यदैव कर्मसेनोऽसौ राजा युद्धाय निर्गतः। तदैवानुज्ञया मातुः सा शशाङ्कवती गृहात् ॥
निर्गत्य तत्पुरीवर्तिगौर्यायतनमाश्रिता। तामाराधयितुं देवीं श्रेयोऽर्थं समरे पितुः ॥
तत्रस्था च रहस्येकां सखीमाप्तामुवाच सा। मत्कृते सखि तातस्य विग्रहोऽयमुपागतः ॥
आक्रान्तश्चार्पयेदेष तस्मै राजसुताय माम्। गणयन्ति न राज्यार्थेऽपत्यस्नेहं महीभुजः ॥
न च जानेऽनुरूपः किं स मे राजसुतो न वा। कामं हि मृत्युमिच्छेयं न विरूपमहं पतिम् ॥
मन्ये रूपाभिसंपन्नो दरिद्रोऽपि वरं पतिः। न विरूपः पुनः कृत्स्नपृथिवीचक्रवर्त्यपि ॥
तत्कीदृगिति गत्वा तं विलोक्यागच्छ सैन्यतः। प्रज्ञानेन च नाम्ना च शुभे चतुरिका ह्यसि ॥
एवं सखी तयोक्ता सा युक्त्या कटकमेत्य नः। त्वां विलोक्य विभो गत्वा राजपुत्रीमुवाच ताम् ॥
किमन्यत्सखि सा जिह्वा जाने नास्त्यपि वासुकेः। या शक्ता गदितुं तस्य रूपं राजसुतस्य तत् ॥
ब्रवीमि पुनरेतावद्यथा नान्या समास्ति ते। नारी रूपेण मनुजस्तथा नान्योऽस्ति तत्समः ॥
अत्यल्पं धिङ्मयोक्तं वा मन्ये ह्यस्मिञ्जगत्त्रये। न सिद्धो नापि गन्धर्वो न देवोऽप्यस्ति तादृशः ॥
एवं सखीगिरा तस्यास्त्वयि न्यस्तं च मानसम्। शशाङ्कवत्याः कामेन कीलितं च समं शरैः ॥
तत्क्षणात्प्रभृति श्रेयस्कामा तव पितुश्च सा। कृशीभवन्ती तपसा स्थिता त्वद्विरहेण च ॥
तद्युष्मं निशि गत्वाद्य हृत्वा गौर्याश्रमात्ततः। विजनादानयत तां राजपुत्रीमलक्षितम् ॥
यात मायाबटोरस्य गृहानेते नृपास्ततः। पश्चात्प्रकोपं रक्षित्वा तत्रैष्यन्ति समं मया ॥
निवर्ततामिदं युद्धं मा स्म भूत्सैन्यसंक्षयः। अस्तु वः कुशलं देहे राज्ञस्त्वच्छ्वशुरस्य च ॥
गतिरेषा ह्यगतिका युद्धं प्राणार्पणेन यत्। उपायेषु जघन्योऽयमुपायो गीयते बुधैः ॥

श्रुतधिना स गुप्तं प्रययौ निशि । मृगाङ्कदत्तस्तत्राश्वानारुह्य सचिवैः सह ॥ ३१
ालशेषां तां विवेशोज्जयिनीं च सः । गत्वैव संवृतद्वारां सुप्तैः स्वल्पैश्च रक्षिभिः ॥ ३२
धिना दत्तैरभिज्ञानैः सुलक्षितम् । ख्यातं पुष्पकरण्डाख्यमहोद्यानान्तरस्थितम् ॥ ३३
ङ्कृतप्राचीमुखेन शशिना करैः । प्रकाशितं राजसुतस्तं स गौर्याश्रमं ययौ ॥ ३४
रिचर्यादिश्रान्ते सुप्ते सखीजने । सा शशाङ्कवती तत्र वीतनिद्रा व्यचिन्तयत् ॥ ३५
त राजानो राजपुत्रा दिने दिने । वीरास्ते ते च हन्यन्ते समित्युभयसैन्ययोः ॥ ३६
जसुतो देव्या स्वप्ने ह्यम्बिकयानया । आदिष्टः पूर्वभर्ता मे मदर्थप्रार्थिताहवः ॥ ३७
यमाच्छिद्य दत्त्वा शरपरम्पराम् । सिद्धलक्षेण कामेन नीत्वा तस्मै समर्पितम् ॥ ३८
मन्दपुण्यां मां नैव तस्मै प्रदास्यति । पूर्ववैराच्च दर्पाच्च लेखादित्यद्य हि श्रुतम् ॥ ३९
प्तौ च कः स्वप्नदेवतादेशनिश्चयः । प्रियप्राप्तौ च पश्यामि न कांचित्सर्वथा दिशम् ॥ ४०
ाहितं किंचित्तस्य तातस्य वा रणे । शृणोमि तावदात्मानं हताशं न त्यजामि किम् ॥ ४१
प्र पुरो गत्वा गौर्याः साशोकपादपे । पाशं विरचयामास स्वोत्तरीयेण दुःखिता ॥ ४२
ाङ्कदत्तोऽपि सवयस्यः प्रविश्य तम् । उद्यानं तरुबद्धाश्वो गौर्यागाराश्रमं गतः ॥ ४३
प्रचिवेनाराद्राजपुत्रीं विलोक्य ताम् । मृगाङ्कदत्तो जगदे स्वैरं विमलबुद्धिना ॥ ४४
ात्र काप्येषा पाशेन वरकन्यका । उद्यता हन्तुमात्मानं तत्का नाम भवेदियम् ॥ ४५
त्र विलोक्यैतां राजसूनुरुवाच सः । अहो केयं रतिः किंस्विद्रूपिणी किमु निर्वृतिः ॥ ४६
कान्तिरिन्दोर्वा मन्मथाज्ञाथ जङ्गमा । किं वामराङ्गना नैवमासां पाशोद्यमः कथम् ॥ ४७
इह तिष्ठामः पादपान्तरिताः क्षणम् । यावज्जानीमहे केयमिति व्यक्तं कथंचन ॥ ४८
ा सवयस्योऽत्र यावच्छन्नः स तिष्ठति । सा शशाङ्कवती तावद्गिरा देवीं व्यजिज्ञपत् ॥ ४९
न्मनि चेद्देवि न स राजसुतः पतिः । देवो मृगाङ्कदत्तो मे निष्पन्नः पूर्वदुष्कृतैः ॥ ५०
देन तद्भूयादन्यस्मिन्नपि जन्मनि । स भर्ता गौरि भगवत्यापन्नार्तिहरे मम ॥ ५१
ज्ञप्य देवीं सा राजपुत्री प्रणम्य च । कण्ठे समर्पयामास पाशं बाष्पार्द्रलोचना ॥ ५२
च प्रबुद्ध्यैव तददर्शनविह्वलाः । चिन्वन्त्यः सहसा तस्याः सख्योऽन्तिकमुपाययुः ॥ ५३
किमिदमारब्धं सखि धिक्साहसं त्वया । इत्युक्त्वैव च तास्तस्याः पाशं कण्ठादपाहरन् ॥ ५४
तविषण्णा सा यावद्बालात्र तिष्ठति । उदभूद्भारती तावद्गौरीगर्भगृहान्तरात् ॥ ५५
ादं कृथाः पुत्रि शशाङ्कवति नैव तत् । वचो मृषा मे यत्स्वप्ने तवोक्तं सुभगे मया ॥ ५६
मृगाङ्कदत्तो हि पूर्वभर्ता तवान्तिके । प्राप्त एव प्रजानेन सह भुङ्क्ष्वाखिलां भुवम् ॥ ५७
सहसा वाणीं सा शशाङ्कवती शनैः । यावद्विलोकयत्यत्र पार्श्वे किंचित्ससाध्वसा ॥ ५८
गाङ्कदत्तस्य मन्त्री विक्रमकेसरी । तामुपागम्य वक्ति स्म दर्शयन्नग्रपाणिना ॥ ५९
त्यं भवान्या ते समादिष्टमयं हि सः । राजपुत्रः पतिः प्रेमपाशाकृष्टस्तवाग्रतः ॥ ६०
ा सा ततस्तिर्यङ्न्यस्तदृष्टिर्ददर्श तम् । कान्तं तेजस्विनं मध्यवर्तिनं सहचारिणाम् ॥ ६१
रिवृतं चन्द्रमवतीर्णमिवाम्बरात् । रूपोपमानमन्येषाममृतस्यन्दनं दृशोः ॥ ६२
तदनङ्गेषुपुङ्खपक्ष्मचितैरिव । अङ्गैः कण्टकितैर्यावदास्ते सा स्तम्भनिश्चला ॥ ६३
गाङ्कदत्तस्तामुपेत्य त्याजयन्ह्रियम् । स कालोचितमाह स्म गिरा प्रेममधुश्च्युता ॥ ६४
त्वा निजं देशं राज्यं बन्धूंश्च दूरतः । दासीकृत्याहमानीतो गुणैर्बद्धा नताङ्गि ते ॥ ६५
ारण्यवासस्य वसुधाशयनस्य च । फलाहारस्य तीव्रार्कतापसंसेवनस्य च ॥ ६६
ष्टस्य तन्वङ्गि संप्राप्तं फलमीदृशम् । यद्दृष्टा नेत्रपीयूषवृष्टिरेषा तनुस्तव ॥ ६७
नेहानुरोधश्च मयि ते हरिणाक्षि तत् । अस्मत्पुरीपुरंध्रीणां प्रयच्छ नयनोत्सवम् ॥ ६८
: शाम्यतु श्रेयो भवतूभयपक्षयोः । कृतार्थं जायतां जन्म सह गुर्वाशिषा मम ॥ ६९

एवं मृगाङ्कदत्तेन सा शशाङ्कवती तदा । उक्ता जगाद वसुधाविन्यस्तनयना शनैः ॥
अयं तावद्गुणक्रीतो जनः स्वाधीन एव ते । तदार्यपुत्र कुशलं यदवैषि कुरुष्व तत् ॥
इति वाक्सुधया तस्याः कृती निर्वापितोऽथ सः । मृगाङ्कदत्तो देवीं तां गौरीं स्तुत्वा प्रणम्य च
आरोप्य राजपुत्रीं च तां तुरंगे स्वपृष्ठतः । तत्सखीभिः समारूढपश्चाद्भागाश्वपृष्ठगैः ॥
दशभिः सहितो वीरैः सचिवैः शस्त्रपाणिभिः । उच्चचाल ततो रात्रौ राजपुत्रो धृतायुधः ॥
ते चैकादश दृष्ट्वापि तत्र रोद्धुं न शेकिरे । नगरीरक्षिभिः क्रुद्धा रुद्रा इव दुरासदाः ॥
विनिर्गत्योज्जयिन्याश्च जग्मुर्मायाबटोर्गृहम् । सशशाङ्कवतीकास्ते यथा श्रुतधिनोदितम् ॥
क एते क प्रयाताश्चेत्युद्भ्रान्तेष्वत्र रक्षिषु । सा चोज्जयिन्यां बुबुधे क्रमाद्राजसुता हृता ॥
तच्चाख्यातुं महादेवी कर्मसेनाय भूभृते । सत्वरं नगराध्यक्षं प्राहिणोत्कटकं प्रति ॥
अत्रान्तरे च कटके तत्र रात्रावुपेत्य तम् । चाराधिकारी राजानं कर्मसेनं व्यजिज्ञपत् ॥
देव प्रदोष एवाद्य गुप्तं निर्गत्य सैन्यतः । मृगाङ्कदत्तः सामात्यो हयैरुज्जयिनीं गतः ॥
तां शशाङ्कवतीं हर्तुं गौर्यायतनवर्तिनीम् । इति सम्यङ् मया ज्ञातं प्रभुर्जानात्यतः परम् ॥
इत्याकर्ण्य समाहूय कर्मसेनः स भूपतिः । रहः स्वसेनापतये यथाश्रुतमवर्णयत् ॥
जगाद च वराश्वानां सहितः पञ्चभिः शतैः । शूराधिरूढैः प्रच्छन्नं द्रुतमुज्जयिनीं व्रज ॥
मृगाङ्कदत्तं जहि तं पापं प्राप्य बधान वा । विद्धि मामागतं पश्चात्पृष्ठस्थापितसैनिकम् ॥
इत्युक्तस्तेन राज्ञा स यथादिष्टबलान्वितः । प्रायात्सेनापती रात्रौ तथेत्युज्जयिनीं प्रति ॥
मार्गे तन्नगराध्यक्षान्मिलितादशृणोच्च सः । राजपुत्रीं हृतां वीरैः यथान्येनैव कैश्चन ॥
ततः सनगराध्यक्षः प्रत्यागत्य तथैव तत् । कर्मसेनं स राजानं यथावृत्तमबोधयत् ॥
स तद्बुद्ध्वा विचिन्त्यैव तदशक्यं ततो नृपः । अवस्कन्दनिवृत्तस्तां तूष्णीमेवानयन्निशाम् ॥
मृगाङ्कदत्तसैन्येऽपि मायाबटुमुखा नृपाः । निन्युस्तथैव तां रात्रिं संनद्धाः श्रुतधेर्गिरा ॥
प्रातश्चान्विष्टवृत्तान्तः कर्मसेननृपः सुधीः । मृगाङ्कदत्तकटके राज्ञां दूतं विसृष्टवान् ॥
मृगाङ्कदत्तेन हृता सुता तावच्छलेन मे । तदस्तु कोऽपरो ह्यस्यास्तादृशः सदृशः पतिः ॥
तदिदानीं स युष्माभिः सममायातु मद्गृहम् । करोमि यावदुद्वाहं तनयाया यथाविधि ॥
एवं स संदिदेशास्य मुखे दूतस्य भूपतिः । तच्च ते सश्रुतधयो राजानः श्रद्दधुस्तदा ॥
ऊचुश्च दूतं स्वपुरीं तर्हि यात्वेष वः प्रभुः । यावत्तमानयामोऽत्र गत्वा राजसुतं वयम् ॥
तच्छ्रुत्वैव तथा तेन गत्वा दूतेन वर्णिते । स कर्मसेनः सबलस्तथेत्युज्जयिनीमगात् ॥
तद्दृष्ट्वा तेऽपि राजानो मायाबटुपुरःसराः । मृगाङ्कदत्तं प्रति तं चेलुः श्रुतधिना सह ॥
तावन्मृगाङ्कदत्तोऽपि स शशाङ्कवतीयुतः । मायाबटुगृहं प्राप तत्काञ्चनपुरं पुरम् ॥
तत्र सोऽन्तःपुरैस्तस्य यथार्हकृतसत्क्रियः । सवयस्यो विशश्राम सिद्धकार्यः प्रियासखः ॥
अन्येद्युः सश्रुतधयो नृपास्तेऽत्र समाययुः । स किरातपतिर्वीरः ससैन्यः शक्तिरक्षितः ॥
शबराधिपतिः सोऽपि राजा मायाबटुर्बली । शूरो दुर्गपिशाचश्च स मातङ्गचमूपतिः ॥
सर्वे शशाङ्कवत्या ते युक्तं रात्र्येव कैरवम् । मृगाङ्कदत्तं दृष्ट्वा तमभ्यनन्दन्कृतोत्सवाः ॥
यथार्हकृतमानाय तस्मै तं च न्यवेदयन् । संदेशं कर्मसेनीयं प्रवेशं च निजे गृहे ॥
संनिवेश्याथ कटकं चलन्नगरसंनिभम् । मृगाङ्कदत्तो मन्त्राय समं सर्वैरुपाविशत् ॥
विवाहायोज्जयिन्यां किं गन्तव्यमुत नो मया । उच्यतामिति पप्रच्छ नृपतीन्सचिवांश्च सः ॥
दुष्टः स राजा तद्गेहगमने कुशलं कुतः । कार्यं च तत्र नास्त्येव प्राप्तैव हि तदात्मजा ॥
इत्यैकमत्येन नृपाः सचिवाश्चाब्रुवन्यदा । तदा मृगाङ्कदत्तस्तमपृच्छच्छ्रुतधिं द्विजम् ॥
उदासीन इव ब्रह्मंस्तूष्णीमेवं स्थितोऽसि किम् । किमेतदेवाभिमतं तवाप्युत न वा वद ॥
ततः श्रुतधिराह स्म यदि श्रोष्यसि वच्मि तत् । गन्तव्यं कर्मसेनस्य गृहेष्विति मतिर्मम ॥

येन हि संदिष्टमेतत्तेनान्यथा कथम् । सुतापहारे स बली युद्धं त्यक्त्वा गृहं व्रजेत् ॥ १०९
य च किं कुर्यात्प्राप्तस्यापि गृहं स ते । प्रीतिस्तु तत्र यातस्य भवेत्तेन समं तव ॥ ११०
ऽग्रे स च स्यान्नः स्नेहेन दुहितुः पुनः । नेच्छत्यविधिनोद्वाहं तेनैवं वक्ति तत्त्वतः ॥ १११
गमनं तत्रेत्युक्ते श्रुतधिना तदा । साधु साध्विति तत्रोचुः सर्वे श्रद्धाय तद्वचः ॥ ११२
ृगाङ्कदत्तस्तानवोचत्सर्वमस्त्वदः । किं तु तातं विनाम्बां च विवाहो मे न रोचते ॥ ११३
तातयोः कश्चिदाह्वानाय व्रजत्वितः । बुद्ध्वा च तदभिप्रायं करिष्यामो यथोचितम् ॥ ११४
वान्स संमन्त्र्य पित्रोः पार्श्वं स्वमन्त्रिणम् । तत्रस्थ एव व्यसृजद्वीरो भीमपराक्रमम् ॥ ११५
तत्रायोध्यायां पुरि राजा स तत्पिता । कालेनामरदत्तस्तज्ज्ञातवांस्तस्य लोकतः ॥ ११६
दत्तस्य कृतं देशनिर्वासनप्रदम् । विनीतमतिना मिथ्या राजपुत्रस्य पैशुनम् ॥ ११७
कुमन्त्रिणं कोपात्तं निहत्य स सान्वयम् । पुत्रनिर्वासनोदग्रदुःखकष्टामगाद्दशाम् ॥ ११८
च पुरीबाह्ये तस्थावायतने हरेः । राजा स नन्दिग्रामाख्ये चरन्दारैः समं तपः ॥ ११९
श्रते चिरात्तस्मिन्स चारावेदितागमः । अयोध्यां प्राप वाताश्ववेगाद्भीमपराक्रमः ॥ १२०
मपश्यदुद्विग्नां गतराजसुतां पुरीम् । रामप्रवासवैधुर्यकष्टं पुनरिवागताम् ॥ १२१
त्रस्य पृच्छद्भिर्वार्तां पौरैर्वृतोऽथ सः । तन्मुखाच्छ्रुतवृत्तान्तो नन्दिग्रामं ततो ययौ ॥ १२२
ोष्टसुतोदन्तसोत्सुकं महिषीयुतम् । ददर्शामरदत्तं तं तपःक्षामतनुं नृपम् ॥ १२३
पादपतितः कृतकण्ठग्रहं नृपम् । पृष्टोदन्तमवोचत्स सास्रं भीमपराक्रमः ॥ १२४
मृगाङ्कदत्तेन सूनुना ते स्ववीर्यतः । सा शशाङ्कवती देव कर्मसेननृपात्मजा ॥ १२५
ाहश्च देवेन विना देव्या च सर्वथा । न तस्य पितृभक्तस्य शोभनः प्रतिभासते ॥ १२६
ेन विसृष्टोऽहमिहैवागम्यतामिति । विज्ञापनाय धरणिन्यस्तमूर्ध्ना सुतेन वः ॥ १२७
माणो युष्मांश्च स काञ्चनपुरे स्थितः । शबराधिपतेर्देव राज्ञो मायाबटोर्गृहे ॥ १२८
दानीं च वृत्तान्तमित्युक्त्वा देशनिर्गमात् । आरभ्य सोऽटवीवासवियोगविषमायतम् ॥ १२९
र्द्र कर्मसेनीयसंध्यन्तं विविधाद्भुतम् । कृत्स्नं स्वप्रभुवृत्तान्तं जगौ भीमपराक्रमः ॥ १३०
ा सुतकल्याणे स राजा जातनिश्चयः । तदैवामरदत्तः स्वं हर्षात्प्रस्थानमादिशत् ॥ १३१
रूढः समं देव्या राजभिः सचिवैश्च सः । सहस्त्यश्वबलः प्रायात्पुत्रं प्रत्युत्सुकस्ततः ॥ १३२
ेव च स प्राप दिवसैरविलम्बितः । शबराधिपदेशस्थं सुतस्य कटकं नृपः ॥ १३३
व च तस्याग्रे समग्रै राजभिः सह । मृगाङ्कदत्तो निरगात्सवयस्यश्चिरोत्सुकः ॥ १३४
दूरात्तुरगादवतीर्यास्य पादयोः । गजावरूढस्य पितुर्मातुश्च निपपात सः ॥ १३५
ङ्गितः स च पितुः शरीरेण भुजान्तरम् । मनोरथेन हृदयं बाष्पैश्चापूरयद्दृशौ ॥ १३६
प्याश्लिष्य सुचिरात्पश्यन्ती तं मुहुः सुतम् । भूयो वियोगभीतेव न मोक्तुमशकच्चिरम् ॥ १३७
प्यमरदत्तं तं सदेवीकं नृपाः प्रभुम् । मृगाङ्कदत्तसुहृदस्तदाख्यातास्तदानमन् ॥ १३८
जा सापि तद्देवी दंपतीविधुरेषु तान् । सहायानेकपुत्रस्य स्नेहादभिननन्दतुः ॥ १३९
बटोः प्रविश्याथ राजधानीं विलोक्य च । स शशाङ्कवतीं तत्र तां पादावनतां स्नुषाम् ॥ १४०
ाप्राभृतो देव्या तया च स्नुषया सह । निर्गत्यामरदत्तः स्वे कटके वसतिं व्यधात् ॥ १४१
ा च तत्र पुत्रेण सह सर्वैश्च राजभिः । गीतवादित्रनृत्तैस्तन्निनाय ससुखं दिनम् ॥ १४२
च लब्धयशसा कृतिनं तेन सूनुना । मृगाङ्कदत्तेनात्मानं भाविना चक्रवर्तिना ॥ १४३
ा कर्मसेनेन राज्ञा तेन सुमेधसा । दूतो मृगाङ्कदत्तस्य संमन्त्र्यात्र व्यसृज्यत ॥ १४४
तुज्जयिनीं तावदिमां नैवागमिष्यति । तत्प्रेषयिष्याम्यत्रैव सुषेणाख्यमहं सुतम् ॥ १४५
शाङ्कवतीं तुभ्यं विधिवद्भगिनीं निजाम् । दास्यत्यतो नाविधिना सा विवाह्या त्वयानघ ॥ १४६
तत्स्नेहानुरोधश्चेदिति तं संदिदेश च । लेखे दूतमुखे चास्य राजसूनोः स भूपतिः ॥ १४७

राजास्थाने श्रुते तस्मिन्संदेशे राजसूनुना। तत्पिता तस्य दूतस्य स राजैवोत्तरं ददौ ॥
कर्मसेननृपात्कोऽन्यो वक्ष्येतत्तस्य सन्मतेः। स्नेहोऽस्ति काममस्मासु तदेनं प्रेषयत्वितः॥
सुषेणं स निजं पुत्रं करिष्यामस्तथा वयम्। यथा संतोषकृत्तस्य सुतोद्वाहो भविष्यति॥
इत्युक्त्वा प्रतिसंदेशं दूतं तं प्रेष्य सत्कृतम्। राजा सश्रुतधिं पुत्रं नृपतींश्च जगाद सः॥
अयोध्यामधुना यामो विवाहस्तत्र शोभते। सुषेणस्य च सत्कारो यथावत्तत्र सिद्ध्यति॥
राजा मायाबटुश्चेह सुषेणं संप्रतीक्षताम्। तेनागतेन सहितोऽयोध्यां पश्चादुपैष्यति॥
वयं विवाहसंभारहेतोर्यामोऽग्रतः पुनः। इति राजवचस्तत्र ते सर्वेऽप्यनुमेनिरे॥
ततोऽन्येद्युः समं देव्या सैन्यैश्च स महीपतिः। मृगाङ्कदत्तश्च युतौ राजभिः सचिवैश्च तैः॥
मायाबटुं निधायात्र सुषेणागमनावधि। शशाङ्कवत्या सहितौ चेलतुः कृतिनौ ततः॥
वल्गत्तुरंगसंघाततरङ्गशतसंकुलः। असंख्यसर्पत्पादातपाथःपूरितदिङ्मुखः॥
तुमुलप्रोल्लसच्छब्दपिहितान्यरवश्रवः। चचाल स बलाम्भोधिस्तयोर्गम्भीरभीषणः॥
कुर्वाणौ च रजश्छन्नां वसुधाविभ्रमां दिवम्। गजेंद्रजघनाकीर्णां वसुधां च द्युविभ्रमाम्॥
मार्गे क्रमेण गच्छन्तौ शक्तिरक्षितकस्य तौ। गृहं किरातराजस्य पितापुत्राववापतुः॥
तत्र तेन महारत्नहेमसद्वस्त्रराशिभिः। सदारेण कृतोदारसपर्यौ सपरिग्रहौ॥
दिनमेकं कृताहारौ विश्रम्य सबलौ ततः। प्रस्थाय च स्वनगरीमयोध्यां प्रापतुः क्रमात्॥
हर्म्यवातायनारूढचञ्चत्पौराङ्गनाननैः। कान्तिपल्लवितैः फुल्लविलोलकमलामिव॥
सवधूकचिरायातराजपुत्रेक्षणोत्सुकैः। नेत्रैः पारिप्लवैश्चासां चलत्कुवलयैरिव॥
संपतद्भिर्वृतां राजहंसैर्विविशतुश्च ताम्। तरङ्गितां पताकाभिः प्रवाते सरसीमिव॥
तत्राभ्यनन्दन्पौरास्तौ दीयमानाशिषौ द्विजैः। बन्दिभिः स्तूयमानौ च गीयमानौ च चारणैः॥
कर्मसेनस्य तनयामिमामालोकयेद्यदि। न पुनः सुतया लक्ष्म्या दर्पं कुर्यान्महोदधिः॥
न च गौर्यापि हिमवानित्यत्र च जगौ जनः। शशाङ्कवत्या लावण्यसंपदं वीक्ष्य विस्मितः॥
तदा च मङ्गलमहातूर्यप्रतिरवैर्दिशः। उत्सवाधिगमे राज्ञां संवेदनमिव व्यधुः॥
बहिः सृतेनेव भरादनुरागेण निर्भरा। सिन्दूरेण प्रनृत्ता सा सर्वाभूत्सोत्सवा पुरी॥
अन्येद्युर्गणकैः सूनोर्लग्नाहे निश्चिते नृपः। चकारामरदत्तोऽत्र तद्विवाहाय संभृतिम्॥
अपूरि तस्य नगरी तैस्तैर्नानादिगागतैः। रत्नैस्तथा यथा चक्रे सा कुबेरपुरीमधः॥
अथागत्याचिरादेको हृष्टद्वाःस्थनिवेदितः। दूतो मायाबटोरत्र नृपतिं तं व्यजिज्ञपत्॥
देवागतो राजपुत्रः सुषेणो नृपतिश्च सः। मायाबटुरयोध्यायाः सीमान्तेऽस्याः स्थितावुभौ॥
श्रुत्वैवामरदत्तस्तद्राजा सैन्यैः समं निजम्। सेनापतिं सुषेणस्य तस्याग्रे विससर्ज सः॥
तेन साकमयोध्यातो राजपुत्रमुपागतम्। मृगाङ्कदत्तः ससुहृत्प्रीत्या प्रत्युद्ययौ ततः॥
दूराद्वाहावतीर्णौ च कृतकण्ठग्रहौ मिथः। तावुभौ पृष्टकुशलौ मिलतः स्म नृपात्मजौ॥
प्रेम्णा चैकरथारूढौ नगरीं विशतः स्म ताम्। दिशन्तौ पौरनारीणां विलोचनमहोत्सवम्॥
सुषेणश्चात्र राजानं दृष्ट्वा तद्बहुमानितः। शशाङ्कवत्यास्तदनु स्वसुर्वासगृहं ययौ॥
तत्रोत्थाय कृताश्लेषस्तया बाष्पायमाणया। उपविश्य स सव्रीडां राजपुत्रीं जगाद ताम्॥
तातस्त्वामाह नायुक्तं पुत्रि किंचित्त्वया कृतम्। अद्यैतद्धि मया ज्ञातं यत्स्वप्नेऽम्बिकया तव॥
मृगाङ्कदत्तो भर्तासौ समादिष्टो नृपात्मजः। भर्तृमार्गानुसरणं स्त्रीणां च परमं व्रतम्॥
इत्युक्ता तेन सा बाला हृदयं स्वमधोमुखी। सिद्धमिष्टं तवेत्येवं पश्यन्ती विजहौ त्रपाम्॥
अथ तस्यै सुषेणोऽसौ नीत्वा राजाग्रतो ददौ। धनं शशाङ्कवत्यै तद्यत्तस्या निजसंचितम्॥
हेम्नो भारसहस्रे द्वे रत्नाभरणभारकम्। सुभृतान्पञ्च करभान्भाण्डं चान्यद्धिरण्मयम्॥

---

१ अयं श्लोको ब्रोकॉस्मुद्रिते पुस्तके त्रुटितोऽस्ति.

चैतदस्याः स्वं तातानुप्रेषितं तु यत् । विवाहवेद्यामस्यैतत्प्रदास्यामि क्रमादिति ॥ १८६
ेऽपि ते तत्र भुक्तपीता नृपान्तिके । मृगाङ्कदत्तादियुता निन्युस्तन्निर्वृता दिनम् ॥ १८७
ादिनेऽन्येद्युर्व्यग्रे राज्ञि स्वयं मुदा । मृगाङ्कदत्तः स्नानादि चकारात्मानुरूपतः ॥ १८८
ङ्कवतीं चात्र कान्त्यैव कृतकौतुकाम् । नार्यः प्रसाधयामासुराचार इति केवलम् ॥ १८९
कौतुकागारादथ व्यग्रसुषेणतः । हुताशनवतीं वेदीमध्यासातां वधूवरौ ॥ १९०
राजदुहितुस्तस्या राजसुतोऽग्रहीत् । धृताब्जशोभारुचिरं पाणिं लक्ष्म्या इवाच्युतः ॥ १९१
मपि तापाच्च धूमाच्चाग्निप्रदक्षिणे । अकोपेऽप्यरुणोद्बाष्पं तच्छशाङ्कवतीमुखम् ॥ १९२
लाजाञ्जलयो विकीर्णा विबभुस्तया । हासाः प्रयत्नसाफल्यहृष्टस्येव मनोभुवः ॥ १९३
जविसर्गे च सुषेणः प्रथमे तदा । पञ्चाश्वानां सहस्राणि वारणानां शतं तथा ॥ १९४
शते द्वे च नवतिं च करेणुकाः । भृताः सद्वस्त्रसद्रत्नमुक्ताभरणभारकैः ॥ १९५
ायजं वित्तं तदेव द्विगुणं क्रमात् । अन्येषु लाजमोक्षेषु प्रादात्तस्याः स सोदरः ॥ १९६

अथोल्लसत्युत्सवतूर्यनिःस्वने विवेश निष्पन्नविवाहमङ्गलः ।
मृगाङ्कदत्तः स नवोढया तया शशाङ्कवत्या सह मन्दिरं निजम् ॥ १९७
पिता च राजास्य यथार्हदत्तैर्हस्त्यश्वरत्नाभरणान्नपानैः ।
आ राजचक्रं शुकशारिकान्तं सोऽरञ्जयत्स्वाः प्रकृतीः सपौराः ॥ १९८
त्यागप्रकर्षश्च तदास्य राज्ञस्तेनैव पर्याप्ततयात्र जज्ञे ।
आबद्धवस्त्राभरणा वितेरुर्द्रुमा महीकल्पतरुभ्रमं यत् ॥ १९९
ततः स राजा समृगाङ्कदत्तः शशाङ्कवत्या सह राजभिश्च ।
भुक्त्वा सुषेणेन च साकमेतमापानगोष्ठ्या दिवसं निनाय ॥ २००
अथ सेवितनृत्तचर्चरीके गृहगे तत्र जने सुभुक्तपीते ।
परिपीतधरारसो गताध्वा रविरस्ताचलकंदरं विवेश ॥ २०१
तमवेक्ष्य च संध्यया समेतं नवरागोज्ज्वलया क्वचित्प्रयातम् ।
विचलत्खगमेखला किलेर्ष्याकुपितेवानुदधाववासरश्रीः ॥ २०२
ददृशे च विलोलतारकेण प्रबलीभूतमनोभुवा मुखेन ।
विलसत्तिमिरासितांशुकान्ता प्रसृता रात्र्यभिसारिका क्रमेण ॥ २०३
उदयाचलवारणाङ्कुशत्वं नवसिन्दूरसमुज्ज्वलो जगाम ।
उदयन्नथ कुप्यदायताक्षीकुटिलापाङ्गसहोदरः शशाङ्कः ॥ २०४
शशिना कृतकेलिकर्णपूरं रतिवल्लीनवपल्लवेन तेन ।
तमसोऽपगमे धृतप्रसादा हरिदैन्द्री हसदाननं बभार ॥ २०५
कृतसांध्यविधिश्च सोऽपि नक्तं नववध्वा सहितो मृगाङ्कदत्तः ।
प्रविवेश तया शशाङ्कवत्या रजनीवासगृहं महार्हशय्यम् ॥ २०६
मुखचन्द्रमसा तदाङ्गनाया निशि तस्याः प्रविलुप्ततामसेन ।
अवभासितचित्रभित्तिनान्तः पुनरुक्तीकृतसन्मणिप्रदीपम् ॥ २०७
शयनीयगतश्च तत्र तस्याः स्थितवत्याः परिवृत्य स प्रियायाः ।
अहरत्परिरभ्य चुम्बनेन क्रमशश्चाधरखण्डनेन लज्जाम् ॥ २०८
चिरकाङ्क्षितमन्वभूच्च मा मेत्यलमल्पोच्चरदक्षरं स तस्याः ।
नवमोहनमध्यसारसौख्यं त्रुटितस्फारमहार्हरत्नकाञ्चि ॥ २०९
अरमत लुलितालकेन चास्या मुखशशिनार्धनिमीलितेक्षणेन ।
श्रमवशशिथिलालसैश्च सोऽङ्गैर्विरलविलुप्तविलेपनै रतान्ते ॥ २१०

अथ तत्परिभोगलीलयेव क्षपिताक्षीयत सा तयोस्त्रियामा ।
विकसत्सुरतोत्सवाभिलाषप्रसरा प्रीतिरुपाययौ तु वृद्धिम् ॥
गता निशा संप्रति देव मुच्यतां विलासशय्या सुरतक्लमच्छिदः ।
अमी हि चूर्णालककम्पदायिनो मृगीदृशां वान्ति निशान्तवायवः ॥
चन्द्रं निशायाः सहसानुयान्त्या हारच्युतानीव च मौक्तिकानि ।
दूर्वावनाग्रेष्ववपिण्डितानि स्फुरन्ति सच्छायमुषोजलानि ॥
कोषेषु व्यलसन्निपीतमधवो ये कैरवाणां चिरं
लब्धाभ्यन्तरसुस्थिता विकसतामिन्दुप्रभासंगमे ।
ते संकोचमुपागतेषु विगलच्छ्रीकेषु तेष्वन्यतो
भृङ्गाः पश्य कुमार यान्ति मलिनाः कस्य स्थिरा ह्यापदि ॥
दिनकृत्करमण्डिताधरामवलोक्यैव निशां मनोभुवा ।
अपशशितिलकं वपुः कृतं मथितात्पाल्पतमोञ्जनं तथा ॥
इति मृदुमधुरैः स बन्दिवाक्यैरुषसि शशाङ्कवतीविमुक्तकण्ठः ।
अपगतसुरतान्तखेदनिद्रः सपदि जहौ शयनं मृगाङ्कदत्तः ॥
उत्थाय च व्यधित वासरकृत्यमेष पित्रा निजोचितकृताखिलसंविधानः ।
भूयस्तथैव च निनाय तदा बहूनि तान्युत्सवेन दयितासहितो दिनानि ॥
अथ राजामरदत्तस्तज्जनकस्तच्छ्वशुर्यस्य ।
शिरसि सुषेणस्यादौ बबन्ध पट्टं कृताभिषेकस्य ॥
विषयं तदुचितमेकं हस्त्यश्वहिरण्यभारवस्त्राणि ।
शतसंख्याश्च वरस्त्रीर्ददौ स तस्मै कृतादरो नृपतिः ॥
शबरकिराताधिपती मायाबटुशक्तिरक्षितौ च ततः ।
सहबान्धवौ सदारौ मातङ्गचमूपतिं च तं स नृपम् ॥
दुर्गपिशाचं सचिवान्मृगाङ्कदत्तस्य तांश्च सश्रुतधीन् ।
सममानयत्प्रदत्तैर्विषयैर्गोवाजिहेमवस्त्रैश्च ॥
ततः किरातेन्द्रमुखान्विसृज्य तान्नृपान्स्वदेशेषु सुषेणसंयुतान् ।
शशास राज्यं सुतशौर्यनिर्वृतः स तत्सुखेनामरदत्तभूपतिः ॥
मृगाङ्कदत्तोऽपि विजित्य वैरिणः शशाङ्कवत्या सुचिरादवाप्तया ।
निजैश्च तैर्भीमपराक्रमादिभिः सहावतस्थे सचिवैश्चिरं सुखी ॥
कालेऽथ यात्यमरदत्तनृपस्य तस्य स्वैरं जरा श्रवणमूलमुपाजगाम ।
भुक्ताः श्रियः परिणतं वयसा शमस्य नन्वेष काल इति वक्तुमिवाङ्गभूता ॥
ततः स भोगेषु विरक्तमानसो महीपतिः स्वान्निजगाद मन्त्रिणः ।
निशम्यतां संप्रति वर्णयामि वो विधित्सितं यन्मम वर्तते हृदि ॥
गतं वयो नः पलितेन सांप्रतं कृतान्तदूतेन कचग्रहः कृतः ।
जरागमे जीर्णरसं च मादृशां कुभोगतृष्णाव्यसनं विडम्बना ॥
विवृद्धिभाजा वयसा समं च यद्विवर्धते लोभमनोभवग्रहः ।
असंशयं कापुरुषव्रतं हि तत्स्वभावजं सत्पुरुषैरशिक्षितम् ॥
तदस्ति मे लब्धयशा महीतले सराजकावन्तिनरेन्द्रनिर्जयात् ।
स्वतोऽनुरक्तप्रकृतिर्गुणाधिको मृगाङ्कदत्तः सुसहायवानयम् ॥

तदेतदस्मै निजराज्यमूर्जितं समर्प्य तीर्थे तपसेऽहमाश्रये ।
परैरनिन्द्यं चरितं मनस्विनां वयोनुसारोचितमेव शोभते ॥ २२९
इति क्षितीशस्य वचः सुनिश्चितं निशम्य धीराः किल तस्य मन्त्रिणः ।
क्रमेण देवीप्रमुखाश्च पौरास्तथेति सर्वे प्रतिपेदिरे तदा ॥ २३०
ततः स राजा गणकोक्तलग्ने दिने विविक्ते सहितो द्विजाग्र्यैः ।
मृगाङ्कदत्तस्य चकार तस्य राज्याभिषेकोत्सवमात्मजस्य ॥ २३१
इतस्ततः क्षत्तृनिदेशधावज्जनाकुलं व्यग्रनियुक्तवर्गम् ।
तदास्य नृत्यद्वरचारणस्त्रि मुदा जुघूर्णेव गृहं नृपस्य ॥ २३२
तीर्थोदकं भूरि सभार्यकस्य मृगाङ्कदत्तस्य पपात मूर्ध्नि ।
जलप्रवाहाः पुनरस्य पित्रोः सानन्दयोर्नेत्रयुगान्निरीयुः ॥ २३३
अधिष्ठिते तेन नवेन राज्ञा सिंहासने सिंहपराक्रमेण ।
तद्विद्विषां कोपभयानतानां भूमावसिंहासनमेव मेने ॥ २३४
ततः पिता तस्य दिनानि सप्त ततान सज्जीकृतराजमार्गम् ।
यथार्हसंमानितराजलोकं महोत्सवं सोऽमरदत्तभूपः ॥ २३५
दिनेऽष्टमे दारयुतो नगर्या निर्गत्य पुत्रं स मृगाङ्कदत्तम् ।
निवर्त्य तं बाष्पमुखं सपौरं वाराणसीं मन्त्रिसखो जगाम ॥ २३६
तस्यां स गङ्गाम्बुपरिप्लुताङ्गो राजा त्रिसंध्यं त्रिपुरान्तकस्य ।
कुर्वन्सपर्यां फलमूलवृत्तिस्तस्थौ तपस्यन्मुनिवत्सदारः ॥ २३७
आसाद्य राज्यमथ सोऽपि मृगाङ्कदत्तो भास्वानिवाम्बरतलं विपुलामलं तत् ।
आक्रम्य च क्षितिभृतः करसंनिपातैः प्रावर्तत प्रतपितुं प्रसरत्प्रतापः ॥ २३८
मायाबटुप्रभृतिभिश्च सकर्मसेनैः संभूय सश्रुतधिभिः सचिवैः स तैः स्वैः ।
सद्वीपमेतदवजित्य चतुर्दिगन्तमेकातपत्रमवनीवलयं शशास ॥ २३९
तस्मिंश्च राजनि कथासु निशम्यमानदुर्भिक्षदस्युपरचक्रभयादिदुःखा ।
नित्यप्रहृष्टसुखिता नवरामभद्रसौराज्यसौख्यमसमं वसुधा बभार ॥ २४०
अध्यास्य तैश्च सचिवैः सह तामयोध्यां नानादिगागतनृपार्चितपादपद्मः ।
सम्राट् समं दयितया स शशाङ्कवत्या भोगानकण्टकसुखान्बुभुजे चिराय ॥ २४१
इति स व्याख्याय कथां मलयवनान्ते मुनिः पिशङ्गजटः ।
तं नरवाहनदत्तं राजसुतं विरहिणं जगदे ॥ २४२
तस्मात्सोढक्लेशो मृगाङ्कदत्तो यथा शशाङ्कवतीम् ।
प्राप पुरा पुत्र तथा प्राप्स्यसि तां मदनमञ्चुकां त्वमपि ॥ २४३
इति तस्मात्स मुनीन्द्रादाकर्ण्य वचोमृतं पिशङ्गजटात् ।
हृदि नरवाहनदत्तो धृतिमाधान्मदनमञ्चुकाप्राप्तौ ॥ २४४
तद्गतचित्तोऽथ स तं मुनिवरमामन्त्र्य हारितां पूर्वम् ।
तत्रान्वेष्ट्रीं चिन्वन्मलयगिरौ ललितलोचनां व्यचरत् ॥ २४५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे शशाङ्कवतीलम्बके षट्त्रिंशस्तरङ्गः ।

समाप्तश्चायं शशाङ्कवतीलम्बको द्वादशः ।

॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## मदिरावती नाम त्रयोदशो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

### प्रथमस्तरङ्गः ।

स वो विघ्नेश्वरः पायान्नमितोन्नमितेव यम् । अनुनृत्यति नृत्यन्तं संध्यासु भुवनावली ॥
गौरीप्रसाधनालग्नचरणालक्तकश्रियः । सखी सुखाय भूयाद्वः शंभोर्भालेक्षणप्रभा ॥
कवीन्द्रमानसाम्भोजनिवासभ्रमरीं नुमः । देवीं सहृदयानन्दशब्दमूर्तिं सरस्वतीम् ॥
ततो विरहसंतप्तो विना मदनमञ्चुकाम् । नरवाहनदत्तः स तेषु वत्सेश्वरात्मजः ॥
मलयाचलपादेषु तदुपान्तवनेषु च । भ्रमन्मधुमनोज्ञेषु नैव प्राप रतिं क्वचित् ॥
बिभेद तस्य मृदुरप्यापतद्भिः शिलीमुखैः । स्मरचापलतेवात्र हृदयं चूतमञ्जरी ॥
कर्णौ मधुरमप्यस्य दुनोति स्म च दुःसहम् । मारनिर्भर्त्सनावाक्यकटु कोकिलकूजितम् ॥
पुष्परेणुपिशङ्गश्च मदनाग्निरिवापतन् । विददाह तमङ्गेषु शीतोऽपि मलयानिलः ॥
ततोऽलिकुलझांकारमुखरैस्तैः स काननैः । निष्काल्यमान इव तं प्रदेशं शनकैर्जहौ ॥
गच्छन्क्रमेण च प्राप कथंचिद्देवतासखः । गङ्गागामिपथाभ्यर्णवनान्तसरसस्तटम् ॥
तरुमूलोपविष्टौ च तत्र ब्राह्मणपुत्रकौ । उभौ भव्याकृती स्वैरं कथासक्तौ ददर्श सः ॥
तौ च दृष्ट्वा तमुत्थाय प्रह्वौ मदनशङ्कया । अवोचतां नमस्तुभ्यं भगवन्कुसुमायुध ॥
ब्रूहि देव किमेकाकी त्यक्तकौसुमकार्मुकः । इतो भ्रमसि सा कुत्र रतिः सहचरी तव ॥
तच्छ्रुत्वा तौ स वत्सेशसुतो विप्रावभाषत । नाहं कामो मनुष्योऽहं नष्टा सत्यं तु मे रतिः ॥
इत्युक्त्वाख्यातवृत्तान्तस्तौ विप्रौ पृष्टवान्नृपः । कौ युवां कीदृशी चैषा कथात्र युवयोरिति ॥
ततस्तयोर्विप्रयूनोरेकस्तं विनतोऽब्रवीत् । राज्ञां भवादृशामग्रे रहस्यं कथमुच्यते ॥
तथाप्याज्ञानिरोधात्ते कथयामि निशम्यताम् । अस्ति शोभावती नाम कलिङ्गविषये पुरी ॥
कलिना न प्रविष्टा सा न स्पृष्टा पापकर्मभिः । न दृष्टा परराष्ट्रेण धात्रा सृष्टैव तादृशी ॥
तस्यां यशस्करो नाम विद्वानाढ्यो बहुक्रतुः । ब्राह्मणोऽभूदभूत्तस्य सत्पत्नी मेखलेति च ॥
तयोरेकोऽहमुत्पन्नः सुतो वयसि मध्यमे । वर्धितश्चोपनीतश्च ताभ्यामस्मि ततः क्रमात् ॥
ततः पठत्यध्ययनं बाले मय्यतिदुस्तरम् । तत्रावृष्टिकृतं देशे दुर्भिक्षमुदपद्यत ॥
तेन तातोऽम्बया सार्कं मामादाय ततो गतः । विशालां नाम नगरीं सधनः सपरिच्छदः ॥
तस्यां लक्ष्मीसरस्वत्योर्वसतौ मुक्तवैरयोः । तातो मित्रेण वणिजा दत्तवासः स्थितिं व्यधात् ॥

१ इयमेव कथा मालतीमाधवप्रकरणस्य मूलभूता.

ामं कुर्वाणो गुरुवेश्मनि । तत्रावसं सवयसां मध्ये सब्रह्मचारिणाम् ॥ २४
ात्रमभूत्क्षत्रकुमारकः । गुणी विजयसेनाख्यो महाढ्यक्षत्रियात्मजः ॥ २५
यगृहं मित्रस्य तस्य मे । स्वसा कुमारी मदिरावती नाम सहागमत् ॥ २६
यशेषेण हिमदीधितेः । जननेत्रामृतं जाने बिम्बं धात्रा विनिर्मितम् ॥ २७
समस्तमालोक्य तद्वपुः । पञ्चस्वन्येषु बाणेषु मन्ये मन्दादरः स्मरः ॥ २८
स्माच्छ्रुतनामान्वयामहम् । स्मराज्ञाविवशोऽभूवं सद्यस्तन्मयमानसः ॥ २९
मां तिर्यक्स्निग्धमुग्धेन चक्षुषा । भ्रुवाणाङ्कुरितं प्रेम पुलकेन कपोलयोः ॥ ३०
स्थित्वा कथंचित्स्वगृहानगात् । क्षिपन्ती वलितापाङ्गां प्रीतिदूतीं दृशं मयि ॥ ३१
इं गृहं गत्वा निपत्य च । स्थले मत्स्य इवाकार्षमुद्वर्तनविवर्तने ॥ ३२
त्वनिधानं यत्प्रजापतेः । अपि भूयोऽपि तत्तस्याः पश्येयमहमाननम् ॥ ३३
यं सा तेन स्मेरेण पश्यति । चक्षुषा तेन च मुखेनालपत्यपयन्त्रणम् ॥ ३४
कृच्छ्रादहोरात्रं व्यतीत्य तम् । तदुपाध्यायसदनं द्वितीयेऽहन्यहं गतः ॥ ३५
म्भकथामध्ये स सादरः । सुहृद्विजयसेनो मां सप्रहर्षोऽब्रवीदिदम् ॥ ३६
या मुखान्मन्मित्रमीदृशम् । श्रुत्वा त्वां मामकी माता सस्नेहा द्रष्टुमिच्छति ॥ ३७
कं मया स्नेहोऽस्ति चेन्मयि । त्वत्पादपद्मरजसा तद्विभूषितमस्तु नः ॥ ३८
ो निर्वापणमभून्मम । मरुभूम्यध्वगस्येव महद्वर्षमशङ्कितम् ॥ ३९
त्वा दृष्ट्वा तन्मातरं ततः । तत्सत्कृतोऽहं तत्रासं प्रियदर्शननिर्वृतः ॥ ४०
थ पित्राहूते मदन्तिकात् । मामेत्य मदिरावत्या धात्रेयी प्रणतावदत् ॥ ४१
ाकमुद्याने भर्तृदारक । विवृद्धिं मदिरावत्या नीता या मालतीलता ॥ ४२
स्याः खलु पुष्पभरोद्गमः । मधुसंगमसानन्दविलासहसितोज्ज्वलः ॥ ४३
स्याः कुसुमेषुशिलीमुखान् । मुकुलान्युच्चितान्यद्य भर्तृदारिकया स्वयम् ॥ ४४
षा विधायैकावली तया । प्रहिता ते नवं वस्तु पूर्वं प्रेष्ठाय दीयते ॥ ४५
ता मह्यं माला चतुरया तया । सपञ्चफलकर्पूरैर्नागवल्लीदलैर्युता ॥ ४६
तां कण्ठे कृत्वा च तामहम् । सुखं किमपि संप्रापं तत्तदालिङ्गनाधिकम् ॥ ४७
ताम्बूलं तामवोचं प्रियासखीम् । किं ब्रवीम्यधिकं भद्रे हृदि कामो ममेदृशः ॥ ४८
मेदं त्वद्वयस्याकृते यदि । तदेव मे जन्मफलं सा हि प्राणेषु मे प्रभुः ॥ ४९
विसृज्याहमुपाध्यायगृहानगाम् । समं विजयसेनेन समायातेन तत्क्षणम् ॥ ५०
त्या सहितोऽस्मद्गृहं च सः । अगाद्विजयसेनोऽत्र मत्पित्रोर्दत्तसंमदः ॥ ५१
या मम चैकनिवासतः । गूढ एव गतो वृद्धिमनुरागोऽनुवासरम् ॥ ५२
त्या दासी मामब्रवीद्रहः । शृणु यत्ते महाभाग वच्मि चित्ते तथा कुरु ॥ ५३
दृस्त्वं तत्रोपाध्यायवेश्मनि । वत्सया मदिरावत्या ततः प्रभृति सा किल ॥ ५४
हारं न तनोति प्रसाधनम् । रमते न च संगीते न क्रीडति शुकादिभिः ॥ ५५
ैः श्रीखण्डार्द्रविलेपनैः । तप्यते चन्द्रपादैश्च तुषारशिशिरैरपि ॥ ५६
नेव क्षामीभवति सान्वहम् । निर्वाति युष्मत्कथया केवलं क्रियमाणया ॥ ५७
प्रोक्तं तस्याः सर्वक्रियाविदा । या छायेव न तत्पार्श्वात्क्षणमप्यपसर्पति ॥ ५८
विस्रम्भं सा स्वयं मदिरावती । पृष्टा मया तया प्रोक्तं स्वं मनस्त्वद्गतं मम ॥ ५९
तस्याः फलेदेव मनोरथः । तथा सुभग कुर्वीथा जीवन्तीं तां यदीच्छसि ॥ ६०

---

लती. २ 'महाभाग—तस्या अभिनवो विचित्रः कुसुमेषुव्यापारः' इत्यादि मालतीमाधवप्रथमेऽङ्केऽपि
या लवङ्गिकायाः श्लिष्टं वाक्यमस्ति.

इति वाक्सुधया तस्या दत्तानन्दोऽहमभ्यधाम् । युष्मदायत्तमेवैतत्स्वाधीनोऽयं जनस्तव ॥
एतच्छ्रुत्वा प्रहृष्टा सा ततो याता यथागतम् । तत्प्रत्ययाच्च जातास्थो निर्वृतोऽहमगां गृहम् ॥
अन्येद्युस्तां च मदिरावतीं पितुरयाचत । उज्जयिन्याः समायातो महान्क्षत्रियपुत्रकः ॥
तत्पिता च सुतां तस्मै प्रदातुं प्रत्यपद्यत । तच्चाहं तत्परिजनाच्छ्रुतवाञ्श्रोत्रदारुणम् ॥
ततः स्वर्गादिव भ्रष्टो वज्रेणेव समाहतः । आक्रान्त इव भूतेन मोहं प्रापमहं चिरम् ॥
आश्वस्याचिन्तयं चाहं वैक्लव्येनाधुनैव किम् । पश्यामि तावत्पर्यन्तं प्राप्नोतीष्टमविक्लवः ॥
इत्याशयाहं दिवसान्यावत्कांश्चिन्नयामि तान् । प्रियासखीभिरागत्य धार्यमाणस्तदुक्तिभिः ॥
लग्नोऽत्र निश्चितस्तावदभ्यक्ता मदिरावती । प्राप्तश्चोद्वाहदिवसस्तस्याः प्रविततोत्सवः ॥
स्वेच्छासंचाररुद्धायां तस्यां तत्पितृवेश्मनि । जन्ययात्राप्रवेशोऽभूदासन्नस्तूर्यनादितैः ॥
तद्दृष्ट्वा तन्निराशोऽहं कष्टं जीवितवैशसम् । कलयन्मन्यमानश्च विरहान्मरणं सुखम् ॥
गत्वा च नगरीबाह्यमारुह्य वटपादपम् । पाशं व्यरचयं तेन पाशेनानौकहात्ततः ॥
प्रियाप्राप्तिमनोराज्यमात्मनं चात्यजं समम् । क्षणाच्चापश्यमात्मानं नष्टां संप्राप्य चेतनाम् ॥
यूनः पतितमुत्सङ्गे छिन्नपाशस्य कस्यचित् । अनेन नूनं त्रातोऽहमिति मत्वाब्रवं च तम् ॥
महासत्त्व त्वया तावद्दर्शितैव दयालुता । किं तु मे विरहार्तस्य मृत्युरिष्टो न जीवितम् ॥
चन्द्रोऽग्निर्विषमाहारो गीतानि श्रुतिसूचयः । उद्यानं बन्धनं पौष्पी माला दिग्धा शरावली ॥
ज्वलिताङ्गारवर्षं च चन्दनाद्यनुलेपनम् । .................................. ॥
येषां मित्र विपर्यस्तं संसारे विधुरात्मनाम् । जीविते को रसस्तेषां मादृशां विप्रयोगिनाम् ॥
इत्युक्त्वावर्णयं चास्मै तमहं कृच्छ्रबन्धवे । पृष्टोदन्ताय मदिरावतीवृत्तान्तविस्तरम् ॥
ततोऽब्रवीत्स साधुर्मां किं प्राज्ञोऽपि विमुह्यसि । सर्वं यस्य कृते तेन किं त्यक्तेनात्मना फलम् ॥
आत्मीयमत्र वृत्तान्तं शृण्विमं कथयामि ते । अस्तीह निषधो नाम देशो हिमवदाश्रयः ॥
कलिविद्रावितस्यैको यो धर्मस्य समाश्रयः । जन्मक्षेत्रं च सत्यस्य गृहं कृतयुगस्य च ॥
अतृप्तिर्यत्र लोकस्य श्रुते न त्वर्थसंचये । संतोषश्च स्वदारेषु नोपकारेषु सर्वदा ॥
तत्र शीलश्रुताढ्यस्य ब्राह्मणस्याहमात्मजः । सोऽहं देशान्तरालोककौतुकान्निर्गतो गृहात् ॥
भ्रमन्देशानुपाध्यायान्पश्यन्प्राप्तोऽस्मि च क्रमात् । सखे शङ्खपुरं नाम नातिदूरमितः पुरम् ॥
शङ्खपालस्य यत्रास्ति नागराजस्य पावनम् । शङ्खह्रद इति ख्यातं स्वच्छतोयं महत्सरः ॥
तत्रोपाध्यायसदने वसंस्तदहमेकदा । स्नानयात्रोत्सवेऽगच्छं द्रष्टुं शङ्खह्रदं सरः ॥
असंख्यैः पूरिततटं नानादेशागतैर्जनैः । सुरासुरैरिवाम्भोधिं क्षोभ्यमाणं समन्ततः ॥
वधूनां श्लथधम्मिल्लविस्रस्तकुसुमस्रजाम् । वीचिहस्तैः परामृष्टजघनस्तनमण्डलम् ॥
आश्लिष्यापहृतेनाङ्गरागेणापिञ्जरीकृतम् । महाह्रदं तमद्राक्षं तन्वानं कामुकायितम् ॥
तस्य दक्षिणतो गत्वा तरुखण्डं व्यलोकयम् । सधूममिव तापिच्छैः साङ्गारमिव किंशुकैः ॥
सज्वालमिव चोत्फुल्ललोहिताशोकवल्लिभिः । हरनेत्रानलप्लुष्टं देहं रतिपतेरिव ॥
तत्रातिमुक्तकलतामण्डपद्वारि कुर्वतीम् । कुसुमावचयं कांचिदपश्यं कन्यकामहम् ॥
लीलाकटाक्षविक्षेपतर्जितश्रवणोत्पलाम् । उत्क्षिप्तबाहुलतिकालक्षितैकपयोधराम् ॥
वहन्तीं कबरीपाशं पृष्ठतः परिमोचितम् । वदनेन्दुभयेनेव तिमिरं शरणागतम् ॥
नूनं रम्भादिनिर्माणसिद्धहस्तेन वेधसा । सृष्टा साक्ष्णोर्निमेषेण विज्ञेया मानुषीति या ॥
सा च दृष्टा प्रविष्टैव हृदयं मे मृगेक्षणा । हस्तभल्लीव मारस्य जगत्त्रितयमोहिनी ॥
सापि मामवलोक्यैव सद्यः स्मरवशाभवत् । विमुच्य पुष्पावचयक्रीडां प्रेमविहस्तिता ॥

१ मालतीमाधवे त्वेतद्वृत्तान्तस्थाने माधवस्य श्मशाने गमनं तत्राघोरघण्टादिसमागमश्च वर्णितः. तत्सर्वमपि लम्बकचतुर्थतरङ्गस्थविदूषककथातः समुद्धृतं भवभूतिना. २ पुस्तकान्तरेऽस्माच्छ्लोकादग्रे एकश्लोकस्य त्रुटिचिह्नमस्ति.

ःतामध्यपद्मरागप्रभोद्गमैः । अनुरागमिवोद्गिरं भरेण हृदयाद्बहिः ॥ ९८
परावृत्य तनुं मुहुरवैक्षत । सा मामपाङ्गविश्रान्ततारकान्तेन चक्षुषा ॥ ९९
स्थितावावामन्योन्यालोकिनौ क्षणम् । तावत्तत्रोदभून्नश्यज्जनहाहारवो महान् ॥ १००
प्रेमगन्धान्धो धावन्दलितशृङ्खलः । मत्तहस्ती धुतारोहकर्णान्तलुलिताङ्कुशः ॥ १०१
प्रधाव्याहं वित्रस्तां विद्रुतानुगाम् । जनमध्यमनैषं तामुत्सङ्गारोपितां प्रियाम् ॥ १०२
ति यावत्सा तत्रागतपरिच्छदा । तावज्जनरवाकृष्टस्तत्रैवागात्स वारणः ॥ १०३
द्रवद्भूरिजनमध्यतिरोहिता । अनुगैः सान्यतः क्वापि नीताहं च गतोऽन्यतः ॥ १०४
भये शान्ते चिन्वानस्तां सुमध्यमाम् । यन्नावापमविज्ञातनामान्वयनिकेतनाम् ॥ १०५
वेत्तो विभ्रष्टविद्यो विद्याधरो यथा । भ्रमन्नुपाध्यायगृहं कथमप्यहमाप्तवान् ॥ १०६
छित इव प्रध्वस्त इव चाभवम् । तत्प्रेमभङ्गसोत्कम्पस्तदाश्लेषसुखं स्मरन् ॥ १०७
स्त्रीसुलभादार्द्रभावाश्रयादिव । निपातितोऽहमुत्सङ्गे चिन्तया दर्शिताशया ॥ १०८
व परामृष्टो हृदये व्यथितात्मना । उत्तमाङ्गे गृहीतश्च शिरोर्त्यात्यन्तवृद्धया ॥ १०९
र्पेण समं तन्मे विगलितं दिनम् । संकोचमागतं पद्मवनं सह मुखेन मे ॥ ११०
ईयैश्च साकं विघटितान्यथ । रथाङ्गनाम्नां मिथुनान्यस्तं याते विवस्वति ॥ १११
स्यैकसुहृत्सुखिनां नयनोत्सवः । उदगच्छन्निशानाथः प्राचीमुखविशेषकः ॥ ११२
द्भैरिव मे करैरपि सुधामयैः । आशाप्रकाशकेनापि जीविताशा न्यमीलयत ॥ ११३
स्तानलक्षिप्तशरीरं मृत्युकाङ्क्षिणम् । एकोऽब्रवीत्सहाध्यायी विधुरं वीक्ष्य तत्र माम् ॥ ११४
स्थितोऽस्यद्य व्याधिस्तव न दृश्यते । अर्थकामकृतस्त्वाधिर्यदि तद्वच्मि ते शृणु ॥ ११५
ये ह्यर्था वञ्चयित्वा परं च ये । अपहृत्य परेषां वा वाञ्छ्यन्ते नैव ते स्थिराः ॥ ११६
यतः पापफलभारं प्रसूय ते । तद्भरेणैव भज्यन्ते शीघ्रं धनविषद्रुमाः ॥ ११७
रिक्लेशः केवलं तैर्धनैरिह । अमुत्र दुःखमाचन्द्रतारकं नारकं महत् ॥ ११८
ाप्य नष्टो यः सा प्राणान्तविडम्बना । यश्चाधर्मोऽप्रदूतः स निरयाग्रेमुखप्रियः ॥ ११९
पूर्वसुकृतैर्धीधैर्योत्साहवान्पुमान् । अर्थकामाववाप्नोति न तु क्लीबो भवादृशः ॥ १२०
मालम्ब्य यतस्वाभीष्टसिद्धये । इत्युक्तस्तेन सख्याहं नादां यत्किंचिदुत्तरम् ॥ १२१
माश्रित्य धैर्यं नीत्वा निशां क्रमात् । इहागतोऽहं सा नाम मास्यां पुरि वसेदिति ॥ १२२
दृष्टस्त्वं पाशार्पितगलो मया । पाशोत्तीर्णाच्छुतं त्वत्तस्त्वद्दुःखं स्वं च वर्णितम् ॥ १२३
नामादेरपि तस्याः कृते सखे । सुतनोराश्रितोद्योगः पौरुषागोचरेऽप्यहम् ॥ १२४
देरावत्याः स्थिताया अपि गोचरे । प्राप्तौ पुरुषकारादि मुक्त्वा क्लीबायसे कथम् ॥ १२५
र्वृत्तान्तः किं त्वया रुक्मिणीगतः । दत्तापि चेदिपतये हृता सा हरिणा न किम् ॥ १२६
मित्रे मे तस्मिन्नातोद्यमङ्गलैः । अग्रतस्तत एवागात्सानुगा मदिरावती ॥ १२७
ऽमुष्मिन्कामपूजार्थमागताः । अत्र स्थिताः कामदेवं विवाहेऽर्चन्ति कन्यकाः ॥ १२८
ग्रेऽस्मिन्वटे पाशो मयार्पितः । इहागता सा तदर्थं मृतं पश्यतु मामिति ॥ १२९
स सुहृद्वीरो मामब्रवीद्द्विजः । तर्हि देवकुलेऽत्रैव प्रविश्याभ्यन्तरे द्रुतम् ॥ १३०
तश्छन्नावेहि सांप्रतमास्वहे । पश्यावः किमुपायोऽत्र कश्चित्स्यादावयोर्न वा ॥ १३१
तेन सख्या साकं तथेत्यहम् । गत्वा देवकुलं तत्र तथैवासमलक्षितः ॥ १३२
योद्गीतमङ्गलागत्य सा शनैः । प्राविशत्तत्र मदिरावती देवकुलान्तरे ॥ १३३
याचिष्ये वरं कंचिन्मनोगतम् । कामदेवाद्भगवतस्तद्बहिर्भवताखिलाः ॥ १३४
बहिष्कृत्वा सखीरनुचरैः सह । एकैव कामदेवं तमर्चयित्वा व्यजिज्ञपत् ॥ १३५
पे सता त्वया देव कथं न मे । मनोगतः प्रियो ज्ञातो विप्रलब्धा हतास्मि किम् ॥ १३६

नास्मिञ्जन्मनि भूतश्चेत्त्वं वराय क्षमो मम। जन्मान्तरेऽपि तत्कुर्याः कृपां रतिपते मयि॥
तथा प्रसादं कुर्वीथा यथा देहान्तरेऽपि मे। स एव भर्ता सुभगो भवेद्विप्रकुमारकः॥
इत्युक्त्वा सावयोर्बाला पश्यतोः शृण्वतोरपि। शङ्कौ कृत्वोत्तरीयेण पाशं कण्ठे न्यवेशयत्॥
उपेत्य दर्शयात्मानमस्याः पाशं गलाद्धर। इत्युक्तस्तेन सख्याहमुपासर्पं तदैव ताम्॥
मा प्रिये साहसं पश्य सैष प्राणपणार्जितः। आर्तिकालोक्तसहजस्नेहो दासोऽग्रतस्तव॥
इत्यहं व्याहरन्हर्षभरगद्गदया गिरा। सुतनोस्त्वरितं तस्याः पाशं कण्ठादपाहरम्॥
ततो मां वीक्ष्य सहसा यावत्सानन्दसाध्वसा। क्षणं तिष्ठति सा तावत्सोऽब्रवीन्मां द्रुतं सुहृत्॥
दिनक्षयाप्रकाशेऽस्मिन्काले निर्गत्य याम्यहम्। वेषेण मदिरावत्या एतत्परिजनैः सह॥
आवयोरुत्तरीयाभ्यां संवीतां त्वमिमां वधूम्। आदायागच्छ निर्गत्य द्वितीयद्वारवर्त्मना॥
याहि देशान्तरं रात्रौ यथाकाममलक्षितः। मच्चिन्तां मा कृथा दैवं शिवं मम विधास्यति॥
इत्युक्त्वोपात्तमदिरावतीवेषः सुहृत्स मे। निर्गत्यैव ततः प्रायान्नक्तं तदनुगैर्वृतः॥
अहं च मदिरावत्यानर्घरत्नस्रजा समम्। द्वारेणान्येन निष्क्रम्य रात्र्या यातोऽस्मि योजनम्॥
प्रातर्निर्वर्तिताहारः क्रमाद्गच्छन्दिनैरहम्। प्राप्तोऽचलपुरं नाम नगरं दयितासखः॥
मित्रीभूय गृहे दत्ते तत्रैकेन द्विजन्मना। परिणीता मया सात्र सत्वरं मदिरावती॥
ततोऽत्र वसतः सिद्धयथेष्टसुखितस्य मे। किं स्यान्मित्रस्य मे वृत्तं तस्येत्येषाभवद्व्यथा॥
तदनन्तरमेषोऽद्य दृष्टोऽकारणबान्धवः। मयेह गङ्गास्नानार्थमागतेनोत्तरायणे॥
चिरं चैतं सवैलक्ष्यमिवाश्लिष्योपविश्य च। यावत्पृच्छामि वृतान्तं तावद्देव इहागतः॥
तमेतमपरं विद्धि प्राणदारप्रदं मम। कृच्छ्रैकमित्रं पार्श्वस्थं विप्रं वत्सेशनन्दन॥
इति तेन यथावृत्ते विप्रेणैकेन वर्णिते। नरवाहनदत्तस्तमपृच्छदपरं द्विजम्॥
तुष्टिर्मे ब्रूहि मुक्तस्त्वं तादृशात्संकटात्कथम्। मित्रार्थागणितप्राणा दुर्लभा हि भवादृशाः॥
एतत्तस्य वचः श्रुत्वा वत्सराजसुतस्य सः। द्वितीयोऽपि स्ववृत्तान्तं विप्रो वक्तुं प्रचक्रमे॥
तदा ततो मां मदिरावतीवेषं विनिर्गतम्। देवागारात्तदनुगास्तद्बुद्ध्या पर्यवारयन्॥
आरोप्य शिबिकां तैश्च नृत्यवाद्यमदाकुलैः। नीतोऽस्मि सोमदत्तस्य भवनं विभवान्वितम्॥
क्वचित्सद्वस्त्रभाराढ्यं संभृताभरणं क्वचित्। क्वचिन्निष्पन्नपक्वान्नं क्वचित्सज्जितवेदिकम्॥
क्वचित्प्रगीतदासीकं क्वचिच्चारणसंकुलम्। लग्नवेलाप्रतीक्षैश्च क्वचिदध्यासितं द्विजैः॥
तत्रैकस्मिन्गृहे पानक्षीबैः परिजनैरहम्। कृतावगुण्ठनो नक्तं वधूबुद्ध्या प्रवेशितः॥
उपविष्टं च मां तत्र वनिताः पर्यवारयन्। विवाहोत्सवसानन्दनानाचेष्टासमाकुलाः॥
क्षणाद्द्वारोपकण्ठे च मेखलानूपुरारवः। आश्रावि प्राविशच्चात्र कन्यैका ससखीजना॥
नागीव विस्फुरद्रत्नमूर्धा धवलकञ्चुका। अब्धिवीचीव लावण्यपूर्णा मुक्तावलीचिता॥
उद्यानदेवता साक्षादिव सत्पुष्पमालिनी। सुपर्वबाहुलतिकाविराजत्करपल्लवा॥
सा चागत्योपविष्टा मे पार्श्वे प्रियसखीधिया। पश्यामि यावत्सैवात्र चित्तचौरी समागता॥
या सा शङ्खह्रदे दृष्टा कन्या स्नानागता मया। त्राता गजाद्दृष्टनष्टा मध्येलोकमगान्मम॥
किमेतत्काकतालीयं किं स्वप्नः सत्यमेव वा। इति हर्षभरोद्भ्रान्तस्तदा चाहमचिन्तयम्॥
क्षणान्तरे च मदिरावतीसख्योऽब्रुवंश्च ताम्। किमेवमार्यदुहितरुन्मना इव लक्ष्यसे॥
एतच्छ्रुत्वाब्रवीत्कन्या सा निगूह्याशयं तदा। जानीथ किं न मदिरावती मे यादृशी सखी॥
एषा कृतविवाहा च यास्यति श्वाशुरं गृहम्। एतद्वियुक्ता न स्थातुं शक्ष्यामीत्यस्मि दुःखिता॥
तन्निर्यात बहिः क्षिप्रं यावद्विस्रम्भसंकथाः। कुर्वती मदिरावत्या सह तिष्ठाम्यहं सुखम्॥
इति निष्कास्य ताः सर्वा द्वारे दत्त्वार्गलं स्वयम्। उपविश्य सखीबुद्ध्या सा मामेवमभाषत॥
मदिरावति नास्त्यस्माद्दुःखं त्वद्दुःखतोऽधिकम्। प्राणप्रिये यदन्यस्मिन्पित्रान्यस्मै प्रदीयसे॥

तथापि ते भवेज्जातु दर्शनं संगमोऽपि वा । संस्तवाज्ज्ञायमानेन तेन स्वप्रेयसा सह ॥ १७६
मम त्वनास्थमुत्पन्नं यद्दुःखं तद्वदामि ते । यथाहं ते तथा त्वं हि विस्रम्भैकास्पदं मम ॥ १७७
गतवत्यस्मि यात्रायां स्नातुं शङ्खह्रदं सरः । विनोदयितुमात्मानं भावित्वद्विरहातुरम् ॥ १७८
तत्रोद्याने दिवा मुक्त्वा नभश्चन्द्र इवागतः । आलानकाञ्चनस्तम्भ इव सौन्दर्यदन्तिनः ॥ १७९
नवीनश्मश्रुमधुपश्रेणीश्रितमुखाम्बुजः । कोऽपि कान्तो द्विजयुवा दृष्टो नववया मया ॥ १८०
वनेषु केवलं क्लिष्टास्तपोभिर्मुनिकन्यकाः । न दृष्टोऽयं युवा याभिः किं तासां तपसः फलम् ॥ १८१
इति संचिन्तयन्त्या मे कामेन हृदयं शरैः । तथा विद्धं यथा लज्जा भयं च गलितं ततः ॥ १८२
ततः पश्यामि पश्यन्तं यावत्तं तिर्यगीक्षणा । आलानमुक्तो मत्तेभस्तावदागादशङ्कितम् ॥ १८३
तेन नश्यत्परिजनां भीतां दृष्ट्वा स मां युवा । धावित्वाङ्के कृतां दूरे मध्ये लोकस्य नीतवान् ॥ १८४
तत्संस्पर्शामृतानन्दमीलिताहं तदा सखि । को हस्ती किं भयं काहं क्व स्थितास्मीति नाविदम् ॥ १८५
ततः परिजनो यावत्प्राप्तो मे तावदागतः । मत्तहस्ती स तत्रैव विरहो मूर्तिमानिव ॥ १८६
उत्क्षिप्याहमथानीता तद्भयादनुगैर्गृहम् । स च मे जनसंक्षोभे न जाने क्व गतः प्रियः ॥ १८७
तदाप्रभृत्यविज्ञातनामादिकमसुप्रदम् । स्मरन्ती तं करप्राप्तं केनापीह हृतं निधिम् ॥ १८८
सर्वदुःखहरां निद्रां स्वप्ने तद्दर्शनेच्छया । वाञ्छन्ती चक्रवाकीभिः समं क्रन्दामि रात्रिषु ॥ १८९
तदेवं निरुपायेऽस्मिन्दुःखे मम विनोदनम् । त्वद्दर्शनं यत्सखि तद्दूरीभवति चाधुना ॥ १९०
उपस्थितं तदित्थं मे मरणं मदिरावति । त्वन्मुखालोकनसुखं संप्रत्यनुभवामि तत् ॥ १९१
इत्युक्त्वा श्रोत्रपीयूषवर्षाभं वचनं मम । कलङ्कयन्ती वक्त्रेन्दुं साञ्जनैरश्रुबिन्दुभिः ॥ १९२
अवगुण्ठनमुत्क्षिप्य मुखान्मम निरीक्ष्य माम् । परिज्ञाय तदा साभूत्सहर्षाश्चर्यसाध्वसा ॥ १९३
ततो मयोक्तं मुग्धे किं संभ्रमः सोऽहमेव ते । विधिर्हि घटयत्यर्थानचिन्त्यानपि संमुखः ॥ १९४
मयापि त्वत्कृते दुःखमनुभूतं सुदुःसहम् । यादृशं यादृशी चैषा प्रपञ्चरचना विधेः ॥ १९५
वक्ष्यामि विस्तरात्तत्ते नायं कालः कथाक्रमे । निर्गमोपाय एवैकश्चिन्त्यतां संप्रति प्रिये ॥ १९६
इत्युक्ता सा मया बाला प्राप्तकालमभाषत । अनेन पश्चाद्द्वारेण निर्गच्छावः शनैरितः ॥ १९७
बहिश्चात्र गृहोद्यानं पितुः सुक्षत्रियस्य मे । तन्मार्गेणैव निर्गत्य व्रजावो यत्रकुत्रचित् ॥ १९८
इत्युक्तवत्यैव तया गुप्ताभरणया सह । तदुक्तेनैव मार्गेण निरगच्छमहं ततः ॥ १९९
रात्र्या च दूरमध्वानं तया गत्वा द्रुतं भयात् । प्रभाते प्राप्तवानस्मि प्रियायुक्तो महाटवीम् ॥ २००
गच्छतोश्चावयोस्तस्यां स्वकथैकविनोदयोः । निर्मानुषायां शनकैर्मध्याह्नः समवर्तत ॥ २०१
निराश्रयाध्वगजनां निराक्रन्दामतापयत् । भूमिं तां दुष्टभूपाल इव तीक्ष्णकरः करैः ॥ २०२
तस्मिन्काले परिश्रान्तां प्रेयसीं तां तृषार्दिताम् । कृच्छ्रप्राप्तां तरुच्छायां शनैः प्रापितवानहम् ॥ २०३
आश्वासयामि यावच्च तत्र तां पटमारुतैः । अकस्मान्महिषस्तावदागाद्व्रणितविद्रुतः ॥ २०४
तस्य पश्चात्प्रधावंश्च हयारूढो धनुर्धरः । आगात्कोऽपि महासत्त्व इत्याकृत्यैव सूचितः ॥ २०५
स महामहिषं भल्लीप्रहारेणापरेण तम् । वज्रघातेन वज्रीव गिरिं वीरो न्यपातयत् ॥ २०६
दृष्ट्वा चास्मानुपागत्य स मां प्रीत्यैव पृष्टवान् । कस्त्वं कैषा च ते साधो क्वेहायातौ युवामिति ॥ २०७
अथोपवीतमुद्घाट्य प्रोक्तं सत्यानृतं मया । विप्रोऽहमेषा भार्या मे कार्याद्देशान्तरागतौ ॥ २०८
आवां चौरहतात्सार्थाद्विभ्रष्टौ मार्गनाशतः । इह प्रविष्टौ दृष्टश्च भवान्नष्टाश्च भीतयः ॥ २०९
एवं मयोक्ते ब्राह्मण्यात्सानुकम्पश्च सोऽभ्यधात् । अहं वनचराधीशो मृगयार्थमिहागतः ॥ २१०
युवां चाध्वपरिश्रान्तौ संप्राप्तावतिथी मम । तदेतं विश्रमायैतन्नातिदूरं मदास्पदम् ॥ २११
इत्युक्त्वा मत्प्रियां श्रान्तामारोप्य स्वतुरंगमे । पादचारीभवन्नावां स्वनिवासं स नीतवान् ॥ २१२
तत्र बान्धववत्सोऽस्मान्भोजनाद्यैरुपाचरत् । कुदेशेष्वपि जायन्ते क्वचित्केचिन्महाशयाः ॥ २१३
ततोऽटवीं तामुत्क्रम्य तद्वितीर्णानुयात्रिकाम् । प्राप्याग्रहारमेकं सा परिणीता मया वधूः ॥ २१४

ततः परिभ्रमन्देशान्दृष्ट्वा सार्धं समं तया। अद्य भागीरथीस्नानमहं कर्तुमिहागतः ॥
इहैव चैष संप्राप्तः स्वयंवरसुहृन्मया। देवश्च दृष्ट इत्येष वृत्तान्तो मामकः प्रभो ॥

इत्युक्त्वा विरतं स यावदथ तं निर्व्याजसत्त्वोचित-
प्राप्ताभीष्टफलं प्रशंसतितरां वत्सेशपुत्रो द्विजम्।
तावत्तं युवराजमात्मसचिवा बम्भ्रम्यमाणाश्चिरं
चिन्वन्तः किल गोमुखप्रभृतयस्तत्रागता लेभिरे ॥
स च नरवाहनदत्तश्चरणनतान्हर्षबाष्पधौतमुखान्।
तानभिनन्द सर्वान्संमान्य यथोचितं सचिवान् ॥
अथ तौ विप्रयुवानौ सदर्थनीतिप्रियौ सहादाय।
स ययौ सह तैर्मन्त्रिभिरन्वागतललितलोचनः स्वपुरीम् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे मदिरावतीलम्बके प्रथमस्तरङ्गः।

समाप्तश्चायं मदिरावतीलम्बकस्त्रयोदशः।

---

॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## पञ्चलम्बकश्चतुर्दशः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

### प्रथमस्तरङ्गः ।

ेन देहार्धमप्युमायै समर्पितम् । स वो ददात्वभिमतं वरदः पार्वतीपतिः ॥ १
वेघ्नजितो वोऽव्यात्ताण्डवोद्दण्डितः करः । शोणश्चन्द्रातपत्रस्य तन्वन्विद्रुमदण्डताम् ॥ २
सेश्वरसुतस्तास्ताश्त्रैलोक्यसुन्दरीः । भार्या दधानस्तां चाद्यां देवीं मदनमञ्चुकाम् ॥ ३
नदत्तोऽत्र कौशाम्ब्यां गोमुखादिभिः । उवास सह संपूर्णकामः पितृविभूतिभिः ॥ ४
ष्टवधूसङ्गसुखामृतमनोरमाः । नृत्तगीतकथालापरम्यास्ते दिवसा ययुः ॥ ५
। स तामग्र्यां कान्तां मदनमञ्चुकाम् । न ददर्शावरोधान्तर्न वा परिजनं क्वचित् ॥ ६
ोकयन्कान्तां स जगाम विवर्णताम् । रजनीविरहध्वस्तकान्तिरिन्दुरिवोषसि ॥ ७
जिज्ञासितुं किं नु च्छन्ना स्यात्क्वापि मे प्रिया । किं वापराधलेशात्सा कुतोऽपि कुपितैव मे ॥ ८
च्छादिता केनाप्यथवापहृता नु किम् । इत्यनेकविकल्पौघविह्वलोऽथ बभूव सः ॥ ९
ान्यदा नैव लभते स्म कुतोऽपि ताम् । संतेपे स तदोद्दामतद्वियोगदवाग्निना ॥ १०
ज्ञातवृत्तान्तस्तस्य वत्सेश्वरः पिता । मातरः सचिवा भृत्याः सर्वे विह्वलतां ययुः ॥ ११
न्दनचन्द्रांशुमृणालनलिनीदलैः । ववृधे तस्य संतापो न जगाम शर्म पुनः ॥ १२
ेना सद्यश्च विहीना सुतया तया । विद्याधरीव विभ्रष्टविद्या संमूढतां ययौ ॥ १३
ाब्रवीदेका वृद्धान्तःपुररक्षिका । नरवाहनदत्ताग्रे सर्वेष्वाकर्णयत्स्विदम् ॥ १४
तां तदा कन्यां सतीं मदनमञ्चुकाम् । दृष्ट्वावतीर्य नभसः सद्यो विद्याधरो युवा ॥ १५
मानसवेगाख्यो नामोक्त्वा समयाचत । कलिङ्गसेनामभ्येत्य देह्येतां मे सुतामिति ॥ १६
निषिद्धेन सता गत्वा यथागतम् । इदानीं गुप्तमागत्य हृता सा किं न मायया ॥ १७
ृहं नैव दिव्या यद्यपि कुर्वते । तथाप्यमार्गं मार्गं वा रागान्धः को हि पश्यति ॥ १८
त्तमाकोपविमर्शविरहोत्प्लुतम् । नरवाहनदत्तस्य जज्ञे वीचिष्विवाम्बुजम् ॥ १९
नथ वक्ति स्म पुरीयं रक्ष्यतेऽभितः । प्रवेशनिर्गमौ नेह विद्येते गगनं विना ॥ २०
दाचास्त्यस्या नानिष्टं तदिह स्थिता । क्वचित्प्रणयकोपात्सा तथा च श्रूयतां कथा ॥ २१
राङ्गिरा नाम विवाहार्थमयाचत । अष्टावक्रस्य तनयां सावित्रीं नाम कन्यकाम् ॥ २२
ो न तां तस्मै ददावङ्गिरसे सुताम् । सगुणायापि सावित्रीमन्यस्मै पूर्वकल्पिताम् ॥ २३
ातृतनयामश्रुतां नाम सोऽङ्गिराः । उपयेमे तया साकं स तस्थौ भार्यया सुखम् ॥ २४
भार्यास्य वेत्ति स्म सावित्रीं पूर्ववाञ्छिताम् । एकदा सोऽङ्गिरा मौनी जपन्नासीच्चिरं मुनिः ॥ २५

भार्याथ सा तं पप्रच्छ मुहुः सप्रणयाश्रुता। चिरं किमार्यपुत्रैवं चिन्तयस्युच्यतामिति ॥
प्रिये ध्यायामि सावित्रीमित्युक्ते तेन साश्रुता। सावित्रीं तां मुनिसुतां मत्वात्मनि चुकोप ह ॥
दुर्भगोऽयमिति त्यक्तुं देहं गत्वा वनं च सा। शुभं भर्तुरनुध्याय कण्ठे पाशं समर्पयत् ॥
मा पुत्रि साहसं कार्षीः पत्या ध्याता न तेऽङ्गना। ध्याताहं तेन सावित्रीत्युक्त्वा पाशाद्ररक्ष ता
प्रकटीभूय गायत्री साक्षसूत्रकमण्डलुः। भक्तानुकम्पिनी चैतां समाश्वास्य तिरोदधे ॥
अथैषाङ्गिरसा भर्त्रा संप्राप्तान्विष्यता वनात्। तदेवं दुःसहं स्त्रीणामिह प्रणयखण्डनम् ॥
तत्स्वल्पेनापराधेन कुपितेह क्वचित्स्थिता। अन्वेष्या शंभुरक्ष्या सा राजपुत्रवधूः पुनः ॥
एवं रुमण्वता प्रोक्ते राजा वत्सेश्वरोऽब्रवीत्। एवमेतन्न दुरितं तस्याः संभाव्यते यतः ॥
नरवाहनदत्तस्य भार्या देवविनिर्मिता। कामांशस्यावतीर्णैषा रतिर्मदनमञ्चुका ॥
असौ विद्याधरैश्वर्यं दिव्यं कल्पं सहानया। करिष्यतीति दिव्या वागब्रवीन्न च तन्मृषा ॥
तदेषान्विष्यतां सम्यगिति राज्ञोदिते स्वयम्। नरवाहनदत्तः स तदवस्थोऽपि निर्ययौ ॥
यथायथा हि चिन्वानो न तां प्राप तथातथा। तेषुतेषु प्रदेशेषु सोन्माद इव सोऽभ्रमत् ॥
अपेते तत्पुरात्तस्मिन्पिहितद्वारका गृहाः। तद्दुःखदर्शनोद्वेगादिव संमीलितेक्षणाः ॥
वनेषु तं च पृच्छन्तं चलत्पल्लवपाणयः। न सा दृष्टा तवास्माभिरित्यूचुरिव पादपाः ॥
उद्यानेषूत्पतन्तश्च खगास्तस्मै विचिन्वते। इतः सा न गतेत्येवं शशंसुरिव सारसाः ॥
मरुभूतिर्हरिशिखो गोमुखः सवसन्तकः। ते ते च सचिवा भ्रेमुस्तामन्वेष्टुं समन्ततः ॥
अत्रान्तरे वेगवती नाम विद्याधरी किल। कन्या दृष्टचरोदारवपुर्मदनमञ्चुका ॥
तदीयं रूपमास्थाय तस्यावुपवनान्तरे। आगत्यैकाकिनी स्वैरमत्राशोकतरोरधः ॥
तां ददर्श विचिन्वानो मरुभूतिः परिभ्रमन्। सद्यो विशल्यकरणीं सशल्यस्येव चेतसः ॥
नरवाहनदत्तं तं गत्वा हृष्टो जगाद सः। समाश्वसिहि दृष्टा ते मयोद्याने स्थिता प्रिया ॥
इत्येवोक्तवता तेन साकं तत्क्षणमेव सः। नरवाहनदत्तस्तदुद्यानं मुदितो ययौ ॥
तत्रातिविरहक्लान्तो भार्यां मदनमञ्चुकाम्। तामपश्यत्स तृषितो वारिधारामिवाध्वगः ॥
दृष्ट्वैवालिङ्गितुं तां च भृशार्तो यावदिच्छति। तावत्सा तं जगादैवं धूर्ता परिणयैषिणी ॥
मां त्वं संप्रति मा स्प्राक्षीः शृणु तावद्वचो मम। मयोपयाचिता यक्षास्त्वत्प्राप्त्यै प्राग्विवाहतः ॥
विवाहे वः प्रदास्यामि स्वहस्तेन बलीनिति। विवाहकाले ते तस्मिन्मम प्राणेश विस्मृताः ॥
तत्कोपात्तैरहमितो यक्षैरपहृताभवम्। गच्छ भूयो विवाहं तं कृत्वा दत्त्वा बलिं च नः ॥
निजं पतिमुपेयास्त्वं नान्यथा ते शिवं भवेत्। इत्युक्त्वा तैरिहानीय यक्षैर्मुक्तास्मि सांप्रतम् ॥
तन्मां परिणयस्वाशु पुनर्यावद्ददाम्यहम्। यक्षेभ्योऽभिमतां पूजां ततः पूरय वाञ्छितम् ॥
तच्छ्रुत्वैव समाहूय शान्तिसोमं पुरोहितम्। क्षणात्संभृत्य संभारान्मायामदनमञ्चुकाम् ॥
विद्याधरीं वेगवतीमुपयेमे स तत्क्षणम्। नरवाहनदत्तस्तां वियोगक्षणकातरः ॥
प्रहृष्टवत्सराजोऽथ देव्यानन्दी महोत्सवः। नन्दत्कलिङ्गसेनोऽभूत्तत्रातोद्यरवाकुलः ॥
ददौ बलिं च यक्षेभ्यो मायामदनमञ्चुका। विद्याधरी स्वहस्तेन सा मद्यपिशितादिभिः ॥
नरवाहनदत्तोऽथ वासकस्थस्तया सह। पपौ स सोत्सवः पानं पानशौण्डोऽपि तद्गिरा ॥
सिषेवे च तया साकं जीवलोकसुखं ततः। छाययेव दिनाधीशः परिवर्तितरूपया ॥
रहःस्था चाब्रवीत्सा तं सुप्ता नाहं प्रिय त्वया। सहसा मुखमुद्धाट्य वीक्षणीयेह संप्रति ॥
तच्छ्रुत्वा स किमेतत्स्यादिति यावत्सकौतुकः। सुप्ताया राजपुत्रोऽस्या मुखमन्येद्युरीक्षते ॥
तावदन्यैव सा कापि न सा मदनमञ्चुका। स्वापवेलावशध्वस्तमायारूपविवर्तना ॥
ततः स जाग्रदेवासीद्यावत्प्रबुबुधेऽत्र सा। का त्वं सत्यं वदेत्येवमथ तां पृच्छति स्म सः ॥
साप्यनिद्रोपविष्टं तं दृष्ट्वा रूपे निजे स्थिता। वक्तुं प्रचक्रमे जातप्रतिभेदा मनस्विनी ॥

दानीं ब्रवीम्येतद्यथावस्तु तव प्रिय । अस्त्याषाढपुरं नाम विद्याधरपुरं गिरिः ॥ ६५
ागवतो राज्ञः पुत्रो विद्याधराधिपः । अस्ति मानसवेगाख्यो राजा भुजबलोद्धतः ॥ ६६
ेगवती नाम भगिन्यस्मि कनीयसी । स च भ्राता न मे विद्यां दातुमैच्छदतिद्विषन् ॥ ६७
ाया ताः क्लेशेन तपोवनगतात्पितुः । प्राप्तास्तद्वरतश्चैताः सर्वाधिकबला मम ॥ ६८
दृष्टवती दीनामुद्याने रक्षिभिर्वृताम् । आषाढाद्रिपुरे तस्मिन्स्थितां मदनमञ्चुकाम् ॥ ६९
ापहृता तेन भ्रात्रा मे दयिता तव । रावणेनेव दुःखार्ता रामभद्रस्य जानकी ॥ ७०
च्छन्ती च सा साध्वी तेनाक्रान्तुं न शक्यते । स्त्रीणां हठोपभोगे हि शापस्तस्यास्ति मृत्युजः ॥ ७१
न प्रयुक्ताहं कुभ्रात्रा तत्प्रबोधने । तस्याः समीपमगमं त्वत्प्रलापमयात्मनः ॥ ७२
ङ्गाच्च कामाज्ञातुरये त्वन्नाम्न्युदीरिते । तया साध्व्या त्वदेकाग्रमिदं जातं मनो मम ॥ ७३
ाति: स्याद्यन्नाम्नि श्रुते स्मरवशा भवेः । इत्याद्यश्च तदा देवीस्वप्रादेशो मया स्मृतः ॥ ७४
ा ग्राहयित्वा तां धृतिं मदनमञ्चुकाम् । तद्रूपेण मयागत्य युक्त्यात्मेह विवाहितः ॥ ७५
यत्र त्वद्भार्या स्थिता मदनमञ्चुका । तत्रैव तत्कृपाविष्टा प्राणेश त्वां नयाम्यहम् ॥ ७६
ेति तवेवाहं सपत्न्या अपि किंकरी । ममात्मनिरपेक्षा हि कापि त्वत्प्रेमवश्यता ॥ ७७
ा सा स्वविद्यानां बलाद्वेगवती निशि । नरवाहनदत्तं तं गृहीत्वोदपतन्नभः ॥ ७८
ायाति सा व्योम्ना यावत्तावददर्शनात् । जायापत्योस्तयोः प्रातः परिवारोऽत्र चुक्षुभे ॥ ७९
ःसेश्वरो बुद्ध्वा सह वासवदत्तया । पद्मावत्यादिभिश्चाशु वज्राहत इवाभवत् ॥ ८०
ारायणाद्याश्च सपौरास्तस्य मन्त्रिणः । मरुभूतिमुखैः पुत्रैः सहाभूवन्सुविह्वलाः ॥ ८१
तरिक्षतस्तत्र द्वितीय इव भास्करः । अवातरत्प्रभावद्धमण्डलो नारदो मुनिः ॥ ८२
र्या निजभुवं नीतः शीघ्रमिहैष्यति । पुत्रस्ते तव धृत्यर्थं प्रेषितश्चास्मि शूलिना ॥ ८३
ा वत्सराजाय कृतार्घाय ततो मुनिः । स वेगवत्याश्चरितं यथावृत्तं शशंस तत् ॥ ८४
ःसेमन्समाश्वस्ते मुनिः सोऽत्र तिरोदधे । अत्रान्तरे वेगवती व्योम्ना प्रापयति स्म सा ॥ ८५
नदत्तं तं तमाषाढपुरं गिरिम् । बुद्ध्वा मानसवेगस्तस्य हन्तुं तावधावत ॥ ८६
ा समं भ्रात्रा युद्धं विद्याबलोद्धतम् । वेगवत्या अभूत्स्त्रीणां पतिः प्राणा न बान्धवाः ॥ ८७

अथ निजविद्याबलतो भैरवरूपं विधाय विकटं सा ।
मानसवेगं सहसा संमोह्य तमभिपर्वते निदधे ॥ ८८
तमपि च विद्याहस्ते नरवाहनदत्तमादितो न्यस्तम् ।
नीत्वा गन्धर्वपुरे कूपे चिक्षेप रक्षितुं विजले ॥ ८९

तत्र स्थितं च तमुवाच मनागिह त्वं तिष्ठार्यपुत्र भविता च शिवं तवात्र ।
मा चाधृतिं हृदि कृथाः शुभपात्र सर्वविद्याधराधिपतिता तव भाविनीह ॥ ९०
यामि प्रसाधयितुमद्य पुनर्यतोऽहं ज्येष्ठव्यतिक्रमणदुर्बलिताः स्वविद्याः ।
त्वामभ्युपैमि न चिरादिति सा तमुक्त्वा विद्याधरी क्वचन वेगवती जगाम ॥ ९१

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पञ्चलम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

पस्थितं तत्र गन्धर्वैः कोऽप्यवैक्षत । नरवाहनदत्तं तं वीणादत्त इति श्रुतः ॥ १
ःलजन्मानो न स्युर्मार्गद्रुमा इव । तापच्छिदो महान्तश्चेज्जीर्णारण्यं जगद्भवेत् ॥ २
तं स सुजनः पृष्ट्वा चान्वयनामनी । हस्तेऽवलम्ब्योदहरत्कूपात्तस्माद्युवाच च ॥ ३
ऽसि न देवश्चेद्गन्धर्वनगरं कथम् । मानुषागम्यमेतत्त्वमागतः कथ्यतामिति ॥ ४
ोहमानीय क्षिप्तोऽत्रात्मबलादिति । नरवाहनदत्तोऽपि स तं प्रत्यब्रवीत्तदा ॥ ५

ततस्तं वीक्ष्य सच्चक्रवर्तिचिह्नं गुणी गृहम् । नीत्वा स वीणादत्तः स्वैरुपचारैरुपाचरत् ॥
अन्येद्युस्तत्पुरं दृष्ट्वा वीणाहस्ताखिलप्रजम् । नरवाहनदत्तस्तं वीणादत्तं स पृष्टवान् ॥
सर्वेऽप्याबालमेते किं वीणाहस्ता जना इति । वीणादत्तोऽपि स ततस्तमेवं प्रत्यभाषत ॥
राजा सागरदत्ताख्यो गन्धर्वाणामिहास्ति यः । तस्य गन्धर्वदत्ताख्या सुतास्ति न्यक्कृताप्सराः ॥
धात्रा कृतं सुधाचन्द्रचन्दनाद्यैरिवोच्चितैः । सर्वसुन्दरनिर्माणवर्णकायेव यद्वपुः ॥
सततं सा च गायन्ती वीणायां शौरिणा स्वयम् । दत्तं स्वगीतकं काष्ठां गान्धर्वे परमां गता ॥
यो वादयति वीणायां त्रिभिर्ग्रामैश्च गायति । गान्धर्वे कोविदः सम्यग्वैष्णवं स्तुतिगीतकम् ॥
स मे पतिः स्यादित्यस्या राजपुत्र्याश्च निश्चयः । तेन सर्वेऽत्र वीणासु शिक्षन्ते न च तद्विदुः ॥
एतच्छ्रुत्वैव सानन्दो वीणादत्तमुखाद्वचः । नरवाहनदत्तोऽसौ राजपुत्रो जगाद तम् ॥
अहं कलानां सर्वासां स्वयंवरवृतः पतिः । जानामि सर्वं गान्धर्वं त्रैलोक्योदरवर्ति यत् ॥
इत्युक्तवन्तं स सुहृद्वीणादत्तो निनाय तम् । राज्ञः सागरदत्तस्य पार्श्वं तत्र जगाद च ॥
नरवाहनदत्तोऽयं वत्सराजसुतः किल । इह विद्याधरीहस्ताद्विभ्रष्टो नगरे तव ॥
गान्धर्वाचार्य एवायं केशवस्तुतिगीतकम् । वेत्ति गन्धर्वदत्ताया यत्रोपरि महान्रसः ॥
तच्छ्रुत्वा सोऽब्रवीद्राजा सत्यमेतन्मया श्रुतम् । गन्धर्वाणां मुखात्पूर्वं तन्मान्योऽयमिहाद्य नः ॥
देवांशश्चैष न भ्रान्तिर्दैवभूमौ किमन्यथा । इह विद्याधरीसङ्गादागच्छेन्मानुषो भवन् ॥
आनीयतां तद्गन्धर्वदत्ता वीक्षामहेऽद्भुतम् । इति राज्ञोदिते जग्मुरानेतुं तां महत्तराः ॥
आगाच्च सा ततः कान्ता कुसुमाभरणोज्ज्वला । यौवनेन विघूर्णन्ती वातेनेवार्तवी लता ॥
उपविश्य पितुः पार्श्वे तद्वाक्याच्च क्षणान्तरे । भृत्यैः कथितवृत्तान्ता वीणायां गीतकं जगौ ॥
स्वराञ्श्रुतिषु युञ्जन्त्यास्तस्या ब्राह्म्या इव श्रियः । नरवाहनदत्तोऽभूद्गीते रूपे च विस्मितः ॥
राजपुत्रि न ते वीणा सुस्वरा प्रतिभाति मे । जाने वालः स्थितस्तन्त्र्यामिति सोऽत्र जगाद च ॥
ततोऽत्र वीक्ष्यते यावद्वालस्तावद्वापि सः । तेन सर्वेऽपि ते जग्मुर्गन्धर्वा अपि विस्मयम् ॥
राजपुत्र गृहाणेमां कर्णौ सिञ्चामृतेन नः । इति राजा सुताहस्ताद्वीणां तस्मै ददौ वदन् ॥
सोऽपि तां वादयन्विष्णोरगायद्गीतकं तथा । यथा ते तत्र गन्धर्वाश्चित्रन्यस्ता इवाभवन् ॥
ततो गन्धर्वदत्ता सा दृष्ट्वैव प्रणयार्द्रया । तं वव्रे फुल्लनीलाब्जमालयेवास्तया स्वयम् ॥
तदालोक्य तथारूपां तत्प्रतिज्ञां स्मरंश्च सः । राजा गन्धर्वदत्तां तां सद्यस्तस्मै सुतां ददौ ॥
दिव्यातोद्यादिकश्चात्र विवाहो यस्तयोरभूत् । कोपमा कथ्यते तस्य येनान्यदुपमीयते ॥
ततस्तया समं तत्र तस्थौ गन्धर्वदत्तया । नरवाहनदत्तोऽसौ दिव्यैर्भोगैर्नवोढया ॥
एकस्मिंश्च दिने द्रष्टुं निर्गतो नगरश्रियम् । तांस्तान्प्रदेशानालोक्य पुरोद्यानं विवेश सः ॥
तत्र व्योम्नोऽवरोहन्तीं सोऽपश्यद्दिव्ययोषितम् । समं दुहित्रानभ्रेऽपि सवृष्टिमिव विद्युतम् ॥
वत्सराजसुतः सोऽयं पुत्रि भावी पतिस्तव । इति तां वीक्ष्य जल्पन्तीं ज्ञानतस्तां निजां सुताम् ॥
का त्वं किमागतासीति सोऽपृच्छत्तामुपागताम् । सापीप्सितोपक्रमिणी दिव्ययोषित्तमब्रवीत् ॥
देवसिंहाभिधानस्य विद्याधरपतेरहम् । भार्या धनवती नाम कन्यैषा च सुता मम ॥
चण्डसिंहस्य भगिनी नाम्नेयमजिनावती । अस्या भर्ता त्वमादिष्टो गगनोद्गतया गिरा ॥
वेगवत्यात्र निक्षिप्तं भाविविद्याधरेश्वरम् । बुद्ध्वाहं निजविद्यातस्त्वां प्राप्ता वक्तुमीप्सितम् ॥
न विद्याधरगम्येऽत्र स्थाने युक्तं तवासितुम् । ते हि द्वेषेण हन्युस्त्वामप्राप्तपदमेककम् ॥
तदेहि तदगम्यां त्वां नयावः सांप्रतं भुवम् । नेन्दुः क्षिपति किं कालं परिक्षीणोऽर्कमण्डले ॥
संप्राप्तेऽवसरे चैतां सुतां मे परिणेष्यसि । इत्युक्त्वैव तमादाय ससुता सा खमुद्ययौ ॥
श्रावस्त्यां पुरि नीत्वैव निक्षिप्योपवने च तम् । समं तयाजिनावत्या सुतया सा तिरोदधे ॥
तत्र प्रसेनजिद्राजा दूरादाखेटकागतः । ददर्श राजपुत्रं तमुदाराकारलक्षणम् ॥

ाकौतुकमभ्येत्य पृष्ट्वा नाम कुलं तथा। प्रीतः सप्रश्रयं राजा निनायैतं स्वमन्दिरम्॥ ४५
द्ववारणघटं वाजिराजीविराजितम्। भ्रमणश्रान्तराजश्रीविश्रान्तिभवनोपमम्॥ ४६
तत्र स्थितं सोत्का नरं कल्याणभाजनम्। संपदोऽभिसरन्त्येव प्रियं जनमिवाङ्गनाः॥ ४७
तस्मै ददौ राजा गुणलुब्धो निजां सुताम्। नरवाहनदत्ताय भगीरथयशोभिधाम्॥ ४८
समं च तत्रासीन्महार्हविभवः सुखम्। लक्ष्म्येव मूर्तया धात्रा तद्विनोदाय सृष्टया॥ ४९
ाभ्युदिते लोकलोचनानन्दवर्षिणि। रजनीरमणे प्राचीदिग्वधूमुखमण्डने॥ ५०
त्रनिर्मलव्योमदर्पणप्रतिबिम्बिते। भगीरथयशोवक्त्र इवामृतमनोरमे॥ ५१
दीसुधया धौते हर्म्याग्रे स तया सह। प्रदोषे प्रियया पानमसेवत तदिच्छया॥ ५२
प्रियतमावक्त्रप्रतिमालंकृतं मधु। रसनाया इवानन्ददायि लोचनयोरपि॥ ५३
मुखसमं कान्तमिन्दुं मेने तदा न सः। तस्य ते समदाताम्रनेत्रभ्रूविभ्रमाः कुतः॥ ५४
ापानलीलश्च प्रविश्याभ्यन्तरं ततः। भगीरथयशोयुक्तः स भेजे शयनीयकम्॥ ५५
प्रेयायां सुप्तायां तस्यां सुप्तविनिद्रकः। नरवाहनदत्तोऽसौ स्मृत्वाकस्मात्किलाब्रवीत्॥ ५६
थयशःप्रीतिविस्मृता एव ता मम। अन्यभार्याः कथं तत्स्यादिति चात्र विधिः प्रभुः॥ ५७
ा ये च मे दूरे तेभ्योऽपि मरुभूतिकः। विक्रमैकरसो नीतिमात्रे हरिशिखः स्थितः॥ ५८
ं न सांप्रतं क्वापि गोमुखश्चतुरः पुनः। सर्वावस्थासु मे मित्रं विदूरस्थो दुनोति माम्॥ ५९
पन्स तत्राशु निद्राप्नं मधुरं मृदु। हा दुःखमिति शुश्राव नार्येवोदीरितं वचः॥ ६०
च दीप्रदीपेऽत्र सर्वतो यावदीक्षते। तावन्नार्या मुखं दिव्यं गवाक्षान्तर्ददर्श सः॥ ६१
ं व्योम्नि दृष्टोऽद्य चन्द्रोऽनेनेति कौतुकात्। अव्योम्नि दर्शितं धात्रा चन्द्रमन्यमिवामलम्॥ ६२
ोषमपश्यंश्च तस्यास्तद्दर्शनोत्सुकः। तद्रूपाकृष्टनयनो झगित्येवमचिन्तयत्॥ ६३
पेदैत्यो युक्त्या प्राग्ब्रह्मणा सर्गविघ्नकृत्। आश्चर्यं पश्य गत्वात्रेत्युक्त्वा प्रैष्यत नन्दनम्॥ ६४
नाद्भुताकारो दृष्टोऽङ्घ्रिः केवलं स्त्रियः। विपन्नश्च तदन्याङ्गदिदृक्षाव्यसनेन सः॥ ६५
मापि धात्रेदं मुखमात्रं विपत्तये। सृष्टं स्यादिति यावच्च सोऽत्राकलयति क्षणम्॥ ६६
गाक्षाद्दिव्या स्त्री प्रदर्श्य करपल्लवम्। इत एहीति साङ्गुल्या संज्ञां तस्याकरोत्तदा॥ ६७
ंसुप्तदयितात्स्वैरं निर्गत्य वासकात्। तस्याः समीपं संप्राप स सोत्को दिव्ययोषितः॥ ६८
त्रक्तं प्रशंसन्ती पतिं मदनमञ्चुके। हा हतासीति सा चास्मिन्निकटोपगतेऽब्रवीत्॥ ६९
ा तां प्रियां स्मृत्वा प्रज्वलद्विरहानलः। नरवाहनदत्तस्तां पृच्छति स्म स भामिनीम्॥ ७०
कुत्र त्वया दृष्टा प्रिया मदनमञ्चुका। मामुपेता किमर्थं च भवती कथ्यतामिति॥ ७१
ादूरं नीत्वा तं प्रौढा राजसुतं निशि। शृणु सर्वं त्वमित्युक्त्वा साथ वक्तुं प्रचक्रमे॥ ७२
पुष्करावत्यामग्न्याराधनपिङ्गलः। अस्ति पिङ्गलगान्धारो नाम विद्याधरेश्वरः॥ ७३
भावतीं नाम सुतां मां विद्धि कन्यकाम्। आराधितप्रसन्नाद्धि वरात्प्राप्तां विभावसोः॥ ७४
ादाषाढपुरं द्रष्टुं वेगवतीं सखीम्। अगच्छं न च तां तत्र प्रापं क्वापि तपःस्थिताम्॥ ७५
ः पृथिवीदेव्या मुखान्मदनमञ्चुकाम्। बुद्ध्वा तां त्वत्प्रियां चात्र स्थितां द्रष्टुमगामहम्॥ ७६
तामनाहारकृशां पाण्डुरधूसराम्। बद्धैकवेणीं रुदतीं त्वद्गुणैकप्रलापिनीम्॥ ७७
ाद्याधराधीशकन्यावृन्दैरुदश्रुभिः। तद्दर्शनत्वच्छ्रवणप्रोद्यद्दुःखसुखाकुलैः॥ ७८
त्वत्स्वरूपा च भवदानयनेन ताम्। आश्वास्य तत्कृपाक्रान्ता त्वद्गुणाकृष्टमानसा॥ ७९
भावाद्बुद्ध्वा च संप्रति त्वामिह स्थितम्। आगतास्मि तवाभ्याशं तदर्थस्वार्थसिद्धये॥ ८०
ाद्य प्रियं दृष्ट्वा त्वामिहान्यप्रलापिनम्। मया हा दुःखमित्युक्त्वा सा ते भार्यानुशोचिता॥ ८१
स तया सोत्को राजपुत्रो जगाद ताम्। नय मां तत्र सा यत्र नियुङ्क्ष्व च यथेच्छसि॥ ८२
ा सा तमादाय खमुत्पत्य प्रभावती। विद्याधरी चन्द्रवत्यां गन्तुं प्रववृते निशि॥ ८३

यान्ती काप्यग्निमालोक्य ज्वलन्तं सा प्रदक्षिणम्। नरवाहनदत्तस्य तस्यादाय करं व्यधात्॥
तेनोद्वाहविधिं युक्त्या प्रौढा सा निरवर्तयत्। संकल्पैकप्रधाना हि दिव्यानामखिलाः क्रियाः॥
ततो नभस्तलात्तस्य पृथिवीं वेदिकामिव। नदीर्भुजंगीसदृशीर्वल्मीकानिव पर्वतान्॥
तानि तानि तथान्यानि कौतुकानि पदे पदे। दर्शयन्ती प्रियस्यात्र ययौ दूरं क्रमेण सा॥
आकाशगमनश्रान्ते तृषार्तेऽस्मिञ्जलार्थिनि। नरवाहनदत्ते सा व्योममार्गादवातरत्॥
निनाय च वनान्तं तं चन्द्रांशुधवलाम्भसः। राजतेन द्रवेणेव भृतस्य सरसोऽन्तिकम्॥
तत्र शान्तं जलतृषा तस्य पीताम्भसो वने। उत्पन्नं रमणीये तु कान्तासंभोगतृष्णया॥
ततो हठार्थिता कृच्छ्रात्संभोगे सा प्रभावती। सानुक्रोशा कृताश्वासां ध्यात्वा मदनमञ्चुकाम्॥
नरवाहनदत्तस्य तस्य प्रवव्रृते तदा। परार्थप्रतिपन्ना हि नेक्षन्ते स्वार्थमुत्तमाः॥
जगाद तं च मा मंस्था आर्यपुत्र त्वमन्यथा। अभिप्रायो ममास्तीह तथा चात्र कथां शृणु॥
पुरा पाटलिपुत्रेऽभूत्कापि स्त्री मृतभर्तृका। बालैकपुत्रा तरुणी निर्धना रूपशालिनी॥
सा चात्मपरितोषाय परपूरुषसंगमम्। विदधाना ययौ गेहाद्रात्रौ रात्रौ यतस्ततः॥
मोदकं पुत्र ते प्रातरानेष्यामीति तं सुतम्। बालं चाश्वास्य सायासीत्तं च सान्वहमानयत्॥
स च बालो गृहे तूष्णीं तयासीन्मोदकाशया। एकदा न तयानीतो विस्मृत्यास्य स मोदकः॥
याचमानं च तं बालं मोदकं सा किलाब्रवीत्। अहं स्वकामुकं वेद्मि मोदकं नापरं सुत॥
तच्छ्रुत्वा नानयानीतो मोदको मेऽन्यसक्तया। इति तस्य निराशस्य शिशोर्हृदयमस्फुटत्॥
तदहं प्रिय पूर्वं त्वां सुतरां स्वीकरोमि चेत्। तन्मयैव कृताश्वासा त्वत्संगममहोत्सवे॥
मत्त एव निराशा चेद्बुद्ध्वा मदनमञ्चुका। भवेत्तद्धृदयं तस्याः स्फुटेत्कुसुमपेशलम्॥
तदेतेनानृशंस्येन तामनाश्वास्य संप्रति। न तथाभिलषामि त्वामपि प्राणाधिकं प्रियम्॥
इत्युक्तः स प्रभावत्या तया सानन्दविस्मयः। नरवाहनदत्तोऽत्र तत्कालं समचिन्तयत्॥
अहो नवनवाश्चर्यनिर्माणे रसिको विधिः। अचिन्त्योदारचरिता येन सृष्टा प्रभावती॥
इति ध्यायन्स तां प्रेम्णा स्तुत्वा राजसुतोऽब्रवीत्। तर्हि मां नय सा यत्र स्थिता मदनमञ्चुका॥
तच्छ्रुत्वा च गृहीत्वा तं नभसा सा प्रभावती। क्षणेन प्रापयामास तमाषाढपुरं गिरिम्॥
तत्र संगमयामास तेन शुष्यत्तनुं चिरात्। पूरेणेव नदीं वृष्टिः सा तां मदनमञ्चुकाम्॥
सोऽप्यपश्यद्वियोगार्तां कान्तां तां कृशपाण्डुराम्। नरवाहनदत्तोऽत्र पर्वणीन्दुकलामिव॥
स तदा प्राणलाभाय तयोरन्योन्यसंगमः। बभूव जगदानन्दी शर्वरीशशिनोरिव॥
विरहानलसंतप्तावाश्लिष्टौ दंपती च तौ। स्वेदच्छलाद्द्रवीभूतावेकतामिव जग्मतुः॥
ततः प्रभावतीविद्याबलेन निशि कल्पितान्। बुभुजातेऽत्र तौ सद्यः स्वैरं भोगानुभावपि॥
न ददर्श च तद्विद्याबलेनैवात्र कश्चन। नरवाहनदत्तं तं विना मदनमञ्चुकाम्॥
प्रातस्तं चात्र मुञ्चन्तमेकवेणीं निजं प्रियम्। सा जगादाहितामर्षवशान्मदनमञ्चुका॥
हते मानसवेगेऽसौ मोक्तव्यार्यसुतेन मे। मृतायाः पक्षिभिर्वापि वेणी दाह्याथवाग्निना॥
इति प्रतिज्ञातमभून्मया साद्य मम त्वया। जीवत्यस्मिन्नृपे मुक्ता तेन मे दूयते मनः॥
क्षिप्तोऽपि न मृतो ह्येष वेगवत्याग्निपर्वते। त्वं चादृश्यः प्रभावत्या विहितोऽत्र स्वमायया॥
अन्यथा त्वत्समीपे हि शत्रोरस्यानुशायिनः। इहैते संचरन्तोऽद्य त्वां सहेरन्विलोक्य किम्॥
एवमुक्तस्तया पत्न्या साध्व्या कालानुरोधवान्। नरवाहनदत्तोऽथ सान्त्वयन्स जगाद ताम्॥
संपत्स्यतेऽयं कामस्ते हनिष्याम्यचिरादमुम्। शत्रुं विद्याः समासाद्य प्रतीक्षस्व मनाक्प्रिये॥
इत्याद्युक्त्वा समाश्वास्य स तां मदनमञ्चुकाम्। नरवाहनदत्तोऽत्र तस्थौ वैद्याधरे पुरे॥
अथ प्रभावती तस्य चक्रे विद्याप्रभावतः। अतर्क्यं रूपमात्मीयं स्वयमन्तर्हिता सती॥
स तद्रूपेण तत्रासीद्राजपुत्रो यथासुखम्। अशङ्कितः प्रकाशोऽपि तद्विद्यासिद्धभोगभुक्॥

ा वयस्येयमेतां मदनमञ्चुकाम् । उपाचरति तत्प्रीत्या निजसख्यवशेन च ॥ १२३
गावतीत्येनं तद्रूपच्छन्नविग्रहम् । मन्वानाः सर्वे एवोचुस्तत्र मानसवेगतः ॥ १२४
ा प्रसङ्गेन तस्मै मदनमञ्चुका । नरवाहनदत्ताय स्ववृत्तान्तं शशंस सा ॥ १२५
नसवेगो मामिहानीय स्वमायया । प्रवर्तयितुमभ्यैच्छद्भाययन्क्रूरकर्मभिः ॥ १२६
गकटीभूय भगवान्भैरवाकृतिः । उद्धृतासिर्ललज्जिह्वः कृत्वा हुंकारमभ्यधात् ॥ १२७
ाधरेन्द्राणां भाविनश्चक्रवर्तिनः । भार्या कथं त्वयास्मासु स्थितेषु परिभूयते ॥ १२८
' भगवता पपात धरणीतले । पापो मानसवेगोऽसौ मुखेन रुधिरं वमन् ॥ १२९
ाहिते देवे समाश्वस्तः क्षणादसौ । गतः स्वमन्दिरं भूयो मयि क्रौर्याद्व्यवर्तत ॥ १३०
तां वियोगार्तां प्राणत्यागोन्मुखीमिह । एत्यान्तःपुरचेट्यो मां सान्त्वयन्त्योऽब्रुवन्निदम् ॥ १३१
गां पुरा कांचिद्दृष्ट्वा रूपवतीं हठात् । हरन्मानसवेगोऽयं तद्बन्धुभिरशप्यत ॥ १३२
गनिच्छन्तीं यदा पाप गमिष्यसि । तदा ते शतधा मूर्धा विदलिष्यत्यसाविति ॥ १३३
ा बलाद्गच्छेत्परस्त्रीं मा भयं कृथाः । देवादेशाच्च भर्त्रा ते भूयो भाव्येव संगमः ॥ १३४
क्ति चेटीभिः क्षणाद्वेगवती स्वसा । सास्य मानसवेगस्य संबोधयितुमागमत् ॥ १३५
ुपाविष्टा सा त्वदानयनेन माम् । आश्वास्य त्वां यथा प्राप्ता तथैव विदितं तव ॥ १३६
त्स्नासितैर्वस्त्रैश्चान्द्री तनुरिवामला । दर्शनेनैव सौम्येन सिञ्चन्ती सुधयेव माम् ॥ १३७
थिवीदेवी माता साध्वी दुरात्मनः । अस्य मानसवेगस्य सस्नेहमिदमब्रवीत् ॥ १३८
ारं शुभोदर्कं किमात्मानमुपेक्षसे । शत्रोरन्नं कथं भोक्ष्य इति मा च कृथा हृदि ॥ १३९
'वत्या मे राज्येऽस्मिन्पितृकल्पितः । भागोऽस्ति सा च भर्त्रा ते परिणीता सखी तव ॥ १४०
तृसंबन्धि तव चात्मीयमेव च । तदेतद्भुङ्क्ष्व विद्यातो ज्ञात्वा सत्यं वदामि ते ॥ १४१
ा सशपथं भोजितास्मि तया तदा । अवस्थोचितमाहारं सुतासंबन्धबद्धया ॥ १४२
' सहागत्य वेगवत्यैष निर्जितः । भ्रातेह रक्षितस्त्वं च शेषमत्र न वेद्म्यहम् ॥ १४३
व्रतीसिद्धिं तद्देवतवचोऽप्यहम् । स्मरन्ती नामुचं प्राणांस्त्वत्प्राप्त्याशावलम्बितान् ॥ १४४
ानुभावायाः प्रभावत्याः प्रभावतः । त्वं शत्रुसंकटेऽप्यस्मिन्प्राप्तस्तावन्मयाधुना ॥ १४५
' मे विलुप्ता चेद्भवेदत्र प्रभावती । नश्येच्च तव तद्रूपं ततोऽस्माकं नु किं भवेत् ॥ १४६
ुवतीं धीरीकुर्वन्मदनमञ्चुकाम् । नरवाहनदत्तोऽसौ वीरोऽत्रास्त तया सह ॥ १४७
' प्रभावत्यां यातायां भवनं पितुः । प्रभातसमये नष्टतद्रूपं तदसंनिधेः ॥ १४८
ुदत्तं तं दृष्ट्वा पुरुषरूपिणम् । पारदारिक एषोऽत्र प्रविष्ट इति साकुलः ॥ १४९
कुले गत्वा सर्वः परिजनोऽभ्यधात् । वारयन्तीमपास्यैव भीतां मदनमञ्चुकाम् ॥ १५०
'सवेगोऽत्र स राजा स्वबलान्वितः । नरवाहनदत्तं तं धावित्वा पर्यवेष्टयत् ॥ १५१
थिवीदेवी माता सत्वरमेत्य सा । राजानमब्रवीत्पुत्र हन्तव्योऽयं न ते न मे ॥ १५२
'रिको ह्येष वत्सराजात्मजो ह्ययम् । नरवाहनदत्तोऽत्र निजां भार्यामुपागतः ॥ १५३
ा जानेऽहं कोपान्धः किं न वीक्षसे । जामाता चायमस्माकं पूज्यः शशिकुलोद्भवः ॥ १५४
ाया मात्रा तर्हि शत्रुरयं मम । इति मानसवेगोऽसौ जातामर्षो जगाद ताम् ॥ १५५
तं पुनर्माता जामातृस्नेहतोऽभ्यधात् । नाधर्मो लभ्यते कर्तुं लोके वैद्याधरे सुत ॥ १५६
धराणां हि धर्मार्था विद्यते सभा । तत्रास्य तत्प्रधानाग्रे दोषं शिरसि पातय ॥ १५७
क्ष्यतेऽमुष्य शोभते तदतोऽन्यथा । विद्याधरा विकुर्वीरन्न सहेरंश्च देवताः ॥ १५८
वचो मातुर्गौरवात्प्रतिपद्य सः । सभां मानसवेगस्तं नेष्यन्बन्द्धुं प्रचक्रमे ॥ १५९
ग्रासहिष्णुः सन्स्तम्भमुत्पाट्य तोरणात् । नरवाहनदत्तोऽत्र तद्भृत्यानवधीद्बहून् ॥ १६०
खड्गमेकस्य हतस्यासाद्य तत्क्षणात् । जघान सोऽन्यानपि तान्वीरो दिव्यपराक्रमः ॥ १६१

ततो मानसवेगस्तं दिव्यया निजविद्यया । बबन्ध भार्यानुगतं नयति स्म च तां सभाम् ॥
तत्र भेरीमहाशब्दसमाहूता इतस्ततः । विद्याधरा मिलन्ति स्म सुधर्मायां यथा सुराः ॥
आगत्योपाविशच्चात्र रत्नसिंहासनोपरि । राजा वायुपथो नाम सभ्यो विद्याधरैर्वृतः ॥
व्याधुन्वद्भिरिवाधर्मं वीज्यमानस्य चामरैः । तस्य मानसवेगोऽग्रे स्थित्वा पापोऽब्रवीदिदम् ॥
मर्त्योऽप्यन्तःपुरध्वंसकारी विध्वंसकः स्वसुः । शत्रुर्ममायं वध्योऽद्य स्वाम्यकामः किलैष नः ॥
तच्छ्रुत्वा तेन सभ्येन पृष्टः प्रत्युत्तरं प्रति । नरवाहनदत्तोऽत्र वीरो विस्रब्धमब्रवीत् ॥
सा सभा यत्र सभ्योऽस्ति स सभ्यो धर्ममाह यः । स धर्मो यत्र सत्यं स्यात्तत्सत्यं यत्र न च्छलम्
बद्धोऽहं माययात्रैव स्थितो भूमावयं पुनः । आसनस्थश्च मुक्तश्च को विवादः समोऽत्र नौ ॥
एतद्वायुपथः श्रुत्वा तमुपावेशयत्क्षितौ । न्यायान्मानसवेगं स तं मुक्तं चाप्यकारयत् ॥
ततः सर्वेषु शृण्वत्सु तत्र वायुपथाग्रतः । नरवाहनदत्तोऽसावेवं प्रतिवचोऽभ्यधात् ॥
हृतानीतामनेनैतां भार्यां मदनमञ्चुकाम् । निजां प्राप्तोऽस्मि चेत्कस्य शुद्धान्तो ध्वंसितो मया ॥
अस्या रूपेण चाभ्येत्य विप्रलभ्य कृतो यदि । अहं भर्ता भगिन्यास्य तत्र का मेऽपराधिता ॥
स्वाम्यकामोऽस्मि चेत्कामः कस्य कुत्र न जायते । एतच्छ्रुत्वा विमृश्याथ राजा वायुपथोऽब्रवीत्
धर्म्यमाह महात्मायं भविष्यत्सुमहोदयः । अस्मिन्मानसवेग त्वमधर्मं भद्र मा कृथाः ॥
इत्युक्ते तेन नाधर्मान्मोहान्धो यत्न्यवर्तत । सोऽत्र मानसवेगस्तत्क्रोधं वायुपथो ययौ ॥
ततो मानसवेगेन सह संनद्धसैनिकः । बभूव तस्य संक्षोभस्तत्र धर्मानुरोधिनः ॥
धर्मासनोपविष्टा हि दुर्बलं बलिनं परम् । आत्मीयं बत जानन्ति धीरा न्यायैकदर्शिनः ॥
विहाय मायां युध्यस्व स्पष्टमेव मया सह । यावदेकप्रहारेण हन्मि त्वां पश्य पौरुषम् ॥
इति मानसवेगं च तदावोचद्विलोकयन् । नरवाहनदत्तोऽत्र दिव्यकन्याः सकौतुकाः ॥

अन्योन्यजातकलहेषु च तत्र तेषु विद्याधरेषु सहसैव सभान्तरस्थात् ।
स्तम्भोत्तमाद्धसदिति प्रविभिन्नमध्याद्देवोऽथ भैरववपुः किल निर्जगाम ॥
व्याप्ताम्बरोऽञ्जननिभश्च विनिह्नुतार्को विद्युल्लतातरलदीप्रविलोचनार्चिः ।
दन्तप्रभावितपङ्क्तिपतद्बलाको गर्जन्महाप्रलयमेघ इव प्रचण्डः ॥
न भाविविद्याधरचक्रवर्तिनः पराभवोऽस्यास्ति शठेति स ब्रुवन् ।
अधोमुखं मानसवेगमीश्वरो निराकरोद्वायुपथं प्रहर्षयन् ॥
आदाय तं च भुजयोर्भगवान्भुजाभ्यां संरक्षणाय नरवाहनदत्तमाशु ।
प्रापय्य पर्वतवरं शुभमृष्यमूकमास्थापयत्स किल तत्र ततस्तिरोऽभूत् ॥
प्रशशाम परस्परं सभायामथ विद्याधरसंभ्रमः स तस्याम् ।
स च वायुपथो यथागतं तैः सहितः स्वैरपरैस्ततो जगाम ॥
सोऽपि च मानसवेगः कृत्वा तां मदनमञ्चुकां पुरतः ।
हर्षविषादाकुलितामाषाढपुरं निजं ययौ विघ्नः ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पञ्चलम्बके द्वितीयस्तरङ्गः ।

---

तृतीयस्तरङ्गः ।

मन्ये कल्याणमेव स्यात्पुरुषस्यासमं विधिः । मुहुः परीक्षते गाढं धीरत्वं सुखदुःखयोः (?) ॥
यदेककं विदेशेषु तैस्तैर्दारैः पदे पदे । नरवाहनदत्तं स योजयित्वा व्ययोजयत् ॥
अथैतमृष्यमूकाद्रौ स्थितं तस्मिन्प्रभावती । नरवाहनदत्तं तं समागत्याब्रवीत्प्रिया ॥
मद्संनिधिदोषेण लब्ध्वा नीतो भवांस्तदा । तां हि मानसवेगेन सभां पापं चिकीर्षुणा ॥

ागत्य तत्कालं देवाविर्भावडम्बरम् । कृत्वा विद्याप्रभावेण मयेह प्रापितो भवान् ॥ ५
न्विद्याधराणां हि गिरौ बलवतामपि । विद्याप्रपञ्चः क्रमते सिद्धक्षेत्रमिदं यतः ॥ ६
। विद्याविभवो नात एवेह सिध्यति । तन्मे दुःखं कथं त्वं हि वन्याहारेण वर्त्स्यसि ॥ ७
ावत्या तत्रासीत्कालाकाङ्क्षी तया सह । नरवाहनदत्तोऽसौ ध्यायन्मदनमञ्चुकाम् ॥ ८
तत्पर्वतासन्ने पम्पासरसि पावने । दिव्यास्वादानि बुभुजे मूलानि च फलानि च ॥ ९
सोपदंशं च पुण्यं वापीपयः पपौ । फलैस्तीरतरुभ्रष्टैः सरसं च सुगन्धि च ॥ १०
वृक्षमूलेषु गुहागर्भगृहेषु च । रामस्यानुययौ वृत्तं तद्देशवनवासिनः ॥ ११
रमांश्च दृष्ट्वात्र तस्मै तांस्तान्प्रभावती । सा रामायणवृत्तान्तं विनोदार्थमवर्णयत् ॥ १२
मः ससौमित्रिः सीतयानुगतो वने । उवास तापसैः सार्धं तरुमूले कृतोटजः ॥ १३
ाङ्गरागेण सीतामोदितकानना । इहास्त मुनिपत्नीनां मध्ये वल्कलधारिणी ॥ १४
न्दुभिर्दैत्यश्च गुहायां वालिना हतः । वालिसुग्रीवयोर्वैरे यदभूत्कारणं पुरा ॥ १५
हि भ्रमान्मत्वा हतं दैत्येन वालिनम् । गुहायाः पर्वतैर्द्वारं पिधाय सभयो ययौ ॥ १६
च भित्त्वा तद्द्वारं निर्गत्य निरवासयत् । सुग्रीवं राज्यकामोऽत्र मामबध्नादसाविति ॥ १७
ीवः पलाय्यास्मिन्नृष्यमूके कपीश्वरः । हनुमत्प्रमुखैः सार्धमत्र सानौ पदं व्यधात् ॥ १८
हेमहरिणव्याजवञ्चितचेतसः । जहार रामदेवस्य रावणो जनकात्मजाम् ॥ १९
ीताप्रवृत्त्यर्थी स वालिनिधनार्थिना । सुग्रीवेण समं सख्यमत्र चक्रे रघूद्वहः ॥ २०
च बलज्ञप्त्यै तालान्सप्तात्र पत्रिणा । एकं येष्वभिनत्कृच्छ्रात्सोऽपि वाली महाबलः ॥ २१
त्वा च किष्किन्धां हेलामुक्तैकसायकः । हत्वा तं वालिनं वीरः सुग्रीवे तच्छ्रियं न्यधात् ॥ २२
ोताप्रवृत्त्यर्थं हनुमत्प्रभृतिष्वितः । चतुर्दिक्कं प्रयातेषु सुग्रीवस्यानुयायिषु ॥ २३
मेण वर्षासु सह मेघैर्विराविभिः । पतद्धाराश्रुतोयैश्च समदुःखैरिवासितम् ॥ २४
वचनोत्तीर्णवारिधेश्च हनूमतः । यत्नात्प्रवृत्तौ ज्ञातायां गत्वा कपिबलैः सह ॥ २५
ध सेतुना तेन हत्वा लङ्केश्वरं रिपुम् । आनिन्ये जानकी देवी विमानेनामुना पथा ॥ २६
ष्यति कल्याणमार्यपुत्र भवानपि । आपत्सु धीरान्पुरुषान्स्वयमायान्ति संपदः ॥ २७
कथयन्त्या स प्रभावत्या तथा सह । नरवाहनदत्तोऽत्र क्रीडन्नासीदितस्ततः ॥ २८
तं च पम्पायां विद्याधर्यावुभे दिवः । धनवत्यजिनावत्याववतीर्योपजग्मतुः ॥ २९
स गन्धर्वपुराच्छ्रावस्तीं प्रापितोऽभवत् । भगीरथयशा यस्यां तेन सा पर्यणीयत ॥ ३०
ाजिनावत्यां मिलितायां स्वसख्यतः । नरवाहनदत्तं सा धनवत्येवमब्रवीत् ॥ ३१
नावती प्राक्ते वाचा दत्ता सुता मया । तस्मात्परिणयस्वैनामासन्नोऽभ्युदयो हि ते ॥ ३२
वतीवाक्यं सखीस्नेहात्प्रभावती । नरवाहनदत्तश्च तथेत्यभिननन्दतुः ॥ ३३
नवती तस्मै ददौ तामजिनावतीम् । सा वत्सेश्वरपुत्राय यथार्हविधिना सुताम् ॥ ३४
कल्पितोदारदिव्यसंभारसुन्दरम् । निर्वर्तयामास च तत्सा सुतोद्वाहमङ्गलम् ॥ ३५
नदत्तं सा तमन्येद्युरथाब्रवीत् । न पुत्र यत्र तत्रेह स्थातुं युक्तं चिरं तव ॥ ३६
ेद्याधरजनो न च कार्यमिहास्ति ते । तद्गच्छ भार्यायुक्तस्त्वं कौशाम्बीमधुना निजाम् ॥ ३७
तत्रैवैष्यामि चण्डसिंहेन सूनुना । सह विद्याधरेन्द्रैश्च स्वकैरभ्युदयाय ते ॥ ३८
वा धनवती सज्योत्स्नामिव साह्न्यपि । सितात्मवस्त्रप्रभया कुर्वाणा दिवमुद्ययौ ॥ ३९
जिनावत्यौ प्रापयामासतुश्च तम् । नरवाहनदत्तं ते कौशाम्बीं नभसा पुरीम् ॥ ४०
ाप्तस्तदुद्यानं तस्यां व्योम्नोऽवतारितः । नरवाहनदत्तोऽभूद्दृष्टः परिजनैर्निजैः ॥ ४१
राजपुत्रोऽयं दिष्ट्या वर्धामहे वयम् । इति तत्रोदभून्नादो जनस्याथ समन्ततः ॥ ४२
ण्डसुधासारसंसिक्त इव सोत्सवः । वत्सराजोऽथ तद्बुद्ध्वा युक्तो वासवदत्तया ॥ ४३

पद्मावत्या वधूभिश्च द्रुतं रत्नप्रभादिभिः । यौगन्धरायणाद्याश्च ये वत्सेश्वरमन्त्रिणः ॥
कलिङ्गसेना स्वे चैव सचिवा गोमुखादयः । यथार्हं तमुपाजग्मुर्ग्रीष्मे ह्रदमिवाध्वगाः ॥
ददृशुस्ते च मध्ये तं सुदशार्हकुलं द्वयोः । पत्न्योः कृष्णमिवासीनं रुक्मिणीसत्यभामयोः ॥
अङ्गेष्वेव न वर्तेरन्स्फुटत्स्विति भयादिव । तेषां तद्दर्शने हर्षबाष्पैः पिदधिरे दृशः ॥
वत्सराजश्च देव्यौ च चिरादालिङ्ग्य तं सुतम् । न शेकुर्मोक्तुमङ्गेषु प्रोतं कण्टकितेष्विव ॥
ततः प्रहततूर्येऽत्र वर्तमाने महोत्सवे । नरवाहनदत्तस्य भार्या वेगवतः सुता ॥
स्वसा मानसवेगस्य द्युमार्गेणावतीर्य सा । आगाद्वेगवती बुद्ध्वा सिद्धविद्याप्रभावतः ॥
पतित्वा पादयोः श्वश्रूश्वशुराणां निजं पतिम् । नरवाहनदत्तं सा जगाद चरणानता ॥
त्वत्कृते दुर्बलीभूताः साधयित्वा तपोवने । विद्याः पुनरहं प्राप्ता तव कल्याणिनोऽन्तिकम् ॥
एवमुक्तवती पत्या तैश्चान्यैरभिनन्दिता । प्रभावत्यजिनावत्यौ सख्यावुपजगाम सा ॥
ताभ्यामाश्लिष्य सा मध्ये यावदत्रोपवेश्यते । तावन्माताजिनावत्या आययौ धनवत्यपि ॥
आजग्मुश्च तया साकं ते ते विद्याधराधिपाः । आच्छादिताम्बरतलैर्मेघैरिव बलैर्वृताः ॥
तस्या एव सुतो वीरश्चण्डसिंहो महाभुजः । तथामितगतिर्नाम तद्बन्धुः सुमहाबलः ॥
स च पिङ्गलगान्धारः प्रभावत्याः पिता बली । सोऽपि वायुपथः पूर्वप्रतिपन्नः सभापतिः ॥
स च हेमप्रभः शूरो राजा रत्नप्रभापिता । वज्रप्रभेण पुत्रेण साकं बलसमन्वितः ॥
गन्धर्वराजो गन्धर्वदत्तया सुतया युतः । आगात्सागरदत्तोऽपि सह चित्राङ्गदेन सः ॥
उपागताश्च ते सम्यग्वत्सराजेन पूजिताः । सपुत्रेणासनेष्वत्र यथोचितमुपाविशन् ॥
अथ पिङ्गलगान्धारो राजा जामातरं क्षणात् । नरवाहनदत्तं तं जगाद सदसि स्थितम् ॥
त्वं चक्रवर्ती सर्वेषामस्माकं देवनिर्मितः । अतिस्नेहवशात्त्वां च वयं सर्वेऽभ्युपागताः ॥
इयं धनवती देवी श्वश्रूस्ते नियतव्रता । दिव्यज्ञानवती साक्षसूत्रा कृष्णाजिनाम्बरा ॥
रक्षितुं त्वां कृतोद्योगा साक्षाद्भगवती यथा । सावित्री सिद्धविद्या वा वन्द्या विद्याधरोत्तमैः ॥
तदस्ति कार्यसिद्धिस्ते किं तु यद्वच्मि तच्छृणु । इह विद्याधराणां द्वौ वेद्यर्धौ स्तो हिमाचले ॥
उत्तरो दक्षिणश्चैव नानातच्छृङ्गभूमिगौ । परतः किल कैलासादुत्तरोऽर्वाक्तु दक्षिणः ॥
तत्रोत्तराधिपत्यार्थमिदानीं दुश्चरं तपः । एषोऽमितगतिः कृत्वा शंकरं पर्यतोषयत् ॥
नरवाहनदत्तस्ते चक्रवर्ती समीहितम् । करिष्यतीति तेनायमादिष्टस्त्वामुपागतः ॥
तत्र मन्दरदेवाख्यो मुख्यो राजास्ति दुर्मतिः । बलवानपि नासाध्यः प्राप्तविद्यस्य सोऽत्र ते ॥
यस्तु दक्षिणमध्येऽस्ति गौरिमुण्ड इति श्रुतः । राजा विद्याप्रभावेण स दुष्टात्मातिदुर्जयः ॥
स च मानसवेगस्य शत्रोस्ते परमः सुहृत् । यावन्न साधितः सोऽत्र तावत्कार्यं न सिध्यति ॥
तत्त्वं साधय सोत्कर्षं शीघ्रं विद्याबलं महत् । इति पिङ्गलगान्धारेणोक्ते धनवती जगौ ॥
एवं पुत्र यथार्थं ते राजा वदति तत्तथा । सिद्धक्षेत्रमतो गत्वा विद्यासिद्ध्यर्थमीश्वरम् ॥
आराधय प्रकर्षो हि तत्प्रसादं विना कुतः । मिलिताश्चात्र रक्षन्ति राजानस्त्वाममी इति ॥
ततश्चित्राङ्गदोऽवादीदेवमेतदहं पुनः । सर्वेषामग्रयाय्येष विजयः क्रियतामिति ॥
अथैतदेव निश्चित्य कृत्वा प्रस्थानमङ्गलम् । पित्रोरुद्बाष्पयोः पादौ गुरूणां च प्रणम्य सः ॥
दत्ताशीस्तैः समारुह्य भार्याभिः सचिवैस्तथा । सहामितगतिप्रज्ञाकल्पितां शिबिकोत्तमाम् ॥
नरवाहनदत्तोऽतः प्रतस्थे स्थगयन्नभः । कल्पान्तपवनोद्धूतसागराम्भोनिभैर्बलैः ॥
सेनानादप्रतिश्रुद्भिर्दिगन्तेषु द्युचारिणाम् । आगतश्चक्रवर्तीव इति संवादयन्निव ॥
क्षणात्तैश्च स गन्धर्वपतिविद्याधरेश्वरैः । धनवत्या च नीतोऽभूत्तं सिद्धक्षेत्रपर्वतम् ॥
तत्रादिष्टव्रतः सिद्धैः प्रातःस्नायी फलाशनः । भूमिशायी तपश्चक्रे शंकराराधनाय सः ॥
परिवार्य च तं तस्थू राजानस्ते द्युचारिणाम् । सर्वतः कृतसंरक्षा दिवानिशमतन्द्रिताः ॥

विद्याधरकुमार्योऽत्र तपस्यन्तं तमुत्सुकाः । नेत्रप्रभाभिः संवीतकृष्णाजिनमिव व्यधुः ॥ ८३
तच्चिन्तान्तर्मुखैर्नेत्रैः करैश्चोरःस्थलार्पितैः । अदर्शयन्निवान्यास्तं प्रविष्टं हृदि तत्क्षणम् ॥ ८४
पञ्चापराश्च दृष्ट्वा तं सद्विद्याधरकन्यकाः । मदनानलसंतप्ताश्चक्रिरे समयं मिथः ॥ ८५
अयं पञ्चभिरस्माभिः सखीभिर्युगपत्पतिः । वरणीयो विवाहश्च तद्वत्कार्यो न भेदतः ॥ ८६
एका यदि पृथक्कुर्याद्विवाहममुना ततः । प्रवेष्टव्योऽग्निरन्याभिस्तामुद्दिश्य सखीद्रुहम् ॥ ८७
इति दिव्यासु कन्यासु क्षुभ्यतीषु विभाव्य तम् । तत्राकस्मान्महोत्पाताः प्रादुरासंस्तपोवने ॥ ८८
ववौ वायुर्महारौद्रो भद्रानुन्मूलयन्द्रुमान् । एवं शूराः पतिष्यन्ति रणेऽत्रेति वदन्निव ॥ ८९
किमत्र स्यादिति भयादिव भूमिरकम्पत । भीतावकाशदानार्थमिवादीर्यन्त सानवः ॥ ९०
विद्याधराः प्रभुं यत्नादमुं रक्षत रक्षत । इत्यब्रवीदिवानभ्रं घोरशब्दं नभस्तलम् ॥ ९१
नरवाहनदत्तश्च सोऽस्मिन्नुत्पातसंभ्रमे । ध्यायन्निष्कम्प एवासीद्भगवन्तं त्रिलोचनम् ॥ ९२
संनद्धास्ते च गन्धर्वराजविद्याधरेश्वराः । अनिष्टाशङ्किनो वीरास्तं रक्षन्तोऽवतस्थिरे ॥ ९३
मुमुचुः सिंहनादांश्च व्याधूतासिलतावनाः । भर्त्सयन्त इवोत्पातानहितागमशंसिनः ॥ ९४
ततोऽन्येद्युरकस्माच्च कल्पान्ताम्बुदमेदुरम् । विद्याधरबलं व्योम्नि घोरनादमदृश्यत ॥ ९५
सोऽयं मानसवेगेन गौरिमुण्डः सहागतः । इत्युवाच स्मरन्ती स्वां विद्यां धनवती तदा ॥ ९६
ततो विद्याधरेन्द्रांस्तान्सगन्धर्वानुदायुधान् । समं मानसवेगेन गौरिमुण्डोऽभ्यधावत ॥ ९७
क्व मानुषोऽयं क्व वयं तदेतत्पक्षपातिनाम् । दर्पं वः शमयाम्यद्य द्युचरा इति वादिनम् ॥ ९८
चित्राङ्गदोऽथ तं क्रोधाद्धावन्प्रत्यभियुक्तवान् । राजा सागरदत्तश्च गन्धर्वाणामधीश्वरः ॥ ९९
चण्डसिंहामितगती राजा वायुपथस्तथा । किं च पिङ्गलगान्धारः सर्वे विद्याधरेश्वराः ॥ १००
पापं मानसवेगं तमभ्यधावन्महारथाः । सिंहा इवाभिगर्जन्तः सेनासमुदयान्विताः ॥ १०१
सैन्यरेणुघनाकीर्णं शस्त्रज्वालातडिल्लतम् । पतद्रक्ताम्बु तदभूद्धोरं समरदुर्दिनम् ॥ १०२
शोणितासवसंपूर्णं कीर्णशत्रुशिरोबलिम् । चक्रुर्भूतमहायागमिव चित्राङ्गदादयः ॥ १०३
कबन्धग्राहसंकीर्णा वहदायुधपन्नगाः । प्रावर्तन्त मिलन्मेदोडिण्डीरा रुधिरापगाः ॥ १०४
हतसैन्यो वधप्राप्तो गौरिमुण्डस्ततश्च सः । पूर्वाराधितसुप्रीतां गौरीविद्यां समस्मरत् ॥ १०५
आविर्भूय च सा साक्षात्त्रिनेत्रा त्रिशिखायुधा । नरवाहनदत्तीयान्प्रवीरांस्तानमोहयत् ॥ १०६
ततो लब्धबलो बाहुयुद्धायाभ्यपतन्नदन् । नरवाहनदत्तं तं गौरिमुण्डः प्रधाव्य सः ॥ १०७
तद्बाहुयुद्धविद्धश्च मायी सस्मार तां पुनः । सद्विद्यां तद्बलात्तं च बाह्वोरादाय खं ययौ ॥ १०८
हन्तुं धनवतीविद्याबलात्तं तु स नाशकत् । गौरिमुण्डो नृपसुतं चिक्षेप त्वग्निपर्वते ॥ १०९
सोऽपि मानसवेगस्तांस्तत्सखीन्गोमुखादिकान् । गृहीत्वोत्पत्य गगनं दिक्षु प्रास्यदनास्थया ॥ ११०
उत्क्षिप्तास्ते च रक्षित्वा धनवत्या प्रयुक्तया । रूपिण्या विद्यया भिन्नाः स्थाप्यन्ते स्म महीतले ॥ १११
सिद्धकार्यं कुशलिनं शीघ्रं प्राप्स्यथ तं प्रभुम् । इत्याश्वास्यैकशस्तान्सा विद्या तेषां तिरोदधे ॥ ११२
ततो विजितमस्माभिरिति मत्वा यथागतम् । सह मानसवेगेन गौरिमुण्डो ययौ गृहान् ॥ ११३
नरवाहनदत्तो वः सिद्धकार्यः समेष्यति । न तस्यानिष्टमस्तीति धनवत्याभ्युदीरिते ॥ ११४
तेऽप्यस्तमोहा गन्धर्वनाथविद्याधरेश्वराः । चित्राङ्गदादयः स्वानि जग्मुः स्थानानि संप्रति ॥ ११५
सापि तत्र सपत्नीभिः सहितामजिनावतीम् । स्वसुतां तां गृहीत्वा स्वं ययौ धनवती गृहम् ॥ ११६
सोऽपि मानसवेगस्तां गत्वा मदनमञ्चुकाम् । उवाच स हतो भर्ता तव तद्भज मामिति ॥ ११७
स वो हन्ता न तं हन्यात्कश्चिद्देवविनिर्मितम् । इति सा तत्पुरस्थापि हसन्ती प्रत्युवाच तम् ॥ ११८
नरवाहनदत्तं च तद्द्विषा वह्निपर्वते । क्षिप्यमाणं तदागत्य दिव्यः कोऽप्यग्रहीत्पुमान् ॥ ११९
निनाय चाशु रक्षित्वा शीतं मन्दाकिनीतटम् । को भवानिति पृष्टश्च तेनाश्वास्य जगाद तम् ॥ १२०
अमृतप्रभनामाहं देव विद्याधराधिपः । प्रेषितश्च हरेणाहं रक्षार्थं भवतोऽधुना ॥ १२१

अयं च तन्निवासोऽद्रिः कैलासस्ते स्थितोऽग्रतः। अत्राराध्य शिवं श्रेयो निर्विघ्नं त्वमवाप्स्यसि॥
तदेह्यत्र नयामि त्वामित्युक्त्वा तत्र तत्क्षणात्। प्रापय्यामन्त्र्य च ययौ सोऽथ विद्याधरोत्तमः॥
नरवाहनदत्तोऽपि कैलासं समवाप्य सः। तपसा तोषयामास तत्राग्रस्थं विनायकम्॥
तेन दत्ताभ्यनुज्ञश्च प्रविश्य गिरिजापतेः। आश्रमं नियमक्षामो ददर्श द्वारि नन्दिनम्॥
कृतप्रदक्षिणं चैतं स नन्दी सदयोऽब्रवीत्। प्रायः सिद्धोऽसि विघ्ना हि प्रशान्तास्ते तवाधुना॥
तदिहस्थस्तपस्य त्वं भगवत्तोषणावधि। दुरितघ्नतपःशुद्धिसव्यपेक्षा हि सिद्धयः॥
इत्युक्ते नन्दिना ध्यायन्देवं देवीं च पार्वतीम्। नरवाहनदत्तोऽत्र तपस्तेपेऽनिलाशनः॥
तपस्तुष्टश्च भगवान्स दत्त्वा दर्शनं शिवः। देव्या गिरिजया सार्धमेवं प्रह्वं तमादिशत्॥
विद्याधराणां सर्वेषां चक्रवर्ती भवाधुना। सर्वाः सर्वातिशायिन्यो विद्याः प्रादुर्भवन्तु ते॥
अस्मत्प्रभावाच्छत्रूणामविजेयो भविष्यसि। अच्छेद्यश्चाप्यभेद्यश्च हनिष्यस्यखिलान्रिपून्॥
दृष्टे त्वयि न विद्याश्च प्रभविष्यन्ति ते द्विषाम्। तद्गच्छ गौरीविद्यापि त्वदायत्ता भविष्यति॥
इति गौर्या समं दत्त्वा वरं तस्मै ददौ हरः। चक्रवर्तिमहापद्मविमानं ब्रह्मनिर्मितम्॥
ततस्तस्याविरासंस्ता विद्याः सर्वाः सविग्रहाः। किमादिशसि यत्कुर्म इत्याज्ञासाधनोत्सुकाः॥

इति नरवाहनदत्तः सिद्धवरौघः प्रणम्य परमेशौ।
अधिरुह्य तच्च दिव्यं पद्मविमानं तदभ्यनुज्ञातः॥
प्रथमं तावदयासीदमितगतेस्तस्य वक्रपुरसंज्ञम्।
पुरमावेदितमार्गो विद्याभिः सिद्धचारणोद्गीतः॥
सोऽप्यारूढविमानं व्योम्ना प्राप्तं विलोक्य तं दूरात्।
अमितगतिः समुपेत्य स्वगृहं प्रावेशयत्कृतप्रणतिः॥
प्रददौ च तत्र वर्णितनिजसिद्धिप्राप्तये मुदा तस्मै।
नरवाहनदत्ताय स सुलोचनाख्यामुपायनं स्वसुताम्॥
सोऽत्र तया सह विद्याधरलक्ष्म्येवाप्तया तदापरया।
नयति स्म चक्रवर्ती ततोत्सवं प्रीतिमांस्तदहः॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पञ्चलम्बके तृतीयस्तरङ्गः।

---

चतुर्थस्तरङ्गः।

ततो वक्रपुरे तत्र स्थितमास्थानवर्तिनम्। नरवाहनदत्तं तं नूतनं चक्रवर्तिनम्॥
अन्येद्युरवतीर्यैव वेत्रहस्तो नभस्तलात्। उपगम्य पुमानेकः प्रणम्यैवं व्यजिज्ञपत्॥
चक्रवर्तिप्रतीहारं विद्धि देव क्रमागतम्। मां पौररुचिदेवाख्यं स्वसेवार्थमुपागतम्॥
तच्छ्रुत्वा सोऽमितगतेर्मुखमैक्षत तेन च। सत्यं देवेति विज्ञप्तः क्षत्तृत्वेऽभिननन्द तम्॥
अथ प्रभावतो बुद्ध्वा वेगवत्यादिभिः सह। तत्पत्नीभिर्धनवती चण्डसिंहश्च तत्सुतः॥
तथा पिङ्गलगान्धारो राजा वायुपथान्वितः। समं सागरदत्तेन तत्र चित्राङ्गदश्च सः॥
आययुः सैन्यरुद्धार्काः सह हेमप्रभादिभिः। परतेजोसहिष्णुत्वं सूचयन्त इवाग्रतः॥
उपेत्य पादयोस्तस्य निपेतुश्चक्रवर्तिनः। सोऽपि संमानयामास यथार्हं स्वागतेन तान्॥
धनवत्यास्तु चरणौ गौरवात्प्रणनाम सः। सापि जामातरं प्रीता तमाशीर्भिरवर्धयत्॥
उक्तात्मसिद्धिवृत्तान्तास्तेन ते प्रभुणा ततः। चण्डसिंहादयः सर्वे प्रमोदं सुतरां दधुः॥
पार्श्वोपयाताः पत्नीश्च दृष्ट्वा धनवतीं तदा। चक्रवर्ती स पप्रच्छ क ते मे सचिवा इति॥
क्षिप्ता मानसवेगेन रक्षित्वा स्थापिता मया। विद्यामुखेन ते भिन्ना इति सा प्रत्युवाच तम्॥

आनाययत्तान्स विद्यामादिश्य रूपिणीम् । आगतान्पृष्टकुशलान्पादलग्नाञ्जगाद च ॥ १३
तो दिवसाः केन कथं कुत्रातिवाहिताः । इत्येकैकेन युष्माभिश्चित्रं मे कथ्यतामिति ॥ १४
ऽवादीत्स्ववृत्तान्तमादावेवं स गोमुखः । द्विषा क्षिप्तं तदा कापि देवी मां हस्तयोरधात् ॥ १५
ास्य दूरेऽरण्ये च स्थापयित्वा तिरोदधे । ततोऽहं दुःखितो देहं त्यक्तुमैच्छं प्रपाततः ॥ १६
गोमुख सिद्धार्थे पुनर्द्रक्ष्यसि तं प्रभुम् । इति मां तापसस्तावत्कोऽप्युपेत्य न्यवारयत् ॥ १७
त्रं कथं च वेत्स्येतदित्युक्तश्च मया ततः । एह्याश्रमं मे वक्ष्यामि तत्रैतदिति सोऽब्रवीत् ॥ १८
मन्नामविज्ञानसूचितज्ञानसंपदा । अहं तेन सहागच्छं शिवक्षेत्रं तदाश्रमम् ॥ १९
मे स कृतातिथ्यः कथां स्वामेवमभ्यधात् । नागस्वामीति नामाहं कुण्डिनाख्यात्पुराद्द्विजः ॥ २०
रे स्वर्गते सोऽहं गत्वा पाटलिपुत्रकम् । जयदत्तमुपाध्यायं विद्याहेतोरुपासदम् ॥ २१
यमाणोऽपि जाड्येन न यदाक्षरमप्यहम् । अविदं तेन मां तत्र च्छात्राः सर्वेऽप्युपाहसन् ॥ २२
ऽवमानग्रस्तोऽहं प्रस्थितो विन्ध्यवासिनीम् । द्रष्टुमर्धपथे प्राप्तं पुरं वक्रोलकाभिधम् ॥ २३
मह्यं प्रविष्टाय भिक्षार्थं गृहिणी गृहात् । एकस्माद्रक्तकमलं प्रददौ भिक्षया सह ॥ २४
ोत्वापरं गेहं प्राप्तं मां वीक्ष्य चाब्रवीत् । तत्रत्या गेहिनी हा धिग्योगिन्या स्वीकृतो भवान् ॥ २५
दत्तो नृहस्तस्ते रक्ताब्जव्याजतोऽनया । तच्छ्रुत्वा यावदीक्षेऽहं तावत्पाणिः स नाम्बुजम् ॥ २६
क्त्वाथ पतित्वास्याः पादयोरहमब्रवम् । मातः कुरुष्वोपायं मे तथा जीवाम्यहं यथा ॥ २७
त्वा मामवादीत्सा गच्छेतो योजनत्रये । देवरक्षित इत्यस्ति ग्रामे करभके द्विजः ॥ २८
स्ति कपिला गेहे साक्षात्सुरभिरुत्तमा । साद्य त्वां शरणं प्राप्तं रक्षिष्यति निशामिमाम् ॥ २९
तयोक्तः सभयो धावन्नस्मि दिनक्षये । प्राप्तवान्करभग्रामे गृहं तस्य द्विजन्मनः ॥ ३०
श्य तत्र दृष्ट्वाहं कपिलां तां प्रणम्य च । भीतस्त्वां शरणं देवि प्राप्तोऽस्मीति व्यजिज्ञपम् ॥ ३१
सा तर्जयन्ती मामन्याभिः सह योगिनी । तत्रागान्नभसा नक्तं मन्मांसरुधिरार्थिनी ॥ ३२
ा कपिला साथ खुरमध्ये निवेश्य माम् । अरक्षद्योधयन्ती ता योगिनीरखिलां निशाम् ॥ ३३
तासु गतास्वेषा कपिला व्यक्तया गिरा । मामवोचन्न पुत्राहं त्वां शक्ष्याम्यद्य रक्षितुम् ॥ ३४
छ पञ्चयोजन्यामितोऽरण्ये शिवालये । अस्ति भूतिशिवो नाम ज्ञानी पाशुपतोत्तमः ॥ ३५
क्षिष्यति रात्रिं त्वामद्यैकां शरणागतम् । तच्छ्रुत्वा तां प्रणम्यैव ततोऽहं प्रस्थितोऽभवम् ॥ ३६
भूतिशिवं तं च प्राप्याहं शरणं श्रितः । नक्तं च तत्र योगिन्यस्तास्तथैवागमन्पुनः ॥ ३७
प्रवेश्य मामन्तर्गृहं भूतिशिवः स ताः । त्रिशूलहस्तो द्वारस्थो योगिनीर्निरभर्त्सयत् ॥ ३८
ाता भोजयित्वा मां प्रातर्भूतिशिवोऽभ्यधात् । ब्रह्मन्न शक्ष्याम्यधुना रक्षितुं त्वामहं पुनः ॥ ३९
त संध्यावासाख्ये योजनेषु दशस्वितः । ग्रामे वसुमतिर्नाम विप्रस्तस्यान्तिकं व्रज ॥ ४०
तृतीयामद्य त्वं रात्रिमुत्तीर्य मोक्ष्यसे । इत्युक्तस्तेन नत्वा तं ततः प्रस्थितवानहम् ॥ ४१
तश्चाध्वनो दैर्घ्याद्गतोऽस्तं मेऽन्तरा रविः । योगिन्यस्ताश्च मां नक्तमगृह्णन्नेत्य पृष्ठतः ॥ ४२
ृहीत्वा च यावत्ता हृष्टा यान्ति विहायसा । तावत्तासां पुरोऽपूर्वा योगिन्योऽन्याः परापतन् ॥ ४३
ः सहोदभूदासामकस्माद्युद्धमुद्धतम् । तेन तासामहं हस्ताद्भ्रष्टो देशेऽतिनिर्जने ॥ ४४
ावाथ तत्राहमपश्यं मन्दिरं महत् । प्रविशेति ब्रुवदिव द्वारेणापावृतेन माम् ॥ ४५
स्याभ्यन्तरे तत्र प्रविश्याहं भयाकुलः । अद्राक्षमद्भुताकारां नारीं नारीशतान्विताम् ॥ ४६
शमानां प्रभया प्रदोषज्वलितामिव । रक्षामहौषधिं सृष्टां धात्रा मदनुकम्पया ॥ ४७
न्मया समाश्वस्य पृष्टा सा मामभाषत । यक्षिण्यहं सुमित्राख्या शापादेवमिह स्थिता ॥ ४८
ेण च मे सङ्गः प्रदिष्टः शापशान्तये । तन्मामशङ्कितप्राप्तो भजस्व भव निर्भयः ॥ ४९
त्त्वा क्षिप्रमाविश्य दासीः स्नानविलेपनैः । वस्त्रैराहारपानैश्च हृष्टं सा मामुपाचरत् ॥ ५०
ाकिनीभिर्भीतिः सा क्व सुखं तच्च तत्क्षणम् । अचिन्त्यौ बत दैवेनाप्यापातः सुखदुःखयोः ॥ ५१

ततस्तया समं तत्र यक्षिण्या तान्यहान्यहम्। सुखमासमथ स्वैरमेकदा साब्रवीच्च माम्॥ ५२
क्षीणः शापः स मे ब्रह्मंस्तदितोऽद्य व्रजाम्यहम्। मत्प्रसादाच्च दिव्यं ते विज्ञानं संभविष्यति॥ ५३
तपस्वी सिद्धभोगश्च निर्भयश्च भविष्यसि। इहस्थो मद्गृहस्यास्य मा द्राक्षीर्मध्यमं पुरम्॥ ५४
एवमुक्त्वा तिरोऽभूत्सा ततोऽहं कौतुकेन तत्। मध्यमं पुरमारूढस्तत्रापश्यं तुरंगमम्॥ ५५
तेनाहं निकटप्राप्तः क्षिप्तोऽश्वेन खुराहतः। क्षणादद्राक्षमात्मानं स्थितमस्मिञ्शिवालये॥ ५६
ततः प्रभृति चात्राहं स्थितः सिद्धोऽस्मि च क्रमात्। तदित्थं मानुषस्यापि त्रिकालज्ञानमस्ति मे॥ ५७
एवं च क्लेशबहुलाः सर्वस्यापीह सिद्धयः। तदिहास्स्व तवाभीष्टसिद्धिं शंभुर्विधास्यति॥ ५८
इत्युक्तो ज्ञानिना तेन तत्रेयन्ति दिनान्यहम्। त्वत्पादप्राप्तिजातास्थः स्थितोऽभूवं तदाश्रमे॥ ५९
स्वप्नादिष्टभवत्सिद्धिः शर्वेणाद्य किल प्रभो। कयाप्यहमिहानीतो गृहीत्वा दिव्यया स्त्रिया॥ ६०
इत्येष मम वृत्तान्त इत्युक्त्वा गोमुखे स्थिते। नरवाहनदत्ताग्रे मरुभूतिरथाब्रवीत्॥ ६१
क्षिप्तं मानसवेगेन मां तदा कापि देवता। पाण्योर्विधाय विन्यस्य दूरेऽटव्यां तिरोऽभवत्॥ ६२
ततोऽहं तत्र दुःखार्तो मरणोपायचिन्तया। भ्राम्यन्नदीपरिक्षिप्तं दृष्टवानेकमाश्रमम्॥ ६३
तत्र प्रविश्य चापश्यमुपविष्टं शिलातले। जटाभिस्तापसं तं च प्रणम्याहमुपागमम्॥ ६४
कस्त्वं कथमनुप्राप्तोऽस्येतां भूमिममानुषीम्। इति पृष्टश्च तेनाहं तस्मै सर्वमवर्णयम्॥ ६५
ततः स बुद्ध्वावोचन्मां मात्मानं सांप्रतं वधीः। ज्ञास्यसीह प्रभोर्वार्तां ततः कर्तासि यत्क्षमम्॥ ६६
इति तद्वचनाद्युष्मद्वार्ताजिज्ञासया स्थिते। मयि तत्र स्त्रियो दिव्या नदीं तां स्नातुमागमन्॥ ६७
सोऽथ मां तापसोऽवादीद्गच्छास्या वस्त्रमानय। आसु स्नान्त्यास्त्वमेकस्या वार्तां ज्ञास्यस्यतः प्रभोः॥ ६८
तच्छ्रुत्वाहं तथाकार्षं मामन्वागाच्च सा वधूः। हृतवस्त्रार्द्रवसना सहस्तस्वस्तिकस्तनी॥ ६९
नरवाहनदत्तस्य वार्तामाख्याय वाससी। गृहाणेत्युदिता तेन तापसेनाथ साब्रवीत्॥ ७०
नरवाहनदत्तोऽद्य हरमाराधयन्स्थितः। कैलासे दिवसैर्विद्याधरसम्राड् भविष्यति॥ ७१
एवमुक्तवती तस्य संपेदे तापसस्य सा। भार्या शापवशाद्दिव्या तत्कथासंस्तवाद्वधूः॥ ७२
ततस्तया समं तस्थौ विद्याधर्या स तापसः। तद्गिरा चाहमत्रासं जातास्थस्त्वत्समागमे॥ ७३
दिनैः सगर्भा च सती गर्भं सुस्त्री प्रसूय तम्। सावोचत्तापसं शान्तः शापस्त्वत्सङ्गतो मम॥ ७४
भूयो मत्सङ्गवाञ्छा ते यदि तत्तण्डुलैः सह। पक्त्वा मद्गर्भमेतं त्वं भुङ्क्ष्व प्राप्स्यसि मां ततः॥ ७५
इत्युक्त्वास्यां प्रयातायामेतद्गर्भं सतण्डुलम्। पक्त्वा भुक्त्वान्वगादेतां खमुत्पत्य स तापसः॥ ७६
अहं तदुक्तोऽप्यादौ तन्नाश्नां सिद्धिमवेक्ष्य तु। भक्तसिक्थद्वयं प्राप्य पाकभाण्डादभक्षयम्॥ ७७
तेन यत्राहमष्ठीवमभूत्तत्र काञ्चनम्। अथादैन्यः परिभ्राम्यन्प्रापमेकमहं पुरम्॥ ७८
तत्र वेश्यागृहे हेम्ना तेनोदारव्ययस्य मे। वसतो वमनं प्रादाज्जिज्ञासुः कुट्टनी छलात्॥ ७९
तेन मे वमतो भास्वत्पद्मरागनिभे उभे। प्राग्भुक्तभक्तसिक्थे ते मुखेन निरगच्छताम्॥ ८०
निर्गते एव कुट्टन्या गृहीते भक्षिते च ते। नष्टाथ हेमसिद्धिः सा कुटन्यापहृता तया॥ ८१
सचन्द्रार्धः शिवोऽद्यापि हरिर्यच्च सकौस्तुभः। तत्तयोर्वेद्मि कुटन्या गोचरापतने फलम्॥ ८२
किं चेदृगेष संसारो बह्वाश्चर्यो बहुच्छलः। परिच्छेत्तुं कदा केन समुद्र इव पार्यते॥ ८३
इत्यहं विमृशन्खिन्नस्त्वत्प्राप्त्यै चण्डिकागृहम्। अगच्छं तपसा देवीं तामाराधयितुं ततः॥ ८४
त्रिरात्रोपोषितं सा मां देवी स्वप्ने समादिशत्। सिद्धकामः स ते स्वामीसंपन्नो गच्छ पश्य तम्॥ ८५
एतच्छ्रुत्वा प्रबुद्धोऽस्मि प्रातर्देव्या कयाप्यहम्। त्वत्पादमूलमानीत इत्येषा देव मे कथा॥ ८६
इत्युक्तवन्तं कुट्टन्या मरुभूतिं विडम्बितम्। नरवाहनदत्तोऽसौ जहास सह पार्श्वगैः॥ ८७
ततो हरिशिखोऽवादीत्प्रास्तं मां रिपुणा तदा। उज्जयिन्यां न्यधात्कापि रक्षित्वा देव देवता॥ ८८
तत्राहं दुःखितो देहं त्यक्तुमिच्छन्निशागमे। गत्वा श्मशानं तत्रत्यैः काष्ठैररचयं चिताम्॥ ८९
तां प्रज्वाल्य च तत्राग्निं पूजयन्तमुपेत्य माम्। तालजङ्घ इति ख्यातो भूताधिपतिरभ्यधात्॥ ९०

प्रविशस्यग्नि स्थितो जीवन्स ते प्रभुः । पूर्णस्वसिद्धिकामेन तेन त्वं संगमिष्यसि ॥ ९१
ां मरणात्प्रीत्या स क्रूरोऽपि न्यवारयत् । ग्रावाणोऽप्यार्द्रतां सम्यग्भजन्त्यभिमुखे विधौ ॥ ९२
ततोऽहं देवाग्रे तपस्यंश्च ततः स्थितः । तवानीतः कयाप्यद्य पार्श्वे देवतया प्रभो ॥ ९३
रेशिखेनोक्ते तथैवान्यैरपि क्रमात् । नरवाहनदत्तोऽसौ राजामितगतेर्गिरा ॥ ९४
तीं धनवतीं प्रेर्य विद्याधरार्चिताम् । तेभ्यः स्वसचिवेभ्योऽपि विद्याः सर्वा अदापयत् ॥ ९५
ाद्याधरीभूतेष्वेषु तत्सचिवेष्वपि । शत्रूञ्जयाधुनेत्युक्तो धनवत्या शुभेऽहनि ॥ ९६
वर्ती सैन्यानां प्रयाणारम्भमादिशत् । वीरो गोविन्दकूटाख्यं गौरिमुण्डपुरं प्रति ॥ ९७
चाल च्छन्नार्कं विद्याधरबलं दिवि । वैरिशीतकराकालराहूदयकृतभ्रमम् ॥ ९८
नदत्तोऽपि स्वयमारुह्य कर्णिकाम् । तस्य पद्मविमानस्य भार्याः स्वाः केसरेषु च ॥ ९९
पत्रेषु सखींश्चण्डसिंहादिकेषु च । पुरःसरेषु नभसा प्रतस्थे विजयाय सः ॥ १००
ार्धपथप्राप्ते तस्थौ धनवतीगृहे । तदर्चितः संस्तदहर्मातङ्गपुरसंज्ञके ॥ १०१
ाहवाह्वाने दूतमेकं व्यसर्जयत् । विद्याधरेशयोर्गौरिमुण्डमानसवेगयोः ॥ १०२
स्तत्र मातङ्गपुरे पत्नीर्निधाय सः । गोविन्दकूटं तं प्रायाद्राजभिर्युचरैः सह ॥ १०३
द्राय तौ गौरिमुण्डमानसवेगकौ । निर्गतौ प्रत्यगृह्णंस्ते चण्डसिंहादयोऽग्रतः ॥ १०४
मरादिष्टपतत्सुभटपादपः । सोऽभूद्गोविन्दकूटाद्रिः स्रवद्रुधिरनिर्झरः ॥ १०५
ालसत्खड्गलताजिह्वो व्यजृम्भत । सङ्ग्रामकालः शूराणां जिघत्सुर्जीवितानि सः ॥ १०६
ङ्मत्तवेतालतालवाद्यविशङ्कटः । अभून्नृत्यत्कबन्धोऽसौ भूतप्रीत्यै रणोत्सवः ॥ १०७
नसवेगं तं रणेऽस्मिन्संमुखागतम् । नरवाहनदत्तः स स्वयमभ्यपतत्क्रुधा ॥ १०८
च केशेषु गृहीत्वा तस्य तत्क्षणम् । चक्रवर्ती स चिच्छेद शिरः खड्गेन पाप्मनः ॥ १०९
कुपितं तत्र गौरिमुण्डं प्रधावितम् । केशेष्वाकृष्य तद्दृष्टिनष्टविद्याबलं भुवि ॥ ११०
गृहीत्वाङ्घ्रियुगे भ्रामयित्वा नभस्तले । नरवाहनदत्तोऽसौ तं शिलायामचूर्णयत् ॥ १११
तयोर्गौरिमुण्डमानसवेगयोः । हतयोस्तद्बलं शेषमगाद्भीतं पलाय्य तत् ॥ ११२
ुष्पवृष्टिश्च तस्याङ्गे चक्रवर्तिनः । गगनस्थाः सुराः सर्वे साधु साध्विति चाब्रुवन् ॥ ११३
गौरिमुण्डस्य राजधानीं विवेश सः । नरवाहनदत्तस्तैः स्वैः सर्वैः राजभिः सह ॥ ११४
ौरिमुण्डादिसंबद्धास्तस्य शासनम् । एत्य विद्याधराधीशाः प्रणताः प्रतिपेदिरे ॥ ११५
निहताराातिराज्यप्राप्त्युत्सवान्तरे । उपेत्य तं धनवती सा सम्राजं व्यजिज्ञपत् ॥ ११६
गौरिमुण्डस्य सुता त्रैलोक्यसुन्दरी । तामिहात्मनिकानाम्नीमुपयच्छस्व कन्यकाम् ॥ ११७
स तया राजा तामानाय्यैव तत्क्षणम् । उपयेमे तया साकमासीच्च तदहः सुखम् ॥ ११८
सवेगस्य पुरान्मदनमञ्चुकाम् । आनाययद्वेगवतीप्रभावत्यौ विसृज्य सः ॥ ११९
हर्षबाष्पार्द्रविकस्वरमुखी पतिम् । उदयस्थं हताराातितमसं प्रविलोक्य तम् ॥ १२०
हदोषान्ते भेजे कमपि संमदम् । सावश्यायजलोत्फुल्लकमला नलिनीव सा ॥ १२१
तस्यै मुदा दत्त्वा सर्वविद्याश्चिरोत्सुकः । रेमे तया समं सद्यः प्राप्तविद्याधरत्वया ॥ १२२
तानि चाहानि भार्याभिः सह तत्र सः । गौरिमुण्डपुरोद्यानवर्ती पानादिलीलया ॥ १२३
विसृज्याथ भगीरथयशा अपि । आनायिताभूत्तेनाथ विद्याश्चास्यै स दत्तवान् ॥ १२४
तमास्थानवर्तिनं चक्रवर्तिनम् । यथावदेत्य विज्ञप्तवन्तौ विद्याधरावुभौ ॥ १२५
ारवेद्यर्धे देवाभूव गतावितः । ज्ञातुं मन्दरदेवस्य चेष्टां धनवतीगिरा ॥ १२६
स चास्थानगतो विद्याधरेश्वरः । आवाभ्यां छन्नदेहाभ्यामेवं युष्मान्प्रति ब्रुवन् ॥ १२७
यन्निहता गौरिमुण्डादयोऽखिलाः । नरवाहनदत्तेन प्राप्य विद्याधरेशताम् ॥ १२८
न सोऽस्माभिर्हन्तव्यस्तूद्भवन्रिपुः । एतच्छ्रुत्वा वचस्तस्मादावां वक्तुमिहागतौ ॥ १२९

इति चारमुखाच्छ्रुत्वा बभौ कोपाकुला सभा । नरवाहनदत्तस्य पद्मिनीवानिलाहता ॥
चित्राङ्गदस्य बाहू स्वौ विधूतप्रसृतौ पुनः । अमार्गतामिवादेशं योद्धुं वलयनिःस्वनैः ॥
हारोऽमितगतेर्वक्षस्युत्फलञ्श्वसतः क्रुधा । उत्तिष्ठोत्तिष्ठ वीर त्वमितीव मुहुरब्रवीत् ॥
भूमिं पिङ्गलगान्धारः करेण घ्नन्सशब्दकम् । चूर्णनोपक्रमोंकारमिव व्यधित वैरिणाम् ॥
मुखे वायुपथस्यापि भ्रूकुटिः पदमादधे । कोपेनारोपिता चापलतेवान्ताय विद्विषाम् ॥
संक्रुद्धः पाणिना पाणिं चण्डसिंहः प्रमर्दयन् । एवं विनिर्मथाम्यस्मिञ्शत्रूनित्यभ्यधादिव ॥
बाहुः सागरदत्तस्य करास्फालनजन्मना । शब्देन मूर्छता व्योम्नि रिपुमाह्वयतेव तम् ॥
नरवाहनदत्तस्तु कोपेऽप्यासीदनाकुलः । अक्षोभ्यतैव महतां महत्त्वस्य हि लक्षणम् ॥
द्युचारिचक्रवर्त्यङ्गरत्नसाधनपूर्वकम् । शत्रुं स जेतुं चक्रेऽत्र यात्रायै निश्चयं तदा ॥
अथारुह्य विमानं तत्सभार्यः सचिवान्वितः । चक्रवर्ती प्रतस्थे स ततो गोविन्दकूटतः ॥
ते च सर्वेऽपि गन्धर्वराजविद्याधराधिपाः । सबलाः परिवृत्त्यैतं चेलुश्चन्द्रमिव ग्रहाः ॥
धनवत्यां पुरोगायामथासाद्य हिमाचलम् । नरवाहनदत्तः स प्रापदेकं महत्सरः ॥
सितपद्मोच्छ्रितच्छत्रमुल्लसद्धंसचामरम् । उपस्थितमिवादाय सम्राड्योग्यमुपायनम् ॥
उच्चैरभिमुखोदस्तैर्वीचिहस्तैरदूरतः । कुर्वत्साम्राज्यसंसिद्धिस्नानाह्वानमिवासकृत् ॥
चक्रवर्तिन्सरस्यस्मिन्स्नातव्यं भवतेति सः । सम्राड् वायुपथेनोक्तस्तत्र स्नातुमवातरत् ॥
नाचक्रवर्तिनः स्नानं सिद्ध्यत्यत्र तदद्य ते । सिद्धं तच्चक्रवर्तित्वमिति दिव्याब्रवीच्च वाक् ॥
तच्छ्रुत्वा चक्रवर्ती स प्रविष्टस्तज्जलान्तरे । चिक्रीडान्तःपुरैः साकं पाथस्पतिरिवाम्बुधौ ॥
धौताञ्जनारुणदृशः श्लथधम्मिल्लबन्धनाः । रेमे सोऽत्र प्रियाः पश्यन्नङ्गलग्नार्द्रवाससः ॥
सशब्दमुत्पतन्त्योऽस्मात्सरसः पक्षिपङ्क्तयः । प्रत्युद्गतानां रशनास्तच्छ्रियामिव रेजिरे ॥
तद्वधूवदनाम्भोजलावण्यविजितानि च । ममज्जुर्लज्जयेवात्र पङ्कजानि जलोर्मिषु ॥
कृतस्नानश्च तदहस्तस्यैव सरसस्तटे । नरवाहनदत्तोऽसावुवास सपरिच्छदः ॥
तत्र नर्मकथालापैः सभार्यासचिवः कृती । स्थित्वा प्रातर्विमानस्थः प्रतस्थे सबलस्ततः ॥
गच्छन्वायुपथस्याथ प्राप्य मार्गवशात्पुरम् । तस्थौ तदनुरोधेन तं तत्रैव स वासरम् ॥
अत्र दृष्टचरी तेन कन्या वायुपथस्वसा । वायुवेगयशा नाम ह्युद्यानस्थाभ्यवाञ्छयत ॥
सा हेमवालुकनदीतीरोद्यानविहारिणी । संपूर्णचन्द्रवदना सौम्यालापमनोरमा ॥[1]
सितहासा गुरुश्रोणिभारा सन्नहशालिनी । वीक्ष्यागतं तं तद्रक्तचित्ताप्यन्तर्दधे ततः ॥
विलक्षोऽथ स तां मत्वा हेत्वन्तरपराङ्मुखीम् । नरवाहनदत्तोऽत्र निजमावासमाययौ ॥
तत्र गोमुखवैदग्ध्यवशेन मरुभूतिना । वृत्तं राज्ञः सहस्थेन वृत्तान्तमुपलभ्य तम् ॥
देव्यश्चित्रान्परीहासान्सम्राजस्तस्य चक्रिरे । मरुभूतेरवैदग्ध्यात्सत्रपे गोमुखे स्थिते ॥
सलज्जमथ राजानं वीक्ष्याश्वास्य च गोमुखः । वायुवेगयशश्चित्तं जिज्ञासुस्तत्पुरं ययौ ॥
ततो वायुपथोऽकस्मात्पुरं द्रष्टुमिवागतम् । दृष्ट्वा प्रीतिकृतातिथ्यो नीत्वैकान्ते जगाद तम् ॥
वायुवेगयशा नाम कन्यास्ति भगिनी मम । सिद्धैः सा भाविनी चक्रवर्तिभार्या किलोदिता ॥
अतस्तामिह दित्सामि प्राभृतं चक्रवर्तिने । नरवाहनदत्ताय तन्मे त्वं साधयेप्सितम् ॥
आगन्तुं प्रस्तुतश्चाहमेतदर्थं तवान्तिकम् । इति वायुपथेनोक्ते मन्त्री तं गोमुखोऽब्रवीत् ॥
यद्यप्यरिजिगीषार्थं प्रस्थितः प्रभुरेष नः । विज्ञापय तथापि त्वमहं ते साधयाम्यदः ॥
इत्युक्त्वामन्त्र्य तं गत्वा सिद्धं कार्यं न्यवेदयत् । नरवाहनदत्ताय गोमुखोऽभ्यर्थनां विना ॥
अन्येद्युश्च तमत्रार्थमेत्य वायुपथे स्वयम् । विज्ञापयति राजानं तं धीमान्गोमुखोऽब्रवीत् ॥
न कार्योऽभ्यर्थनाभङ्गो देव वायुपथस्य ते । भक्तोऽयं यद्ब्रवीत्येष कर्तव्यं तत्प्रभोरिति ॥

१ ब्रोकॉस्मुद्रिते पुस्तके संपूर्णेत्यादिश्लोकस्त्रुटितः.

। प्रतिपेदे तद्राजा वायुपथोऽपि ताम् । तस्मै प्रादादनिच्छन्तीमप्यानीय निजानुजाम् ॥ १६८
माना सावोचदनिच्छन्ती बलादहम् । भ्रात्रा दत्तेति नाधर्मो लोकपाला ममास्त्यतः ॥ १६९
त्यां तस्यां च सर्वा वायुपथाङ्गनाः । चक्रुः कोलाहलं येन नान्ये तच्छुश्रुवुर्वचः ॥ १७०
ाज्ञस्तपादायितद्वाक्याशयलब्धये । गोमुखो युक्तिमन्वेष्टुं तत्राभ्रमदितस्ततः ॥ १७१
। ददर्श चैकान्ते विद्याधरकुमारिकाः । अग्निप्रवेशं युगपच्चतस्रः कर्तुमुद्यताः ॥ १७२
तेन पृष्टाश्च जगदुस्ताः सुमध्यमाः । समयोल्लङ्घनं तस्मै वायुवेगयशःकृतम् ॥ १७३
। गोमुखो गत्वा राज्ञस्तत्सर्वसंनिधौ । नरवाहनदत्ताय यथावस्तु न्यवेदयत् ॥ १७४
विस्मिते राज्ञि वायुवेगयशास्तदा । जगादोत्तिष्ठ गच्छामस्त्वरितं रक्षितुं वयम् ॥ १७५
त्र कुमारीस्तास्ततो वक्ष्यामि कारणम् । इत्युक्तः स तया राजा तत्र सर्वैः समं ययौ ॥ १७६
व कुमारीस्ताः पुरःप्रज्वलितानलाः । विधार्यैताश्च राजानं वायुवेगयशा जगौ ॥ १७७
कालिका नाम कालकूटपतेः सुता । विद्युत्पुञ्जा द्वितीयेयं विद्युत्पुञ्जात्मसंभवा ॥ १७८
य सुता राजंस्तृतीयैषा मतङ्गिनी । चतुर्थीयं महादंष्ट्रसुता पद्मप्रभा प्रभो ॥ १७९
ाहं चेति वयं दृष्ट्वा त्वां मारमोहिताः । सिद्धक्षेत्रे तपस्यन्तं व्यदध्म समयं मिथः ॥ १८०
भिरस्माभिराहार्योऽयं प्रियः पतिः । नात्मार्पणीयस्त्वेतस्मै कयाचिदपि भिन्नया ॥ १८१
ात्पृथगेतेन विवाहं विदधीत तत् । प्रवेश्यो वह्निरन्याभिरुद्दिश्यैतां सखीद्रुहम् ॥ १८२
ायभीताहं नैच्छं परिणयं पृथक् । न चात्मा तुभ्यमधुनाप्यार्यपुत्र समर्प्यते ॥ १८३
ुत्र एवात्र लोकपालाश्च साक्षिणः । यच्चेष समयोऽद्यापि स्वेच्छमुल्लङ्घितो मया ॥ १८४
ुत्र ता एता उपयच्छस्व मे सखीः । युष्माभिरेतद्रोः सख्यो भावनीयं च नान्यथा ॥ १८५
ोक्ते तुतुषुः समाश्लिष्यंश्च ता मिथः । कुमार्यो मरणोत्तीर्णा राजाप्यन्तर्जहर्ष सः ॥ १८६
ात्पितरस्ते च तत्र तत्क्षणमाययुः । नरवाहनदत्ताय तस्मै प्रादुश्च ताः सुताः ॥ १८७
तेऽपि तत्कालं जामातुः प्रतिपेदिरे । कालकूटपतिप्रष्ठास्तस्य विद्याधरेश्वराः ॥ १८८
च समं प्राप्य महाविद्याधरात्मजाः । नरवाहनदत्तोऽत्र माहात्म्यं स परं ययौ ॥ १८९
त्र तत्र कतिचित्ताभिः सह दिनानि सः । ततश्चैवं हरिशिखः सेनापतिरुवाच तम् ॥ १९०
ोऽपि कथं देव नीतिमुल्लङ्घ्य वर्तसे । विग्रहावसरे कोऽयं कामभोगरसस्तव ॥ १९१
न्दरदेवं तं जेतुं यात्रासमुद्यमः । क्व चेयन्ति दिनानीह विहारोऽन्तःपुरैः सह ॥ १९२
रिशिखेनोक्ते महाराजो जगाद सः । युक्तमुक्तं प्रयत्नस्तु न भोगायात्र कोऽपि मे ॥ १९३
त्प्रिदो ह्येष भार्याव्यतिकरो मया । अरिमर्देऽधुना मुख्यमङ्गमित्यभिनन्दितः ॥ १९४
। चलन्त्वद्य सैन्यान्यरिजयाय मे । इत्युक्तवन्तं राजानं श्वशुरो मन्दरोऽब्रवीत् ॥ १९५
चक्रवर्त्यङ्गसर्वरत्नस्य दुर्जयः । देव मन्दरदेवोऽसौ दूरदुर्गमभूमिगः ॥ १९६
महावीररक्षितद्वारदेशया । अग्रस्थया त्रिशीर्षाख्यगुहया ह्येष रक्ष्यते ॥ १९७
ेन चाक्रम्य सा गुहा चक्रवर्तिना । तच्चक्रवर्तिरत्नं यो देव चन्दनपादपः ॥ १९८
ुत्यस्ति तं तावत्साधयाभीष्टसिद्धये । नाचक्रवर्ती निकटं तरोः प्राप्नोति तस्य च ॥ १९९
मन्दराद्रात्रौ निराहारो यतव्रतः । नरवाहनदत्तोऽगात्तं चन्दनतरुं प्रति ॥ २००
त्रास्यमानोऽपि वीरो विघ्नैः सुदारुणैः । न स तत्रास मूलं च प्राप तस्य महातरोः ॥ २०१
तं महारत्नं निबद्धोत्तुङ्गवेदिकम् । एलाध्यारुह्य सोपानैर्ववन्दे चन्दनद्रुमम् ॥ २०२
ाज्ञयमहं सिद्धस्ते चन्दनद्रुमः । स्मृतस्य संनिधास्ये ते तदितो व्रज सांप्रतम् ॥ २०३
कूटं सेत्स्यन्ति रत्नान्यन्यानि ते ततः । ततो मन्दरदेवं त्वं हेलयैव विजेष्यसे ॥ २०४
श्र गिरा तत्र स रात्रावशरीरया । तथेत्युक्त्वा प्रणम्यैतं सिद्धिमान्दिव्यपादपम् ॥ २०५
्योममार्गेण महाविद्याधरेश्वरः । नरवाहनदत्तोऽथ निजं कटकमाययौ ॥ २०६

अथ नीत्वा स निशां तामास्थाने सर्वसंनिधौ प्रातः ।
नैशं साधितचन्दनपादपवृत्तान्तमखिलमाचख्यौ ॥

तद्बुद्ध्वा दयिताश्च बालसचिवाश्चाप्ताश्च विद्याधरा-
स्ते ते वायुपथादयः सकटकाश्चित्राङ्गदाद्याश्च ते ।
गन्धर्वाः प्रसभप्रसाधितमहासिद्धेः प्रहर्षाकुलाः
सत्त्वोत्साहधृतिप्रभावमहतीं तस्यास्तुवन्धीरताम् ॥

संमन्त्र्य तैः सह स मन्दरदेवदर्पं राजा विजेतुमथ दिव्यविमानगामी ।
शेषान्यचन्दनतरूदितरत्नसिद्ध्यै गोविन्दकूटगिरिमेव जगाम तावत् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पञ्चलम्बके चतुर्थस्तरङ्गः ।

समाप्तश्चायं पञ्चलम्बकश्चतुर्दशः ।

---

|| श्रीः ||

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## महाभिषेको नाम पञ्चदशो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

प्रथमस्तरङ्गः ।

ाासु ताण्डवोद्दण्डशुण्डाशीत्कारशीकरैः । ज्योतींषि पुष्णन्निव वस्तमो मुष्णातु विघ्नजित् ॥ १
गोविन्दकूटेऽत्र स्थितमास्थानवर्तिनम् । नरवाहनदत्तं तं चक्रवर्तिनमाययौ ॥ २
ाधरो द्युमार्गेण सोऽमृतप्रभसंज्ञकः । येनैष रक्षितः पूर्वं शत्रुक्षिप्तोऽग्निपर्वते ॥ ३
ात्यावेदितात्मा च प्रणतश्चक्रवर्तिना । तेन प्रीतिकृतातिथ्यः स तं विद्याधरोऽब्रवीत् ॥ ४
त दक्षिणदिग्वर्ती मलयाख्यो महागिरिः । तत्राश्रमपदे चास्ते वामदेवो महानृषिः ॥ ५
:वां कस्यापि कार्यस्य हेतोरेकाकिनं प्रभो । आह्वयत्येतदर्थं च तेनाहं प्रेषितोऽद्य ते ॥ ६
र्जितः प्रभुस्त्वं च मम तेनास्मि चागतः । तदेहि सिद्ध्यै गच्छावः शीघ्रं तस्यान्तिकं मुनेः ॥ ७
मुक्तवता तेन सह विद्याधरेण सः । तत्रैव भार्याः सेनाश्च स्थापयित्वा तथेति ताः ॥ ८
ात्य नभसा क्षिप्रं प्राप्यैव मलयाचलम् । नरवाहनदत्तस्तं वामदेवर्षिमभ्यगात् ॥ ९
र्शं तं च जरसा पाण्डुरं प्रांशुविग्रहम् । निर्मांसनेत्रकुहरस्फुरत्तारकसन्मणिम् ॥ १०
ाधरेन्द्ररत्नानां स्थानं वेल्लज्जटालतम् । हिमाद्रिं सिद्धिसाहाय्यहेतोरिव सहागतम् ॥ ११
ववन्दे चरणौ मुनेस्तस्य स सोऽपि तम् । राजानं रचितातिथ्यो मुनिरेवमभाषत ॥ १२
दग्धोऽपि कामस्त्वं रत्यास्तुष्टेन शंभुना । सर्वविद्याधरेन्द्राणां चक्रवर्ती विनिर्मितः ॥ १३
ाश्रमे ममैतस्मिन्गम्भीरान्तर्गुहान्तरे । सन्ति रत्नानि तानि त्वं मदादिष्टानि साधय ॥ १४
ो मन्दरदेवो हि सिद्धरत्नस्य ते भवेत् । एतदर्थं त्वमाहूतो मयेह गिरिशाज्ञया ॥ १५
ुक्त्वा तेन मुनिनैवोपदिष्टविधिश्च सः । नरवाहनदत्तस्तां प्रहृष्टः प्राविशद्गुहाम् ॥ १६
ां विजित्य विघ्नौघांस्तांस्तान्वीरो ददर्श सः । गजेन्द्रमभिधावन्तं मत्तं सगलगर्जितम् ॥ १७
मुष्टिप्रहारं च दत्त्वा पादौ च दन्तयोः । आरुरोह च तं मत्तगजं राजा स लाघवात् ॥ १८
ु सिद्धं महाहस्तिरत्नं ते चक्रवर्तिनः । इति वाणी गुहामध्यादशरीरोदभूत्तदा ॥ १९
: खड्गमहीन्द्राभं स ददर्श निपत्य च । चक्रवर्तित्वलक्ष्म्यास्तं केशपाशमिवाग्रहीत् ॥ २०
ु भोः खड्गरत्नं ते सिद्धं जैत्रमरिंदम । इति वागुदभूद्भूयोऽप्यशरीरा गुहान्तरे ॥ २१
: स चन्द्रिकारत्नं कामिनीरत्नमत्र च । विध्वंसिनीति नाम्ना च विद्यारत्नमसाधयत् ॥ २२
द्वाभ्यां सहाद्याभ्यां सरसा चन्दनेन च । कार्यकालोपयुक्तानि सप्त माहात्म्यदानि च ॥ २३
ग्रयित्वा स रत्नानि गुहाया निर्गतस्ततः । वामदेवर्षये तस्मै सिद्धं सर्वं शशंस तत् ॥ २४

ततः स मुनिराह स्म तं प्रीत्या चक्रवर्तिनम् । पुत्र सिद्धमहाचक्रवर्तिरत्नो व्रजाधुना ॥
जय मन्दरदेवं तं कैलासोत्तरपार्श्वगम् । भुङ्क्ष्व चोभयतत्पार्श्वसाम्राज्यश्रियमूर्जिताम् ॥
इत्युक्तस्तेन मुनिना सिद्धकार्यः प्रणम्य तम् । चक्रवर्ती ततो व्योम्ना स ययौ सामृतप्रभः ॥
प्राप गोविन्दकूटस्थं तच्च स्वशिबिरं क्षणात् । महाप्रभावया श्वश्र्वा धनवत्याभिरक्षितम् ॥
तत्र मार्गोन्मुखैर्दृष्ट्वा निजैर्विद्याधराधिपैः । भार्याभिः सचिवैश्चैव प्रहृष्टैः सोऽभ्यनन्द्यत ॥
अथोपविष्टः पृच्छद्भ्यो वामदेवर्षिदर्शनम् । गुहाप्रवेशं रत्नानां सिद्धिं चैभ्यः शशंस सः ॥
ततस्तत्र हृतानन्ददिव्यतूर्यो महोत्सवः । नृत्यद्विद्याधरीकोऽभूत्पानमत्तजनस्तथा ॥
अन्येद्युश्च रिपुस्थानस्थितासौम्यग्रहेण सः । आक्रान्तकण्टकस्थानसौम्येनात्मसमर्द्धिना ॥
सर्वान्यसंपद्युक्तेन लग्नेन कृतमङ्गलः । आरुह्य शर्वदत्तं तद्विमानं ब्रह्मनिर्मितम् ॥
जेतुं मन्दरदेवं तं ससैन्योऽन्तःपुरान्वितः । नरवाहनदत्तोऽत्र प्रतस्थे नभसा ततः ॥
चेलुश्चानुचरास्ते ते प्रवीराः परिवार्य तम् । भक्ता भीताश्च गन्धर्वराजविद्याधराधिपाः ॥
सेनापतेर्हरिशिखस्यादेशानुविधायिनः । चण्डसिंहः समं मात्रा धनवत्या सुमेधसा ॥
वीरः पिङ्गलगान्धारस्तथा वायुपथो बली । विद्युत्पुञ्जोऽमितगतिः कालकूटपतिश्च सः ॥
मन्दरः समहादंष्ट्रः स्वसखा चामृतप्रभः । समं सागरदत्तेन वीरश्चित्राङ्गदोऽपि सः ॥
एते चान्ये च येऽत्रासन्गौरिमुण्डव्यपाश्रिताः । समग्रास्तेऽन्वधावंस्तं विजिगीषुं बलान्विताः ॥
तदा तत्सेनया छन्ने गगने क्वापि भास्करः । ममज्ज लज्जयेवात्र तत्तेजोनिह्नुतप्रभः ॥
अथ मानसमुल्लङ्घ्य देवर्षिव्रातसेवितम् । अतीत्य गण्डशैलं च लीलोद्यानं द्युयोषिताम् ॥
स चक्रवर्ती संप्राप स्फटिकापाण्डुरत्विषः । मूलं निजयशोराशेरिव कैलासभूभृतः ॥
तत्र मन्दाकिनीतीरे निषण्णं निजगाद तम् । विद्याधराधिपो धीमान्मन्दरो बन्धुरं वचः ॥
इहैव तावद्देवाद्य स्थीयतां द्युनदीतटे । न युक्तमिममुल्लङ्घ्य कैलासं गन्तुमग्रतः ॥
हरास्पदस्य ह्येतस्य विद्या नश्यन्ति लङ्घनात् । त्रिशीर्षगुहया तस्य गन्तव्यं पार्श्वमुत्तरम् ॥
देवमायाभिधानेन सा च राज्ञाभिरक्ष्यते । स चातिदृप्तस्तस्मात्तमजित्वा गम्यते कथम् ॥
मन्दरेणैवमुदिते धनवत्यानुमोदिते । नरवाहनदत्तस्तं तत्रैवासीत्स वासरम् ॥
तत्रस्थो देवमायाय दूतं साम्ना व्यसर्जयत् । स च सान्त्वेन नैवास्य शासनं प्रत्यपद्यत ॥
ततोऽपरेद्युः संनद्धैस्तैस्तैः स्वै राजभिः सह । स चक्रवर्ती तं प्रायाद्देवमायं प्रति प्रभुः ॥
देवमायोऽपि तद्बुद्ध्वा ससैन्यो योद्धुमाययौ । वराहवज्रमुष्ट्यादिभूरिराजान्वितोऽग्रतः ॥
ततः प्रववृते तत्र सङ्ग्रामः सेनयोस्तयोः । कैलासे सुरसंघातविमानाच्छादिताम्बरः ॥
छिन्नभूरिशिरःश्रेणिकरकावर्षभीषणः । सवीरगर्जितः सोऽभूद्घोरो रणघनागमः ॥
देवमायस्य सेनान्यमग्रयोधं जघान यत् । वराहं चण्डसिंहोऽत्र न नामाभूत्तदाद्भुतम् ॥
चित्रं तु यत्स्वयं बद्धो देवमायोऽप्यमायिना । नरवाहनदत्तेन प्रहारैर्मूर्छितो रणे ॥
बद्धे च तस्मिंस्तत्सैन्यमभज्यत महारथैः । वज्रमुष्टिमहाबाहुतीक्ष्णदंष्ट्रादिभिः सह ॥
ततः सुरैर्विमानस्थैः साधु साध्वित्युदीरिते । सर्वेऽप्यभिननन्दुस्तं जयिनं चक्रवर्तिनम् ॥
अथ तं संयतानीतं समाश्वास्य महाप्रभुः । प्रसादेनानुजग्राह देवमायं मुमोच च ॥
सोऽपि बाहुजितस्तस्य शासनं चक्रवर्तिनः । वज्रमुष्ट्यादिभिः सार्धं प्रणतः प्रत्यपद्यत ॥
ततो निवृत्ते सङ्ग्रामे तस्मिन्व्यपगतेऽहनि । प्रातरास्थानमायातः पार्श्वस्थश्चक्रवर्तिनः ॥
तं त्रिशीर्षगुहाम्नायं तेन पृष्टो विविक्षुणा । देवमायो यथातत्त्वमेवं कथयति स्म सः ॥
कैलासस्य पुरा देव विद्याधरवराश्रिते । अभूतां भिन्नसाम्राज्ये द्वे पार्श्वे दक्षिणोत्तरे ॥
ऋषभाख्योऽथ देवेन तपस्तुष्टेन शंभुना । चक्रवर्ती प्रदिष्टोऽभूदेक एव तयोर्द्वयोः ॥
स गन्तुमुत्तरं पार्श्वं कैलासं जातु लङ्घयन् । अधःस्थितहरक्रोधाद्भ्रष्टविद्योऽपतद्दिवः ॥

ततः क्रूरेण तपसा पुनराराधितं हरम् । प्राग्वदादिष्टसाम्राज्यमृषभोऽसौ व्यजिज्ञपत् ॥
कैलासोल्लङ्घनं तावन्नास्ति नः केन तत्पथा । उभयोः पार्श्वयोर्देव चक्रवर्ती भवाम्यहम् ॥
तच्छ्रुत्वोत्तरपार्श्वेऽस्य गमनाय पिनाकभृत् । चकार भित्त्वा कैलासं तद्गुहाविवरं महत् ॥
अथ विद्धः स कैलासो विम्नो व्यज्ञापयच्छिवम् । मानुषागम्यमेतन्मे भगवन्पार्श्वमुत्तरम् ॥
गम्यं तेषामपीदानीमनया गुहया कृतम् । तत्तथा कुरु येनैषा मर्यादा मे न भज्यते ॥
कैलासेनेति विज्ञप्तो गुहायां रक्षकान्हरः । स्थापयामास दिग्दन्तिदृग्विषाहीन्द्रगुह्यकान् ॥
दक्षिणेऽस्य महामायं द्वारि विद्याधरेश्वरम् । उत्तरे कालरात्रिं च चण्डिकामपराजिताम् ॥
एवं कृतगुहारक्षो महारत्नानि शंकरः । उत्पाद्य भगवांस्तत्र व्यवस्थामादिदेश सः ॥
सिद्धरत्नस्य गम्येयं द्विपार्श्वी चक्रवर्तिनः । द्युचराणां सदाराणां सदूतानां भविष्यति ॥
अनुज्ञाताश्च ये तेन राजानः स्युरिहोत्तरे । तेषां चैषा गुहा गम्या न त्वन्यस्यात्र कस्यचित् ॥
इत्यादिष्टवति त्र्यक्षे कुर्वन्नृषभकस्ततः । साम्राज्यं युयुधे दर्पाद्देवैर्जघ्ने च वज्रिणा ॥
इत्येषोऽस्यास्त्रिशीर्षाख्यगुहाया आगमः प्रभो । अगम्या चैव सैषान्यैर्विना युष्मादृशैर्गुहा ॥
तस्य चैतद्गुहाद्वाररक्षिणः कालतः कुले । महामायस्य जातोऽयं देवमायोऽहमीश्वर ॥
विद्याधरेषु जातोऽयं दुर्जयो रिपुभिर्मृधे । यश्च जेष्यत्यमुं सोऽत्र चक्रवर्ती भविष्यति ॥
तेनास्य स्वामिना भाव्यं सोऽनुवर्त्योऽमुना प्रभुः । इति जन्मनि मे दिव्या व्याजहार सरस्वती ॥
सोऽहं जितस्त्वया त्वं च सिद्धरत्नः प्रभाववान् । कैलासोभयपार्श्वैकचक्रवर्तीह नः प्रभुः ॥
तत्त्रिशीर्षगुहामेतां तीर्त्वा शेषान्निपूजय । इत्युक्ते देवमायेन चक्रवर्ती जगाद सः ॥
गच्छामोऽद्य गुहाद्वारे वसामस्तत्र सांप्रतम् । कृतसंविधयः प्रातः प्रवेक्ष्यामश्च तां गुहाम् ॥
इत्युक्तवान्स गत्वाथ सर्वैस्तै राजभिः सह । नरवाहनदत्तोऽत्र गुहाद्वारे समावसत् ॥
ददर्श तां च गम्भीरनिरालोकोदरां गुहाम् । जन्मभूमिमनर्केन्दुं कल्पान्ततमसामिव ॥
द्वितीयेऽह्नि च संपूज्य विवेशैतां विमानगः । ध्यातोपनतसद्रत्नसहायः सपरिच्छदः ॥
तमांसि चन्द्रिकारत्नैश्चन्दनेनाहिदृग्विषान् । दिग्गजान्हस्तिरत्नेन खड्गरत्नेन गुह्यकान् ॥
विघ्नानन्यांश्चान्यरत्नैर्निवार्य सह सेनया । उत्तीर्य तां गुहां चोदग्द्वारेण स विनिर्ययौ ॥
ददर्श च गुहागर्भनिर्गतः पार्श्वमुत्तरम् । कैलासस्यापुनर्जन्मजीवलोकान्तरोपमम् ॥
साधु रत्नप्रभावाप्तमाहात्म्येन गुहा त्वया । चक्रवर्तिन्नियं तीर्णेत्युदभूद्वाक्तदा दिवः ॥
अथोचतुर्धनवती देवमायश्च तं प्रभुम् । देव संनिहिता द्वारे कालरात्रीह सर्वदा ॥
एषा चोत्पादिता पूर्वं विष्णुनामृतमन्थने । दारणी दानवेन्द्राणाममृतं हर्तुमिच्छताम् ॥
सैषादिष्टा गुहामेतामिह शर्वेण रक्षितुम् । यथा नान्यस्तरेदेनां यथोक्तैस्त्वद्विधैर्विना ॥
त्वं चक्रवर्ती तीर्णश्च सिद्धरत्नो गुहामिमाम् । तदेषा पूजनीया ते पूज्या विजयसिद्धये ॥
एवं धनवतीदेवमायोक्तस्यैव तस्य सः । नरवाहनदत्तस्य तत्राक्षीयत वासरः ॥
संध्यारुणा बभूवुश्च कैलासोत्तरसानवः । सूचयन्त इवासन्नसङ्ग्रामरुधिरोक्षणम् ॥
आवृणोत्कटकं तस्य राज्ञो लब्धबलं तमः । गुहागृहपराभूतिवैरमार्द्रमिव स्मरत् ॥
अनर्चादुर्मनःकालरात्रिक्रोधाङ्कुरा इव । बभ्रमुर्भूतवेतालडाकिनीगणफेरवः ॥
क्षणाच्च जज्ञे निःसंज्ञं सैन्यं सुप्तमिवाखिलम् । नरवाहनदत्तस्य स एकोऽभून्न मोहितः ॥
ततोऽनर्चनसंक्रुद्धकालरात्रिविजृम्भितम् । मन्वानश्चक्रवर्ती स वाक्पुष्पैस्तामथार्चयत् ॥
आशिरश्चक्रसंचारचतुरा प्रणवाकृतिः । त्वं प्राणशक्तिर्जन्तूनां जीवनी त्वां नमाम्यहम् ॥
स्रवन्महिषकण्ठास्रधाराभिस्त्रिशिखाश्रिभिः । आश्वासितत्रिभुवने दुर्गारूपे नमोऽस्तु ते ॥
रुरुरक्तभृतभ्रान्तकरस्थितकपालया । नृत्यन्त्या त्रिजगद्रक्षापात्रयेव जितं त्वया ॥
ऊर्ध्वाक्षिदीप्तिदीप्ताग्र्यकपाला कालरात्र्यपि । कपालहस्ता सार्केन्दुरिव भासि भवप्रिये ॥

इति स्तुता तुतोषात्र कालरात्रिर्न तस्य यत् । तत्स्वमूर्धोपहारेण तामर्चितुमियेष सः ॥
मा पुत्र साहसं कार्षीरेषा सिद्धास्मि वीर ते । प्रकृतिस्थं तवास्त्वेतत्कटकं जयमाप्नुहि ॥
इत्युवाचात्तखड्गं तं सा देवी तत्र तत्क्षणम् । सुप्तप्रबुद्धमिव तत्कटकं तस्य चाभवत् ॥
ततो भार्या वयस्याश्च सर्वे विद्याधराश्च ते । प्रशशंसुस्तमेतस्य प्रभावं चक्रवर्तिनः ॥
अथैष विहिताहारपानाद्यावश्यकक्रियः । वीरोऽनैषीत्रियामां तां शतयामामिवायताम् ॥
प्रातश्च पूजयित्वा तां कालरात्रिं ततो ययौ । विद्याधरनिरुद्धाग्रमार्गो धूमशिखं प्रति ॥
अभूत्तेन समं तस्य सङ्ग्रामश्चक्रवर्तिनः । राज्ञा मन्दरदेवीयप्रधानेन स तादृशः ॥
यत्र खड्गमयं व्योम शूरमूर्धमयी मही । आसीज्जहि जहीत्युग्रवीरवाक्यमयं वचः ॥
तत्र धूमशिखं युद्धे बद्ध्वानीतं प्रसह्य तम् । चक्रवर्ती स संमान्य ग्राहयामास शासनम् ॥
न्यवेशयच्च तदहः सैन्यमत्रैव तत्पुरे । शान्तधूमशिखोद्रेकमग्निदग्धेन्धनं यथा ॥
द्वितीयेऽह्नि स चारेभ्यो योद्धुमायान्तमग्रतः । बुद्ध्वा मन्दरदेवं तं ज्ञातवृत्तान्तमग्रतः ॥
नरवाहनदत्तस्तैः सह विद्याधरेश्वरैः । प्रययौ तं प्रति ततस्तज्जये बद्धनिश्चयः ॥
किंचिद्गत्वा ददर्शाग्रे बहुराजगणान्वितम् । सैन्यं मन्दरदेवस्य रचितव्यूहमागतम् ॥
ततः कृतप्रतिव्यूहरचनो राजभिर्वृतः । नरवाहनदत्तस्तदभ्यधावदरेर्बलम् ॥
अथाहवः प्रववृते तयोरुभयसैन्ययोः । प्रलयोद्वेलजलधिक्षुभितौघानुकारिणोः ॥
ततस्ते चण्डसिंहाद्या युध्यन्ते स्म महारथाः । शूराः काञ्चनदंष्ट्राख्यराजप्रभृतयोऽन्यतः ॥
प्रकम्पितत्रिभुवनो विक्षोभितकुलाचलः । विजजृम्भे स सङ्ग्रामः कल्पान्तपवनागमः ॥
शोणैकपार्श्वः कैलासः शूरशोणितकुङ्कुमैः । भूतिश्वेतान्यपार्श्वश्च तदा गौरीशमन्वगात् ॥
खड्गपट्टोदितानेकसूर्यबिम्बोग्रभास्वरः । सत्यं प्रलयकालोऽभूद्वीराणां स महाहवः ॥
इयत्तद्युद्धमासीद्यद्विस्मयं प्रेक्षणागताः । नारदाद्या अपि ययुर्दृष्टदेवासुराहवाः ॥
इत्थं घोरे रणे तस्मिंश्चण्डसिंहोऽभिधावितः । जघ्ने काञ्चनदंष्ट्रेण गदया मूर्ध्नि भीमया ॥
तं गदाघातपतितं दृष्ट्वा धनवती सुतम् । शस्त्वा विद्याबलेनोभे सैन्ये निश्चेतने व्यधात् ॥
नरवाहनदत्तश्च चक्रवर्ती बलादितः । ततो मन्दरदेवश्च द्वावेवास्तां सचेतनौ ॥
तदा धनवतीं क्रुद्धां जगत्संहरणक्षमाम् । वीक्ष्याम्बरगता देवा अपि दिक्षु प्रदुद्रुवुः ॥
दृष्ट्वा मन्दरदेवोऽथ चक्रवर्तिनमेककम् । नरवाहनदत्तं तमभ्यधावदुदायुधः ॥
नरवाहनदत्तोऽपि विमानादवतीर्य सः । उत्खातखड्गरत्नः सन्प्रतिजग्राह तं जवात् ॥
ततो मन्दरदेवेन मायया जयमिच्छता । समदोद्दाममातङ्गरूपं चक्रे स्वविद्यया ॥
तद्दृष्ट्वाकारि सुमहत्सिंहरूपं स्वमायया । नरवाहनदत्तेन विद्यातिशयशालिना ॥
ततो भग्नेभवपुषा मुक्तसिंहाकृतिः स्फुटम् । युद्धं मन्दरदेवेन चक्रवर्ती ततान सः ॥
नानाविचित्रकरणाबद्धप्रहारक्रियासु तौ । मण्डलाग्रधरौ नाट्यप्रवृत्ताविव रेजतुः ॥
नरवाहनदत्तोऽथ साक्षाज्जयमिवाहरत् । खड्गं मन्दरदेवस्य करात्करणयुक्तितः ॥
हृतखड्गस्य चाकृष्टक्षुरिकस्यात्र तामपि । तथैव तस्य सहसा चक्रवर्ती जहार सः ॥
ततोऽपशस्त्रं बाहुभ्यां युध्यमानं स गुल्फयोः । प्राप्य मन्दरदेवं तं राजा भूमावपातयत् ॥
प्रारेभे च शिरश्छेत्तुं केशेष्वाकृष्य तस्य सः । वक्षसि न्यस्तचरणः सम्राड् खड्गेन विद्विषः ॥
तावन्मन्दरदेवीति नाम्ना कन्याभ्युपेत्य तम् । स्वसा मन्दरदेवस्य वारयन्त्येवमब्रवीत् ॥
तपोवनस्थो दृष्ट्वा त्वं भर्ता प्राक्कल्पितो मया । तच्छ्वशुर्यमिमं राजन्मा वधीर्भ्रातरं मम ॥
एवं तयोक्तः सुदृशा विमुच्य जितलज्जितम् । धीरो मन्दरदेवं तं महाराजो जगाद सः ॥
मुक्तो मया त्वं मा भूत्तल्लज्जा विद्याधरेश ते । चपलौ किल शूराणां रणे जयपराजयौ ॥
इति मन्दरदेवोऽसावुक्तो राज्ञा जगाद तम् । किं जीवितमिदानीं मे रक्षितस्याहवे स्त्रिया ॥

ं यामि तपसे वनस्थस्यान्तिकं पितुः । त्वमेवोभयवेद्यर्धचक्रवर्तीह निर्मितः ॥ १४२
मर्थश्च मे भावी पित्रा पूर्वमसूच्यत । इत्युक्त्वा स ययौ मानी पितुः पार्श्वं तपोवनम् ॥ १४३
ु सम्यङ्महाचक्रवर्तिञ्जित्वा रिपूंस्त्वया । प्राप्तं साम्राज्यमित्यूचुर्गगनस्थाः सुरास्तदा ॥ १४४
मन्दरदेवेऽथ निजं धनवती सुतम् । उभे च सेने विदधे स्वशक्त्या लब्धचेतने ॥ १४५

इति सुप्तप्रतिबुद्धा इव सर्वे वैरिणं जितं बुद्ध्वा ।
सचिवादयो विजयिनं नरवाहनदत्तमभिननन्दुस्तम् ॥ १४६
येऽपि च काञ्चनदंष्ट्राशोककरक्ताक्षकालजिह्वाद्याः ।
मन्दरदेवीयास्ते राजानस्तस्य शासनं जगृहुः ॥ १४७
काञ्चनदंष्ट्रालोकनसंस्मृतसमराप्ततद्गदाघातः ।
प्रचुकोप चण्डसिंहः प्रविधुतदृढमुष्टिपीडितासिवरः ॥ १४८
कृतमिह समरेण वत्स कस्त्वां समरमुखे विजयेत किं तु युक्त्या ।
क्षणमिव विहिता मयैव साभूदुभयबलक्षयरक्षणाय माया ॥ १४९
इति च धनवती तदा ब्रुवाणा निजतनयं प्रशमय्य तं प्रकोपात् ।
बलमखिलमनन्दयत्स्वसिद्ध्या सहनरवाहनदत्तचक्रवर्ति ॥ १५०
प्राप्ते जितप्रणतविद्रुतवैरिवीरवीताहवव्यतिकरोत्तरपार्श्वराज्ये ।
शर्वाचलस्य नरवाहनदत्तदेवः प्रीतिं परामभजताक्षतमित्रवर्गः ॥ १५१
ततोऽरिविजयोत्सवप्रहततारतूर्यं कृती
स तद्युचरसुन्दरीरुचिरनृत्तगीताञ्चितम् ।
प्रियासचिवसंगतः प्रवरराजवृन्दान्वितः
प्रतापमिव वैरिणां मधु पिबन्ननैषीद्दिनम् ॥ १५२

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे महाभिषेकलम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

परेद्युरुत्थाय ततः कैलाससानुतः । नरवाहनदत्तोऽसौ चक्रवर्ती बलान्वितः ॥ १
ः काञ्चनदंष्ट्रस्य वचनादग्रगामिनः । प्रायान्मन्दरदेवीयं पुरं विमलसंज्ञकम् ॥ २
प तच्च सौवर्णप्रांशुप्राकारसुन्दरम् । सुमेरुमिव कैलासं सभाजयितुमागतम् ॥ ३
ा चातिगम्भीरमच्युतश्रीविराजितम् । अनन्तरत्ननिलयं निस्तोयमिव सागरम् ॥ ४
स्थानोपविष्टं तं राजभिर्द्युचरैर्वृतम् । सम्राजमेत्य राजान्तःपुरवृद्धा व्यजिज्ञपन् ॥ ५
मन्दरदेवेऽत्र वनं युष्मत्पराजिते । तद्देव्योऽग्निं विविक्षन्ति श्रुत्वा वेत्त्यधुना प्रभुः ॥ ६
क्रस्तैः स मरणाच्चक्रवर्ती निवार्य ताः । संविभेजे निवासादिदानेन भगिनीरिव ॥ ७
विद्याधराधीशवर्गं निखिलमेव तम् । दत्तानुरागनिगडं स सम्राट् समपादयत् ॥ ८
तत्रामितगतिं राजानं पूर्वकल्पितम् । राज्ये मन्दरदेवस्य कृतज्ञः सोऽभिषिक्तवान् ॥ ९
ामास तस्मै च तदीयांस्तान्महीक्षितः । राज्ञे काञ्चनदंष्ट्रादीन्भक्त्याव्यभिचारिणे ॥ १०
व तत्र सप्ताहमुद्यानेषु महर्द्धिषु । कैलासोत्तरदिक्पार्श्वलक्ष्म्याश्लिष्टो नवोढया ॥ ११
ोभयवेद्यर्धविद्याधरमहीक्षिताम् । चक्रवर्तित्वमासाद्याप्यधिकेच्छुर्बभूव सः ॥ १२
प्रववृते जेतुं वारितोऽपि स मन्त्रिभिः । तद्दिग्व्यवस्थितालङ्घ्यमेरुभूमीः सुराश्रयाः ॥ १३
ोपचिताः कामं विशेषासादनं विना । तेजस्विनो न तिष्ठन्ति दीप्रा दावानला इव ॥ १४
ं नारदोऽभ्येत्य मुनिरेवमभाषत । नीतिज्ञस्यापि ते कोऽयं राजन्नविषयोद्यमः ॥ १५

प्रवर्तमानो ह्युत्सेकादसाध्ये परिभूयते । दशास्य इव दर्पेण कैलासोन्मूलनोद्यतः ॥
दुर्लङ्घ्यो ह्यर्कचन्द्राभ्यामपि मेरुस्तवेह च । विद्याधरेन्द्रतादिष्टा शर्वेण न सुरेन्द्रता ॥
विद्याधराणां भूमिर्हि हिमवान्विजितस्त्वया । तन्मेरौ देवभूमौ ते किं कार्यं मुञ्च दुर्ग्रहम् ॥
पिता मन्दरदेवस्य यस्त्वकम्पनसंज्ञकः । स द्रष्टव्यस्त्वया गत्वा वनस्थः शिवमिच्छता ॥
इत्युक्त्वा नारदमुनिः प्रतिपन्नं तथेति तम् । चक्रवर्तिनमामन्त्र्य जगाम स यथागतम् ॥
चक्रवर्त्यपि कार्यज्ञो नारदेन च वारितः । ऋषभस्य तथा नाशं देवमायाच्छ्रुतं स्मरन् ॥
स विमृश्य स्वयं बुद्ध्या निविवृत्य ततो ययौ । तपोवनस्थितं द्रष्टुं राजर्षिं तमकम्पनम् ॥
प्रापत्तपोवनं चास्य योगनिष्ठैर्महर्षिभिः । पद्मासनोपविष्टैश्च ब्रह्मलोकमिवावृतम् ॥
तत्र वृद्धं ददर्शैतं जटावल्कलधारिणम् । अकम्पनं मुनिजनैर्महाद्रुममिवाश्रितम् ॥
ववन्दे चोपसृत्यात्र पादावस्य तपस्विनः । असावपि कृतातिथ्यो राजर्षिर्निजगाद तम् ॥
युक्तं कृतं त्वया राजन्निममागच्छताश्रमम् । उल्लङ्घ्य गच्छतस्ते हि दद्युः शापं महर्षयः ॥
इति ब्रुवति राजर्षौ तस्मिंस्तं चक्रवर्तिनम् । तिष्ठंस्तपोवने तत्र स गृहीतमुनिव्रतः ॥
आगान्मन्दरदेवोऽपि पितुस्तस्य तदान्तिकम् । स्वस्रा मन्दरदेव्यात्र कुमार्या सहितस्तया ॥
नरवाहनदत्तश्च दृष्ट्वा कण्ठे तमग्रहीत् । जितशान्तेषु धीराणां स्नेह एवोचितोऽरिषु ॥
अथ मन्दरदेवीं तां भ्रात्रा सममुपागताम् । दृष्ट्वाकम्पनराजर्षिः स सम्राजमुवाच तम् ॥
इयं मन्दरदेवीति नाम्ना राजन्सुता मम । उक्ता च दिव्यवाचैषा महिषी चक्रवर्तिनः ॥
तदेतामुपयच्छस्व चक्रवर्तिन्मयार्पिताम् । इत्युक्तवति राजर्षौ सा जगाद तदात्मजा ॥
इह सन्ति चतस्रो मे वयस्या वरकन्यकाः । एका कनकवत्याख्या कन्या काञ्चनदंष्ट्रजा ॥
द्वितीया कालजिह्वस्य नाम्ना कालवती सुता । तृतीया दीर्घदंष्ट्रस्य श्रुता नाम तनूद्भवा ॥
चतुर्थी पोत्रराजस्य पुत्री नाम्नाम्बरप्रभा । विद्याधरेन्द्रकन्यानामहं तासां च पञ्चमी ॥
भ्रमन्त्यस्ता वयं पञ्च दृष्ट्वा पूर्वं तपोवने । आर्यपुत्रमिमं सोत्का व्यदध्म समयं मिथः ॥
सममस्माभिराहार्यो भर्तायं या पृथक्त्वमुम् । भजेदुद्दिश्य तामात्मा हन्तव्योऽन्याभिराश्विति ॥
तत्सखीभिर्विना ताभिर्युक्तः परिणयो न मे । मादृश्यो हि कथं कुर्युः सत्वोल्लङ्घनसाहसम् ॥
एवं तया प्रौढयोक्ते तत्पिताकम्पनः स तान् । विद्याधरेन्द्रांश्चतुरोऽप्याह्वयत्कन्यकापितॄन् ॥
शशंस च यथातत्त्वं स तेभ्यस्तेऽपि तत्क्षणम् । कृतार्थमानिनः कन्यास्तनयास्ता समानयन् ॥
ततो मन्दरदेवीतः प्रभृत्येताः क्रमेण सः । नरवाहनदत्तोऽन्याः पञ्चात्र परिणीतवान् ॥
ताभिः सह च तत्रासीद्वासराणि बहूनि सः । ऋषींस्त्रिसंध्यं प्रणमन्कृतोत्सवपरिच्छदः ॥
राजन्महाभिषेकार्थमृषभाद्रिं व्रजाधुना । इत्युक्तेऽकम्पनेनाथ देवमायोऽप्युवाच तम् ॥
देवैवमेव कार्यं ते यस्मादृषभकादयः । अभ्यषिच्यन्त तत्राद्रौ प्राक्तनाश्चक्रवर्तिनः ॥
तच्छ्रुत्वा निकटे श्लाघ्ये मन्दराद्रौ प्रशंसति । अभिषेकं हरिशिखे वागेवमुदभूद्दिवः ॥
महाभिषेकं सर्वे हि राजन्नृषभपर्वते । पूर्वे प्राप्तास्त्वमप्यद्य गच्छ सिद्धपदं ह्यदः ॥
इत्युक्तो दिव्यया वाचा नत्वा साकम्पनानृषीन् । नरवाहनदत्तोऽतः स प्रतस्थे शुभेऽहनि ॥
प्राप तच्च त्रिशीर्षाख्यगुहाया द्वारमुत्तरम् । सहामितगतिप्रष्ठैः सर्वविद्याधरेश्वरैः ॥
तत्र संपूजितां कालरात्रिं द्वारेण तेन सः । प्रविश्य तां गुहां सम्राड् दक्षिणेन विनिर्ययौ ॥
निर्यातश्च समं सैन्यैर्देवमायस्य मन्दिरे । तदर्थितो विशश्राम दिनेऽस्मिन्सपरिग्रहः ॥
तत्रस्थश्च स कैलासे तस्मिन्संनिहितं हरम् । विचिन्त्य गोमुखसखः स्वैरं द्रष्टुं जगाम तम् ॥
आसाद्य चाश्रमं तस्य सुरभिं वृषभं तथा । दृष्ट्वा प्रणम्य च द्वाःस्थं स नन्दिनमुपेयिवान् ॥
प्रदक्षिणप्रतीतेन मुक्तद्वारश्च तेन सः । प्रविश्य देवीसहितं ददर्श वृषभध्वजम् ॥
दूरादेव कृताह्लादं चूडाचन्द्रकरोत्करैः । इतस्ततो गतैर्गौर्या मुखद्युतिजितैरिव ॥

न्तं प्रियया साकमक्षैरक्षैरिवेच्छया । स्वकार्यदत्तस्वातन्त्र्यैर्लोलैर्वशगतैरपि ॥ ५५
च पादयोस्तस्य पपात वरदस्य सः । देव्याः शैलसुतायाश्च चक्रे च त्रिःप्रदक्षिणम् ॥ ५६
यदागतोऽसीह दोषः स्याद्धि तवान्यथा । भविष्यन्त्यधुना ते तु विद्याः शश्वदभङ्गुराः ॥ ५७
त सिद्धक्षेत्रं तद्गच्छ त्वमृषभाचलम् । महाभिषेकं तत्राशु प्राप्तकालमवाप्नुहि ॥ ५८
दिष्टश्च देवेन चक्रवर्ती तथेति तम् । नत्वा सभार्यमागात्तद्देवमायस्य मन्दिरम् ॥ ५९
पुत्र गतोऽभूस्त्वं प्रहृष्टः किल दृश्यसे । इहापि किंस्विन्मिलितास्तवान्याः पञ्च कन्यकाः ॥ ६०
देनर्मणा तत्र देवीं मदनमञ्चुकाम् । ब्रुवतीमुक्ततत्त्वार्थो नन्दयन्सुखमास्त सः ॥ ६१
द्युः सर्वगन्धर्वविद्याधरबलान्वितः । द्विभास्करमिव व्योम कुर्वस्तेजस्विनात्मना ॥ ६२
नवरमारूढः सावरोधः समन्त्रिकः । नरवाहनदत्तोऽतः प्रययावृषभाचलम् ॥ ६३
ा तं गिरिं दिव्यं वातधूतजटालतैः । विकीर्णपुष्पैर्दत्तार्घस्तापसैरिव पादपैः ॥ ६४
तस्य समाजह्रुस्ते ते विद्याधराधिपाः । महाभिषेकसंभारान्प्रभावसदृशान्प्रभोः ॥ ६५
युश्चाभिषेकेऽत्र तस्य प्राभृतपाणयः । दिग्भ्यो विद्याधराः सर्वे भक्तभीतजितादृताः ॥ ६६
सनेऽभिषेक्तव्या महादेवीपदेऽत्र का । देव देवीति पप्रच्छुस्तं च विद्याधरास्ततः ॥ ६७
मयाभिषेक्तव्या देवी मदनमञ्चुका । इति राज्ञोदिते क्षिप्रं ध्यानं ते द्युचरा ययुः ॥ ६८
च्चार गगनादशरीरा सरस्वती । हंहो विद्याधरा नेयं मर्त्या मदनमञ्चुका ॥ ६९
:षावतीर्णा हि कामस्यास्य भवत्प्रभोः । नासौ कलिङ्गसेनायां जाता मदनवेगतः ॥ ७०
निजेयं देवैर्हि मायया परिवर्त्य तम् । गर्भे तस्याः प्रसूताया निक्षिप्ता तत्र तत्क्षणम् ॥ ७१
ा गर्भस्तु यस्तस्याः सोऽयमित्यकसंज्ञकः । स्थितो मदनवेगस्य पार्श्वे धात्रा समर्पितः ॥ ७२
ार्धासनार्हास्य पत्युर्मदनमञ्चुका । अस्या ह्येतद्वरं प्रादात्तपस्तुष्टो हरः पुरा ॥ ७३
क्त्वा व्यरमत्सा च वाणी विद्याधराश्च ते । तुतुषुः प्रशशंसुश्च देवीं मदनमञ्चुकाम् ॥ ७४
शुभेऽहनि व्यग्रे शान्तिसोमे पुरोहिते । मङ्गल्यतूर्यनादेषु सुगीतेषु द्युयोषिताम् ॥ ७५
ाणब्रह्मघोषेषु व्याप्तवत्सु दिशो दश । सिंहासनस्थं वामार्धतिष्ठन्मदनमञ्चुकम् ॥ ७६
ाहनदत्तं तं नानातीर्थसमुद्भवैः । हेमकुम्भाहृतैस्तोयैरभ्यषिञ्चन्महर्षयः ॥ ७७
ं तस्य जलैर्मूर्ध्नि पतितैर्मन्त्रपावनैः । निरगान्मनसो धौतं गूढं वैरमलं द्विषाम् ॥ ७८
ीस्तदभिषेकाम्बु सामुद्रं बन्धुबुद्धितः । अन्वागतेव तस्याङ्गं साक्षात्तेन सहावृणोत् ॥ ७९
मालाततिस्तस्य नाकनारीकरोज्झिता । स्वयं पतन्ती गङ्गेव बहुस्रोता वपुष्यभात् ॥ ८०
रुणेनाङ्गरागेण प्रतापेनेव भूषितः । उदयस्थोऽम्बुधिजलस्नातो भास्वान्बभौ ततः ॥ ८१
मन्दारमाल्यश्च सद्रत्नाभरणोज्ज्वलः । आमुक्तदिव्यमुकुटः श्रियं शाक्रीमुवाह सः ॥ ८२
ाभिषेका देवी च पार्श्वे मदनमञ्चुका । तस्य दिव्यैरलंकारैः शचीवेन्द्रस्य निर्बभौ ॥ ८३
दुन्दुभिमेघं द्युपतत्कुसुमवृष्टि च । स्वःस्त्रीविद्युद्वृतं चित्रं दुर्दिनं तदभूद्दिनम् ॥ ८४
नगेन्द्रनगरे विद्याधरवराङ्गनाः । नानृत्यन्केवलं यावद्वातोद्धूता लता अपि ॥ ८५
ौरत्र मुरजेष्वाहतेषु महोत्सवे । नगोऽप्यवादयदिव प्रतिशब्दवतीर्गुहाः ॥ ८६
यासवरसक्षीबवल्गद्विद्याधरावृतः । स पर्वतोऽपि पानेन घूर्णमान इवाबभौ ॥ ८७
ातास्याभिषेकस्य शोभानेनैव वीक्ष्य यत् । इन्द्रोऽपि स्वाभिषेकेऽभूद्भग्नमानो विमानगः ॥ ८८
प्राप्तयथाभीष्टचक्रवर्त्यभिषेचनः । नरवाहनदत्तोऽथ स सस्मारोत्सुकः पितुः ॥ ८९
श्य च समं सद्यः सचिवैर्गोमुखादिभिः । सम्राड्वाजानमाहूय स वायुपथमादिशत् ॥ ९०
ाहनदत्तस्त्वां स्मरत्युत्कण्ठितो भृशम् । इत्युक्त्वाख्यातवृत्तान्तो गच्छ तातमिहानय ॥ ९१
ाश्च मन्त्रिणश्चास्य तथैवोक्त्वा त्वमानयेः । तच्छ्रुत्वैव तथेत्युक्त्वा व्योम्ना वायुपथो ययौ ॥ ९२
ाञ्च प्राप कौशाम्बीं दृष्टः सभयविस्मयैः । पौरैर्विद्याधराणां स सप्तभिः कोटिभिर्वृतः ॥ ९३

ददर्शोदयनं तं च वत्सराजं समन्त्रिकम्। देवीभिश्चात्र सहितं यथार्हविहितादरम्॥
उपविश्याथ पृष्ट्वा च कुशलं तं जगाद सः। नृपं विद्याधरपतिर्दृष्टः सर्वैः सकौतुकम्॥
नरवाहनदत्तस्ते सूनुराराध्य शंकरम्। साक्षात्कृत्य च तं विद्याः सर्वाः प्राप्यारिदुर्जयाः॥
हत्वा मानसवेगं च गौरिमुण्डं च दक्षिणे। जित्वा मन्दरदेवं च वेद्यर्धपतिमुत्तरे॥
आसाद्योभयवेद्यर्धविद्याधरमहीभुजाम्। सर्वेषां शासनभृतां चक्रवर्तिपदं महत्॥
महाभिषेकमृषभे संप्राप्तः पर्वतेऽधुना। राजन्स्मरति सोत्कस्त्वां सदेवीसचिवादिकम्॥
अहं च तेन प्रहितो द्रुतमागम्यतामितः। पुण्यवन्तो हि संतानं पश्यन्त्युच्चैः कृतान्वयम्॥
इति वायुपथाच्छ्रुत्वा भृशोत्कण्ठो बभार सः। वत्सराजोऽम्बुदारावहृष्यद्बर्हिणविभ्रमम्॥
प्रतिपद्य च तद्वाक्यं समं तेनैव तत्क्षणम्। आरुह्य शिबिकां व्योम्ना तद्विद्यानां प्रभावतः॥
कलिङ्गसेनानुगतः स भार्यासचिवान्वितः। गत्वा संप्राप तं दिव्यमृषभाख्यं महागिरिम्॥
तत्रापश्यच्च तं पुत्रं दिव्यसिंहासनस्थितम्। विद्याधरेन्द्रमध्यस्थं बहुभार्यासमन्वितम्॥
पूर्वाद्रिमस्तकासीनं ग्रहग्रामपरिष्कृतम्। शशाङ्कमनुकुर्वन्तं भूरितारावलीवृतम्॥
तद्दर्शनसुधासारसिक्तः प्रोल्लासिताशयः। कांचिच्चन्द्रोदयाम्भोधिभङ्गीं भेजे स भूपतिः॥
नरवाहनदत्तोऽपि दृष्ट्वा तं जनकं चिरात्। उत्थाय संभ्रमात्सोत्कः सोऽभ्यगात्सपरिच्छदः॥
आलिङ्गितश्च तेनाथ पित्राङ्कमधिरोप्य सः। भूयोऽप्यानन्दबाष्पाम्बुपूरेणेवाभ्यषिच्यत॥
देवी वासवदत्ता च चिरमाश्लिष्य तं सुतम्। तदालोकस्नुतस्तन्यैरसिचत्स्मृतशैशवम्॥
पद्मावती च यौगन्धरायणाद्याश्च मन्त्रिणः। पैतृका मातुलश्चैव दृष्ट्वा गोपालकश्चिरात्॥
पपुः सतृष्णया दृष्ट्या तस्यामृतमयं वपुः। चकोरा इव सम्राजो यथार्हकृतसत्कृतेः॥
कलिङ्गसेना तं दृष्ट्वा जामातरमथात्मजाम्। त्रैलोक्येऽपि न माति स्म स्वेष्वङ्गेषु तु का कथा॥
यौगन्धरायणाद्याश्च मरुभूतिमुखान्सुतान्। दृष्ट्वा प्रभुप्रसादाप्तदिव्यत्वानभ्यनन्दिषुः॥
आमुक्तदिव्याभरणा देवी मदनमञ्चुका। रत्नप्रभाप्यलंकारवती ललितलोचना॥
कर्पूरिका शक्तियशा भगीरथयशा अपि। तथा रुचिरदेवस्य भगिनी दिव्यरूपधृत्॥
वेगवत्यजिनावत्यौ तथा गन्धर्वदत्तया। प्रभावती चात्मनिका वायुवेगयशास्तथा॥
तत्सख्यः कालिकाद्याश्च चतस्रोऽथ सुलोचना। किं च मन्दरदेव्याद्याः पञ्चान्याश्च वराङ्गनाः॥
नरवाहनदत्तस्य महिष्यश्चक्रवर्तिनः। प्रणेमुः श्वशुरस्यात्र पादौ वत्सेश्वरस्य ताः॥
तद्वद्वासवदत्तायाः पद्मावत्यास्तथैव च। ते च हर्षाद्यथौचित्यमाशीर्भिस्ता अवर्धयन्॥
यथोचितासनासीने वत्सेशेऽन्तःपुरान्विते। नरवाहनदत्तः स्वमारुरोह महासनम्॥
देवी वासवदत्ता च नवास्तास्तास्तदा स्नुषाः। पश्यन्ती मुमुदे तासां पृच्छन्ती कुलनामनी॥
नरवाहनदत्तस्य तां ते वत्सेश्वरादयः। दिव्यां विभूतिं पश्यन्तः कृतार्थं जन्म मेनिरे॥
अथ प्रवृत्ते तत्रैव बन्धुसङ्गमहोत्सवे। प्रतीहारोऽब्रवीद्धीरो रुचिदेवः प्रविश्य सः॥
आपानभूमिः सज्जेयं तदत्रागम्यतामिति। तच्छ्रुत्वा ते ययुः सर्वे तामापानभुवं शुभाम्॥
विचित्ररत्नचषकप्रफुल्लविविधाम्बुजाम्। विकीर्णानेककुसुमामुद्यानलिनीमिव॥
व्याप्तां मत्तासवापूर्णकलशीभिः पुरंध्रिभिः। तन्वतीभिः सुधाहर्तृबाहूत्पन्नामृतभ्रमम्॥ (?)
पपुस्तत्रावरोधस्त्रीलज्जानिगडभेदि ते। स्मरजीवितसर्वस्वं विलाससचिवं मधु॥
मुखानि मधुना तेषामुत्फुल्लान्यरुणानि च। बालातपेन सरसां सरोजानीव रेजिरे॥
देवीवृन्दाधरजितैर्भीतैस्तत्संगमादिव। चक्रेऽब्जरागचषकैः स्वरुचा शीधुनिह्नवः॥
आसन्नकोपकालेऽपि सभ्रूभङ्गारुणेक्षणाः। नरवाहनदत्तस्य तदा देव्यो मदस्पृशः॥
ततो भोजनभूमिं ते क्रमेणात्र समासदन्। विद्याविभवसंभूतविविधाहारहारिणीम्॥

१ 'आसन्-अकोपकाले' इति च्छेदः. पुस्तकान्तरे त्वस्माच्छ्लोकादग्रे एकश्लोकस्य त्रुटिचिह्नमस्ति.

आस्तीर्णवस्त्रां पात्राढ्यां सतिरस्करिणीपटाम् । नानाविधास्वाद्यरसां नाट्यवेदीमिव श्रियाम् ॥ १३२
तत्र ते विहिताहारा भास्करे सह संध्यया । विश्रान्तेऽस्तगिरौ शय्यागृहेष्वथ विशश्रमुः ॥ १३३
नरवाहनदत्तश्च विद्यया बहुधा वपुः । विभज्य सर्वदेवीनां संनिधत्ते स्म वेश्मसु ॥ १३४
सत्यतस्त्विन्दुवदनां समदां लोलतारकाम् । रेमे निशामिवादाय कान्तां मदनमञ्चुकाम् ॥ १३५
वत्सेश्वरोऽपि तां रात्रिं सानुगो दिव्यभोगवान् । तयैव तन्वा संप्राप्तजन्मान्तर इवानयत् ॥ १३६
प्रातः प्रबुध्य सर्वे च तैस्तैर्भोगैस्तथैव ते । विद्यासिद्धवरोद्यानमन्दिरादिषु रेमिरे ॥ १३७

इति विविधविहारैरत्र तेषां प्रयातेष्वथ बहुदिवसेषु प्रीतिमान्वत्सराजः ।
निजसुतमुपगम्य स्वां पुरीं गन्तुकामो निखिलखचरराजं प्रह्वमेवं जगाद ॥ १३८

पुत्रैतेषु सचेतनो न रमते दिव्येषु भोगेषु कः
किं त्वाकर्षति जन्मभूमिवसतिस्नेहः स्वको मानुषान् ।
तद्यामः स्वपुरीं वयं श्रियमिमां वैद्याधरीं त्वं पुन-
र्भुङ्क्ष्वैतास्तव दिव्यमानुषतया योग्या यतो भूमयः ॥ १३९
आह्वातव्याः पुनरवसरे पुत्र भूयो वयं ते
जन्मन्येतत्फलमिह हि नस्त्वन्मुखेन्दुं यदेतम् ।
चक्षुःपेयामृतरसमयं कान्तमालोकयामो
दिव्यां लक्ष्मीं यदपि भवतो वीक्ष्य मोदामहे च ॥ १४०

एतद्वचोऽकृतकमेव पितुर्निशम्य वत्सेश्वरस्य नरवाहनदत्तदेवः ।
विद्याधराधिपतिमाशु स देवमायमाहूय बाष्पभरगद्गदमादिदेश ॥ १४१
तातः प्रयाति खलु तां निजराजधानीमम्बान्वितः स्वसचिवादियुतस्तदस्य ।
संपूर्णहेममणिभारसहस्रमग्रे प्रस्थापय द्युचरविष्टिसहस्रहार्यम् ॥ १४२

इत्यादिष्टः स्वामिना प्रीतिपूर्वं तेन प्रह्वो देवमायो जगाद ।
आकौशाम्बि स्वात्मनैव प्रयास्याम्येतत्सिद्ध्यै सानुगो मानदेति ॥ १४३

अथ तस्य चक्रवर्ती वस्त्रालंकारपूजितस्य पितुः ।
वायुपथदेवमायौ सानुचरस्यानुयात्रिकौ स ददौ ॥ १४४
सोऽप्यारूढो दिव्यं वहनं वत्सेश्वरः सपरिवारः ।
दूरानुगतं पुत्रं निवर्त्य तं निजपुरीं प्रययौ ॥ १४५
देवी वासवदत्ता तत्कालोद्भूतशतगुणोत्कण्ठा ।
प्रणतं निवर्त्य रुदती पश्यन्ती तं सुतं कथंचिदगात् ॥ १४६
स च नरवाहनदत्तः सचिवानुगतो गुरूननुव्रज्य ।
बाष्पान्धकारितमुखः प्रत्यागादृषभकं तमेव गिरिम् ॥ १४७

तत्रास्त बालसचिवैः सह गोमुखाद्यैर्विद्याधरेन्द्रनिवहैश्च स चक्रवर्ती ।
सान्तःपुरो मदनमञ्चुकया समेतो दिव्येषु शश्वदुपभोगसुखेष्वतृप्तः ॥ १४८

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे महाभिषेकलम्बके द्वितीयस्तरङ्गः ।

समाप्तश्चायं महाभिषेको नाम पञ्चदशो लम्बकः ।

॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## सुरतमञ्जरी नाम षोडशो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

प्रथमस्तरङ्गः ।

पातु वस्ताण्डवोड्डीनगण्डसिन्दूरमण्डनः । वान्ताभिपीतप्रत्यूहप्रताप इव विघ्नजित् ॥
एवं तस्मिन्नृषभके पर्वते तस्य तिष्ठतः । नरवाहनदत्तस्य सभार्यस्य समन्त्रिणः ॥
प्राप्य विद्यधराधीशचक्रवर्तिश्रियं पराम् । भुञ्जानस्याययौ पुष्णन्सुखानि मधुरेकदा ॥
प्रससाद चिराच्चारु चन्द्रिका मृगलक्ष्मणः । नवीनशाद्वलाश्लिष्टा सस्वेदाभूद्वसुंधरा ॥
आसन्नालिङ्ग्यमानाश्च मुहुर्मलयमारुतैः । कम्पाकुलाः कण्टकिताः सरसा वनराजयः ॥
पुष्पचापप्रतीहारश्चूतयष्टिं विलोकयन् । क्वणन्मानवतीमानं निषिषेधेव कोकिलः ॥
निष्पेतुः पुष्पवल्लीभ्यः सशब्दा भृङ्गराजयः । मारवीरधनुर्मुक्ता इव नाराचपङ्क्तयः ॥
एवं मधुप्रवृत्तिं तां तदा वीक्ष्य व्यजिज्ञपन् । नरवाहनदत्तं तं सचिवा गोमुखादयः ॥
देव पश्यान्य एवायं जातः पुष्पमयोऽधुना । ऋषभाद्रिर्मधूत्फुल्लकाननालीनिरन्तरः ॥
अन्योन्यघट्टितैः पुष्पैः कांस्यतालवतीरिव । संगीता इव भृङ्गीनां विरुतैर्वातवेपिताः ॥
वसन्तसज्जितोद्यानमन्मथास्थानगामिनीः । विलोकय लता राजन्परागपटमालिनीः ॥
अलिमालाश्लथज्येयं दृश्यतां चूतमञ्जरी । विश्रान्तस्य जगज्जित्वा कामस्येव धनुर्लता ॥
तदत्र रुचिरोद्याने देव मन्दाकिनीतटे । मधूत्सवमिमं तावदेहि गत्वोपभुञ्ज्महे ॥
इत्युक्तः सचिवैः सोऽथ सावरोधवधूजनः । नरवाहनदत्तस्तद्ययौ मन्दाकिनीतटम् ॥
तत्र चिक्रीड चोद्याने नानाविहगनादिते । एलालवङ्गबकुलाशोकमन्दारमण्डिते ॥
उपविष्टश्च विपुले चन्द्रकान्तशिलातले । पार्श्वे कृत्वा महादेवीं वामे मदनमञ्चुकाम् ॥
अन्यावरोधसहितैस्तैस्तैर्विद्याधरेश्वरैः । चण्डसिंहामितगतिप्रमुखैः परिवारितः ॥
आपानं सेवमानोऽत्र तास्ताः कुर्वन्कथास्तथा । विचार्य तमृतुं सम्राट् सचिवान्स्वानुवाच सः ॥
सुखस्पर्शो मृदुर्वातो दक्षिणो विमला दिशः । पुष्पितानि सुगन्धीनि काननानि पदे पदे ॥
मधुराः कोकिलालापाः पानलीलासुखानि च । सुखं किं न मधौ प्रेयोवियोगस्त्वत्र दुःसहः ॥
अन्यस्यास्तां तिरश्चामप्यत्र कष्टा वियोगिता । तथा च विरहक्लान्तामेतां पश्यत कोकिलाम् ॥
एषा हि नष्टमन्विष्य कूजन्ती सुचिरं प्रियम् । अप्राप्य तं स्थिता चूते मृतेवालीय निःस्वना ॥
इत्युक्तवन्तं सम्राजं मन्त्री तं गोमुखोऽब्रवीत् । सत्यं कालेऽत्र विरहो दुःसहः सर्वदेहिनाम् ॥
तथाहि देव श्रावस्त्यां यद्वृत्तं वच्मि तच्छृणु । तत्रैको राजपुत्रोऽभूद्ग्रामभुग्राजसेवकः ॥
शूरसेनाभिधानस्य तस्य मालवदेशजा । अनुरूपा सुषेणेति भार्याभूज्जीविताधिका ॥

ातु भूपेनाहूतः कटकं गन्तुमुद्यतः । शूरसेनोऽनुरागिण्या जगदे भार्यया तया ॥ २६
ुत्र न मुक्त्वा मामेककां गन्तुमर्हसि । नहि शक्ष्याम्यहं स्थातुं क्षणमत्र त्वया विना ॥ २७
ायोक्तः प्रियया शूरसेनो जगाद ताम् । राजाहूतो न गच्छामि कथं तन्वि न वेत्सि किम् ॥ २८
ुत्रः परायत्तवृत्तिरस्मि हि सेवकः । तच्छ्रुत्वा साश्रुनयना सा भार्या तमभाषत ॥ २९
श्यं यद्यवश्यं ते तत्सहिष्ये कथंचन । दिनमप्यनतिक्रामन्नुपैष्यसि मधौ यदि ॥ ३०
ात्सोऽप्यवादीत्तामन्ततो निश्चितं प्रिये । त्यक्त्वापि कार्यमेष्यामि चैत्रस्य प्रथमेऽहनि ॥ ३१
ठवान्कथमपि प्रिययानुमतस्तया । राज्ञः समीपं कटकं शूरसेनो जगाम सः ॥ ३२
र्याप्याशया तस्थौ गणयन्ती दिनानि सा । तदागमावधिमधुप्रारम्भदिवसेक्षिणी ॥ ३३
ाथ दिनेष्वागात्स मधूत्सववासरः । मन्मथाह्वानमन्त्राभविलसत्कोकिलध्वनिः ॥ ३४
कुसुमामोदमाद्यन्मधुकरारवः । कामेनारोप्यमाणस्य कार्मुकस्येव निःस्वनः ॥ ३५
मधूत्सवः प्राप्तो ध्रुवमद्यैष्यति प्रियः । इति तस्मिन्दिने तस्य शूरसेनस्य सा वधूः ॥ ३६
न्त्य विहितस्नाना सुषेणाभ्यर्चितस्मरा । उद्वीक्षमाणा तन्मार्गं तस्थौ रचितमण्डना ॥ ३७
त्ययेऽपि न यदा स तस्याः पतिराययौ । तदा सा निशि नैराश्यविधुरा समचिन्तयत् ॥ ३८
: कालोऽयमायातो न त्वायातः पतिः स मे । परसेवैकसक्तानां को हि स्नेहो निजे जने ॥ ३९
चिन्तयन्त्याश्च तस्यास्तद्गतचेतसः । निर्ययुः स्मरदावाग्निदह्यमाना इवासवः ॥ ४०
भूपात्कथमप्यात्मानं प्रतिमोच्य सः । शूरसेनोऽनतिक्रामन्दिनं तद्दयितोत्सुकः ॥ ४१
ह्य करभश्रेष्ठमुल्लङ्घ्याध्वानमायतम् । आगतः पश्चिमे यामे रात्रेः प्राप निजं गृहम् ॥ ४२
ाश्यद्गतप्राणां प्रियां तां कृतमण्डनाम् । लतामुत्फुल्लकुसुमां वातेनोन्मूलितामिव ॥ ४३
विह्वलस्यैतां कुर्वतोऽङ्के विनिर्ययुः । प्रलापैः सह तस्यापि प्राणा विरहिणः क्षणात् ॥ ४४
विपन्नौ दृष्ट्वा तौ दंपती कुलदेवता । कृपया जीवयामास देवी चण्डी वरप्रदा ॥ ४५
प्रत्यागतप्राणौ ततः प्रभृति तावुभौ । दृष्टानुरागावन्योन्यमवियुक्तौ बभूवतुः ॥ ४६
वसन्तसमये मलयानिलवीजितः । केषां न देहिनां देव दुःसहो विरहानलः ॥ ४७
गोमुखेनोक्ते तदेव किल भावयन् । नरवाहनदत्तोऽभूत्सोऽकस्माद्विमना इव ॥ ४८
ःमनां विना हेतोर्दुःस्थितः सुस्थितोऽपि वा । सूचयत्यन्तरात्मा हि पुरो भावि शुभाशुभम् ॥ ४९
दिने ह्यवसिते सम्राट् संध्यामुपास्य सः । वासवेश्मनि विश्रान्तः प्रविश्य शयनीयके ॥ ५०
निशावसाने स्वं पितरं कृष्णया स्त्रिया । आकृष्य दक्षिणामाशां नीयमानमवैक्षत ॥ ५१
ेव प्रबुद्धः संस्तातस्यानिष्टशङ्कया । ध्यातामुपस्थितां विद्यां प्रज्ञप्तिं नाम पृष्टवान् ॥ ५२
तातस्य वृत्तान्तो वत्सराजस्य को मम । तन्निमित्तं हि दुःस्वप्नदर्शनादस्मि शङ्कितः ॥ ५३
क्ता तेन विद्या सा रूपिणी तमभाषत । शृणु यद्वत्सराजस्य वृत्तं देव पितुस्तव ॥ ५४
ौशाम्बीस्थितोऽकस्मादुज्जयिन्याः समागतात् । दूताच्चण्डमहासेनं विपन्नमशृणोन्नृपम् ॥ ५५
ाङ्गारवतीं देवीं कृतानुगमनां तथा । तस्मादेव स शुश्राव मोहाद्भूमौ पपात च ॥ ५६
ासंज्ञश्चिरं चैतौ समं वासवदत्तया । देव्या शुशोच श्वशुरौ स्वर्गतौ सपरिच्छदः ॥ ५७
ेऽस्मिन्भवे कस्य स्थिरता स च भूपतिः । अशोच्यो यस्य जामाता भवान्गोपालकः सुतः ॥ ५८
ाहनदत्तश्च दौहित्र इति मन्त्रिभिः । प्रबोध्योत्थापितः सोऽथ ददौ श्वशुरयोर्जलम् ॥ ५९
श्वशुर्ये शोकार्तं स्नेहात्पार्श्वस्थितं तदा । गोपालकं स वत्सेशो बाष्पकण्ठोऽभ्यभाषत ॥ ६०
ाद्योज्जयिनीं गच्छ राज्यं पालय पैतृकम् । प्रतीक्षन्ते प्रजा हि त्वामिति दूतमुखाच्छ्रुतम् ॥ ६१
ुत्वा स रुदन्वत्सराजं गोपालकोऽब्रवीत् । न देव गन्तुं शक्नोमि त्यक्त्वा त्वां भगिनीं तथा ॥ ६२
ोत्सहे तातशून्यां स्वपुरीं द्रष्टुमप्यहम् । तत्पालकोऽनुजो मेऽत्र राजास्तु मदनुज्ञया ॥ ६३
वदन्यदा नैच्छद्राज्यं गोपालकस्तदा । सेनापतिं रुमण्वन्तं विसृज्योज्जयिनीं पुरीम् ॥ ६४

वत्सेश्वरः कनिष्ठं तं श्वशुर्यं पालकाभिधम्। दत्ताभ्यनुज्ञं ज्येष्ठेन तस्यां राज्येऽभ्यषेचयत्॥
आलोक्य चास्थिरं सर्वं विरक्तो विषयेषु सः। यौगन्धरायणादिभ्यः सचिवेभ्योऽब्रवीदिदम्॥
असारेऽस्मिन्भवे तावद्भावाः पर्यन्तनीरसाः। कृतं च राज्यमस्माभिर्भुक्ता भोगा जिता द्विषः॥
विद्याधराधिराजत्वं प्राप्तो दृष्टः सुतस्तथा। इदानीं च वयोऽतीतमस्माकं बान्धवैः सह॥
मृत्यवे दातुमात्ताश्च केशेषु जरसा वयम्। क्लीबराज्यमिवाक्रान्तं शरीरं बलिभिश्च नः॥
तस्मात्कालंजरगिरौ गत्वा देहमशाश्वतम्। त्यक्त्वेमं साधयाम्यत्र यथोक्तं शाश्वतं पदम्॥
इत्युक्तास्तेन सचिवा राज्ञा सर्वे विचार्य तत्। देवी वासवदत्ता च समचित्तास्तमब्रुवन्॥
यथाभिरुचितं देव भवतस्त्वत्प्रसादतः। वयमप्युपयास्यामः परत्राप्युत्तमां गतिम्॥
इत्यात्मतुल्यैरुक्तस्तैः स राजा कृतनिश्चयः। गोपालकं तं तत्रस्थं श्वशुर्यं धुर्यमभ्यधात्॥
नरवाहनदत्तश्च त्वं च तुल्यौ सुतौ मम। तदेतां रक्ष कौशाम्बीं राज्यं तुभ्यं मयार्पितम्॥
एवं वत्सेश्वरेणोक्तस्तं स गोपालकोऽब्रवीत्। युष्माकं या गतिः सा मे नाहं वस्त्यक्तुमुत्सहे॥
एतदेवानुबन्धेन स जल्पन्स्वसृवत्सलः। वत्सराजेन जगदे कोपं कृत्वैव कृत्रिमम्॥
अद्यैव त्वमनायत्तो जातो मिथ्यानुवृत्त मे। स्वपदाच्यवमानस्य कस्याज्ञां को हि मन्यते॥
इत्युक्तोऽवाङ्मुखो राज्ञा रूक्षं गोपालको रुदन्। वनाय कृतबुद्धिः सन्संप्रत्यत्र न्यवर्तत॥
ततो राजा गजारूढो देव्या वासवदत्तया। पद्मावत्या च सहितः स प्रतस्थे समन्त्रिकः॥
कौशाम्ब्या निर्गतं तस्याः साक्रन्दाः साश्रुदुर्दिनाः। सयोषिद्बालवृद्धाश्च पौरास्तमनु निर्ययुः॥
गोपालको वः पातेति तानाश्वास्य कथंचन। निवर्त्य च स वत्सेशः प्रायात्कालंजरं गिरिम्॥
प्राप्य तं च समारुह्य प्रणम्य च वृषध्वजम्। सर्वकालप्रियां वीणां कृत्वा घोषवतीं करे॥
पार्श्वगाभ्यां स देवीभ्यामन्वितो मन्त्रिभिः सह। यौगन्धरायणाद्यैस्तैः पतितोऽभूत्प्रपाततः॥
पतन्नेव विमानेन भास्वरेण स भूपतिः। आगतेनानुगैः सार्धं द्योतमानो दिवं गतः॥
एतद्विद्यामुखाच्छ्रुत्वा हा तातेत्यभिधाय सः। नरवाहनदत्तोऽत्र पपात भुवि मूर्छितः॥
लब्धसंज्ञश्च पितरं मातरं पितृमन्त्रिणः। अन्वशोचन्निजामात्यैः प्रमीतपितृकैः सह॥
स्वरूपज्ञोऽपि संसारस्यैतस्य क्षणभङ्गिनः। इन्द्रजालोपमानस्य कथं देव विमुह्यसि॥
अनुशोचसि चाशोच्यान्कृतकृत्यान्पितॄन्कथम्। येषां विद्याधरेन्द्रैकचक्रवर्ती भवान्सुतः॥
इति विद्याधराधीशैर्धनवत्या च बोधितः। स पितृभ्यो जलं दत्त्वा विद्यां पप्रच्छ तां पुनः॥
मातुलो मे स गोपालः क्वास्ते किमकरोदिति। ततो विद्यापि सा भूयः सम्राजं तमभाषत॥
गते महापथगिरिं वत्सराजेऽनुशोच्य तम्। भगिनीं चाध्रुवं मत्वा सर्वं स्थित्वा बहिः पुरः॥
उज्जयिन्यास्तमानाय्य भ्रातरं पालकं च सः। प्रादाद्गोपालकस्तस्मै कौशाम्बीराज्यमप्यदः॥
राज्यद्वयस्थे तस्मिंश्च सोऽनुजेऽथ तपोवनम्। वैराग्येणासितगिरिं प्रयातः कश्यपाश्रमम्॥
तत्र वल्कलमादाय तपस्यन्मुनिमध्यगः। मातुलस्तिष्ठति स ते देव गोपालकोऽधुना॥
श्रुत्वैतद्द्रष्टुमुत्कस्तं मातुलं सपरिच्छदः। नरवाहनदत्तोऽगाद्विमानेनासिताचलम्॥
तत्रावतीर्य गगनाद्वृतो विद्याधरेश्वरैः। अपश्यदाश्रमपदं स मुनेः कश्यपस्य तत्॥
संप्रेक्षितमिवानेककृष्णसारमृगभ्रमैः। सस्वागताचारमिव क्वणितेन पतत्रिणाम्॥
जुह्वतामग्निहोत्राणि धूमराजिसमुद्गमैः। प्रदर्शयद्दिवारोहमार्गं दिवि तपस्विनाम्॥
बहुभूधरनागेन्द्रमाश्रितं कपिलोत्करैः। अपूर्वमिव पातालमूर्ध्ववर्ति वितामसम्॥
तत्र मध्ये जटालं तं तरुवल्कलवाससम्। मूर्तं शममिवाद्राक्षीन्मातुलं मुनिभिर्वृतम्॥ १
सोऽपि गोपालको दृष्ट्वा भागिनेयमुपागतम्। उत्थायाश्लिष्य चाङ्के तं चकारोदश्रुलोचनः॥ १
अथोभौ तौ नवीभूतशोकौ बन्धूनशोचताम्। स्वजनालोकवातेद्धो दुःखाग्निः कं न तापयेत्॥ १
तद्दुःखदर्शनार्तेषु तिर्यक्ष्वप्यत्र तौ ततः। उपेत्याश्वासयामासुर्मुनयः कश्यपादयः॥ १

अथ तस्मिन्नहनि गते प्रातर्गोपालकं स तं सम्राट् ।
एहि मदैश्वर्ये त्वं निवसेत्यभ्यर्थयामास ॥ १०४
गोपालकोऽपि तमुवाच स किं न वत्स पर्याप्तमेवममुना तव दर्शनेन ।
स्नेहस्तवास्ति मयि चेत्तदिहैव वर्षाकालं समागतमिमं निवसाश्रमे त्वम् ॥ १०५
इति नरवाहनदत्तस्तेनोक्तो मातुलेन तत्कालम् ।
सपरिच्छदः स तस्मिन्नसितगिरौ कश्यपाश्रमे तस्थौ ॥ १०६

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे सुरतमञ्जरीलम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

अथासितगिरौ तस्मिन्नास्थानस्थं व्यजिज्ञपत् । नरवाहनदत्तं तं स्वसेनापतिरेकदा ॥ १
अद्याहं देव हर्म्यस्थो रक्षन्सैन्यानि दृष्टवान् । दिव्येन पुंसा नभसि ह्रियमाणां निशि स्त्रियम् ॥ २
क्रन्दन्तीं हार्यपुत्रेति कान्तिसर्वस्वहारिणीम् । लब्ध्वैवानायितां बुद्धा तत्कालबलिनेन्दुना ॥ ३
आः पाप परदारांस्त्वमपहृत्य क यास्यसि । नरवाहनदत्तस्य राज्ये देवस्य रक्षितुः ॥ ४
योजनानां सहस्रेषु षष्टौ वैद्याधरे पदे । तिर्यञ्चोऽपि हि नाधर्मं कुर्वन्त्यन्येषु का कथा ॥ ५
इत्युक्त्वैव प्रधाव्याशु सानुगेन मया स्वयम् । संयम्य स पुमान्व्योम्नः सनारीकोऽवतारितः ॥ ६
अवतार्य च पश्यामो यावत्स्यालः स ते प्रभो । भ्राता युष्मन्महादेव्या इत्यकाख्यो नभश्चरः ॥ ७
देव्यां कलिङ्गसेनायां जातो मदनवेगतः । केयं किमेतां हरसीत्युक्तोऽस्माभिश्च सोऽभ्यधात् ॥ ८
इयं मतङ्गदेवस्य विद्याधरपतेः सुता । उत्पन्नाशोकमञ्जर्यां नाम्ना सुरतमञ्जरी ॥ ९
सैषा प्रागेव वाचा मे मात्रा दत्ता सती किल । अन्यस्मै मानुषायात्र स्वपित्रा प्रतिपादिता ॥ १०
अतोऽद्यासौ निजा भार्या यदि प्राप्य हृता मया । तन्मे को दोष इत्युक्त्वा सोऽत्र व्यरमदित्यकः ॥ ११
केनार्ये परिणीता त्वं कथं प्राप्तासि चामुना । इति साथ मया पृष्टावोचत्सुरतमञ्जरी ॥ १२
अस्त्युज्जयिन्यां नृपतिः श्रीमान्पालकसंज्ञकः । कुमारस्तस्य पुत्रोऽस्ति सुनामावन्तिवर्धनः ॥ १३
तेनेह परिणीताहं सुप्ता हर्म्यतलेऽद्य च । आर्यपुत्रस्य सुप्तस्य हृतास्म्येतेन पाप्मना ॥ १४
एवमुक्तवती सा च संयतस्थः स चेत्यकः । मयेह स्थापितौ तौ द्वौ प्रमाणमधुना प्रभुः ॥ १५
एवं हरिशिखात्सेनापतेः श्रुत्वा ससंशयम् । गत्वा गोपालकायैतच्चक्रवर्ती शशंस सः ॥ १६
गोपालकोऽपि सोऽवादीद्वत्सैतद्विदितं न मे । सांप्रतं परिणीतैषा जाने पालकसूनुना ॥ १७
आनीयतां कुमारस्तदुज्जयिन्याः स मन्त्रिणा । समं भरतरोहेण ज्ञास्यामो निश्चयं ततः ॥ १८
तच्छ्रुत्वा मातुलवचश्चक्रवर्ती विसृज्य सः । विद्याधरं धूमशिखं मातुलस्य कनीयसः ॥ १९
पालकस्यान्तिकं राज्ञस्तावानायितवानुभौ । उज्जयिन्याः कुमारं तं तत्सुतं तं च मन्त्रिणम् ॥ २०
प्राप्तौ कृतप्रणामौ च स तौ गोपालकान्वितः । स्नेहादराभ्यां संमान्य प्रकृतं पृच्छति स्म तम् ॥ २१
तत्र स्थिते निशाहीनचन्द्राभेऽवन्तिवर्धने । तथा सुरतमञ्जर्या पितर्यस्याश्च सेत्यके ॥ २२
सत्सु वायुपथाद्येषु मुनौ तिष्ठति कश्यपे । सोऽन्येषु च जगादैवं मन्त्री भरतरोहकः ॥ २३
आ मूलाच्छृणु देवैतदुज्जयिन्याः किलैकदा । एवं समेत्य विज्ञप्तः सर्वैः पालकभूपतिः ॥ २४
अस्यामुदकदानाख्यो भवत्यद्योत्सवः पुरि । हेतुश्चात्र न चेत्सम्यक्छ्रुतस्तच्छ्रूयतां प्रभो ॥ २५
पूर्वं चण्डमहासेनः पिता ते खड्गमुत्तमम् । प्राप्तुं च भार्यां तपसा देवीं चण्डीमतोषयत् ॥ २६
सा स्वं खड्गं ददौ तस्मै भार्यार्थे चैवमभ्यधात् । अङ्गारकाख्यमसुरं हत्वा तस्याचिरात्सुताम् ॥ २७
पुत्राङ्गारवतीं नाम भव्यां भार्यामवाप्स्यसि । इत्यादिष्टस्तया देव्या तस्थौ राजा स तन्मनाः ॥ २८
अत्रान्तरे चोज्जयिन्यां यो योऽभून्नगराधिपः । स स केनापि सत्त्वेन रात्रौ रात्रावभक्ष्यत ॥ २९
ततश्चण्डमहासेनस्तदन्वेष्टुं स्वयं निशि । स्वैरं भ्रमन्पुरि प्राप पुरुषं पारदारिकम् ॥ ३०

तस्याच्छिनत्स खड्गेन शिरो रचितमण्डनम् । छिन्नकण्ठं च तं सद्यः कोऽप्येत्यादत्त राक्षसः ॥
सोऽयं पुराधिपानत्ति नूनमत्रेत्युदीर्य सः । आदाय केशेष्वारेभे हन्तुं तं राक्षसं नृपः ॥
तावत्स राक्षसोऽवादीन्मा राजन्मां वधीर्मृषा । अन्य एव स कोऽपीह यः खादति पुराधिपान् ।
कोऽसौ ब्रूहीति राज्ञा तत्पृष्टं रक्षोऽब्रवीत्पुनः । अस्तीहाङ्गारको नाम पातालनिलयोऽसुरः ॥
स ते पुराधिपानत्ति निशीथेषु परंतप । सर्वतो राजकन्याश्च हठेन हरति प्रभो ॥
करोत्यङ्गारवत्याश्च ताः सुतायाः परिच्छदम् । तमटव्यां भ्रमन्तं त्वं दृष्ट्वा हत्वा कृती भव ॥
इत्युक्तवन्तं मुक्त्वा तं राक्षसं स स्वमन्दिरम् । राजा ययावेकदा च जगामाखेटकं ततः ॥
तत्रापश्यन्महाकायं कोपज्वलितलोचनम् । सूकरं सदरीखण्डमञ्जनाद्रिमिवोद्यतम् ॥
स वराहो भवेदीदृग्जायी सोऽङ्गारको नु किम् । इति ध्यायन्स राजा तं क्रोडं बाणैरताडयत् ॥
स तानगणयन्नेव बाणान्व्याधूय तद्रथम् । गत्वा वराहः सुमहद्विवेश विवरं भुवः ॥
राजापि वीरस्तत्रैव तस्य पश्चात्प्रविश्य सः । दिव्यं पुरं ददर्शात्र न ददर्श च सूकरम् ॥
वापीतटोपविष्टश्च तत्रापश्यत्स कन्यकाम् । कन्याशतपरीवारां रतिं रूपवतीमिव ॥
सा कन्याभ्येत्य पृष्ट्वा च तत्रागमनकारणम् । पश्यन्ती साश्रुनयना जातप्रेमा जगाद तम् ॥
कष्टं कुत्र प्रविष्टोऽसि वराहो यस्त्वयेक्षितः । स दैत्योऽङ्गारको नाम वज्रकायो महाबलः ॥
संप्रति त्यक्तवाराहरूपश्रान्तः स्वपित्यसौ । प्रबुध्याहारकाले तु कुर्याद्त्यहितं तव ॥
अहं च सुभगैतस्य नाम्नाङ्गारवती सुता । तव चानिष्टमाशङ्क्य प्राणाः कण्ठागता मम ॥
इत्युक्तः स तया राजा देव्या दत्तं वरं स्मरन् । कार्यसिद्धिर्ममास्तीति जातास्थः प्रत्युवाच ताम् ॥
यदि मय्यस्ति ते स्नेहस्तदिदं कुरु मद्वचः । गत्वा रुदिहि पार्श्वेऽस्य प्रबुद्धस्य सतः पितुः ॥
प्रमत्तं यदि कश्चित्त्वां हन्यात्तन्मम का गतिः । इति वाच्यश्च मुग्धाक्षि स पृच्छन्कारणं त्वया ॥
एवं कृते ममाप्यस्ति ध्रुवं श्रेयस्तवापि च । इत्युक्ता तेन राज्ञा सा गत्वा मदनमोहिता ॥
उपविश्य प्रबुद्धस्य पार्श्वे तस्यारुदत्पितुः । पृष्टा शशंस तस्मै च हेतुं तद्वधजं भयम् ॥
ततः स दैत्योऽवादीत्तां वज्राङ्गं को हि हन्ति माम् । यद्धि वामकरे मेऽस्ति मर्म रक्षति तद्धनुः ॥
इत्येतत्तद्वचो राजा प्रच्छन्नः स तदाशृणोत् । सोऽथ दैत्यः प्रववृते स्नात्वा पूजयितुं हरम् ॥
तत्कालं प्रकटीभूय युद्धायाह्वयते स्म सः । दैत्यं गृहीतमौनं तं राजा रोपितकार्मुकः ॥
सोऽपि दैत्यः करं वाममुत्क्षिप्य व्यापृतेतरः । संज्ञां तस्याकरोद्राज्ञः प्रतीक्षस्व मनागिति ॥
तत्क्षणं तेन राज्ञा च करे तत्र स मर्मणि । सिद्धलक्ष्येण बाणेन हतो दैत्योऽपतद्भुवि ॥
तृषार्तोऽहं हतो येन सोऽब्देऽब्दे चेन्न मां जलैः । तर्पयिष्यति तत्तस्य पञ्च नङ्क्ष्यन्ति मन्त्रिणः ॥
इत्युक्त्वैव विपन्नेऽस्मिन्दैत्ये तां तत्सुतां नृपः । आदाय सोऽङ्गारवतीमागादुज्जयिनीमिमाम् ॥
परिणीय च तां देवीं स देवो देव वः पिता । अङ्गारकस्याम्बुदानं प्रतिवर्षमकारयत् ॥
सर्वे चोदकदानाख्यं कुर्वन्तीह महोत्सवम् । प्राप्तः स चाद्य तत्पित्रा यत्कृतं ते कुरुष्व तत् ॥
एतत्प्रजावचः श्रुत्वा स तं पालकभूपतिः । पुरि प्रावर्तयत्तत्र जलदानोत्सवं तदा ॥
तस्मिन्प्रवृत्ते तद्व्यग्रे जने कोलाहलाकुले । अकस्मात्त्रोटितालानो गजोऽत्राधावदुन्मदः ॥
स वारणोऽङ्कुशं जित्वा व्याधूताधोरणो भ्रमन् । अन्तर्नगर्यां सुबहून्क्षणाद्व्यापादयज्जनान् ॥
प्रधावितेषु मेण्ठेषु महामात्रान्वितेष्वपि । पौरेषु च न तं कश्चिन्नियन्तुमशकद्गजम् ॥
क्रमाद्भ्रमति तस्मिंश्च गजे चण्डालवाटकम् । संप्राप्ते निरगात्तस्मादेका चण्डालकन्यका ॥
जितोऽनया मुखेनेन्दुर्मद्वैरीतीव तुष्टया । भासयन्ती भुवं पादलग्नया कमलश्रिया ॥
व्यावृत्तचेतसोऽन्येभ्यो भावेभ्यस्तिमितस्थितेः । निद्रेव सर्वलोकस्य दृशोर्विश्रान्तिदायिनी ॥
सा कन्या वारणेन्द्रं तं संमुखोपागतं करे । करेणाहत्य कुटिलैस्तैः कटाक्षैरताडयत् ॥
स हस्ती तत्करस्पर्शमोहितो विनताननः । तद्दृष्टिविद्धस्तां पश्यन्पदमप्यत्र नाचलत् ॥

सा स्वोत्तरीयेण कृतायां तस्य दन्तयोः । उत्पत्यारुह्य दोलायां प्राक्रीडद्वरकन्यका ।। ७०
तां च स घर्मार्तो तरुच्छायामगाद्विपः । एतद्दृष्ट्वा महच्चित्रं पौरास्तत्रैवमब्रुवन् ।। ७१
दिव्यैव काप्येषा कन्या सर्वातिशायिना । रूपेणेव प्रभावेण तिर्यञ्चोऽप्याहृता यया ।। ७२
न्तरे च तद्बुद्ध्वा कुमारोऽवन्तिवर्धनः । निर्गतः कौतुकं द्रष्टुमपश्यत्तां स कन्यकाम् ।। ७३
तस्तस्य मदनव्याधवागुरया तया । धावितश्चित्तहरिणो राजसूनोरबध्यत ।। ७४
तं वीक्ष्य तद्रूपहृतचित्ता तदग्रहीत् । गजेन्द्रदन्तदोलाया अवरुह्योत्तरीयकम् ।। ७५
मेण्ठाधिरूढेऽस्मिन्गजे साथ नृपात्मजम् । सलज्जं सानुरागं च पश्यन्ती स्वगृहानगात् ।। ७६
न्तवर्धनः सोऽपि प्रशान्ते गजसंभ्रमे । तया हृतेन चित्तेन शून्योऽयासीत्स्वमन्दिरम् ।। ७७
संतप्यमानश्च तां विना वरकन्यकाम् । अपृच्छद्विस्मृतारब्धजलदानोत्सवः सखीन् ।। ७८
थ कस्य तनया किंनामा सा च कन्यका । तच्छ्रुत्वा ते वयस्यास्तं राजपुत्रं बभाषिरे ।। ७९
होत्पलहस्ताख्यः कोऽपि चण्डालवाटके । मातङ्गस्तत्तनूजा सा नाम्ना सुरतमञ्जरी ।। ८०
दर्शनमात्रैकफलं तस्या मनोरमम् । चित्रस्थिताया इव तन्नोपभोगक्षमं वपुः ।। ८१
त्वा स वयस्येभ्यः कुमारस्तानभाषत । मन्ये न मातङ्गसुता सा दिव्या कापि निश्चितम् ।। ८२
चण्डालकन्यायाः सा तादृश्याकृतिर्भवेत् । तद्रूपा सा च भार्या मे न चेत्स्याज्जीवितेन किम् ।। ८३
ब्रुवन्स सचिवैरशक्यविनिवारणः । अत्यर्थं तद्वियोगाग्निसंतप्तोऽभून्नृपात्मजः ।। ८४
वन्तिवती देवी नृपतिः पालकस्तथा । पितरौ तस्य बुद्ध्वा तदभूतां चिरमाकुलौ ।। ८५
वाञ्छति पुत्रो नावन्त्यजां राजवंशजः । इति चोक्ते तया देव्या स राजा पालकोऽब्रवीत् ।। ८६
भावति यच्चेतस्तस्यामस्मत्सुतस्य तत् । ध्रुवं कारणमातङ्गी कापि सान्यैव कन्यका ।। ८७
रज्यदरज्यद्वा कार्याकार्ये सतां मनः । अत्र चैषा कथा देवि न श्रुता चेन्निशम्यताम् ।। ८८
सेनजितो राज्ञः सुप्रतिष्ठितसंज्ञके । पुरे कुरङ्गी नाम्नाभूदतिरूपवती सुता ।। ८९
तातूद्याननिर्याता बन्धभ्रष्टेन हस्तिना । उच्चिक्षिपे सवहना धावित्वोपरि दन्तयोः ।। ९०
ते परिवारेऽस्याः साक्रन्दे तं गजं प्रति । तत्रात्तखड्गश्चण्डालकुमारः कोऽप्यधावत ।। ९१
लूनकरं खड्गप्रहारेण महागजम् । हत्वा तां मोचयामास प्रवीरो राजकन्यकाम् ।। ९२
मिलत्परिजना सा जगाम स्वमन्दिरम् । आकृष्टहृदया तस्य वीर्यसौन्दर्यसंपदा ।। ९३
वारणत्राता भर्ता वा मृत्युरेव वा । इति संचिन्तयन्ती च तस्थौ तद्विरहातुरा ।। ९४
ण्डालकुमारोऽपि शनैर्गत्वा निजं गृहम् । तद्रूपहृतचित्तः सन्ध्यायंस्तां पर्यतप्यत ।। ९५
हमन्त्यजन्मायं कुत्र सा राजकन्यका । काकस्य राजहंस्याश्च कीदृशः क्व समागमः ।। ९६
मेतच्च शक्नोमि न वक्तुं नाप्युपेक्षितुम् । तस्मान्मरणमेवात्र संकटे शरणं मम ।। ९७
लोच्य स गत्वा च निशायां पितृकाननम् । स्नात्वा कृत्वा चितामग्निं प्रज्वाल्यैव व्यजिज्ञपत् ।। ९८
पावक विश्वात्मंस्त्वय्यात्माहुतिदानतः । जन्मान्तरेऽपि सा भूयाद्भार्या राजसुता मम ।। ९९
कवन्तं हुतभुज्यात्मानं क्षेप्तुमुद्यतम् । प्रकटीभूय साक्षात्तं प्रसन्नोऽग्निरभाषत ।। १००
कृथाः साहसं भार्या भविष्यति तवैव सा । नहि त्वं पूर्वचण्डालो यश्च त्वं वच्मि तच्छृणु ।। १०१
ते कपिलशर्माख्यो नगरेऽस्मिन्द्विजोत्तमः । तस्याग्न्यगारे प्रत्यक्षः साकारः सन्वसाम्यहम् ।। १०२
जात्वन्तिकप्राप्तां तत्सुतां रूपलोभतः । कन्यामकरवं भार्यां वरोत्सारितदूषणाम् ।। १०३
तदैव जातस्त्वं मम वीर्येण पुत्रक । तया च लज्जया रथ्यामुखे क्षिप्तोऽसि तत्क्षणम् ।। १०४
त्वं प्राप्य चण्डालैरजाक्षीरेण वर्धितः । तदेवं ब्राह्मणीगर्भसंभूतस्त्वं ममात्मजः ।। १०५
नास्त्यपवित्रत्वं मत्तेजःसंभवस्य ते । प्राप्स्यस्येव च भार्यां तां कुरङ्गीं राजकन्यकाम् ।। १०६
क्त्वान्तर्दधे वह्निः सोऽपि संप्राप्तसंमदः । मातङ्गकृत्रिमसुतो जातास्थः स्वगृहं ययौ ।। १०७
प्रसेनजिद्राजा स्वप्नेऽग्निप्रेरितो ददौ । अन्विष्टतत्त्वस्तस्मै तां सुतां पावकसूनवे ।। १०८

एवं भवन्ति प्रच्छन्ना दिव्या देवि सदा भुवि। तदेषा कापि दिव्यैव नाम्ना सुरतमञ्जरी॥
अन्यदेव हि तद्रत्नं मत्सूनोः सा च निश्चितम्। जन्मान्तरप्रियतमा चक्षूरागोपवर्णिता॥
एवमस्मासु तिष्ठत्सु राज्ञि ब्रुवति पालके। अवर्णयमहं तत्र कैवर्तीयामिमां कथाम्॥
अभून्मलयसिंहाख्यो राजा राजगृहे पुरा। तस्य मायावतीत्यासीद्रूपेणाप्रतिमा सुता॥
सा क्रीडन्ती मधूद्याने रूपयौवनशालिना। कैवर्तककुमारेण दृष्टा केनापि जातुचित्॥
स च तां सुप्रहाराख्यो दृष्ट्वा स्मरवशोऽभवत्। साध्यासाध्यविचारं हि नेक्षते भवितव्यता॥
गत्वा च स्वगृहं त्यक्त्वा पाठीनाहरणादि सः। तस्थौ तदेकचित्तः सञ्शय्यायामुज्झिताशनः॥
अनुबन्धेन पृष्टश्च स्वाभिप्रायं शशंस सः। मात्रे रक्षितिकानाम्न्यै सापि पुत्रं तमभ्यधात्॥
विषादं मुञ्च पुत्र त्वमाहारं भज निश्चितम्। एतत्ते साधयाम्येव स्वयुक्त्याहमभीप्सितम्॥
इत्युक्त्वाश्वासिते तस्मिञ्जातास्थे भुक्तभोजने। मत्स्यानादाय हृद्यान्सा ययौ राजसुतागृहम्॥
तत्र चेटीभिराख्याता सेवोद्देशात्प्रविश्य सा। दाशी रक्षितिका तस्यै तन्मत्स्यप्राभृतं ददौ॥
तेनैव च क्रमेणैतद्ददती सा दिने दिने। वचनाकाङ्क्षिणीं चक्रे तामाराध्य नृपात्मजाम्॥
ब्रूहि वाञ्छसि यन्मत्तस्तत्कुर्यामपि दुष्करम्। इति प्रीताथ सावोचत्तां दाशीं राजकन्यका॥
ततः सा धीवरी प्राह रहस्तां याचिताभया। उद्यानदृष्टां त्वां देवि विना क्लाम्यति मे सुतः॥
आशां प्रदर्श्य च मया प्राणत्यागात्स रक्ष्यते। तत्कृपा मयि चेत्तन्मे सुतं स्पर्शेन जीवय॥
एवं तयोक्ता कैवर्तयोषिता सा नृपात्मजा। सलज्जा सानुरोधा च विमृश्यैवमुवाच ताम्॥
गुप्तमानय तं तावन्नक्तं मन्मन्दिरं सुतम्। तच्छ्रुत्वैव प्रहृष्टा सा ययौ दाशी सुतान्तिकम्॥
नक्तं च सा यथाशक्ति स्वैरं रचितमण्डनम्। तमानिनाय तद्राजकन्यान्तःपुरमात्मजम्॥
तत्र तं राजपुत्री सा सुप्रहारं चिरोत्सुकम्। हस्ते गृहीत्वा शयने कृतप्रीतिर्न्यवेशयत्॥
आश्वासयामास च तं क्लान्ताङ्गं विरहाग्निना। श्रीखण्डशिशिरस्पर्शकरसंवाहनेन सा॥
सोऽपि तेन सुधासिक्त इव दाशीसुतश्चिरम्। कृतार्थमानी विश्रान्तो जह्रे सपदि निद्रया॥
सुप्ते चास्मिन्नृपसुता गत्वा सुष्वाप सान्यतः। युक्तिरञ्जितकैवर्तसुता रक्षितविप्लवा॥
ततोऽस्य तत्करस्पर्शविगमप्रतिबोधिनः। हस्तोपनतविभ्रष्टां वल्लभां तामपश्यतः॥
निधिकुम्भीमिवातीव दरिद्रस्य विषादिनः। दाशसूनोर्निराशस्य सद्यः प्राणा विनिर्ययुः॥
तद्बुद्ध्वागत्य निन्दन्ती स्वात्मानं राजकन्यका। प्रातस्तेन सहारोढुं चितां व्यवसिताभवत्॥
ततो मलयसिंहोऽस्याः पिता बुद्ध्वा नृपोऽत्र तत्। एत्यानिवार्यां दृष्ट्वैतामाचम्यैवं वचोऽब्रवीत्॥
यदि सत्यमहं भक्तो देवदेवे त्रिलोचने। तन्मे वदत कर्तव्यं लोकपाला यथोचितम्॥
इत्युक्तवन्तं राजानं दिव्या वागेवमब्रवीत्। पूर्वभार्येयमेतस्य दाशयूनो भवत्सुता॥
ग्रामे नागस्थलाख्ये हि महीधरसुतः पुरा। अभूद्बलधरो नाम ब्राह्मणो गुणवत्तरः॥
स गते पितरि स्वर्गे हृतवित्तः स्वगोत्रजैः। विरक्तो भार्यया साकं जगाम द्युनदीतटम्॥
देहं त्यक्ष्यन्निराहारः स्थितस्तत्र विलोक्य सः। दाशान्भक्षयतो मत्स्यान्मनसा श्रद्दधे क्षुधा॥
ततोऽत्र पञ्चतां यातं तत्संकल्पकलङ्कितम्। स्वभार्या शुद्धसंकल्पा तपःस्थैव तमन्वगात्॥
स एष जातः संकल्पदोषाद्दाशकुले द्विजः। भार्यास्य सा च सुतपा जातैषा ते सुता नृप॥
तदेतं पूर्वभर्तारं राजन्नेषा त्वदात्मजा। जीवयत्वायुषोऽर्धेन गतायुषमनिन्दिता॥
एतत्तपःप्रभावाद्धि तत्तीर्थप्रमयात्तथा। पूतोऽयं तव जामाता भूत्वा राजा भविष्यति॥
इत्युक्तो दिव्यया वाचा सुप्रहाराय तां सुताम्। दत्तायुरर्धां च ददौ तस्मै लब्धासवे नृपः॥
तद्दत्तैर्भूमिहस्त्यश्वरत्नैर्भूत्वा स भूपतिः। सुप्रहारः कृती तस्थौ प्राप्य भार्यां तदात्मजाम्॥
एवं प्राग्जन्मसंबन्धः प्रायः प्रीत्यै शरीरिणाम्। किं चैवं चौरसंबद्धाप्यत्रेयं श्रूयतां कथा॥
अयोध्यायामभूद्राजा वीरबाहुरिति श्रुतः। यो ररक्ष स्वसंताननिर्विशेषं सदा प्रजाः॥

ात्तं च राजानमेत्य पौरा व्यजिज्ञपन्। चौरा मुष्णन्ति नगरीमिमां प्रतिनिशं प्रभो॥ १४८
ःरपि चास्माभिः शक्या लक्षयितुं न ते। तच्छ्रुत्वा स्थापयामास सोऽत्र चारान्नृपो निशि॥ १४९
प्रापुर्न यच्चौरान्न चाशाम्यदुपद्रवः। तेन राजा स्वयं रात्रौ तदन्वेष्टुं विनिर्ययौ॥ १५०
ो खड्गहस्तश्च परिभ्राम्यन्स सर्वतः। संचरन्तं ददर्शैकं प्राकारोपरि पूरुषम्॥ १५१
पुपदन्यासं काकचञ्चललोचनम्। मृगारिमिव पश्यन्तं मुहुर्वलितकंधरम्॥ १५२
ासिविनिर्यातैर्लक्षितं खड्गरश्मिभिः। तारारत्नापहारार्थमिव सेरण(?)रज्जुभिः॥ १५३
ाचिन्तयद्राजा चौरोऽयं वेद्मि निश्चितम्। ध्रुवमेकचरेणेयं मुष्यतेऽनेन मे पुरी॥ १५४
ाच्य नृपश्चौरं चतुरस्तमुपागमत्। चौरोऽपि स तमप्राक्षीत्सशङ्कं को भवानिति॥ १५५
ाजाब्रवीदेतं बहुव्यसनदुर्भरः। अहं साहसिकश्चौरस्त्वं च मे ब्रूहि को भवान्॥ १५६
प्युवाचैकचरस्तस्करोऽहं महाधनः। तदेहि मद्गृहं यावद्धनेच्छां पूरयामि ते॥ १५७
ा दस्युना तेन समं राजा तथेति सः। ययौ वनान्तस्तद्वेश्म क्ष्मातले खातनिर्मितम्॥ १५८
ातं वरस्त्रीभिर्भूरिरत्नप्रकाशितम्। सदानवोपभोगं च भुजंगनगरोपमम्॥ १५९
र्भगृहं तस्मिन्प्रविष्टे तस्करे नृपम्। बाह्यस्थानस्थितं दासी तमेका सकृपाभ्यधात्॥ १६०
प्रविष्टो निर्याहि शीघ्रं विश्वस्तघातकः। हन्यादेकचरो हि त्वां प्रतिभेदभयादयम्॥ १६१
ा निर्गतो राजा द्रुतं गत्वा स्वमन्दिरम्। सेनापतिं समाहूय ससैन्यः पुनराययौ॥ १६२
रुद्ध्वा तद्वेश्म शूरानन्तः प्रवेश्य च। हृतार्थसंचयं चौरमवष्टभ्यानिनाय तम्॥ १६३
निशि तेनाथ स राज्ञादिष्टनिग्रहः। चौरो विपणिमध्येन वध्यभूमिमनीयत॥ १६४
नं च तं तत्र दृष्ट्वा दृष्ट्यनुरागिणी। वणिक्सुतैका पितरं तत्क्षणं स्वमभाषत॥ १६५
वध्यभुवं तात नीयते दत्तडिण्डिमः। असौ चेत्स्यान्न मे भर्ता तन्मृतां विद्धि मामिति॥ १६६
थ दुर्निवारां तां गत्वा भूपं स तत्पिता। द्रव्यकोट्यापि चौरस्य तस्य मुक्तिमयाचत॥ १६७
पे तस्मै वणिजे चुक्रोध न तु तस्करम्। तं मुमोचाविलम्ब्यैव शूलायां तं न्यवेशयत्॥ १६८
ा वामदत्ताख्या वणिक्कन्या कलेवरम्। चौरस्यादाय तस्याग्निं प्रविवेशानुरागतः॥ १६९
ग्जन्मसंबन्धपरायत्तेषु जन्तुषु। भावि को वस्त्वतिक्रामेत्को वा किं कस्य वारयेत्॥ १७०
ुत्रस्य ते कापि पूर्वसंबन्धनिर्मिता। अवन्तिवर्धनस्यैषा राजन्सुरतमञ्जरी॥ १७१
ा कथमेतस्य राजसूनोः सुजन्मनः। मातङ्ग्यामिह तस्यां स्यादभिष्वङ्गोऽयमीदृशः॥ १७२
त्पलहस्तः स मातङ्गस्तत्पिता प्रभो। तां सुतां याच्यतां तावत्पश्यामः किं ब्रवीत्यसौ॥ १७३
ो मया राजा पालकः प्राहिणोत्तदा। दूतानुत्पलहस्ताय तां कन्यां तत्र याचितुम्॥ १७४
तैर्याचितो दूतैर्मातङ्गो निजगाद तान्। एतन्मेऽभिमतं किं तु यो भोजयति मद्गृहे॥ १७५
शसहस्राणि विप्राणां पुरवासिनाम्। तस्मै मयासौ दातव्या सुता सुरतमञ्जरी॥ १७६
त्वा वचस्तस्य सप्रतिज्ञं तथैव ते। आगत्य दूता राज्ञे तत्पालकाय न्यवेदयन्॥ १७७
कारणं मत्वा संघाट्य ब्राह्मणान्पुरि। उज्जयिन्यां समाख्यातवृत्तान्तः क्षितिपोऽब्रवीत्॥ १७८
त्रमुत्पलहस्तस्य मातङ्गस्येह वेश्मनि। अष्टादशसहस्राणि यूयं नेच्छेयमन्यथा॥ १७९
ा भूभृता भीताश्चण्डालान्नाच्च ते द्विजाः। कर्तव्यमूढाः संश्रित्य महाकालं व्यधुस्तपः॥ १८०
पलहस्तस्य गृहे भुङ्ग्ध्वमशङ्किताः। विद्याधरो ह्ययं नायं चण्डालः सकुटुम्बकः॥ १८१
ाप्ने समादिष्टा विप्रास्ते तेन शंभुना। उत्थाय गत्वा राज्ञे तदाख्याय पुनरब्रुवन्॥ १८२
ण्ठवाटादन्यत्र शुद्धमन्नं पचत्वसौ। राजन्नुत्पलहस्तोऽत्र ततस्तद्भुञ्ज्महे वयम्॥ १८३
ोत्पलहस्तस्य राजा सोऽन्यं गृहं व्यधात्। प्रीतश्च कारुभिः शुद्धैस्तत्रास्यान्नमपाचयत्॥ १८४
चोत्पलहस्तेऽस्मिञ्शुद्धवस्त्रे पुरः स्थिते। तत्राष्टादशभिर्भुक्तं सहस्रैरग्रजन्मनाम्॥ १८५
तेषु चोपेत्य राजानं राष्ट्रसंनिधौ। प्रणम्योत्पलहस्तोऽसौ पालकं तमभाषत॥ १८६

अभवद्गौरिमुण्डाख्यो धुर्यो विद्याधरेश्वरः । मतङ्गदेवनामाहं तस्याभूवं समाश्रितः ॥
अस्यां सुरतमञ्जर्यां सुतायां मम भूपते । उत्पन्नायां स मां गुप्तं गौरिमुण्डोऽब्रवीदिदम् ॥
नरवाहनदत्ताख्यो योऽयं वत्सेश्वरात्मजः । भविष्यच्चक्रवर्तीह सोऽस्माकं कथ्यते सुरैः ॥
तद्यावच्चक्रवर्तित्वं न प्राप्तः कण्टकः स नः । तावत्स्वमायया गत्वा तं निपातय मा चिरम् ॥
इत्यहं गौरिमुण्डेन पापेन प्रेरितस्तदा । तदर्थं नभसा गच्छन्पुरोऽपश्यं महेश्वरम् ॥
स मां सद्योऽशपत्क्रुद्धः कृत्वा हुंकारमीश्वरः । महात्मनि जने पाप कथं पापं चिकीर्षसि ॥
तदनेनैव देहेन भार्यादुहितृसंयुतः । गच्छोज्जयिन्यां चण्डालमध्ये निपत दुर्मते ॥
अष्टादशसहस्राणि विप्राणां पुरवासिनाम् । तनयादानशुल्केन यदा ते भोजयिष्यति ॥
गृहेषु कश्चिच्छापस्य तदान्तस्ते भविष्यति । दातव्या च त्वया तस्मै सुता तच्छुल्कदायिने ॥
इत्युक्त्वान्तर्हिते शंभावेषोऽस्मि पतितस्तदा । अन्त्येषूत्पलहस्ताख्यो न च तैः संकरो मम ॥
अद्य शान्तः स शापो मे त्वत्पुत्रस्य प्रसादतः । तन्मयेयं सुता दत्ता तस्मै सुरतमञ्जरी ॥
इदानीं चैष गच्छामि निजं वैद्याधरं पदम् । नरवाहनदत्तस्य सेवार्थं चक्रवर्तिनः ॥
इत्युक्त्वैवार्पितसुतः खमुत्पत्याङ्गनायुतः । आगान्मतङ्गदेवोऽसौ देव त्वच्चरणान्तिकम् ॥
राजापि पालको ज्ञाततत्त्वो हृष्टस्ततो व्यधात् । तस्याः सुरतमञ्जर्या विवाहं स्वसुतस्य च ॥
तत्पुत्रोऽपि च तां भार्यां प्राप्य विद्याधरीमभूत् । मनोरथाधिकावाप्तिकृतार्थोऽवन्तिवर्धनः ॥
एकदा च कुमारोऽसौ सुप्तो हर्म्ये समं तया । निशाक्षये प्रबुद्धस्तामकस्मान्नैक्षत प्रियाम् ॥
विचित्य चैतामप्राप्य तथा क्रन्दन्नतप्यत । यथोपेत्य पिताप्यस्य राजाभूद्भृशविह्वलः ॥
रक्षितेयं पुरी नास्यां निशायां प्रविशेत्परः । ध्रुवं हृता सा केनापि पापेनाकाशचारिणा ॥
इत्याद्यस्मासु जल्पत्सु मिलितेष्वत्र तत्क्षणम् । विद्याधरो धूमशिखो यौष्माकोऽवातरद्दिवः ॥
तेनेह सोऽयमानीतः कुमारोऽवन्तिवर्धनः । अहं चाख्याय वृत्तान्तं मार्गितः पालकान्नृपात् ॥
सैषा चात्र स्थिता पित्रा समं सुरतमञ्जरी । वृत्तान्त ईदृशश्चास्या देवो जानात्यतः परम् ॥

इत्थं पालकमन्त्रिणि कथयित्वा भरतरोहके विरते ।
नरवाहनदत्ताग्रे मतङ्गदेवं सभासदोऽपृच्छन् ॥
कस्मै भवता दत्ता ब्रूहि त्वं सुरतमञ्जरीयमिति ।
सोऽप्याह स मयैषा दत्तैवावन्तिवर्धनायेति ॥
त्वं ब्रूहि हरसि कस्मादेतामिति चेत्यकोऽथ तैः पृष्टः ।
आदौ मह्यं मात्रा वाचा दत्तेयमित्यवादीत्सः ॥
सति जनके का माता तद्दानेऽप्यस्ति कोऽत्र तव साक्षी ।
तदियं परदारास्ते पापेति तमूचुरित्यकं सभ्याः ॥
इति तैश्च निरुत्तरीकृतस्य प्रसभं निग्रहमित्यकस्य तस्य ।
नरवाहनदत्तचक्रवर्ती कुपितो दुर्विनयात्समादिदेश ॥
अस्यैकमेतमपराधमिह क्षमस्व स्यालो हि ते मदनवेगसुतः किलासौ ।
इत्यर्थितो मुनिवरैरथ कश्यपाद्यै राजा कथंचिदपभर्त्स्य स तं मुमोच ॥
तमपि च मातुलपुत्रं निजपत्न्यावन्तिवर्धनं युक्तम् ।
वायुपथहस्तनिहितं सचिवयुतं प्राहिणोत्स्वपुरीम् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे सुरतमञ्जरीलम्बके द्वितीयस्तरङ्गः ।

---

तृतीयस्तरङ्गः ।

ग्रासितगिरौ साध्वीं सुरतमञ्जरीम् । इत्यकापहृतां तस्मात्स्वालादप्यपभर्तिसतात् ।। १
ग्रमर्प्य भर्त्रे च मुनिमध्ये व्यवस्थितम् । नरवाहनदत्तं तं कश्यपर्षिरभाषत ।। २
भविता राजंश्चक्रवर्ती समस्तव । यस्य धर्मासनस्थस्य न रागादिवशा मतिः ।। ३
तेऽपि च पश्यन्ति ये त्वां सुकृतिनं सदा । ईदृशेऽपि हि साम्राज्ये नावद्यं किंचिदस्ति ते ।। ४
षभकाद्या हि पुरान्ये चक्रवर्तिनः । नानाविधैश्च दोषैस्ते ग्रस्ता नष्टाः श्रियश्च्युताः ।। ५
सर्वदमनस्तृतीयो बन्धुजीवकः । अतिदर्पेण ते सर्वे शक्रान्निग्रहमागताः ।। ६
गाहनोऽप्येत्य पृष्टो विद्याधरेश्वरः । चक्रवर्तिपदप्राप्तिकारणं नारदर्षिणा ।। ७
यौ कल्पवृक्षस्य दानं निजतनोस्तथा । तेनाभ्रश्यत्पदात्स्वस्मात्सुकृतोदीरणेन सः ।। ८
तराख्यो यश्चासीच्चक्रवर्तीह सोऽपि च । इन्दीवराक्षे तनये हते चेदिमहीभृता ।। ९
तेलकाख्येन तद्दारध्वंसकारिणि । कुपुत्रशोकमोहेन धैर्यहीनो व्यपद्यत ।। १०
रावलोकस्तु भूत्वा राजेन्द्र मानुषः । विद्याधराणां संप्राप्य सुकृतैश्चक्रवर्तिताम् ।। ११
ादितदोषः संश्चिरं साम्राज्यसंपदम् । भुक्त्वावसाने वैराग्यात्स्वयं त्यक्त्वा वनं गतः ।। १२
द्याधराः प्रायः स्वपदप्राप्तिमोहिताः । नोचिते पथि तिष्ठन्ति रागाद्यन्धाः पतन्ति च ।। १३
याय्यात्पथः शश्वद्रक्षेः स्खलितमात्मनः । विद्याधरप्रजा चेयं रक्ष्या धर्मव्यतिक्रमात् ।। १४
नैवमुक्तस्तु सम्राट् श्रद्धितत्तद्वचः । नरवाहनदत्तस्तमिदं पप्रच्छ सादरम् ।। १५
रावलोकेन मानुषेण सता पुरा । प्राप्तं विद्याधरैश्वर्यं भगवन्वर्णयस्व नः ।। १६
। कश्यपोऽवादीच्छ्रूयतां कथयामि वः । चन्द्रावलोक इत्यासीन्नाम्ना शिबिषु भूपतिः ।। १७
स्य मूर्धन्या चन्द्रलेखेत्यभूत्प्रिया । दुग्धाब्धिनिर्मलकुला शुद्धा गङ्गासमस्थितिः ।। १८
वारणस्तस्य परसेनाविमर्दनः । महान्कुवलयापीड इति ख्यातो महीतले ।। १९
वेण भूपालो बलिनापि न शत्रुणा । स पौरस्वामिके राज्ये पर्यभूयत केनचित् ।। २०
नगमे चास्य पुत्र एको महीपतेः । उत्पेदे चन्द्रलेखायां देव्यां कल्याणलक्षणः ।। २१
ोकनामा च क्रमाद्वृद्धिं जगाम सः । दानधर्मविवेकाद्यैः सहजातैर्गुणैः सह ।। २२
त च निःशेषं वाङ्मयार्थं महामतिः । नाशिक्षत न शब्दार्थमेकं कामप्रदोऽर्थिषु ।। २३
त्रापि वयसा स्थविरः स विचेष्टितैः । तेजसा सूर्यसंकाशोऽप्यत्यर्थं सौम्यदर्शनः ।। २४
न्द्र इवाशेषकलासंदोहसुन्दरः । कंदर्प इव विश्वस्य लोकस्यौत्सुक्यदायकः ।। २५
पितृशुश्रूषाजितजीमूतवाहनः । अभिव्यक्तमहाचक्रवर्तिलक्षणलाञ्छितः ।। २६
य कृते सूनोः कन्या मद्रेश्वरात्मजा । चन्द्रावलोकेनाजह्रे माद्रीनाम महीभृता ।। २७
ई पिता तं च तद्गुणोत्कर्षतोषितः । यौवराज्ये महाराजस्तदैवाभिषिषेच सः ।। २८
क्तश्च पित्रात्र युवराजस्तदाज्ञया । तारावलोकः सोऽन्नादिदानसत्राण्यकारयत् ।। २९
थार्यं च पात्राणि तानि स्वयमवेक्षितुम् । सदा कुवलयापीडमारुह्य गजमभ्रमीत् ।। ३०
र्थितवांस्तस्मै तद्ददावपि जीवितम् । तेन तस्य यशो दिक्षु युवराजस्य पप्रथे ।। ३१
स्य सुतौ माद्र्यां जायेते स्म यमावुभौ । तौ च नाम्ना करोति स्म स पिता रामलक्ष्मणौ ।। ३२
ं च तौ पित्रोः स्नेहानन्दाविवार्भकौ । स्वपितामहयोश्चैव प्राणेभ्योऽप्यधिकप्रियौ ।। ३३
तगुणावेतौ तत्कोदण्डाविवानतौ । तारावलोको माद्री च न पश्यन्तावतृप्यताम् ।। ३४
वलयापीडं गजं दातृयशः सुतौ । दृष्ट्वा तारावलोकस्य विप्रान्स्वान्रिपवोऽब्रुवन् ।। ३५
ुवलयापीडं गजं तारावलोकतः । याचध्वं यदि तावत्तं युष्मभ्यं स प्रदास्यति ।। ३६
मस्ततो राज्यं तद्विहीनस्य तस्य तत् । न दास्यत्यथ दातृत्वयशस्तस्य विनङ्क्ष्यति ।। ३७
तैस्तथेत्युक्त्वा गत्वा ते ब्राह्मणास्ततः । राज्ञस्तारावलोकात्तं दानवीराद्ययाचिरे ।। ३८

को नामार्थो गजेन्द्रेण याचितेन द्विजन्मनाम् । तज्जाने निश्चितमिमे प्रयुक्ता मम केनचित् ॥
तद्यदस्तु मया तावद्दातव्योऽयं गजोत्तमः । अप्राप्तकामो ह्यर्थी मे कथं यास्यति जीवतः ॥
इति संचिन्त्य तेभ्यस्तं द्विजेभ्यो वारणोत्तमम् । तारावलोकः स ददौ निष्कम्पेनैव चेतसा ॥
ततस्तैर्नीयमानं तं दृष्ट्वा करिवरं द्विजैः । पौराश्चन्द्रावलोकस्य क्रुद्धा राज्ञोऽन्तिकं ययुः ॥
ऊचुश्च ते सुतेनेदं राज्यं त्यक्तं तवाधुना । मुनिधर्मो गृहीतश्च सर्वसंन्यासकारिणा ॥
यदेतेन श्रियो मूलं गन्धभग्नान्यवारणः । दत्तः कुवलयापीडः पश्यार्थिभ्यो महागजः ॥
तदेतं तपसे पुत्रं वनं प्रस्थापयाथवा । गजं प्रत्याहरान्यं वा राजानं कुर्महे वयम् ॥
इति चन्द्रावलोकस्तैः पौरैरुक्तस्तथैव तत् । स पुत्रं श्रावयामास प्रतीहारमुखेन तम् ॥
सोऽपि तारावलोकस्तच्छ्रुत्वा तत्तनयोऽब्रवीत् । हस्ती तावन्मया दत्तो नास्त्यदेयं च मेऽर्थिषु ॥
ईदृशेन तु राज्येन पौरायत्तेन किं मम । किं चान्यानुपयोगिन्या लक्ष्म्या विद्युद्विलोलया ॥
तन्मे श्रेयो वने वासः सर्वभोज्यफलश्रियाम् । मध्ये तरूणां न पुनर्नृपशूनामिहेदृशाम् ॥
इत्युक्त्वा तुल्यसंकल्पधीरया भार्ययान्वितः । पित्रोः पादावनुध्याय दत्त्वार्थिभ्योऽर्थसंचयम् ॥
गृहीतवल्कलः साकं स पुत्राभ्यां निजात्पुरात् । तारावलोको निरगाद्रुदतः सान्त्वयन्द्विजान् ॥
तं तथाप्रस्थितं दृष्ट्वा पशूनां पक्षिणामपि । करुणं क्रन्दतामश्रुधाराभिर्भूरसिच्यत ॥
सून्वोर्वाहनमात्रैकरथशेषः पथि व्रजन् । सोऽथ तारावलोकोऽन्यै रथाश्वान्याचितो द्विजैः ॥
स तानथ ददौ तेभ्यश्चकर्ष च रथं स्वयम् । सभार्यः सुकुमारौ तौ नेतुं बालौ तपोवनम् ॥
ततोऽटवीमध्यगतं परिश्रान्तमुपेत्य तम् । निरश्वं रथमप्यत्र ययाचे ब्राह्मणोऽपरः ॥
तस्मै तमपि निःशङ्को दत्त्वा पद्भ्यां सपुत्रकः । सभार्यश्च कथंचित्स धीरः प्राप तपोवनम् ॥
तत्र माद्र्या कृतोदारपरिचर्यः स्वभार्यया । तरुमूले कृतावासस्तस्थौ मृगपरिच्छदः ॥
वाताहतिचलत्पुष्पमञ्जरीचारुचामरैः । पृथुच्छायातरुच्छत्रैः पत्रशय्याशिलासनैः ॥
गीतैर्भृङ्गाङ्गनानां च नानाफलरसासवैः । वीरं वैराग्यराज्यस्थं वनान्तास्तं सिषेविरे ॥
एकदा चात्र तत्पत्न्यां माद्र्यां तस्य कृते स्वयम् । आहर्तुं फलपुष्पादि गतायामाश्रमाद्बहिः ॥
उपेत्य ब्राह्मणो वृद्धः कश्चित्तमुटजस्थितम् । तारावलोकं तनयौ ययाचे रामलक्ष्मणौ ॥
वरं पुत्राविमौ नीतौ पारयिष्ये शिशू अपि । न पुनर्भग्नकामोऽयं प्रेषितोऽर्थी कथंचन ॥
विधिर्वीक्षितुकामो हि धैर्यध्वंसं शठो मम । इति संचिन्त्य स ददौ तस्मै विप्राय तौ सुतौ ॥
नीयमानौ च तौ तेन विप्रेण ययतुर्न यत् । तत्स विप्रो लताभिस्तौ बद्धहस्तावताडयत् ॥
निनाय चैतौ क्रन्दतौ नृशंसो जननीं मुहुः । विवृत्य पितरं तं च पश्यन्तौ साश्रुलोचनौ ॥
वत्स तारावलोकोऽत्र पश्यन्नपि न चुक्षुभे । चुक्षुभे त्वस्य धैर्येण भूतग्रामश्चराचरः ॥
अथाहृत्य शनैः पुष्पफलमूलादि सा सती । वनान्तादाययौ माद्री श्रान्ता तं पत्युराश्रमम् ॥
ददर्शाधोमुखं तं च भर्तारं न तु तौ सुतौ । विप्रकीर्णस्थितक्रीडामृण्मयाश्वरथद्विपौ ॥
अनिष्टाशङ्किहृदया हा हतास्मि क्व तौ मम । पुत्रकाविति पप्रच्छ संभ्रान्ता तं पतिं च सा ॥
सोऽप्यवादीच्छनैरेतामनघे तनयौ मया । याचमानाय तौ दत्तौ दरिद्राय द्विजन्मने ॥
तच्छ्रुत्वा त्यक्तमोहा सा साध्वी तमवदत्पतिम् । तर्हि युक्तं कृतं यातु कथमर्थी पराङ्मुखः ॥
एवं तयोक्ते दंपत्योस्तुल्यसत्त्वतया तया । तयोश्चकम्पे भुवनं चचालेन्द्रस्य चासनम् ॥
अथेन्द्रः प्रणिधानेन माद्रीतारावलोकयोः । दानसत्त्वप्रभावेण कम्पितं जगदैक्षत ॥
ततः स ब्राह्मणो भूत्वा गत्वा जिज्ञासुराश्रमम् । तारावलोकं माद्रीं तामेकपत्नीमयाचत ॥
तारावलोकोऽप्येतस्मै दातुं हस्तोदकेन ताम् । निर्विकल्पः प्रववृते वनान्तसहचारिणीम् ॥
किं साधयसि राजर्षे दत्त्वा दारानपीदृशान् । इत्युक्तो द्विजरूपेण तेन शक्रेण सोऽब्रवीत् ॥
न मे साध्यं किमप्यस्ति वाञ्छा त्वेतावती मम । प्राणानपि सदा दद्यां ब्राह्मणेभ्य इति द्विज ॥

तच्छ्रुत्वा निजरूपस्थो भूत्वा शक्रो जगाद तम् । तुष्टोऽस्मि कृतजिज्ञासस्तव तेन वदामि ते ॥ ७८
न ते देया पुनः पत्नी चक्रवर्ती च भाव्यसि । विद्याधराणामचिरादित्युक्त्वान्तर्दधे च सः ॥ ७९
अत्रान्तरे स वृद्धोऽपि ब्राह्मणो दक्षिणार्जितौ । तारावलोकतनयौ गृहीत्वा मार्गमोहतः ॥ ८०
भ्रमंश्चन्द्रावलोकस्य दैवात्तस्य पुरं प्रभोः । प्राप्यापणे तौ विक्रेतुं राजपुत्रौ प्रचक्रमे ॥ ८१
तत्र तौ प्रत्यभिज्ञाय गत्वैवावेद्य भूपतेः । पौराश्चन्द्रावलोकस्य सद्विजौ निन्युरन्तिकम् ॥ ८२
स तौ दृष्ट्वा निजौ पौत्रौ साश्रुः पृष्ट्वा च तं द्विजम् । अभूत्तदुक्तवृत्तान्तः सुखदुःखमयश्चिरम् ॥ ८३
ततः स निजपुत्रस्य सत्त्वोत्कर्षं विभाव्य तम् । त्यक्तराज्यस्पृहः पौरैरर्थ्यमानोऽपि तौ द्विजात् ॥ ८४
क्रीत्वा तस्माद्धनैः पौत्रौ गृहीत्वा सपरिग्रहः । सूनोस्तारावलोकस्य तस्याश्रमपदं ययौ ॥ ८५
तत्रापश्यच्च तं बद्धजटं वल्कलधारिणम् । आशागतैर्महावृक्षमिव भुक्तश्रियं द्विजैः ॥ ८६
दूरादाधाव्य पतितं पुत्रं तं पादयोश्च सः । यदारोपयदुत्सङ्गमभिषिच्याश्रुवारिणा ॥ ८७
विद्याधराधिराज्यार्थमभिषेकपुरःसरे । तस्य सिंहासनारोहे तदेवारम्भतां ययौ ॥ ८८
अथैतत्तनयौ राजा तौ ददौ रामलक्ष्मणौ । सोऽस्मै तारावलोकाय क्रीतावेताविति ब्रुवन् ॥ ८९
कुर्वन्त्यन्योन्यवृत्तान्तकथा यावच्च तत्र ते । तावद्गजश्चतुर्दन्तो लक्ष्मीश्चावातरद्दिवः ॥ ९०
अवतीर्णेषु चान्येषु विद्याधरपतिष्वपि । लक्ष्मीस्तारावलोकं सा पद्महस्ता जगाद तम् ॥ ९१
आरुह्य वारणेऽमुष्मिन्नेहि विद्याधरास्पदम् । तत्साम्राज्यश्रियं भुङ्क्ष्व जितां दानप्रभावतः ॥ ९२
इत्युक्तवत्या लक्ष्म्या स साकं भार्यासुतान्वितः । पितुः प्रणम्य चरणौ पश्यत्स्वाश्रमवासिषु ॥ ९३
आरुह्य तं गजं दिव्यं वृतो विद्याधरेश्वरैः । तारावलोको नभसा ययौ वैद्याधरं पदम् ॥ ९४
तत्रोपभुक्तसाम्राज्यश्चिरं विद्याभिराश्रितः । कालेनोत्पन्नवैराग्यस्तपोवनमशिश्रियत् ॥ ९५
एवं तारावलोकेन मानुषेण सता पुरा । निर्मलैः सुकृतैः प्रापि सर्वविद्याधरेन्द्रता ॥ ९६
अन्ये तु तामवाप्यापि विभ्रष्टाः स्खलितैस्ततः । तद्रक्षेरपचारं त्वं स्वतो वा परतोऽपि वा ॥ ९७

इति नरवाहनदत्तः कश्यपमुनिना कथां समाख्याय ।
अनुशिष्टः स तथेति प्रतिपेदे चक्रवर्ती तत् ॥ ९८

विद्याधराः शृणुत यः कुरुते ममात्र धर्मव्यतिक्रममितः प्रभृति प्रजासु ।
वध्यः स मे नियतमित्यभितो हराद्रिमुद्घोषणां च स ततो भ्रमयांचकार ॥ ९९

अथावनतमस्तकैर्विधृतशासनः खेचरै-
रुवास विलसद्यशाः सुरतमञ्जरीमोचनात् ।
स्वमातुलसमीपगोऽसितगिरौ नयन्प्रावृषं
स तत्र सपरिच्छदो मुनिवरस्य तस्याश्रमे ॥ १००

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे सुरतमञ्जरीलम्बके तृतीयस्तरङ्गः ।

समाप्तश्चायं सुरतमञ्जरीलम्बकः षोडशः ।

॥ श्रीः ॥

# महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## पद्मावती नाम सप्तदशो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

प्रथमस्तरङ्गः ।

देहार्धधृतकान्तो पि तपस्वी निर्गुणोऽपि यः । जगत्स्तुत्यो नमस्तस्मै चित्ररूपाय शंभवे ॥
चलत्कर्णाग्रविक्षिप्तगण्डोड्डीनालिमण्डलम् । धुन्वानं विघ्नसंघातमिव विघ्नान्तकं नुमः ॥
एवं तत्रासितगिरौ कश्यपस्याश्रमे मुनेः । गोपालकस्य निकटे मातुलस्य तपस्यतः ॥
वर्षाकालातिवाहाय निवसन्सचिवैर्युतः । सर्वविद्याधरेन्द्रैकचक्रवर्तिपदे स्थितः ॥
नरवाहनदत्तोऽसौ तैस्तैर्विद्याधराधिपैः । अन्वासितः स्वभार्याभिः पञ्चविंशतिभिर्वृतः ॥
ब्रुवन्कथाः स मुनिभिः सपत्नीकैरपृच्छयत । यदा मानसवेगेन देवी मदनमञ्चुका ॥
माययापहृतैषाभूत्तदा विरहनिःसहम् । व्यनोदयत्कथं कस्त्वामिति नः कथ्यतां त्वया ॥
इति तैर्मुनिभिः पृष्टस्तद्भार्याभिश्च तत्र सः । नरवाहनदत्तोऽथ वक्तुमेवं प्रचक्रमे ॥
तदा हृतायां मे तस्यां देव्यां पापेन वैरिणा । मयानुभूतं दुःखं यत्तत्कियत्कथ्यतेऽधुना ॥
न तत्पुरं न चोद्यानं गृहं वा यत्र नाभ्रमम् । चिन्वन्नहमिमामार्तः सर्वे च सचिवा मम ॥
उपविष्टं च सोन्मादमिवोद्याने तरोस्तले । आह स्म लब्धावसरः सान्त्वयन्गोमुखोऽथ माम् ॥
मा गा विक्लवतां देवीमचिरात्प्राप्स्यसि प्रभो । देवा हि द्युचरैश्वर्यमादिशंस्तेऽनया सह ॥
तदवश्यं तथा भावि नहि तद्वचनं मृषा । धीराश्च सोढविरहाः प्राप्नुवन्तीष्टसंगमम् ॥
रामभद्रो नलो राजा तवैव च पितामहाः । विषह्य विरहं किं न प्रेयसीभिः समागताः ॥
स मुक्ताफलकेतुश्च चक्रवर्ती द्युचारिणाम् । पद्मावत्या न किं प्राप वियुक्तः संगमं पुनः ॥
तथा च शृणु देवाहं तत्कथां कथयामि ते । इत्युक्त्वा गोमुखो मह्यमिमामकथयत्कथाम् ॥
अस्तीह प्रथिता पृथ्व्यां नाम्ना वाराणसी पुरी । द्युसरिद्भूषिता मूर्तिः शांभवीवापवर्गदा ॥
सुरसद्मध्वजपटैर्मरुता नमितोद्धतैः । इहैत मोक्षं यातेति ब्रुवाणेवानिशं जनान् ॥
सितप्रासादशिखरा चन्द्रचूडनिवासभूः । भाति शैवगणाकीर्णा कैलासाद्रिस्थलीव या ॥
तस्यामभूद्ब्रह्मदत्तो नाम राजा पुरा पुरि । शिवैकभक्तो ब्रह्मण्यः शूरो दाता क्षमापरः ॥
न दुर्गेष्वपि चस्खाल न ममज्जाम्बुधिष्वपि । भुवि भ्रमन्ती यस्याज्ञा न द्वीपान्यपि नातरत् ॥
आह्लाददायिनी तस्य चकोरस्येव वल्लभा । आसीत्सोमप्रभा देवी नेत्रपेयास्य साप्यभूत् ॥
शिवभूत्यभिधानश्च मन्त्री तस्याभवद्द्विजः । बृहस्पतिसमो बुद्ध्या सर्वशास्त्रार्थपारगः ॥
स कदाचिन्नृपश्चन्द्रप्रासादे शयने स्थितः । ददर्श हंसयुगलं गगनेनागतं निशि ॥

दीप्तजाम्बूनदमयं राजहंसावलीवृतम् । अभ्रगङ्गाजलोत्क्षिप्तमिव हेमाम्बुजद्वयम् ॥ २५
गते दृष्टिपथात्तस्मिन्नत्याश्चर्ये स भूपतिः । पर्यतप्यत सोत्कण्ठः पुनस्तद्दर्शनं विना ॥ २६
अनिद्र एव नीत्वा तां निशां प्रातः स मन्त्रिणम् । यथा दृष्टं तथाख्याय शिवभूतिमुवाच तम् ॥ २७
तद्यथेष्टं न तौ हेमहंसौ पश्याम्यहं यदि । तत्किमेतेन राज्येन जीवितेनापि वा मम ॥ २८
इति राज्ञोदिते मन्त्री शिवभूतिर्जगाद तम् । अस्त्युपायोऽत्र कश्चित्तं शृणु देव वदामि ते ॥ २९
विचित्रकर्मयोगेन संसारेऽस्मिन्प्रजापतेः । विचित्रो भूतसर्गोऽयमपरिच्छेद्य एव यः ॥ ३०
तत्र दुःखमये मोहादुद्भवत्सुखबुद्धयः । निवासाहारपानादिरसाद्रज्यन्ति जन्तवः ॥ ३१
तेषां चाहारपानादि निवासं च पृथग्विधम् । स्वस्वजात्यनुरूपेण प्रीतिदं विदधे विधिः ॥ ३२
तद्देव कारय महद्धंसानामाश्रयं सरः । कमलोत्पलसंछन्नं निर्बाधं रक्षिरक्षितम् ॥ ३३
पक्षिप्रियं च तत्रान्नं प्रक्षेपय सदा तटे । यावदायान्ति तत्राशु नानादिग्भ्योऽम्बुपक्षिणः ॥ ३४
तन्मध्ये न चिरादत्र तौ हंसावप्युपैष्यतः । ततो द्रक्ष्यस्यजस्रं तौ मा कृथा दुर्मनस्कताम् ॥ ३५
इत्युक्ते मन्त्रिणा तेन स राजा तदकारयत् । यथोक्तं क्षणसंपन्नं ब्रह्मदत्तो महासरः ॥ ३६
हंससारसचक्राह्वसंश्रिते तत्र कालतः । आगत्य पद्मखण्डे तद्धंसयुग्ममुपाविशत् ॥ ३७
तदुपेत्य स विज्ञप्तस्तत्सरोरक्षिभिर्नृपः । आगादेतत्सरो हृष्टः सिद्धं मत्वा मनोरमम् ॥ ३८
ददर्श हेमहंसौ च तत्र तौ दूरतोऽर्चयन् । आश्वासयच्च निक्षिप्य सक्षीराञ्शालितण्डुलान् ॥ ३९
विशुद्धकलधौताङ्गौ मुक्तामणिमयेक्षणौ । प्रवालचञ्चुचरणौ तार्क्ष्यरत्नाग्रपक्षती ॥ ४०
विस्रम्भोपगतौ तौ स हंसौ राजा विभावयन् । मुदा सदावसल्लीला तत्रैव सरसस्तटे ॥ ४१
एकदा चैकदेशेऽत्र सरोरोधसि पर्यटन् । अम्लायिपुष्परचितां पूजां राजा ददर्श सः ॥ ४२
केन पूजा कृतैषेति पप्रच्छात्र स रक्षिणः । ततस्ते तं सरःपाला नृपमेवं व्यजिज्ञपन् ॥ ४३
त्रिसंध्यं सरसि स्नात्वा हंसावेतौ हिरण्मयौ । इह नित्यमिमां पूजां कृत्वा ध्यानेन तिष्ठतः ॥ ४४
तन्न विद्मो महाराज किमेतन्महदद्भुतम् । एतच्छ्रुत्वा स रक्षिभ्यश्चिन्तयामास भूपतिः ॥ ४५
क्व हंसौ केदृशी चर्या ध्रुवमस्त्यत्र कारणम् । तत्करिष्ये तपस्तावद्यावद्वेत्स्यामि काविमौ ॥ ४६
इति संचिन्त्य नृपतिस्त्यक्ताहारः स भार्यया । मन्त्रिणा च समं चक्रे हरध्यानपरस्तपः ॥ ४७
अथ तौ दिव्यहंसौ तं द्वादशाहमुपोषितम् । उपेत्य व्यक्तया वाचा स्वप्ने राजानमूचतुः ॥ ४८
राजन्नुत्तिष्ठ वक्ष्यावः सभार्यासचिवस्य ते । प्रातः सर्वं यथातत्त्वं विजने पारणे कृते ॥ ४९
इत्युक्त्वा तौ तिरोभूतौ हंसौ राजा प्रबुध्य च । भार्यामन्त्रियुतः प्रातश्चकारोत्थाय पारणम् ॥ ५०
भुक्तोत्तरं च तत्राम्बुलीलागेहान्तरे स्थितम् । नृपं सभार्यामात्यं तं हंसौ तावभ्युपेयतुः ॥ ५१
कौ युवां ब्रूतमित्युक्तौ तेनाभ्यर्च्यैव भूभुजा । क्रमात्तस्मै स्ववृत्तान्तमेवमाचख्यतुश्च तौ ॥ ५२
अस्ति मन्दर इत्यद्रिराजो जगति विश्रुतः । विहरत्सुरसंघातविराजद्रत्नकाननः ॥ ५३
यस्यामृतेन सिक्तेषु मथितक्षीरवारिधेः । जरामृत्युहरं पुष्पफलमूलाम्बु सानुषु ॥ ५४
कैलासाधिककान्तस्य यस्य शृङ्गाग्रभूमयः । नानासद्रत्नरचिता लीलोद्यानानि धूर्जटेः ॥ ५५
तत्र जातु कृतक्रीडो देवोऽवस्थाप्य पार्वतीम् । देवकार्यानुरोधेन केनाप्यन्तर्दधे हरः ॥ ५६
ततस्तद्विरहाक्रान्ता तत्क्रीडाकेतनेषु सा । बभ्रामाश्वास्यमानात्र पार्वती देवतान्तरैः ॥ ५७
एकदा च मधुप्राप्तिसोद्वेगा सा गणैर्वृता । देवी तरुतले यावत्प्रियचिन्ताकुला स्थिता ॥ ५८
तावज्जयासुतां तत्र देव्याश्चामरधारिणीम् । कुमारीं चन्द्रलेखाख्यां साभिलाषावलोकिनीम् ॥ ५९
समानरूपतारुण्यो निकटस्थो गुणोत्तमः । मणिपुष्पेश्वरो नाम साभिलाषो व्यलोकयत् ॥ ६०
तद्वद्वान्यौ गणौ नाम्ना पिङ्गेश्वरगुहेश्वरौ । बभूवतुः स्मितमुखावन्योन्याननदर्शिनौ ॥ ६१
तौ चालोक्य तथाभूतौ कस्मैतौ हसतोऽपदे । इत्यन्तः कुपिता देवी ददौ दृष्टिमितस्ततः ॥ ६२
तावत्तावत्र चान्योन्यमुखे स्मेरार्पितेक्षणौ । ददर्श चन्द्रलेखां तां मणिपुष्पेश्वरं च तम् ॥ ६३

ततो विरहसोद्वेगा क्रुद्धा देवी जगाद सा। देवस्यासंनिधौ सुष्टु स्मरप्रेक्षणकं कृतम् ॥
एताभ्यां हासशीलाभ्यां हसितं प्रेक्ष्य सुष्टु च। तन्मर्त्ययोनौ कामान्धौ स्त्रीपुंसौ पततामिमौ ॥
तत्रैव दंपती चैतावविनीतौ भविष्यतः। हासशीलाविमौ क्लेशान्प्राप्स्यतस्तु बहून्भुवि ॥
ब्राह्मणौ दुःखिनौ पूर्वं तदनु ब्रह्मराक्षसौ। ततः पिशाचकौ पश्चाच्चण्डालौ तस्करौ ततः ॥
छिन्नपुच्छौ ततः श्वानौ विविधौ च ततः खगौ। भविष्यतो गणावेतौ परिहासापराधिनौ ॥
आभ्यां हि स्वस्थचित्ताभ्यामेष दुर्विनयः कृतः। इत्यादिष्टवतीं देवीं धूर्जटाख्योऽवदद्गणः ॥
अत्ययुक्तमिदं देवि न खल्वेते गुणोत्तमाः। इयन्तं शापमर्हन्ति स्वल्पादेवापराधतः ॥
तच्छ्रुत्वैवाब्रवीत्कोपाद्देवी तमपि धूर्जटम्। मर्त्ययोनावनात्मज्ञ भवानपि पतत्विति ॥
दत्तशापप्रतापां तां प्रतीहारी जयाम्बिकाम्। जननी चन्द्रलेखायाः पादलग्ना व्यजिज्ञपत् ॥
प्रसीद देवि शापान्तं कुर्वस्या दुहितुर्मम। एतेषां च स्वभृत्यानामज्ञानविहितागसाम् ॥
विज्ञप्तेति प्रतीहार्या जयया गिरिजाब्रवीत्। यदा सर्वे मिलिष्यन्ति ज्ञानप्राप्तिवशात्क्रमात् ॥
ब्रह्मादीनां तपःक्षेत्रे दृष्ट्वा सिद्धीश्वरं तदा। एष्यन्ति पदमस्माकं मुक्तशापा इमे पुनः ॥
मानुष्ये चन्द्रलेखेयमेतत्कान्तः स धूर्जटः। सुखिनोऽमी भविष्यन्ति त्रयो द्वौ दुःखिनाविमौ ॥
इत्युक्त्वा विरता यावत्सा देवी तावदाययौ। तत्रासुरः किल ज्ञातहरासंनिधिरन्धकः ॥
स देवीं प्रेप्सुरुत्सिक्तस्तत्परिच्छदभर्त्सितः। गतो विज्ञाय देवेन ज्ञात्वा तत्कारणं हतः ॥
कृतकार्योऽन्तिकायातस्तुष्टामुक्तान्धकागमाम्। सोऽथ देवो जगादैवं गिरिजां गिरिजापतिः ॥
मानसः पूर्वपुत्रस्ते सोऽन्धकोऽद्य हतो मया। त्वगस्थिशेषो भृङ्गी च भविष्यत्यधुनेह सः ॥
इत्युक्त्वा स समं देव्या तत्रासीद्विहरन्हरः। मणिपुष्पेश्वराद्याश्च पञ्च तेऽवातरन्भुवि ॥
तत्र तावद्वयो राजंस्तस्य पिङ्गेश्वरस्य च। गुहेश्वरस्य चोदन्तं चित्रायतमिमं शृणु ॥
अस्ति यज्ञस्थलाख्योऽस्मिन्नग्रहारो महीतले। तत्राभूद्यज्ञसोमाख्यो ब्राह्मणो धनवान्गुणी ॥
तस्य द्वावुदपद्येतां पुत्रौ वयसि मध्यमे। हरिसोमस्तयोर्ज्येष्ठः कनिष्ठो देवसोमकः ॥
तयोस्तस्य समुत्तीर्णबाल्ययोरुपनीतयोः। विप्रस्यादौ धनं क्षीणं सभार्यस्यायुषा ततः ॥
ततस्तौ तत्सुतौ दीनौ पितृहीनाववृत्तिकौ। हृताग्रहारौ दायादैर्मन्त्रयामासतुर्मिथः ॥
भिक्षैकवृत्ती जातौ स्वो न च भिक्षामवाप्नुवः। तद्दूरमपि गच्छावो वरं मातामहं गृहम् ॥
भ्रष्टौ यद्यपि नौ कोऽत्र अद्ध्यात्स्वयमागतौ। तथापि यावः किं कुर्वो नह्यन्यास्त्यावयोर्गतिः ॥
इति संमन्त्र्य ययतुर्भिक्षमाणौ क्रमेण तौ। तमग्रहारं यत्रत्र मातामहगृहं तयोः ॥
तत्र तं सोमदेवाख्यं मृतं मातामहं जनात्। पृच्छन्तौ तावबुध्येतां मन्दभाग्यौ सभार्यकम् ॥
ततश्च तौ यज्ञदेवक्रतुदेवाभिधानयोः। रजोरूक्षौ विविशतुर्विप्रौ मातुलयोर्गृहम् ॥
तत्रादृत्य समाश्वास्य ताभ्यां कृप्ताशनाम्बरौ। सद्विप्राभ्यामधीयानौ यावत्तौ तत्र तिष्ठतः ॥
तावत्तावप्युपक्षीणधनीभूतावभृत्यकौ। मातुलौ भागिनेयौ तौ प्रीतिपूर्वमवोचताम् ॥
पुत्रौ दरिद्रीभूतानामस्माकं पशुपालकम्। कर्तुं नास्त्यद्य सामर्थ्यं तद्युवां रक्षतं पशून् ॥
इत्युक्तौ मातुलाभ्यां तौ बाष्पकण्ठौ तथेति तत्। हरिसोमदेवसोमौ तद्वचोऽभ्युपजग्मतुः ॥
ततोऽटव्यां पशून्नीत्वा सततं तौ ररक्षतुः। परिश्रान्तौ च सायं तावादायाजग्मतुर्गृहम् ॥
तथा तयोः पाशुपाल्यं कुर्वतोर्दैवशप्तयोः। अहार्यत पशुः कश्चित्कश्चिद्व्याघ्रैरभक्ष्यत ॥
ततस्तौ मातुलौ यावदुद्विग्नौ तावदेकदा। धेनुश्छागश्च यज्ञार्थौ द्वौ तयोः क्वापि नेशतुः ॥
तद्भयात्तान्गृहं नीत्वैवान्यानसमये पशून्। पलायितौ तौ चिन्वन्तौ दूरं विविशतुर्वनम् ॥
तत्र व्याघ्रार्धजग्धं तं छागं ददृशतुर्निजम्। शोचित्वोपहतात्मानावेवं जगदतुश्च तौ ॥
छागोऽयं मातुलाभ्यां नौ यज्ञार्थं पर्यकल्प्यत। तस्मिन्नष्टे च दुर्वारस्तयोः कोपो भविष्यति ॥
तदस्य मांसं संस्कृत्य वह्नौ भुक्त्वा हृतक्षुधौ। शेषमादाय गच्छावः क्वाप्यावां भैक्ष्यजीविनौ ॥

इति संचिन्त्य यावत्तं छागं संस्कुरुतोऽनले । तावदाजग्मतुः पश्चाद्धावन्तौ मातुलौ तयोः ॥ १०३
ताभ्यां छागं पचन्तौ तौ दृष्टावुत्थाय संभ्रमात् । दूरात्तद्दर्शनत्रस्तौ पलाय्य ययतुस्ततः ॥ १०४
युवाभ्यां मांसगृध्नुभ्यां राक्षसं कर्म यत्कृतम् । भविष्यथस्ततो ब्रह्मराक्षसौ पिशिताशनौ ॥ १०५
इति तौ मातुलौ क्रुद्धौ तयोः शापं वितेरतुः । अभूतां द्विजपुत्रौ च सद्यस्तौ ब्रह्मराक्षसौ ॥ १०६
दंष्ट्राविशङ्कटमुखौ दीप्तकेशौ बुभुक्षितौ । प्राणिनः प्राप्य खादन्तावटव्यां भ्रेमतुश्च तौ ॥ १०७
एकदा तापसं हन्तुं योगिनं तावधावताम् । तत्प्रापतुः पिशाचत्वं शप्तौ तेन प्रतिघ्नता ॥ १०८
पिशाचत्वेऽपि तौ हन्तुं हरन्तौ ब्राह्मणस्य गाम् । तन्मन्त्रभग्नौ तच्छापाच्चण्डालत्वमवापतुः ॥ १०९
चण्डालत्वे धनुष्पाणी भ्रमन्तौ क्षुन्निपीडितौ । कदाचिच्चौरपल्लीं तां प्रापतुर्भोजनार्थिनौ ॥ ११०
तत्र दृष्ट्वैव तद्द्वाररक्षकाश्चौरशङ्कया । चौरा वष्टभ्य तौ चक्रुश्छिन्नश्रवणनासिकौ ॥ १११
तथाविधौ च तौ बद्धौ निन्युस्ते तस्करास्ततः । पार्श्वं प्रधानचौराणां लगुडाहतिताडितौ ॥ ११२
तत्र पृष्टौ प्रधानैस्तौ चौरैस्तैर्भयविक्लवौ । क्षुद्दुःखावाप्तसंक्लेशं स्ववृत्तान्तमशंसताम् ॥ ११३
ततस्ते कृपया मुख्यचौरा बन्धाद्विमुच्य तौ । ऊचुस्तिष्ठतमत्रैतमिह मा भूद्भयं च वाम् ॥ ११४
अष्टम्यामद्य सेनानीपूजनावसरे युवाम् । अस्माकमतिथी प्राप्तौ संविभागमिहार्हथः ॥ ११५
इत्युक्त्वार्चितदेवीकाश्चौरास्ते स्वाग्रभोजितौ । तत्यजुर्नैव तौ दैवादुत्पन्नप्रीतयोऽन्तिकात् ॥ ११६
ततः क्रमेण कुर्वाणौ चौर्यं तैर्दस्युभिः सह । महासेनापती तेषां संवृत्तौ तौ स्वशौर्यतः ॥ ११७
एकदा चौरचारोक्तं शैवक्षेत्रं महत्पुरम् । सेनापती तौ मुषितुं ससैन्यौ जग्मतुर्निशि ॥ ११८
अनिमित्तेऽपि दृष्टे तावनिवृत्ताववाप्य तत् । लुण्ठयामासतुः कृत्स्नं सदेवभुवनं पुरम् ॥ ११९
ततस्तद्वासिभिर्देवः क्रन्दितः शरणार्थिभिः । चौरांस्तान्विकलानन्धांश्चकार कुपितो हरः ॥ १२०
तदकस्माद्विलोक्यैव मत्वा शार्वमनुग्रहम् । पौराः संभूय दस्यूंस्तान्निजघ्नुर्लगुडाश्मभिः ॥ १२१
अदृश्यमानाश्च गणाश्चौराञ्श्वभ्रेष्ववाक्षिपन् । कांश्चित्कांश्चिदमूढांश्च निहत्य भुवि तस्करान् ॥ १२२
तौ च सेनापती यावज्जनो दृष्ट्वा जिघांसति । तावत्तौ समपद्येतां श्वानौ पुच्छविनाकृतौ ॥ १२३
तथाभूतौ च तौ स्मृत्वा पूर्वजातिमशङ्कितम् । नृत्यन्तौ शंकरस्याग्रे तमेव शरणं श्रितौ ॥ १२४
तद्दृष्ट्वा विस्मिताः सर्वे सविप्रवणिजो जनाः । गतचौरभया हृष्टा हसन्तः स्वगृहान्ययुः ॥ १२५
शान्तमोहौ प्रबुद्धौ च श्वानौ तौ शापशान्तये । त्यक्ताहारावथोद्दिश्य शिवं शिश्रियतुस्तपः ॥ १२६
प्रातः कृतोत्सवास्तत्र पौरास्ते पूजितेश्वराः । ध्यानस्थौ ददृशुः श्वानौ दत्तेऽप्यन्ने पराङ्मुखौ ॥ १२७
तथैव दृश्यमानौ तैर्यावत्तौ दिवसान्बहून् । श्वानौ स्थितौ गणास्तावदेवं शंभुं व्यजिज्ञपन् ॥ १२८
देव शप्ताविमौ देव्या पिङ्गेश्वरगुहेश्वरौ । बहुकालं गणौ क्लिष्टौ तत्कृपामेतयोः कुरु ॥ १२९
तच्छ्रुत्वोवाच भगवानिदानीं सारमेयताम् । परित्यज्य गणावेतौ वायसौ भवतामिति ॥ १३०
ततस्तौ वायसीभूतौ बल्यन्नकृतपारणौ । गणौ जातिस्मरौ सुष्ठु शिवैकाग्रौ बभूवतुः ॥ १३१
कालेन भक्तितुष्टस्य निदेशाच्छंकरस्य तौ । भासावभूतां प्रथमं ततोऽपि च शिखण्डिनौ ॥ १३२
ततोऽपि हंसतां प्राप्तौ तौ कालेन गणेश्वरौ । तत्रापि परया भक्त्या तावाराधयतां हरम् ॥ १३३
तीर्थस्नानैर्व्रतैर्ध्यानैः पूजनैस्तोषितेश्वरौ । हेमरत्नमयौ तौ च संजातौ ज्ञानिनौ तथा ॥ १३४
तावावां पार्वतीशापप्राप्तक्लेशपरम्परौ । विद्ध्येतौ हंसतां प्राप्तौ पिङ्गेश्वरगुहेश्वरौ ॥ १३५
जयात्मजाभिलाषी यो मणिपुष्पेश्वरो गणः । देव्या शप्तः स जातस्त्वं ब्रह्मदत्तो नृपो भुवि ॥ १३६
जयासुता सा जातेयं भार्या सोमप्रभा तव । धूर्जटः स च जातोऽयं मन्त्री ते शिवभूतिकः ॥ १३७
अत एव च संप्राप्तज्ञानाभ्यामम्बिकाकृतम् । स्मृत्वा शापान्तमावाभ्यां दत्तं ते निशि दर्शनम् ॥ १३८
तदुपायक्रमात्सर्वे मिलिताः स्म इमेऽधुना । आवां चैव प्रदास्यावो युष्मभ्यं ज्ञानमुत्तमम् ॥ १३९

आयात तत्रिदशशैलगतं व्रजामः क्षेत्रं यथार्थमचलेन्द्रसुतापतेस्तत् ।
सिद्धीश्वरं विदधिरे किल यत्र देवा विद्युद्ध्वजासुरविनाशकृते तपांसि ॥ १४०

जघ्नुस्ते च तमसुरं समरे शर्वप्रसादलब्धेन ।
विद्याधरेन्द्रपतिना मुक्ताफलकेतुना सहायेन ॥
स च मुक्ताफलकेतुः शापकृतं मर्त्यभावमुत्तीर्य ।
तदनुग्रहादवापत्पद्मावत्या समागमं भूयः ॥
तादृशि तत्र क्षेत्रे गत्वा नत्वा हरं प्रयास्यामः ।
स्वां गतिमीदृग्विहितो देव्यास्माकं समो हि शापान्तः ॥
इत्युक्तो दिव्याभ्यां हंसाभ्यां ब्रह्मदत्तभूमिपतिः ।
सद्योऽभून्मुक्ताफलकेतुकथाश्रवणकौतुकाक्षिप्तः ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः ।

ततः स ब्रह्मदत्तस्तौ दिव्यहंसौ नृपोऽब्रवीत् । कथं विद्युद्ध्वजं मुक्ताफलकेतुर्जघान तम् ॥
शापमर्त्यत्वमुत्तीर्य प्राप पद्मावतीं कथम् । एतत्कथयतां तावत्कर्तास्मि प्रकृतं ततः ॥
तच्छ्रुत्वा तत्कथामेवं तावद्वर्णयतां खगौ । आसीद्विद्युत्प्रभो नाम दैत्येन्द्रो देवदुर्जयः ॥
स गत्वा जाह्नवीतीरे सभार्यः पुत्रकाम्यया । ब्रह्माणमाराधयितुं चक्रे वर्षशतं तपः ॥
तपस्तुष्टस्य स ततः सुरारिर्ब्रह्मणो वरात् । प्राप विद्युद्ध्वजं नाम त्रिदशावध्यमात्मजम् ॥
स बालोऽपि महावीर्यो दैत्यराजसुतो बलैः । रक्ष्यमाणं चतुर्दिक्कं दृष्ट्वा स्वपुरमेकदा ॥
वयस्यमेकमप्राक्षीद्भयमत्र कुतः सखे । येनेदं रक्ष्यते नित्यं नगरं सैनिकैरिति ॥
ततो वयस्यः सोऽवादीदस्ति नस्त्रिदशेश्वरः । प्रतिपक्षस्तदर्थोऽयं पुररक्षणसंविधिः ॥
दन्तिनां दशलक्षाणि रथानां च चतुर्दश । त्रिंशल्लक्षाणि चाश्वानां पत्तीनां दशकोटयः ॥
यामे यामेऽभिरक्षन्ति पुरं वारक्रमादिदम् । स च प्रहरवारोऽब्दैस्तेषामायाति सप्तभिः ॥
तच्छ्रुत्वा सोऽब्रवीद्विद्युद्ध्वजो धिग्राज्यमीदृशम् । रक्ष्यते यत्किलान्येषां बाहुभिर्न स्वबाहुना ॥
तत्कृत्वाहं तपस्तीव्रं करिष्यामि तथा यथा । भुजनिर्जितशत्रोर्मे न स्यादेषा विडम्बना ॥
इत्युक्त्वैव वयस्यं तं वारयन्तं निषिध्य सः । विद्युद्ध्वजो ययौ पित्रोरनुक्त्वा तपसे वनम् ॥
बुद्ध्वाथ पितरौ स्नेहादन्वागत्य तमूचतुः । क्व बालस्त्वं क्व च तपः कष्टं मा पुत्र साहसम् ॥
जितशत्रु च राज्यं नस्त्रैलोक्ये नु ततोऽधिकम् । किं वाञ्छसि वृथात्मानं शोषयन्किं दुनोषि नौ ॥
एवं वदन्तौ पितरौ विद्युद्ध्वज उवाच सः । बाल्य एवार्जयिष्यामि दिव्यास्त्राणि तपोबलात् ॥
निःशत्रु च जगद्राज्यमेतेनैव न वेद्मि किम् । रक्ष्यते नित्यसंनद्धैः सैन्यैः स्वपुरमेव यत् ॥
इत्यादि निश्चयेनोक्त्वा पितरौ च विसृज्य सः । विद्युद्ध्वजोऽसुरश्चक्रे विरिञ्च्याराधनं तपः ॥
फलाहारोऽम्बुभक्षश्च वायुभुग्वर्जिताशनः । त्रीणि त्रीणि क्रमात्तस्थौ दैत्यो वर्षशतानि सः ॥
ततो ब्रह्मा जगत्क्षोभक्षममालोक्य तत्तपः । एत्यास्त्राणि ददौ तस्मै ब्राह्मादीनि तदर्थिने ॥
ब्रह्मास्त्रमेतदन्येन नास्त्रेण प्रतिहन्यते । विना पाशुपतं रौद्रमस्त्रमस्मदगोचरम् ॥
तदकाले त्वया नैतत्प्रयोक्तव्यं जयैषिणा । इत्युक्त्वा प्रययौ ब्रह्मा स दैत्यश्चागमद्गृहम् ॥
ततस्तदुत्सवायातैः सर्वैः स स्वबलैः सह । विद्युद्ध्वजः समं पित्रा प्रायाच्छक्रजिगीषया ॥
शक्रस्तदागमं बुद्ध्वा कृतरक्षस्त्रिविष्टपे । सख्या विद्याधरेन्द्रेण सहितश्चन्द्रकेतुना ॥
पद्मशेखरसंज्ञेन गन्धर्वाधीश्वरेण च । सदेवलोकपालोऽग्रे युयुत्सुस्तस्य निर्ययौ ॥
प्राप विद्युद्ध्वजश्चात्र बलैराच्छादिताम्बरः । ब्रह्मरुद्रादयश्चैतमाहवं द्रष्टुमाययुः ॥
ततः प्रववृते युद्धं तयोरुभयसैन्ययोः । परस्परास्त्रसंपातनिरुद्धार्कान्धकारितम् ॥
अमर्षवातक्षुभितो वाहिनीशतनिर्भरः । लुठद्वाजिगजग्राहो ववृधे समरार्णवः ॥

:न्द्वयुद्धेषु देवानां संप्रवृत्तेष्वथासुरैः । शक्रं विद्युत्प्रभोऽप्यागाद्विद्युद्ध्वजपिता क्रुधा ॥ २९
ास्त्रप्रत्यस्त्रयुद्धेन शनैस्तेनामरद्विषा । शक्रोऽभिभूयमानोऽथ तस्मै वज्रमवाक्षिपत् ॥ ३०
ाआहतः स दैत्योऽत्र पपात गतजीवितः । विद्युद्ध्वजोऽथ तत्क्रोधादभ्यधावच्छतक्रतुम् ॥ ३१
ाप्राणसंशये चादौ तस्मै ब्रह्मास्त्रमक्षिपत् । अन्ये च प्राहरन्नन्यैस्तस्मिन्नस्त्रैर्महासुराः ॥ ३२
ोऽथ ध्यात्वेश्वरादिष्टमस्त्रं पाशुपतं क्षणात् । अग्रोपस्थितमभ्यर्च्य शक्रश्चिक्षेप शत्रुषु ॥ ३३
ोन कालाग्निनास्त्रेण दग्धं तत्सैन्यमासुरम् । विद्युद्ध्वजस्तु बालत्वादहतो मूर्छितोऽपतत् ॥ ३४
ा हिनस्ति तदस्त्रं हि बालं वृद्धं पराङ्मुखम् । ततो लब्धजया देवाः स्वस्थानान्यखिला ययुः ॥ ३५
ोऽपि विद्युद्ध्वजो ध्वस्तः सुचिराल्लब्धचेतनः । शोचन्पलाय्य मिलितानवोचच्छेषसैनिकान् ॥ ३६
तयिनोऽपि जिताः स्मोऽद्य ब्रह्मास्त्रे प्रत्युतार्जिते । तत्त्यक्ष्याम्याहवे गत्वा शक्रमासाद्य जीवितम् ॥ ३७
ृते पितरि शक्ष्यामि न गन्तुं स्वपुरं पुनः । इत्युक्तवन्तं तं मन्त्री वृद्धो वक्ति स्म पैतृकः ॥ ३८
ाकालमुक्तं ब्रह्मास्त्रमन्यमुक्तास्त्रमन्थरम् । अन्यास्त्रासहनैशानमहास्त्रव्याहतं हि तत् ॥ ३९
ाल्लब्धजयमाक्षेप्तुं नाकाले शत्रुमर्हसि । एवं हि तस्योपचयः स्वनाशश्च कृतो भवेत् ॥ ४०
ीरो हि रक्षन्नात्मानं काले प्राप्य बलं रिपोः । मन्युप्रतिक्रियां कृत्वा विश्वश्लाघ्यं यशोऽश्नुते ॥ ४१
ृति वृद्धेन तेनोक्तो विद्युद्ध्वज उवाच सः । तर्ह्यस्मद्राज्यरक्षार्थं यात यूयमहं पुनः ॥ ४२
ामेवाराधयिष्यामि गत्वा सर्वेश्वरं शिवम् । इत्युक्त्वानिच्छतोऽप्येतान्विसस्जैव सोऽनुगान् ॥ ४३
ात्वा च पञ्चभिः सार्धं वयस्यैर्दैत्यपुत्रकैः । कैलासमूले गङ्गायास्तीरे सोऽशिश्रियत्तपः ॥ ४४
ार्मे पञ्चाग्निमध्ये च शीते तस्थौ स वारिणि । एकं सहस्रं वर्षाणां शिवध्यायी फलाशनः ॥ ४५
ूलाशनो द्वितीयं च तृतीयं वारिभोजनः । वायुभक्षश्चतुर्थं च निराहारश्च पञ्चमम् ॥ ४६
ारदानागतं भूयो बहु मेने न पद्मजम् । दृष्टो वरप्रभावस्ते गम्यतामित्युवाच च ॥ ४७
कालं तावन्तमेवान्यन्निराहारस्थितं च तम् । मूर्धोद्गतमहाधूमं साक्षाच्छंभुरुपाययौ ॥ ४८
वृणीष्व वरमित्युक्तस्तेन दैत्यो जगाद सः । वध्यामहं रणे शक्रं त्वत्प्रसादाद्विभो इति ॥ ४९
उत्तिष्ठ न विशेषोऽस्ति जितस्य निहतस्य वा । तदिन्द्रं जेष्यसि रणे तत्पदे च निवत्स्यसि ॥ ५०
इत्युक्त्वान्तर्दधे देवः सोऽपि सिद्धं मनोरथम् । मत्वा विद्युद्ध्वजः कृत्वा पारणं स्वपुरं ययौ ॥ ५१
तत्राभिनन्दितः पौरैस्तेन पित्र्येण मन्त्रिणा । मिलित्वा तत्कृते तप्ततपसा व्यधितोत्सवम् ॥ ५२
आहूयासुरसैन्यानि विहिताहवसंविधिः । इन्द्राय प्राहिणोद्दूतं युधि सज्जो भवेति सः ॥ ५३
चचाल च नभः सेनानादनिर्घातदारितम् । केतुभिश्छादयंस्तन्वन्निर्ष्टं स्वर्वासिनामिव ॥ ५४
इन्द्रोऽपि तं लब्धवरं विज्ञायागतमाकुलः । संमन्त्र्य देवगुरुणा सुरसैन्यान्युपाह्वयत् ॥ ५५
ततो विद्युद्ध्वजे प्राप्ते तयोरुभयसैन्ययोः । स्वेषां परेषां चाज्ञातविभागोऽभून्महाहवः ॥ ५६
सुबाहुप्रमुखा दैत्याः सहायुध्यन्त वायुभिः । पिङ्गाक्षाद्याः कुबेरैश्च महामायादयोऽग्निभिः ॥ ५७
अयःकायादयः सूर्यैः सिद्धैराकम्पनादयः । अन्ये विद्याधरैर्दैत्या गन्धर्वाद्यैस्ततोऽपरे ॥ ५८
एवमासीन्महायुद्धं तेषां वासरविंशतिम् । एकविंशे दिने दैत्यैरभज्यन्त रणे सुराः ॥ ५९
ते च भग्नाः प्रविविशुः पलाय्यान्तस्त्रिविष्टपम् । ततश्चैरावणारूढो निरगाद्वासवः स्वयम् ॥ ६०
परिवार्य च तं देवसैन्यानि निरगुः पुनः । चन्द्रकेतुप्रभृतिभिः सहैव द्युचरेश्वरैः ॥ ६१
ततः प्रवृत्ते सङ्ग्रामे हन्यमानासुरामरे । इन्द्रमभ्यद्रवद्विद्युद्ध्वजः पितृवधक्रुधा ॥ ६२
सोऽस्त्राणि तस्य प्रत्यस्त्रैर्दैत्येन्द्रस्य प्रतिघ्नतः । चिच्छेद बाणैः कोदण्डं देवराजो मुहुर्मुहुः ॥ ६३
ततो मुद्गरमादाय महेश्वरवरोद्धुरः । विद्युद्ध्वजस्तं स जवादधावद्वासवं प्रति ॥ ६४
उत्प्लुत्य दन्तयोर्दत्त्वा पादमैरावणस्य च । आरुरोहास्य कुम्भाग्रं यन्तारं विममाथ च ॥ ६५
ददौ च देवराजाय प्रहारं मुद्गरेण सः । देवराजश्च मुशलेनाशु प्रतिजघान तम् ॥ ६६
विद्युद्ध्वजोऽपि भूयस्तं मुद्गरेण जघान यत् । तदिन्द्रः सोऽपतद्वायुरथस्योपरि मूर्च्छितः ॥ ६७

वायुर्मनोजवेनेन्द्रं तं रथेनान्यतोऽहरत् । विद्युद्ध्वजोऽस्य पश्चाच्च दत्तझम्पोऽपतद्भुवि ॥
अकालोऽयं रणादिन्द्रमपसारयत द्रुतम् । इति तत्क्षणमाकाशादुच्चचार सरस्वती ॥
ततोऽपसारिते शक्रे वायुना रथवेगतः । विद्युद्ध्वजो रथारूढो यावत्तमनुधावति ॥
तावदैरावणः क्रुद्धो धावित्वैव निरङ्कुशः । मथ्नन्विद्राव्य सैन्यानि यतः शक्रस्ततो ययौ ॥
ततो मुक्त्वा रणं देवसैन्येऽपीन्द्रमनुद्रुते । निनाय ब्रह्मभवनं भीतां सुरगुरुः शचीम् ॥
अथ विद्युद्ध्वजः प्राप्य जयं शून्यामवाप्य च । नदद्भिः सहितः सैन्यैः प्रविवेशामरावतीम् ॥
इन्द्रोऽपि लब्धसंज्ञः सन्नकालं वीक्ष्य संप्रति । तदेव ब्रह्मभवनं सह सर्वामरैरगात् ॥
संप्रत्यसौ हरवरप्रभावो मा शुचं कृथाः । प्राप्तासि स्वपदं भूय इत्याश्वास्य पितामहः ॥
स्वं समाधिस्थलं नाम तस्य सर्वसुखावहम् । ब्रह्मलोकैकदेशस्थं स्थानं वसतये ददौ ॥
तत्रोवास स देवेन्द्रः शच्यैरावणसंगतः । तद्वाक्याद्वायुलोकं च जग्मुर्विद्याधरेश्वराः ॥
अधृष्यं सोमलोकं च गन्धर्वपतयो ययुः । अन्यलोकान्ययुश्चान्ये त्यक्तस्वस्वनिकेतनाः ॥
विद्युद्ध्वजश्च देवानां भूमिं भ्रमितडिण्डिमः । आक्रम्य बुभुजे राज्यं निर्मर्यादस्त्रिविष्टपे ॥
अत्रान्तरे कथासंधौ वायुलोके चिरस्थितः । विद्याधरेश्वरश्चन्द्रकेतुरेवं व्यचिन्तयत् ॥
स्वपदप्रच्युतेनेह मया स्थेयं कियच्चिरम् । नास्ति विद्युद्ध्वजस्याद्याप्यस्मच्छत्रोस्तपःक्षयः ॥
श्रुतं मया यत्स गतः सुहृन्मे पद्मशेखरः । गन्धर्वेन्द्रः शिवपुरं तपसे सोमलोकतः ॥
तस्य प्रसादो देवेन कृतः किमु न वेत्म्यहम् । नाद्यापि जाने तद्बुद्ध्वा ज्ञास्ये कर्तव्यमात्मनः ॥
इति ध्यायति यावच्च तावदभ्याययौ स तम् । विद्याधरेन्द्रं गन्धर्वराजः प्राप्तवरः सखा ॥
स तेनाश्लिष्य विहितस्वागतश्चन्द्रकेतुना । पृष्टश्च निजवृत्तान्तं गन्धर्वपतिरभ्यधात् ॥
गत्वा शिवपुरे शंभुं तपसाहमतोषयम् । स च मामादिशद्गच्छ पुत्रस्ते भवितोत्तमः ॥
पुनः प्राप्स्यसि राज्यं च कन्यां सर्वोत्तमामपि । विद्युद्ध्वजान्तको यस्या वीरो भर्ता भविष्यति ॥
इत्यादिष्टो हरेणाहं तवैतद्वक्तुमागतः । गन्धर्वेन्द्रादिति श्रुत्वा चन्द्रकेतुरुवाच सः ॥
मयाप्येतस्य दुःखस्य शान्त्यै गत्वा महेश्वरः । आराध्यस्तमनाराध्य न सन्तीप्सितसिद्धयः ॥
इति निश्चित्य तपसे दिव्यं क्षेत्रं त्रिशूलिनः । मुक्तावल्या समं पत्न्या चन्द्रकेतुर्जगाम सः ॥
सोऽपि स्ववरवृत्तान्तमिन्द्रायोक्त्वा रिपुक्षये । उत्पन्नास्थो ययौ सोमभुवनं पद्मशेखरः ॥
ततः सुरपतिस्तत्र स समाधिस्थले स्थितः । जातास्थः संक्षये शत्रोरमर्त्यगुरुमस्मरत् ॥
संस्मृतोपस्थितं तत्र प्रह्वः सत्कृत्य सोऽब्रवीत् । तपस्तुष्टः शिवः पद्मशेखरस्य समादिशत् ॥
विद्युद्ध्वजस्य हन्तारं भाविजामातरं किल । तदस्य दुष्कृतस्यान्तस्तावन्नः किं त्वहं चिरम् ॥
निवसन्निह निर्विण्णः स्वपदभ्रंशदुःस्थितः । तच्चिन्तयात्र भगवन्नुपायं शीघ्रकारिणम् ॥
इति देवगुरुः शक्राद्वचः श्रुत्वा जगाद तम् । कामं तस्य रिपोः प्राप्तो दुष्कृतैस्तपसः क्षयः ॥
तस्मादवसरोऽस्माकं स्वप्रयत्नविधेरयम् । तदेहि ब्रह्मणे ब्रूमः स उपायं वदिष्यति ॥
इत्युक्तो गुरुणा शक्रस्तद्युक्तो ब्रह्मणोऽन्तिकम् । ययौ प्रणम्य तस्मै च शशंस स्वमनोगतम् ॥
ततः स्वयंभूरवदच्चिन्तैषा न ममापि किम् । किं तु शर्वकृतं शर्वेणैव शक्यं व्यपोहितुम् ॥
स च देवश्चिरं प्राप्यस्तदेत निकटं हरेः । तदभिन्नात्मनो यामः सोऽभ्युपायं वदिष्यति ॥
इति संमन्त्र्य स ब्रह्मा शक्रः सुरगुरुश्च सः । हंसयानमुपारुह्य श्वेतद्वीपमुपागमन् ॥
यत्र सर्वो जनः शङ्खचक्रपद्मगदाधरः । चतुर्भुजश्च मूर्तौ च चित्ते च भगवन्मयः ॥
तत्र ते ददृशुर्देवं महारत्नगृहान्तरे । सेविताङ्घ्रिं कमलया शेषशय्यागतं हरिम् ॥
कृतप्रणामास्तस्मै ते यथार्हं तेन सत्कृताः । देवर्षिवन्दिताश्चात्र यथोचितमुपाविशन् ॥
भगवत्पृष्टकुशला देवास्ते तं व्यजिज्ञपन् । कुशलं किमिवास्माकं देव विद्युद्ध्वजे सति ॥
जानात्येव हि तत्सर्वं देवो यत्तेन नः कृतम् । तदर्थश्चागमोऽयं नस्तद्देवो वेत्त्यतः परम् ॥

ुक्तवतो देवांस्तानुवाच जनार्दनः । किं न जानामि यद्ब्रह्मा स्थितिस्तेनासुरेण मे ॥ १०७
तु स्वयं यदीशेन कृतं त्रिपुरघातिना । तत्तेनैवान्यथा कर्तुं शक्यते न पुनर्मया ॥ १०८
एव च तस्य स्यात्क्षयो दैत्यस्य पाप्मनः । त्वरध्वं यदि तावद्वो वच्म्युपायं निशम्यताम् ॥ १०९
त माहेश्वरं क्षेत्रं दिव्यं सिद्धीश्वराभिधम् । तत्र संप्राप्यते देवो नित्यसंनिहितो हरः ॥ ११०
ब दर्शितज्वालालिङ्गरूपः स एव मे । पूर्वं प्रजापतेश्च प्राग्रहस्यमवदद्विभुः ॥ १११
त तत्र गत्वा तं तपसा प्रार्थयामहे । स एवोपद्रवमिमं जगतां शमयिष्यति ॥ ११२
ादिष्टवता तेन देवेन सह विष्णुना । ते तार्क्ष्यहंसयानाभ्यां सर्वे सिद्धीश्वरं ययुः ॥ ११३
स्पृष्टे जरामृत्युरोगैः सौख्यैकधामनि । हेमरत्नमया यत्र मृगपक्षिद्रुमा अपि ॥ ११४
ान्तर्दर्शितान्योन्यमूर्तिभेदं क्षणे क्षणे । अन्यान्यरत्नरूपं च लिङ्गमभ्यर्च्य शूलिनः ॥ ११५
रास्ते हरिर्ब्रह्मा देवेन्द्रो दिविषद्गुरुः । तेपिरे हरमुद्दिश्य चत्वारो दुश्चरं तपः ॥ ११६
ान्तरे च तीव्रेण तपसा तोषितः शिवः । चन्द्रकेतोर्वरं तस्य विद्याधरपतेरदात् ॥ ११७
तष्ठोत्पत्स्यते राजन्महावीरः स ते सुतः । विद्युद्ध्वजं यः समरे युष्मच्छत्रुं हनिष्यति ॥ ११८
पावतीर्णो मानुष्ये कृतामरहितश्च यः । गन्धर्वराजदुहितुः पद्मावत्यास्तपोबलात् ॥ ११९
ः स्वपदमासाद्य तयैव सह भार्यया । सर्वं विद्याधरैश्वर्यं दश कल्पान्करिष्यति ॥ १२०
। दत्तवरे देवे तिरोभूते सभार्यकः । चन्द्रकेतुस्तदैवागात्स वायुभुवनं पुनः ॥ १२१
त्तीव्रतपस्तुष्टस्तत्र सिद्धीश्वरेऽपि तान् । नारायणादींल्लिङ्गान्तर्दृष्टो हृष्टान्हरोऽब्रवीत् ॥ १२२
तष्ठतालं क्लेशेन युष्मत्पक्ष्येण तोषितः । विद्याधरेश्वरेणाहं तपसा चन्द्रकेतुना ॥ १२३
ंशसंभवस्तस्य वीरः पुत्रो जनिष्यते । यस्तं विद्युद्ध्वजं दैत्यं हनिष्यत्यचिराद्रणे ॥ १२४
ोऽन्यदेवकार्यार्थं मानुष्ये शापतश्च्युतम् । पद्मशेखरगन्धर्वसुता तं प्रोद्धरिष्यति ॥ १२५
ावत्याख्यया सार्धं तया गौर्यंशजातया । पत्न्या द्युचरसाम्राज्यं कृत्वा मामेव चैष्यति ॥ १२६
सहध्वं मनागेष कामः संपन्न एव वः । इत्यच्युतादीनुक्त्वा ताञ्जगामादर्शनं शिवः ॥ १२७
ो हृष्टो हरिर्ब्रह्मा शक्रामरगुरू च तौ । जग्मुः स्थानानि तान्येव ते भूयो येभ्य आगताः ॥ १२८
थ विद्याधरेन्द्रस्य तस्य मुक्तावली प्रिया । चन्द्रकेतोः सगर्भाभूत्काले च सुषुवे सुतम् ॥ १२९
काशयन्तं ककुभो दुराधर्षेण तेजसा । तामसोपद्रवं हर्तुं बालमर्कमिवोदितम् ॥ १३०
ाते च तस्मिन्नित्यत्र भारती शुश्रुवे दिवः । चन्द्रकेतो सुतोऽयं ते हन्ता विद्युद्ध्वजासुरम् ॥ १३१
ाम्ना च विद्ध्यमुं मुक्ताफलकेतुं द्विषन्तपम् । इत्युक्त्वा चन्द्रकेतुं सा सोत्सवं विरराम वाक् ॥ १३२
गात पुष्पवृष्टिश्च ज्ञातार्थः पद्मशेखरः । शक्रश्चाययतुस्तत्र ये च च्छन्नाः स्थिताः सुराः ॥ १३३
रप्रसादवृत्तान्तमाचक्षाणाः परस्परम् । अनुभूय प्रमोदं ते स्वस्थानान्येव शिश्रियुः ॥ १३४
मुक्ताफलकेतुश्च सर्वसंस्कारसंस्कृतः । सहानन्देन देवानां क्रमाद्वृद्धिमुपागमत् ॥ १३५
थ तस्य दिनैः कन्या पुत्रोत्पत्तेरनन्तरम् । गन्धर्वाधिपतेः पद्मशेखरस्याप्यजायत ॥ १३६
न्धर्वेन्द्र सुतेयं ते भार्या विद्युद्ध्वजद्विषः । विद्याधरपतेः पद्मावती नाम भविष्यति ॥ १३७
ति तस्यां च जातायां गगनादुदगाद्वचः । ततः पद्मावती सात्र क्रमात्कन्या व्यवर्धत ॥ १३८
ुधांशुलोकसंभूतिसंक्रान्तेन तरङ्गिणा । अमृतेनेव लावण्यविसरेण विराजिता ॥ १३९
ोऽपि बालोऽभवन्मुक्ताफलकेतुर्महामतिः । व्रतोपवासादि तपश्चक्रे शिवमयः सदा ॥ १४०
ुकदा ध्याननिष्ठं तं द्वादशाहमुपोषितम् । प्रत्यक्षीभूय भगवाञ्जगाद गिरिजापतिः ॥ १४१
ुष्टोऽस्मि तेऽनया भक्त्या मत्प्रसादेन तत्तव । आविर्भविष्यन्त्यस्त्राणि विद्याः सर्वकलास्तथा ॥ १४२
परराजितसंज्ञं च खड्गमेतं गृहाण मे । कर्तासि येन साम्राज्यं विपक्षैरपराजितः ॥ १४३
ुत्युक्त्वा स विभुस्तस्मै खड्गं दत्त्वा तिरोदधे । स चाशु राजपुत्रोऽभून्महास्त्रबलविक्रमः ॥ १४४
तत्रान्तरे कदाचित्स विद्युद्ध्वजमहासुरः । त्रिदिवस्थो जलक्रीडां चक्रे द्युसरिदम्भसि ॥ १४५

ददर्श स जलं तस्याः कपिशं पद्मरेणुभिः। मदगन्धानुविद्धं च वीचिविक्षोभितं महत्॥
ततो भुजमदाध्मातः स जगाद निजानुगान्। ममाप्युपरि कः क्रीडत्यम्भोभिर्यात पश्यत॥
तच्छ्रुत्वोपरि यातास्ते पश्यन्ति स्मासुरा जले। क्रीडन्तं वृषभं शार्वं सह शाक्रेण दन्तिना॥
आगत्य च तमूचुस्ते दैत्येन्द्रं देव शांभवः। उपर्येत्य वृषः क्रीडत्यैरावणयुतोऽम्भसि॥
तन्मात्यैरावणमदव्यामिश्रितमिदं पयः। श्रुत्वेत्यगणयञ्शर्वं मदाच्चुक्रोध सोऽसुरः॥
स्वदुष्कृतपरीपाकमूढो भृत्यानुवाच च। यातानयत तौ बद्ध्वा वृषमैरावणाविति॥
ततो गत्वा जिघृक्षन्ति यावत्तौ ते किलासुराः। तावत्ताञ्जघ्नतुः क्रुद्धौ तौ प्रधाव्य वृषद्विपौ॥
हतशेषाश्च जगदुर्गत्वा विद्युद्ध्वजाय तत्। स क्रुद्धः प्राहिणोत्तौ प्रत्यासुरं सुमहद्बलम्॥
मथित्वा तच्च तत्सैन्यं पापपाकागतक्षयम्। वृषो हरान्तिकं प्रायादिन्द्रमैरावणोऽभ्यगात्॥

इन्द्रोऽथ तस्य दितिजस्य विचेष्टितं तदैरावणानुचररक्षिगणान्निशम्य।
संप्राप्तनाशसमयं तममन्यतारिं गौरीपतेर्भगवतोऽपि कृतावमानम्॥
आवेद्य तत्कमलजाय ततः समेत्य विद्याधरादिसहितः सह देवसैन्यैः।
हन्तुं रिपुं तमधिरूढसुरेभमुख्यः शक्रः शचीरचितमाङ्गलिकः प्रतस्थे॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके द्वितीयस्तरङ्गः।

---

तृतीयस्तरङ्गः।

ततस्त्रिविष्टपं प्राप्य स शक्रः पर्यवेष्टयत्। हरानुग्रहसोत्साहैर्लब्धकालबलैर्बलैः॥
तद्दृष्ट्वा निर्ययौ विद्युद्ध्वजः संनद्धसैनिकः। प्रावर्तन्तानिमित्तानि तस्य निर्गच्छतस्तदा॥
ध्वजेषु विद्युतः पेतुर्भ्रेमुर्गृध्रास्तथोपरि। अभज्यन्त महाछत्राण्यशिवं चारुवञ्शिवाः॥
तान्यरिष्टान्यगणयन्निरगादेव सोऽसुरः। देवासुराणां च ततः प्रावर्तत महाहवः॥
स मुक्ताफलकेतुः किं नाद्याप्येतीति वज्रिणा। पृष्टोऽथ चन्द्रकेतुस्तं खेचरेन्द्रो व्यजिज्ञपत्॥
विस्मृत्य त्वरया तस्य नोक्तमागच्छता मया। स तु बुद्ध्वा ध्रुवं पश्चादागच्छत्येव सत्वरम्॥
एतच्छ्रुत्वा स देवेन्द्रश्चतुरं वायुसारथिम्। श्रीमुक्ताफलकेतुं तमानेतुं प्राहिणोद्रथम्॥
पिता च तत्समं तस्य चन्द्रकेतुःससैनिकम्। आह्वानाय प्रतीहारं विससर्ज रथानुगम्॥
स मुक्ताफलकेतुश्च बुद्ध्वा दैत्याहवे गतम्। पितरं सानुगो गन्तुं तत्रैवाभ्युद्यतोऽभवत्॥
ततो जयगजारूढो जननीकृतमङ्गलः। वायुलोकादुदचलत्स बिभ्रत्खड्गमैश्वरम्॥
प्रस्थितस्यापतत्तस्य पुष्पवृष्टिर्नभस्तलात्। देवाश्च दुन्दुभीञ्जघ्नुर्वायवश्च ववुः शिवाः॥
मिलित्वा परिवव्रुश्च ते तं देवगणास्ततः। आसन्पलाय्य प्रच्छन्ना ये विद्युद्ध्वजभीतितः॥
तेन सैन्येन महता सह गच्छन्ददर्श सः। मार्गे मेघवनं नाम पार्वत्यायतनं महत्॥
तदनुल्लङ्घयन्भक्त्या गजादत्रावतीर्य सः। आहृत्य दिव्यपुष्पाणि देवीं प्रावर्ततार्चितुम्॥
अत्रान्तरे च गन्धर्वपतेः सा प्राप्तयौवना। पद्मावती सुता पद्मशेखरस्य सखीवृता॥
भर्तुः सङ्ग्रामयातस्य श्रेयोर्थं तपसि स्थिताम्। मातरं स्वामनुज्ञाप्य विमानेनेन्दुलोकतः॥
शिवार्थिनी पितुः संख्ये वरस्याभीप्सितस्य च। तदेव तपसे दिव्यं गौर्यायतनमाययौ॥
वरो नाद्यापि ते कश्चिन्निश्चितो यो युधि स्थितः। पितुः श्रेयोनिमित्तं च माता ते संश्रिता तपः।
त्वं तु कन्या तपः कस्य कृते सखि चिकीर्षसि। इत्युक्ता पथि सख्या सा पद्मावत्यब्रवीदिदम्॥
पितैव सखि कन्यानां दैवतं सर्वसिद्धिकृत्। वरोऽप्यनन्यसामान्यगुणो निश्चित एव मे॥
विद्युद्ध्वजं निहन्तुं यो जातो विद्याधरेन्द्रतः। स मुक्ताफलकेतुर्मे व्यादिष्टः शंभुना पतिः॥
एतन्मयाम्बापृष्टस्य तातस्यैव मुखाच्छ्रुतम्। स च यास्यति यातो वा सङ्ग्रामे मे वरो ध्रुवम्॥
अतो भगवतीं गौरीं तपसाराधयाम्यहम्। विजयाकाङ्क्षिणी तस्य पत्युस्तातस्य चोभयोः॥

वदन्तीं तां राजपुत्रीमाह स्म सा सखी । भाविन्यर्थेऽपि तद्वेष व्यवसायस्तवोचितः ॥ २४
ऽभिलषितं सिध्यत्विति सख्या तयोदिता । सा गौर्यायतनाभ्यर्णे भव्यं प्राप महत्सरः ॥ २५
ह्लैः स्वर्णकमलैः प्रतिच्छन्नं प्रभास्वरैः । तन्मुखाम्भोरुहोत्सर्पत्कान्तिविच्छुरितैरिव ॥ २६
वतीर्य कमलान्यम्बिकाभ्यर्चनाय सा । उच्चित्य गन्धर्वसुता स्नानं यावद्विधित्सति ॥ २७
देवासुररणं रक्षःस्वामिषगर्धिषु । अभिधावत्सु तेन द्वे राक्षस्यावागते पथा ॥ २८
घोरमुखोद्वान्तज्वालापिङ्गोर्ध्वमूर्धजे । धूमश्याममहाकाये लम्बोदरपयोधरे ॥ २९
ग्रां दृष्ट्वैव गन्धर्वराजपुत्री निपत्य सा । नक्तंचरीभ्यां जगृहे निन्ये च गगनोन्मुखम् ॥ ३०
मानाधिदेवश्च राक्षस्यौ यावदेव ते । रुणद्धि यावदार्तश्च क्रन्दत्यस्याः परिच्छदः ॥ ३१
देवीगृहान्मुक्ताफलकेतुः कृतार्चनः । स निर्गतः श्रुताक्रन्दस्तमेवोद्देशमागमत् ॥ ३२
ष्ट्वा राक्षसीयुग्मगृहीतां तां लसद्द्युतिम् । कालमेघावलीमध्यगतां सौदामनीमिव ॥ ३३
वतीं प्रधाव्यैव महावीरो व्यमोचयत् । क्षिप्त्वा विचेतने भूमौ राक्षस्यौ ते तलाहते ॥ ३४
ं तां च लावण्यरसनिर्झरवाहिनीम् । त्रिवलीलहरीहारि मध्यभागोपशोभिनीम् ॥ ३५
पूसर्गसंप्राप्तकौशलोत्कर्षशालिना । धात्रा समग्रसौन्दर्यसारसंपादितामिव ॥ ३६
च तां स कंदर्पमोहमन्थरितेन्द्रियः । धीरोऽप्यत्र क्षणं तस्थौ चित्रस्थ इव निश्चलः ॥ ३७
सीसंभ्रमे शान्ते समाश्वस्य क्षणादिव । पद्मावत्यपि तं मुक्ताफलकेतुं ददर्श सा ॥ ३८
नेत्रोत्सवाकारं स्त्रीजनोन्माददायिनम् । एकीकृत्येन्दुकंदर्पौ विधिनेव विनिर्मितम् ॥ ३९
लज्जानतमुखी सखीं स्वैरमभाषत । भद्रमस्यास्तु यामीतः परपूरुषपार्श्वतः ॥ ४०
वदन्त्यां तस्यां च सा मुक्ताफलकेतुना । बाला किमियमाहेति तेनापृच्छ्यत तत्सखी ॥ ४१
प्युवाच सुकन्येयं दत्ताशीः प्राणदस्य ते । एह्यन्यपुरुषोपान्ताद्व्रजाव इति वक्ति माम् ॥ ४२
त्वा संभ्रमान्मुक्ताफलकेतुरुवाच ताम् । केयं कस्य सुता दत्ता कस्मै वा शुभकर्मणे ॥ ४३
पृष्टा च सा तेन तद्वयस्या तमब्रवीत् । इयं पद्मावती नाम कन्या सुभग नः सखी ॥ ४४
र्वाधिपतेः पद्मशेखरस्यात्मसंभवा । आदिष्टोऽस्याः पतिर्मुक्ताफलकेतुश्च शंभुना ॥ ४५
विद्याधरेन्द्रस्य चन्द्रकेतोर्जगत्प्रियः । सहायो देवराजस्य विद्युद्ध्वजविनाशकृत् ॥ ४६
ाङ्क्षन्ती जयं तस्य भर्तुः संख्ये पितुस्तथा । गौर्यायतनमद्यैतत्तपोर्थमियमागता ॥ ४७
तद्राजपुत्रीं तां चन्द्रकेतुसुतानुगाः । दिष्ट्या देवि स एवायं तव भर्तेत्यनन्दयन् ॥ ४८
ऽन्योन्यपरिज्ञानहर्षपूर्णे निजात्मनि । युक्तं तद्यन्न मातः स्म तौ कुमारीवरावुभौ ॥ ४९
श्चान्योन्यसप्रेमतिर्यगर्धावलोकितैः । तिष्ठतस्तत्र तौ तावच्छुश्रुवे तूर्यनिःस्वनः ॥ ५०
ध ददृशे सैन्यं वायुयुक्तो रथस्ततः । चन्द्रकेतुप्रतीहारस्तथा च त्वरितागतौ ॥ ५१
च वायुप्रतीहारौ विनयोज्झितवाहनौ । उपगम्यैव तं मुक्ताफलकेतुमवोचताम् ॥ ५२
ाह्वयति देवेन्द्रः पिता चाहवभूमितः । तदिमं रथमारुह्य शीघ्रमागम्यतामिति ॥ ५३
: पद्मावतीप्रेमबद्धोऽपि गुरुकार्यतः । स तं ताभ्यां सहाध्यास्त खेचरेन्द्रसुतो रथम् ॥ ५४
ा च शक्रप्रहितं दिव्यं कवचमाशु सः । प्रतस्थे वलितग्रीवं पश्यन्पद्मावतीं मुहुः ॥ ५५
ावती च निर्वर्ण्य सा तमादृष्टिगोचरम् । एकपाणितलाघातहतनक्तंचरीद्वयम् ॥ ५६
त्र चिन्तयन्ती च स्नात्वाभ्यर्च्याम्बिकाहरौ । तदाप्रभृति तत्रैव तेपे तच्छ्रेयसे तपः ॥ ५७
ऽपि तद्दर्शनं मुक्ताफलकेतुर्विचिन्तयन् । मङ्गल्यं विजयाशंसि प्रापदेवासुराहवम् ॥ ५८
ा च तं सुसंनद्धं ससैन्यं वीरमागतम् । तमेव प्रवि सर्वेऽपि तेऽभ्यधावन्महासुराः ॥ ५९
स शरवर्षेण शिरोभिः शकलीकृतैः । शूरो रणोत्सवारम्भे चक्रे दिग्देवताबलिम् ॥ ६०
ामानं बलं तेन तन्मुक्ताफलकेतुना । दृष्ट्वा विद्युद्ध्वजः क्रोधादधावत्तं प्रति स्वयम् ॥ ६१
चापतन्नेव शरैर्दैत्यो यत्तेन ताडितः । तत्तमेवाभ्यधावत्तत्सर्वतः सैन्यमासुरम् ॥ ६२

ददर्श स जलं तस्याः कपिशं पद्मरेणुभिः। मदगन्धानुविद्धं च वीचिविक्षोभितं महत्॥
ततो भुजमदाध्मातः स जगाद निजानुगान्। ममाप्युपरि कः क्रीडत्यम्भोभिर्यात पश्यत॥
तच्छ्रुत्वोपरि यातास्ते पश्यन्ति स्मासुरा जले। क्रीडन्तं वृषभं शार्वं सह शाक्रेण दन्तिना॥
आगत्य च तमूचुस्ते दैत्येन्द्रं देव शांभवः। उपर्येत्य वृषः क्रीडत्यैरावणयुतोऽम्भसि॥
तन्माल्यैरावणमदव्यामिश्रितमिदं पयः। श्रुत्वेत्यगणयञ्शर्वं मदाच्चुक्रोध सोऽसुरः॥
स्वदुष्कृतपरीपाकमूढो भृत्यानुवाच च। यातानयत तौ बद्ध्वा वृषभैरावणाविति॥
ततो गत्वा जिघृक्षन्ति यावत्तौ ते किलासुराः। तावत्ताञ्जघ्नतुः क्रुद्धौ तौ प्रधाव्य वृषद्विपौ॥
हतशेषाश्च जगदुर्गत्वा विद्युद्ध्वजाय तत्। स क्रुद्धः प्राहिणोत्तौ प्रत्यासुरं सुमहद्बलम्॥
मथित्वा तच्च तत्सैन्यं पापपाकागतक्षयम्। वृषो हरान्तिकं प्रायादिन्द्रमैरावणोऽभ्यगात्॥

इन्द्रोऽथ तस्य दितिजस्य विचेष्टितं तदैरावणानुचररक्षिगणान्निशम्य।
संप्राप्तनाशसमयं तममन्यतारिं गौरीपतेर्भगवतोऽपि कृतावमानम्॥
आवेद्य तत्कमलजाय ततः समेत्य विद्याधरादिसहितः सह देवसैन्यैः।
हन्तुं रिपुं तमधिरूढसुरेभमुख्यः शक्रः शचीरचितमाङ्गलिकः प्रतस्थे॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके द्वितीयस्तरङ्गः।

---

तृतीयस्तरङ्गः।

ततस्त्रिविष्टपं प्राप्य स शक्रः पर्यवेष्टयत्। हरानुग्रहसोत्साहैर्लब्धकालबलैर्बलैः॥
तद्दृष्ट्वा निर्ययौ विद्युद्ध्वजः संनद्धसैनिकः। प्रावर्तन्तानिमित्तानि तस्य निर्गच्छतस्तदा॥
ध्वजेषु विद्युतः पेतुर्भ्रेमुर्गृध्रास्तथोपरि। अभज्यन्त महाछत्राण्यशिवं चारुवञ्शिवाः॥
तान्यरिष्टान्यगणयन्निरगादेव सोऽसुरः। देवासुराणां च ततः प्रावर्तत महाहवः॥
स मुक्ताफलकेतुः किं नाद्याप्येतीति वज्रिणा। पृष्टोऽथ चन्द्रकेतुस्तं खेचरेन्द्रो व्यजिज्ञपत्॥
विस्मृत्य त्वरया तस्य नोक्तमागच्छता मया। स तु बुद्ध्वा ध्रुवं पश्चादागच्छत्येव सत्वरम्॥
एतच्छ्रुत्वा स देवेन्द्रश्चतुरं वायुसारथिम्। श्रीमुक्ताफलकेतुं तमानेतुं प्राहिणोद्रथम्॥
पिता च तत्समं तस्य चन्द्रकेतुः ससैनिकम्। आह्वानाय प्रतीहारं विससर्ज रथानुगम्॥
स मुक्ताफलकेतुश्च बुद्ध्वा दैत्याहवे गतम्। पितरं सानुगो गन्तुं तत्रैवाभ्युद्यतोऽभवत्॥
ततो जयगजारूढो जननीकृतमङ्गलः। वायुलोकादुदचलत्स बिभ्रत्खड्गमैश्वरम्॥
प्रस्थितस्यापतत्तस्य पुष्पवृष्टिर्नभस्तलात्। देवाश्च दुन्दुभीञ्जघ्नुर्वायवश्च ववुः शिवाः॥
मिलित्वा परिवव्रुश्च ते तं देवगणास्ततः। आसन्पलाय्य प्रच्छन्ना ये विद्युद्ध्वजभीतितः॥
तेन सैन्येन महता सह गच्छन्ददर्श सः। मार्गे मेघवनं नाम पार्वत्यायतनं महत्॥
तदनुल्लङ्घयन्भक्त्या गजादत्रावतीर्य सः। आहृत्य दिव्यपुष्पाणि देवीं प्रावर्ततार्चितुम्॥
अत्रान्तरे च गन्धर्वपतेः सा प्राप्तयौवना। पद्मावती सुता पद्मशेखरस्य सखीवृता॥
भर्तुः सङ्ग्रामयातस्य श्रेयोर्थं तपसि स्थिताम्। मातरं स्वामनुज्ञाप्य विमानेनेन्दुलोकतः॥
शिवार्थिनी पितुः संख्ये वरस्याभीप्सितस्य च। तदेव तपसे दिव्यं गौर्यायतनमाययौ॥
वरो नाद्यापि ते कश्चिन्निश्चितो यो युधि स्थितः। पितुः श्रेयोनिमित्तं च माता ते संश्रिता तपः॥
त्वं तु कन्या तपः कस्य कृते सखि चिकीर्षसि। इत्युक्ता पथि सख्या सा पद्मावत्यब्रवीदिदम्॥
पितैव सखि कन्यानां दैवतं सर्वसिद्धिकृत्। वरोऽप्यनन्यसामान्यगुणो निश्चित एव मे॥
विद्युद्ध्वजं निहन्तुं यो जातो विद्याधरेन्द्रतः। स मुक्ताफलकेतुर्मे व्यादिष्टः शंभुना पतिः॥
एतन्मयाम्बापृष्टस्य तातस्यैव मुखाच्छ्रुतम्। स च यास्यति यातो वा सङ्ग्रामे मे वरो ध्रुवम्॥
अतो भगवतीं गौरीं तपसाराधयाम्यहम्। विजयाकाङ्क्षिणी तस्य पत्युस्तातस्य चोभयोः॥

एवं वदन्तीं तां राजपुत्रीमाह स्म सा सखी । भाविन्यर्थेऽपि तद्वेष व्यवसायस्तवोचितः ॥ २४
तत्तेऽभिलषितं सिध्यत्विति सख्या तयोदिता । सा गौर्यायतनाभ्यर्णं भव्यं प्राप महत्सरः ॥ २५
उत्फुल्लैः स्वर्णकमलैः प्रतिच्छन्नं प्रभास्वरैः । तन्मुखाम्भोरुहोत्सर्पत्कान्तिविच्छुरितैरिव ॥ २६
तत्रावतीर्य कमलान्यम्बिकाभ्यर्चनाय सा । उच्चित्य गन्धर्वसुता स्नानं यावद्विधित्सति ॥ २७
तावद्देवासुररणं रक्षःस्वामिषगर्धिषु । अभिधावत्सु तेन द्वे राक्षस्यावागते पथा ॥ २८
दंष्ट्राघोरमुखोद्वान्तज्वालापिङ्गोर्ध्वमूर्धजे । धूमश्याममहाकाये लम्बोदरपयोधरे ॥ २९
ताभ्यां दृष्ट्वैव गन्धर्वराजपुत्री निपत्य सा । नक्तंचरीभ्यां जगृहे निन्ये च गगनोन्मुखम् ॥ ३०
तद्विमानाधिदेवश्च राक्षस्यौ यावदेव ते । रुणद्धि यावदार्तश्च क्रन्दत्यस्याः परिच्छदः ॥ ३१
तावद्देवीगृहान्मुक्ताफलकेतुः कृतार्चनः । स निर्गतः श्रुताक्रन्दस्तमेवोद्देशमागमत् ॥ ३२
स दृष्ट्वा राक्षसीयुग्मगृहीतां तां लसद्द्युतिम् । कालमेघावलीमध्यगतां सौदामनीमिव ॥ ३३
पद्मावतीं प्रधाव्यैव महावीरो व्यमोचयत् । क्षिप्त्वा विचेतने भूमौ राक्षस्यौ ते तलाहते ॥ ३४
ददर्श तां च लावण्यरसनिर्झरवाहिनीम् । त्रिवलीलहरीहारि मध्यभागोपशोभिनीम् ॥ ३५
स्वर्वधूसर्गसंप्राप्तकौशलोत्कर्षशालिना । धात्रा समग्रसौन्दर्यसारसंपादितामिव ॥ ३६
दृष्ट्वा च तां स कंदर्पमोहमन्थरितेन्द्रियः । धीरोऽप्यत्र क्षणं तस्थौ चित्रस्थ इव निश्चलः ॥ ३७
राक्षसीसंभ्रमे शान्ते समाश्वस्य क्षणादिव । पद्मावत्यपि तं मुक्ताफलकेतुं ददर्श सा ॥ ३८
जगन्नेत्रोत्सवाकारं स्त्रीजनोन्माददायिनम् । एकीकृत्येन्दुकंदर्पौ विधिनेव विनिर्मितम् ॥ ३९
ततो लज्जानतमुखी सखीं स्वैरमभाषत । भद्रमस्यास्तु यामीतः परपूरुषपार्श्वतः ॥ ४०
एवं वदन्त्यां तस्यां च सा मुक्ताफलकेतुना । बाला किमियमाहेति तेनापृच्छ्यत तत्सखी ॥ ४१
साप्युवाच सुकन्येयं दत्ताशीः प्राणदस्य ते । एह्यन्यपुरुषोपान्ताद्व्रजाव इति वक्ति माम् ॥ ४२
तच्छ्रुत्वा संभ्रमान्मुक्ताफलकेतुरुवाच ताम् । केयं कस्य सुता दत्ता कस्मै वा शुभकर्मणे ॥ ४३
इति पृष्टा च सा तेन तद्वयस्या तमब्रवीत् । इयं पद्मावती नाम कन्या सुभग नः सखी ॥ ४४
गन्धर्वाधिपतेः पद्मशेखरस्यात्मसंभवा । आदिष्टोऽस्याः पतिर्मुक्ताफलकेतुश्च शंभुना ॥ ४५
पुत्रो विद्याधरेन्द्रस्य चन्द्रकेतोर्जगत्प्रियः । सहायो देवराजस्य विद्युद्ध्वजविनाशकृत् ॥ ४६
आकाङ्क्षन्ती जयं तस्य भर्तुः संख्ये पितुस्तथा । गौर्यायतनमद्यैतत्तपोर्थमियमागता ॥ ४७
श्रुत्वैतद्राजपुत्रीं तां चन्द्रकेतुसुतानुगाः । दिष्ट्या देवि स एवायं तव भर्तेत्यनन्दयन् ॥ ४८
ततोऽन्योन्यपरिज्ञानहर्षपूर्णे निजात्मनि । युक्तं तद्यन्न मातः स्म तौ कुमारीवरावुभौ ॥ ४९
यावच्चान्योन्यसप्रेमतिर्यगर्धावलोकितैः । तिष्ठतस्तत्र तौ तावच्छुश्रुवे तूर्यनिःस्वनः ॥ ५०
ततश्च ददृशे सैन्यं वायुयुक्तो रथस्ततः । चन्द्रकेतुप्रतीहारस्तथा च त्वरितागतौ ॥ ५१
तौ च वायुप्रतीहारौ विनयोज्झितवाहनौ । उपगम्यैव तं मुक्ताफलकेतुमवोचताम् ॥ ५२
त्वामाह्वयति देवेन्द्रः पिता चाहवभूमितः । तदिमं रथमारुह्य शीघ्रमागम्यतामिति ॥ ५३
ततः पद्मावतीप्रेमबद्धोऽपि गुरुकार्यतः । स तं ताभ्यां सहाध्यास्त खेचरेन्द्रसुतो रथम् ॥ ५४
बद्ध्वा च शक्रप्रहितं दिव्यं कवचमाशु सः । प्रतस्थे वलितग्रीवं पश्यन्पद्मावतीं मुहुः ॥ ५५
पद्मावती च निर्वर्ण्य सा तमादृष्टिगोचरम् । एकपाणितलाघातहतनक्तंचरीद्वयम् ॥ ५६
तमेव चिन्तयन्ती च स्नात्वाभ्यर्च्याम्बिकाहरौ । तदाप्रभृति तत्रैव तेपे तच्छ्रेयसे तपः ॥ ५७
सोऽपि तद्दर्शनं मुक्ताफलकेतुर्विचिन्तयन् । मङ्गल्यं विजयाशंसि प्रापदेवासुराहवम् ॥ ५८
दृष्ट्वा च तं सुसंनद्धंससैन्यं वीरमागतम् । तमेव प्रति सर्वेऽपि तेऽभ्यधावन्महासुराः ॥ ५९
तेषां स शरवर्षेण शिरोभिः शकलीकृतैः । शूरो रणोत्सवारम्भे चक्रे दिग्देवताबलिम् ॥ ६०
हन्यमानं बलं तेन तन्मुक्ताफलकेतुना । दृष्ट्वा विद्युद्ध्वजः क्रोधादधावत्तं प्रति स्वयम् ॥ ६१
स चापतन्नेव शरैर्दैत्यो यत्तेन ताडितः । तत्तमेवाभ्यधावत्तत्सर्वतः सैन्यमासुरम् ॥ ६२

तद्दृष्ट्वा सिद्धगन्धर्वविद्याधरसुरान्वितः । अभिदुद्राव तद्दैत्यसैन्यं सपदि वासवः ॥
ततः पतदिषुप्रासशक्तितोमरपट्टिशम् । उदभूत्तुमुलं युद्धं निहतासंख्यसैनिकम् ॥
गजाश्वकायमकरा दन्तिमौक्तिकवालुकाः । प्रवीरमुण्डपाषाणाः प्रावहन्रुधिरापगाः ॥
शोणितासवमत्तानां भूतानामामिषार्थिनाम् । सोऽभूद्रणोत्सवः प्रीत्यै कबन्धैः सह नृत्यताम् ॥
तस्मिञ्जयश्रीर्दैत्यानां देवानां चाहवार्णवे । महोर्मिचपला प्रायादितः क्षणमितः क्षणम् ॥
चतुर्विंशतिमेवं तु युद्धमासीद्दिनानि तत् । प्रेक्ष्यमाणं विमानस्थैः शर्वशौरिपितामहैः ॥
पञ्चविंशे दिने क्षीणप्राययोः सैन्ययोर्द्वयोः । प्रधानद्वन्द्वयुद्धेषु प्रवृत्तेष्वत्र संगरे ॥
श्रीमुक्ताफलकेतोश्च तस्य विद्युद्ध्वजस्य च । द्वन्द्वयुद्धं प्रववृते रथस्थद्विरदस्थयोः ॥
तमोऽस्त्रं भास्करास्त्रेण ग्रैष्मास्त्रेण ज शैशिरम् । कुलिशास्त्रेण शैलास्त्रं नागास्त्रं गारुडेन च ॥
निवार्य तस्य यन्तारं वारणं चासुरस्य सः । एकैकेनेषुणा मुक्ताफलकेतुरपातयत् ॥
आरूढस्य रथं तस्य सारथिं तुरगांश्च यत् । सोऽवधीत्तदसौ विद्युद्ध्वजो मायामशिश्रियत् ॥
अदृश्यः सर्वसैन्येन द्यामारुह्य ववर्ष सः । शिलाश्चास्त्राणि विविधान्यभितः सुरवाहिनीम् ॥
अभेद्यं शरजालं च यन्मुक्ताफलकेतुना । अरुध्यत स तद्दैत्यो ददाहानलवृष्टिभिः ॥
अथाभिमन्त्र्य ब्रह्मास्त्रं सानुगं तमरिं प्रति । विश्वक्षयक्षमं मुक्ताफलकेतुर्मुमोच सः ॥
तेनास्त्रेण ससैन्योऽपि निहतो गतजीवितः । निपपात नभोमध्याद्विद्युद्ध्वजमहासुरः ॥
शेषाः पलाय्य जग्मुश्च विद्युद्ध्वजसुतादयः । वज्रदंष्ट्रादिसहिता रसातलतलं भयात् ॥
देवाश्च नादानुपदं जगदुः साधु साध्विति । श्रीमुक्ताफलकेतुं च पुष्पवर्षैरपूजयन् ॥
ततः शत्रौ हते शक्रः प्राप्तराज्यस्त्रिविष्टपम् । प्राविशत्त्रिषु लोकेषु बभूव च महोत्सवः ॥
आगाच्छचीं पुरस्कृत्य स्वयं चात्र प्रजापतिः । चूडारत्नोत्तमं मुक्ताफलकेतोर्बबन्ध च ॥
इन्द्रोऽपि राजपुत्रस्य तस्य राज्यप्रदायिनः । हारं स्वकण्ठतः कण्ठे न्यधाद्विजयशोभिनः ॥
समुपावेशयत्तं च निजासनसमासने । आनन्दपूर्णगीर्वाणवितीर्णविविधाशिषम् ॥
विद्युद्ध्वजासुरपुरं प्रतीहारं विसृज्य च । तस्मै दास्यन्नवसरे स्वीचक्रे स्वपुराधिकम् ॥
ततोऽस्मै राजपुत्राय गन्धर्वः पद्मशेखरः । दित्सुः पद्मावतीं धातुः साकूतं मुखमैक्षत ॥
स च ज्ञाताशयो धाता गन्धर्वेन्द्रमुवाच तम् । कार्यशेषोऽस्ति कश्चित्तद्विषहस्व मनागिति ॥
ततो हाहाहुहूगीतैः स्वनिनादानुनादितैः । रम्भादिनृत्यैस्तत्राभूदिन्द्रस्य विजयोत्सवः ॥
दृष्टोत्सवप्रमोदे च याते धातरि वृत्रहा । संमान्य लोकपालादीन्स्वं स्वं स्थानं विसृष्टवान् ॥
विससर्ज च गन्धर्वराजं तं पद्मशेखरम् । निजं गन्धर्वनगरं संमान्य सपरिच्छदम् ॥
श्रीमुक्ताफलकेतुं च चन्द्रकेतुं च सत्कृतौ । प्राहिणोदुत्सवाय स्वं विद्याधरपुरं हरिः ॥

स च संहृतविश्वकण्टकस्तां बहुविद्याधरराजकानुयातः ।
जनकानुगतः स राजधानीमथ मुक्ताफलकेतुराजगाम ॥
वररत्नचिता च सा तदानीं ध्वजपट्टांशुकमालिनी प्रविष्टे ।
विबभौ नगरी चिरागतेऽस्मिन्पितृयुक्ते जयभाजि राजपुत्रे ॥
स च सपदि पितास्य चन्द्रकेतुः पुरि परितोषितबन्धुभृत्यवर्गः ।
जलमिव जलदो वसु प्रवर्षन्सुतविजयोत्सवमूर्जितं ततान ॥
स च मुक्ताफलकेतुर्विद्युद्ध्वजदमनकीर्तिमपि लब्ध्वा ।
पद्मावतीं विना तां न रतिं लेभे निजेषु भोगेषु ॥
संयतकाख्येन पुनः शर्वादेशादि शंसिना सख्या ।
आश्वास्यमानचित्तः कृच्छ्रेण स तान्यहान्यनयत् ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके तृतीयस्तरङ्गः ।

चतुर्थस्तरङ्गः

रे स गन्धर्वराजः स्वनगरं पुनः । प्रविष्टो विततस्फूर्जदुत्सवः पद्मशेखरः ॥ १
ांसया तप्ततपसं गिरिजाश्रमे । बुद्ध्वा भार्यामुखात्पद्मावतीमानाययत्सुताम् ॥ २
ां च तपसा विरहेण च तां कृशाम् । तनयां पादपतितां स जगादाशिषं ददत् ॥ ३
दर्थं विहितस्तपःक्लेशो महांस्त्वया । तद्विद्याधरराजेन्द्रसुतं विद्युद्ध्वजान्तकम् ॥ ४
रण्यं जयिनं व्यादिष्टं शंभुना स्वयम् । श्रीमुक्ताफलकेतुं तं शीघ्रं पतिमवाप्नुहि ॥ ५
त्रोदिते यावदास्ते सा विनतानना । राजानमाह तन्माता तावत्कुवलयावली ॥ ६
 तादृगसुरस्त्रिलोकाभयदायिना । तेनार्यपुत्र निहतो राजपुत्रेण संयुगे ॥ ७
। वर्णयामास स राजा तस्य विक्रमम् । राजपुत्रस्य तं तस्यै सदेवासुरसंगरम् ॥ ८
द्मावतीसख्या सा मनोहारिकाख्यया । तदीया राक्षसीयुग्मवधलीलाप्यकथ्यत ॥ ९
त्र सुतायाश्च वृत्तमन्योन्यदर्शनम् । प्रीतिं च बुद्ध्वा तौ तोषं राजा राज्ञी च जग्मतुः ॥ १०
त्र निगीर्णश्च येनासुरचमूचयः । अगस्त्येनेव जलधी राक्षस्यौ तस्य के इति ॥ ११
त्पौरुषोत्कर्षवर्णनावात्यया च सः । पद्मावत्याः प्रजज्वाल सुतरां मदनानलः ॥ १२
त्रोः सकाशात्सा निर्गता राजकन्यका । शुद्धान्तरत्नप्रासादमारोहत्सोत्सुका क्षणात् ॥ १३
शोम्भितस्तम्भबद्धमौक्तिकजालके । मणिकुट्टिमविन्यस्तसुखशय्यावरासने ॥ १४
तोपनमद्दिव्यनानाभोगमनोरमे । स्थिता साभ्यधिकं तेपे प्रेयोविरहवह्निना ॥ १५
च ततः पृष्ठाद्धेमद्रुमलताचितम् । रत्नवापीशताकीर्णं दिव्यमुद्यानमृद्धिमत् ॥ १६
ाचिन्तयच्चित्रमिदमस्मत्पुरोत्तमम् । मज्जन्मभूमेर्भुवनादैन्दवादपि सुन्दरम् ॥ १७
मौलिमाणिक्यं न च दृष्टमिदं मया । नन्दनाभ्यधिकं यत्र पुरोपवनमीदृशम् ॥ १८
गत्वा सच्छायशीतले विजने वरम् । विरहानलसंतापं शमयामि मनागिमम् ॥ १९
ंचिन्त्य सा बाला शनैरेकाकिनी ततः । युक्त्यावरुह्य गन्तुं तत्पुरोद्यानं प्रचक्रमे ॥ २०
गन्तुमशक्ता सा स्वविभूतेरुपस्थितैः । पक्षिभिर्वाहनीभूय तदुद्यानमनीयत ॥ २१
ः कदलीखण्डगृहे पुष्पास्तरोपरि । उपाविशच्छ्रूयमाणे दिव्यगेयादिनिःस्वने ॥ २२
सात्र रतिं लेभे न तस्याः शाम्यति स्मरः । विना प्रियेण कामाग्निः प्रत्युतावर्धताधिकम् ॥ २३
देहक्षुश्चित्रस्थमपि तं प्रियमुत्सुका । सामग्रीचित्रफलकं वर्णवर्तीश्च सिद्धितः ॥ २४
द्वितीयं धातापि नेष्टे यत्सदृशं पुनः । तमालिखेयं सोत्कण्ठा सन्नपाणिरहं कथम् ॥ २५
ात्मविनोदार्थमालिखामि यथा तथा । इति संचिन्त्य फलके सा तु यावत्तमालिखत् ॥ २६
स्यास्तमुद्देशमाययौ चिन्वती सखी । सा मनोहारिका नाम तददर्शनविह्वला ॥ २७
मेकाकिनीं तत्र राजपुत्रीं लतागृहे । सचित्रफलकामुत्कामपश्यत्पृष्ठतः स्थिता ॥ २८
मे तावत्किमियं करोत्येवमिहैकिका । इति संचिन्त्य तस्थौ च छन्ना सा तत्र तत्सखी ॥ २९
ापि तमुद्दिश्य चित्राभिलिखितं प्रियम् । पद्मावती जगादैवमुदश्रुनयनोत्पला ॥ ३०
ानसुरान्हत्वा येनेन्द्रो रक्षितस्त्वया । आलापमात्रेण स मां कथं माराम्न रक्षसि ॥ ३१
ुमोऽप्यदातृत्वं सुगतोऽप्यदयालुताम् । आयाति मन्दपुण्यस्य सुवर्णमपि चाश्मताम् ॥ ३२
त्ररानभिज्ञश्च नूनं वेत्सि न मद्व्यथाम् । दैत्याजितस्य पुष्पेषुः किं तपस्वी करोति ते ॥ ३३
। वच्मि विधिर्वामो मम येनाश्रुणा दृशौ । पिदधन्नेच्छति प्रायश्चित्रेऽपि तव दर्शनम् ॥ ३४
त्वा राजतनया सा प्रावर्तत रोदितुम् । छिन्नहारगलत्स्थूलमुक्ताभैरश्रुबिन्दुभिः ॥ ३५
ां तामुपासर्पत्सा मनोहारिका सखी । साप्याच्छाद्यैव तच्चित्रं राजपुत्री जगाद ताम् ॥ ३६
रं न दृष्टा त्वं सखि कुत्र स्थितास्यहो । तच्छ्रुत्वा विहसन्ती तां सा मनोहारिकाब्रवीत् ॥ ३७
त्र सखि चिन्वाना चिरं भ्रान्तासि तत्त्वया । चित्रं किं छाद्यते दृष्टं मया चित्रमथ श्रुतम् ॥ ३८

एवं तयोक्ता सख्या सा पद्मावत्यश्रुगद्गदम् । लज्जानतमुखी हस्ते गृहीत्वा तामभाषत ॥
सखि प्रागेव विदितं सर्वं ते किं निगूह्यते । राजपुत्रेण तेनाहं तस्मिन्गौर्याश्रमे तदा ॥
उद्धृतापि महाघोरराक्षसीवह्निमध्यतः । दुर्वारविरहज्वाले निक्षिप्ता मदनानले ॥
तन्न जाने क गच्छामि कस्मै वच्मि करोमि किम् । आश्रये कमुपायं वा दुर्लभासक्तमानसा ।
इति ब्रुवाणां तां राजपुत्रीमाह स्म सा सखी । अभिष्वङ्गोऽनुरूपोऽयं स्थाने ते मनसः सखि ॥
इतरेतरशोभायै संयोगो युवयोः किल । नवचन्द्रकलाशार्वजटामुकुटयोरिव ॥
अधृतिश्चात्र मा भूत्ते ध्रुवं स भवतीं विना । न स्थास्यति त्वया किं स तथाभूतो न लक्षितः ॥
स्त्रियोऽपीच्छन्ति पुंभावं यां दृष्ट्वा रूपलोलुभाः । तस्यास्ते को भवेन्नार्थी तुल्यरूपः स किं पुन
शर्वोऽप्यलीकवादी किं येनोक्तौ दंपती युवाम् । अदूरगेऽप्यभीष्टेऽर्थे को वार्तो भजते धृतिम् ॥
तदाश्वसिहि भावी ते स एव न चिरात्पतिः । न त्वया दुर्लभः कश्चित्त्वं तु सर्वेण दुर्लभा ॥
इत्युक्ता सा तया सख्या राजपुत्री जगाद ताम् । सखि यद्यपि जानामि तथापि करवाणि किम्
इदं तु मे तदासक्तं चेतो नोत्सहते क्षणम् । स्थातुं विना तं प्राणेशं क्षमते न च मन्मथः ॥
तमेव हि स्मरन्त्या मे मनो निर्वाति न क्षणम् । दह्यन्तेऽङ्गानि संतापेनोत्क्रामन्तीव चासवः ॥
एवं वदन्ती मोहेन मोहिता पुष्पपेलवा । अङ्के तस्या वयस्याया राजपुत्री पपात सा ॥
अथाम्बुसेककदलीपल्लवानिलवीजनैः । साश्रुराश्वासयामास सा वयस्या क्रमेण ताम् ॥
मृणालहारवलयं श्रीखण्डार्द्रविलेपनम् । नलिनीदलशय्यां च यानि सा विदधे सखी ॥
तस्यास्तान्यपि संतापसमासक्तानि संगतः । संतप्य समदुःखत्वमिव शुष्यन्ति भेजिरे ॥
ततः सा विह्वला पद्मावती तामवदत्सखीम् । क्लिश्नासि किं वृथात्मानं नैवं शाम्यति मे व्यथा
येन शाम्यति तच्चेत्त्वं कुरुषे तच्छिवं भवेत् । एवमुक्तवतीमार्ता वयस्या तामभाषत ॥
कुर्यां किं यन्न नामाहं तवार्थे ब्रूहि तत्सखि । तच्छ्रुत्वा सा ह्रिया किंचिदिव राजसुताब्रवीत् ॥
तमिहानय मे कान्तं गत्वा प्रियसखि द्रुतम् । नान्यथोपशमो मे स्यात्तातश्चैव न कुप्यति ॥
प्रत्युतेहागतायैव मामेषोऽस्मै प्रदास्यति । एवं तयोक्ता सोत्साहं वयस्या साप्युवाच ताम् ॥
यद्येवं तद्गृहाण त्वं धैर्यं कार्यमिदं कियत् । एषाहं सखि याम्येव त्वत्प्रियानयनाय यत् ॥
तत्पितुः खेचरेन्द्रस्य चन्द्रकेतोः पुरोत्तमम् । ख्यातं चन्द्रपुरं नाम निर्वृता भव किं शुचा ॥
इति साश्वासिता सख्या तया राजसुताभ्यधात् । तदुत्तिष्ठ शिवः पन्था अस्तु ते व्रज सत्वरम्
त्राता त्रयाणां लोकानां स च सप्रणयं त्वया । मद्गिरा सखि वक्तव्यो वीरः प्राणेश्वरो मम ॥

तस्मिन्गौर्यायतने तथा परित्राय राक्षसीभयतः ।
स्त्रीघ्नेन हन्यमानां रक्षसि मां मकरकेतुना न कथम् ॥
भुवनोद्धरणसहानां भवादृशामेष नाथ को धर्मः ।
आपद्युपेक्ष्यते यत्पूर्वत्रातो जनोऽनुवृत्तोऽपि ॥

एवं वदेस्तं कल्याणि यथा जानासि वा स्वयम् । इति व्याहृत्य सा पद्मावती तां व्यसृजत्सखीं
सा च स्वसिद्ध्युपनतं पक्षिवाहनमास्थिता । तन्मनोहारिका प्रायाद्विद्याधरपुरं प्रति ॥
सा च पद्मावती किंचिदाशालब्धधृतिस्ततः । गृहीतचित्रफलका मन्दिरं प्राविशत्पितुः ॥
तत्र दासीपरिवृता प्रविश्य निजवासकम् । स्नात्वा गौरीपतिं भक्त्या पूजयित्वा व्यजिज्ञपत् ॥
भगवंस्त्रिषु लोकेषु त्वदिच्छानुग्रहं विना । न सिद्ध्यतीह कस्यापि बह्वल्पं वापि वाञ्छितम् ॥
तद्विद्याधरसच्चक्रवर्तिपुत्रं तमीप्सितम् । न दास्यसि पतिं चेन्मे देहं त्यक्ष्यामि तेऽग्रतः ॥
एवं विहितविज्ञप्तिं शशाङ्कमुकुटस्य ताम् । श्रुत्वा सखेदः साश्चर्यः परिवारजनोऽवदत् ॥
स्वदेहनिरपेक्षेव किमेवं देवि भाषसे । तवापि किमसुप्राप्यं नामास्त्यत्र जगत्त्रये ॥
त्वदर्थ्यमानो मुञ्चेद्धि सुगतोऽपि स संयमम् । तदेकः सोऽत्र सुकृती यस्त्वयाप्येवमर्थ्यते ॥

ृतच्छ्रुत्वा गुणाकृष्टा राजपुत्री जगाद सा । समाश्रयः सशक्राणां देवानामेक एव यः ॥ ७६
भर्केणेव तमो ध्वस्तं येनैकेनासुरं बलम् । प्राणदाता च योऽस्माकं प्रार्थनीयः कथं न सः ॥ ७७
ृत्यादि ब्रुवती सोत्का तयैव कथया ततः । अतिष्ठत्समभाप्तेन तत्र दासीजनेन सा ॥ ७८
भत्रान्तरे चन्द्रपुरं सा मनोहारिकापि तत् । विद्याधरेन्द्रनगरं सत्वरं प्राप तत्सखी ॥ ७९
ीर्वाणनगरं कृत्वाप्यसंतोषादिवाद्भुतम् । निर्ममे विश्वकर्मा यदसामान्यविभूतिकम् ॥ ८०
ात्रासंप्राप्य तं मुक्ताफलकेतुं विचिन्वती । खगस्था तत्पुरोद्यानं सा मनोहारिकागमत् ॥ ८१
भतर्क्यसिद्धिविभवं भास्वन्मणिमयद्रुमम् । एकवृक्षोद्गतानेकजातीयकुसुमोत्करम् ॥ ८२
देव्यगीतरवोन्मिश्रशकुन्तरुतसुन्दरम् । पश्यन्ती तच्च सा रेमे नानारत्नशिलातलम् ॥ ८३
ाद्यानपालैर्दृष्टा च विचित्रैः पक्षिरूपिभिः । उपेत्याभ्यर्थ्य सुव्यक्तवचनैः प्रियवादिभिः ॥ ८४
ारिजाततरोर्मूले तार्क्ष्यरत्नशिलासने । उपवेश्योचितैर्भोगैस्तस्याः पूजा व्यधीयत ॥ ८५
ाभिनन्द्य च तां पूजां चिन्तयामास तत्र सा । अहो विद्याधरेन्द्राणां चित्राः सिद्धिविभूतयः ॥ ८६
ाचिन्त्योपनमद्भोगं येषामुद्यानमीदृशम् । सुरस्त्रीबद्धसंगीतं पतत्रिपरिचारकम् ॥ ८७
ति संचिन्त्य पृष्ट्वा च तानेवोद्यानपालकान् । चिन्वती पारिजातादितरुखण्डमवाप सा ॥ ८८
ात्रान्तश्चन्दनासिक्तकुसुमास्तरशायिनम् । सा मुक्ताफलकेतुं तं साकल्पकमिवैक्षत ॥ ८९
ौर्याश्रमे दृष्टचरं प्रत्यभिज्ञाय सा च तम् । पश्याम्यस्य किमस्वास्थ्यं छन्नस्थैवेत्यचिन्तयत् ॥ ९०
ावदाश्वासयन्तं तं हिमचन्दनमारुतैः । मित्रं संयतकं मुक्ताफलकेतुरुवाच सः ॥ ९१
भङ्गारास्तुहिने न्यस्ताः कुकूलाग्निश्च चन्दने । मारुते दाववह्निश्च स्मरेण मम निश्चितम् ॥ ९२
वेरहार्तस्य संतापं समन्तात्सृजतामुना । तत्किमायासयस्येवमात्मानं निष्फलं सखे ॥ ९३
ुरस्त्रीनृत्तगीतादिविनोदैरपि दूयते । नन्दनाभ्यधिकेऽमुष्मिन्नुद्याने हि मनो मम ॥ ९४
वेना पद्मावतीं तां तु पद्मशेखरसंभवाम् । पद्माननां न मे शाम्यत्ययं स्मरशरज्वरः ॥ ९५
ा चैतदुत्सहे वक्तुं कस्य चिन्न लभे धृतिम् । एक एव तु तत्प्राप्तावुपायो विद्यते मम ॥ ९६
ाच्छामि गौर्यायतनं दृष्टया यत्र मे तया । कटाक्षेषुभिरुत्खाय हृदयं प्रियया हृतम् ॥ ९७
ात्राद्रिराजतनयासंगतस्तत्समागमे । तपसाराधितः शंभुरुपायं मे विधास्यति ॥ ९८
ृत्युक्त्वा यावदुत्थातुं राजपुत्रः स इच्छति । सा मनोहारिका तावत्तुष्टात्मानमदर्शयत् ॥ ९९
ायस्य वर्धसे दिष्ट्या सिद्धं तव समीहितम् । पश्येयमागता तस्याः प्रियायास्तेऽन्तिकं सखी ॥ १००
वत्पार्श्वस्थेन दृष्टा हि मयासावम्बिकाश्रमे । इति हर्षाच्च तं राजपुत्रं संयतकोऽब्रवीत् ॥ १०१
ातः स स्फूर्जदानन्दविस्मयौत्सुक्यसंकुलाम् । कांचिद्राजसुतोऽवस्थां दध्रे दृष्ट्वा प्रियासखीम् ॥ १०२
ेत्रपीयूषवृष्टिं तां पप्रच्छोपागतां च सः । उपवेश्यान्तिके कान्ताशरीरकुशलं तदा ॥ १०३
भ्रथ सा निजगादैवं मत्सख्याः कुशलं प्रभो । त्वयि नाथे ध्रुवं भावि सांप्रतं दुःखिता तु सा ॥ १०४
ादा प्रभृति दृष्टेन हृतं तस्यास्त्वया मनः । तत आरभ्य विमना न शृणोति न पश्यति ॥ १०५
ृणालहारं दधती बालाहारं विमुच्य सा । लुठत्यम्बुजिनीपत्रशयने शयनोज्झिता ॥ १०६
भसहिष्ट न या पूर्वं ह्रिया वरकथामपि । इमामवस्थां सैषाद्य प्राप्ता प्रियतमं विना ॥ १०७
ृति तस्या हसन्तीव स्वान्येवाङ्गानि संप्रति । संतापशुष्यच्छ्रीखण्डसितानि कृतिनां वर ॥ १०८
ृवं च सा ब्रवीति त्वामित्युदीर्य पपाठ ते । सा मनोहारिका पद्मावतीसंदेशगीतिके ॥ १०९
ा तच्छ्रुत्वाखिलं मुक्ताफलकेतुर्गतव्यथः । तां मनोहारिकां हर्षादभिनन्द्याभ्यभाषत ॥ ११०
भमृतेनेव वचसा तव सिक्तमिदं मम । चैतन्यमासीच्छ्वसितं धृतिर्जाता गतः क्लमः ॥ १११
ाफलितं चाद्य मे पूर्वसुकृतैर्यदहो मयि । गन्धर्वराजतनया साप्येवं पक्षपातिनी ॥ ११२
कंत्वहं शक्नुयां सोढुं कथंचिद्विरहव्यथाम् । शिरीषसुकुमाराङ्गी विषहेत कथं तु सा ॥ ११३
ास्मादहमुपैम्येष तमेव गिरिजाश्रमम् । तत्र त्वमानय सखीं येन स्यात्संगमोऽद्य नौ ॥ ११४

आश्वासय च तां गत्वा कल्याणि त्वरितं सखीम् । इमं च परितुष्टेन वितीर्णं मे स्वयंभुवा ॥
देहि चूडामणिं तस्यै सर्वदुःखनिबर्हणम् । शक्रात्प्राप्तो मया चायं हारस्ते पारितोषिकः ॥
इत्युक्त्वा शिरसश्चूडामणिं तस्यै समर्पयत् । हारं च कण्ठात्तत्कण्ठे तं स राजसुतो व्यधात् ॥
अथ प्रणम्य तं प्रीता सा मनोहारिका ततः । प्रतस्थे विहगारूढा सखीं पद्मावतीं प्रति ॥
स मुक्ताफलकेतुश्च प्रहर्षापहृतक्लमः । सह संयतकेन स्वं त्वरितं प्राविशत्पुरम् ॥
सापि पद्मावतीपार्श्वं प्राप्य तस्यै यथेप्सितम् । तं मनोहारिकाचख्यौ तत्प्रियस्मरसंज्वरम् ॥
प्रणयस्निग्धमधुरं तद्वचश्च यथाश्रुतम् । तं च संगमसंकेतं तदुक्तं गिरिजाश्रमे ॥
ददौ तत्प्रहितं तं च तस्यै चूडामणिं ततः । पारितोषिकहारं च तद्दत्तं तमदर्शयत् ॥
ततः पद्मावती सा तामाश्लिष्य कृतिनीं सखीम् । अपूजयद्विसस्मार स्मरानलरुजं च ताम् ॥
बद्ध्वा शिखायामानन्दमिव चूडामणिं च तम् । चक्रे परिकरं गौरीकाननागमनाय सा ॥
अत्रान्तरे मुनिर्दैवात्तद्गौरीवनमागमत् । दृढव्रतेन शिष्येण सह नाम्ना तपोधनः ॥
स चात्र तमुवाचैवं मुनिः शिष्यं दृढव्रतम् । दिव्योद्यानेऽहमेतस्मिन्समाधिं विदधे क्षणम् ॥
द्वारि स्थित्वा प्रवेशोऽत्र न देयः कस्यचित्त्वया । समापितसमाधिश्च पूजयिष्यामि पार्वतीम् ॥
इत्युक्त्वा मुनिरुद्यानद्वारे शिष्यं निवेश्य तम् । अधस्तात्पारिजातस्य स समाधिमसेवत ॥
समाधेरुत्थितश्चान्तर्विवेशार्चितुमम्बिकाम् । न च तत्तस्य शिष्यस्य जगाद द्वारवर्तिनः ॥
तावच्चात्राययौ मुक्ताफलकेतुः प्रसाधितः । आरुह्य दिव्यकरभं सह संयतकेन सः ॥
प्रविशंश्च तदुद्यानं मुनिशिष्येण तेन सः । मा मा गुरुः समाधौ मे स्थितोऽत्रेति न्यषिध्यत ॥
विस्तीर्णाभ्यन्तरे जातु प्रिया सा स्यादिहागता । मुनिश्चात्रैकदेशस्थ इत्यालोच्य स सोत्सुकः ॥
राजपुत्रो व्यतीत्यास्य मुनिपुत्रस्य दृक्पथम् । विवेश व्योममार्गेण तदुद्यानं सुहृद्युतः ॥
यावच्च वीक्षते तत्स तावत्तत्र विवेश सः । गुरोः समाधिनिष्पत्तिं मुनिशिष्यो निरीक्षितुम् ॥
स ददर्श गुरुं नात्र ददर्श सवयस्यकम् । श्रीमुक्ताफलकेतुं तु प्रविष्टमपथेन तम् ॥
ततः स राजपुत्रं तं मुनिशिष्योऽशपत्क्रुधा । सवयस्योऽपि मानुष्यमस्मादविनयाद्व्रज ॥
इतः समाधिं भङ्क्त्वा यद्गुरुर्मेऽपासितस्त्वया । एवं स दत्तशापस्तं स्वमेवान्वसरद्गुरुम् ॥
स मुक्ताफलकेतुश्च सिद्धप्राये मनोरथे । शापाशनिनिपातेन विषादमगमत्परम् ॥
तावत्पद्मावती सात्र प्रियसंगमसोत्सुका । आगाद्विहंगमारूढा समनोहारिकादिका ॥
स्वयंवरागतां दृष्ट्वा तां शापान्तरितां च सः । सुखदुःखमयीं कष्टां दशां राजसुतो दधौ ॥
पद्मावत्याश्च तत्कालमदाक्षिण्यं प्रदर्शयत् । पस्पन्दे दक्षिणं चक्षुरकम्पत च मानसम् ॥
ततोऽत्र सा राजसुता कान्तं विग्नं विलोक्य तम् । किं पूर्वानागतत्वान्मे खिन्नः स्यादित्यचिन्तयत्
प्रश्रयोपागतां तां च राजपुत्रो जगाद सः । प्रिये मनोरथो भग्नः सिद्धोऽपि विधिनावयोः ॥
तच्छ्रुत्वा हा कथं भग्न इति तस्यै ससंभ्रमम् । पृच्छन्त्यै स स्वशापं तं राजसूनुरवर्णयत् ॥
ततो विविग्ना जग्मुस्ते शापदातुर्गुरुं मुनिम् । देवीगृहस्थितं सर्वे शापान्तायानुनाथितुम् ॥
उपागतांस्तान्प्रणतान्दृष्ट्वा ज्ञानी महामुनिः । स मुक्ताफलकेतुं तं प्रीतिपूर्वमभाषत ॥
मूर्खेणानेन शप्तस्त्वमप्रेक्षापूर्वकारिणा । न त्वया मे कृतं किंचिद्व्युत्थितोऽहं स्वतस्ततः ॥
हेतुमात्रमयं चात्र भवितव्यमिदं तव । मानुष्येऽवश्यकार्यं ते देवकार्यं हि विद्यते ॥
एतां पद्मावतीमेव दैवाद्दृष्ट्वा स्मरातुरः । त्यक्त्वा मर्त्यशरीरं त्वं शीघ्रं शापाद्विमोक्ष्यसे ॥
अनेनैव च देहेन पुनः प्राणेश्वरीमिमाम् । त्रातासि विश्वत्राता त्वं चिरं शापं हि नार्हसि ॥
ब्रह्मास्त्रेण हता दैत्या बालवृद्धादयोऽपि यत् । त्वत्प्रयुक्तेन सोऽधर्मलेशो हेतुस्तवात्र च ॥
तच्छ्रुत्वा तमृषिं पद्मावती सास्रा व्यजिज्ञपत् । भगवन्नार्यपुत्रस्य गतिः सैवास्तु मेऽधुना ॥
नैतद्विरहिता स्थातुमपि शक्ष्याम्यहं क्षणम् । इत्यर्थितवतीं पद्मावतीं स मुनिरभ्यधात् ॥

तदस्ति तपस्यन्ती त्वं तिष्ठेहैव संप्रति । येनाचिरान्मुक्तशापस्त्वामयं परिणेष्यति ॥ १५४
तश्चानेन सहिता त्वं मुक्ताफलकेतुना । खेचरासुरसाम्राज्यं दशकल्पान्करिष्यसि ॥ १५५
तद्दत्तं शिखारत्नं तपःस्थां त्वां च पास्यति । महाप्रभावमुत्पन्नं धातुरेतत्कमण्डलोः ॥ १५६
ते पद्मावतीमुक्तवन्तं दिव्यदृशं मुनिम् । स मुक्ताफलकेतुस्तमेवं प्रार्थयतानतः ॥ १५७
ानुष्ये भगवन्मेऽस्तु भवे भक्तिरभङ्गुरा । पद्मावतीं विनान्यस्यां स्त्रियां मा गाच्च मे मनः ॥ १५८
वमस्त्विति तेनोक्ते मुनिना सातिदुःखिता । पद्मावती तं तच्छिष्यं शपति स्मापराधिनम् ॥ १५९
ार्यपुत्रस्त्वया मौर्ख्याच्छप्तो यत्तद्भविष्यसि । कामरूपं कामचरं मानुष्येऽस्यैव वाहनम् ॥ १६०
वं तयाभिशप्तेन विषण्णेनाथ तेन सः । तपोधनः स्वशिष्येण साकमन्तर्दधे मुनिः ॥ १६१
तः पद्मावतीं मुक्ताफलकेतुरभाषत । स्वपुरं यामि पश्यामि तावत्किं तत्र मे भवेत् ॥ १६२
च्छ्रुत्वा विरहत्रस्ता वातरुग्णा लतेव सा । पद्मावती पपाताशु सपुष्पाभरणा भुवि ॥ १६३
ाश्वास्य च कथंचित्तां क्रन्दन्तीं स सुहृद्युतः । मुहुर्वलितदृङ्मुक्ताफलकेतुरगात्ततः ॥ १६४
द्मावती च यातेऽस्मिन्विलपन्ती सुदुःखिता । आश्वासयन्तीमवदत्तां मनोहारिकां सखीम् ॥ १६५
ःखि जाने मया स्वप्ने देवी दृष्टाद्य पार्वती । सा चोद्यतापि मे कण्ठे क्षेप्तुमुत्पलदामकम् ॥ १६६
ास्तां दास्यामि ते भूय इत्युक्त्वा विरताभवत् । तदयं स प्रियावाप्तिविघ्नो मे सूचितस्तया ॥ १६७
ति तामनुशोचन्तीं सखी वक्ति स्म सा तदा । आश्वासनाय देव्या ते स्वप्नस्तेऽपि दर्शितः ॥ १६८
ुनिना च तथैवोक्तं देवादेशस्तथैव च । तदाश्वसिहि भावी ते न चिरात्प्रियसंगमः ॥ १६९
त्यादिभिः सखीवाक्यैश्चूडामणिवशेन च । पद्मावती धृतिं बद्ध्वा तस्थौ गौर्याश्रमे तदा ॥ १७०

विदधे च तपस्त्रिसंध्यमीशं गिरिजासंगतमत्र पूजयन्ती ।
प्रियचित्रपटं च सा तथैव स्वपुरानायितमात्तदेवबुद्धिः ॥ १७१

अयि निश्चितभाविनीप्सितेऽर्थे वितथं मा स्म कृथास्तपःश्रमं त्वम् ।
इति सास्रमुपेत्य वारयन्तौ विदितार्थौ पितरौ च सैवमाह ॥ १७२

नवभर्तरि दैवनिर्मिते मे सहसा संप्रति शापदुःखमाप्ते ।
अहमत्र सुखं कथं वसेयं परमात्मा हि पतिः कुलाङ्गनानाम् ॥ १७३

तपसा च परिक्षयं गतेऽस्मिन्वृजिने तोषमुपागते च शंभौ ।
अचिरात्प्रियसंगमो भवेन्मे न हि किंचित्तपसामसाध्यमस्ति ॥ १७४

इत्थं दृढनिश्चयया पद्मावत्या तया तदा गदिते ।
तन्माता तत्पितरं राजानं कुवलयावली स्माह ॥ १७५

देव तपः कष्टमिदं कुरुतां किं खेद्यतेऽधिकं मिथ्या ।
भवितव्यमेतदस्याः कारणमत्रास्ति वच्मि तच्च शृणु ॥ १७६

देवप्रभाभिधाना सिद्धाधिपकन्यका तपोऽतिमहत् ।
अभिमतभर्तृप्राप्त्यै कुर्वाणा शिवपुरे पुरातिष्ठत् ॥ १७७

तत्र मया सहितैषा द्रष्टुं पद्मावती गता देवम् ।
न त्रपसे पतिहेतोस्तपसा कथमित्युपेत्य तामहसत् ॥ १७८

मूढे हससि शिशुत्वात्त्वमपि तपः क्लेशदायि पतिहेतोः ।
कर्तास्यलमित्येतां साथ रुषा सिद्धकन्यकाभ्यशपत् ॥ १७९

तदवश्यं भोक्तव्यं सिद्धसुताशापकृच्छ्रमनया यत् ।
तत्कोऽन्यथा विधातुं क्षमते तदियं करोतु यत्कुरुते ॥ १८०

इति राज्ञ्या स तयोक्तस्तद्युक्तस्तां कथंचिदामन्त्र्य ।
तनयां चरणावनतां गन्धर्वपतिर्ययौ निजां नगरीम् ॥ १८१

साप्यर्चयन्त्यनुदिनं गगनेन गत्वा सिद्धीश्वरं कमलजादिनिषेवितं तम् ।
स्वप्ने हरेण गदितं गिरिजाश्रमेऽत्र पद्मावती नियमजप्यपरावतस्थे ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके चतुर्थस्तरङ्गः ।

---

पञ्चमस्तरङ्गः ।

एवं पद्मावती यावत्तत्प्राप्त्यै संश्रिता तपः । तावत्स्वनगरं मुक्ताफलकेतुरवाप्य सः ॥
ब्रह्मशापवशासन्नमानुष्यावतरो भयात् । विद्याधरेन्द्रतनयः शरणं शिश्रिये शिवम् ॥
तमर्चयंश्च तद्गर्भगृहाच्छुश्राव भारतीम् । मा भैषीर्न हि ते गर्भवासक्लेशो भविष्यति ॥
मानुष्ये नापि ते दुःखं भावि नापि चिरं स्थितिः । जनिष्यसे राजसुतो महाबलपराक्रमः ॥
तपोधनान्मुनेः कृत्स्नमस्त्रग्राममवाप्स्यसि । मदीयः किंकराख्यश्च गणस्ते भवितानुजः ॥
तत्सहायो रिपूञ्जित्वा कृत्वा कार्यं दिवौकसाम् । कर्तासि खेचरैश्वर्यं पद्मावत्या युतः पुनः ॥
एवं श्रुत्वा गिरं बद्धधृतिः शापफलागमम् । प्रतीक्षमाण इव तं तस्थौ राजसुतोऽथ सः ॥
अत्रान्तरे कथासंधौ पूर्वस्यां नगरं दिशि । आसीद्देवसभं नाम जितदेवसभं श्रिया ॥
तत्र मेरुध्वजो नाम सार्वभौमोऽभवन्नृपः । सहायो देवराजस्य देवासुररणागमे ॥
यस्य लोभो यशस्यासीन्न परस्वे महात्मनः । तैक्ष्ण्यं खड्गे न दण्डे तु भयं पापान्न शत्रुतः ॥
कुटिलत्वं भ्रुवोः कोपे नाशये यस्य चाभवत् । मौर्वीकिणाङ्के पारुष्यं भुजे न वचने पुनः ॥
व्यधाद्युधि न कोषे तु यो दीनारातिरक्षणम् । रतिं च धर्मचर्यासु श्रद्धधे नाङ्गनासु यः ॥
तस्याभूतामुभे चिन्ते भूपतेः सततं हृदि । एका पुत्रो न यत्तस्य तावदेकोऽप्यजायत ॥
द्वितीया चापि यत्पूर्वं देवासुरमहाहवात् । जग्मुः पातालमसुरा हतशेषाः पलाय्य ये ॥
ते निर्गत्य ततो दूरात्सतीर्थायतनाश्रमान् । विनाश्यैवच्छलात्तस्य पातालमसकृद्ययुः ॥
न च तान्प्राप स नृपः पातालव्योमचारिणः । तेजस्वी तेन संतेपे निःसपत्नेऽपि भूतले ॥
एतच्चिन्ताकुलो जातु शक्रप्रहितसद्रथः । देवास्थानं ययौ सोऽत्र चैत्रशुक्लदिनागमे ॥
शक्रस्य वत्सरारम्भे सर्वास्थानं तथाहि तत् । तद्रथेन स याति स्म राजा मेरुध्वजः सदा ॥
तदा तु तत्र दिव्यस्त्रीनृत्तगीताकुलेऽपि सः । संमानितोऽपि शक्रेण निःश्वसन्नास्त भूपतिः ॥
तद्दृष्ट्वा ज्ञातहृदयो देवराजो जगाद तम् । राजञ्जानाम्यहं यत्ते दुःखं तन्मा च भूत्तव ॥
मुक्ताफलध्वजाख्यस्ते शिवांशो जनिता सुतः । एको गणावतारश्च द्वितीयो मलयध्वजः ॥
तपोधनान्मुनेर्विद्याः कामरूपं च वाहनम् । मुक्ताफलध्वजः प्राप्स्यत्यस्त्राणि च सहानुजः ॥
महापाशुपतास्त्रं च पुनः प्राप्य स दुर्जयः । करिष्यति वशे पृथ्वीं पातालं च हतासुरः ॥
त्वं च व्योमचरावेतौ समहास्त्रौ गृहाण मे । वारणं काञ्चनगिरिं तथा काञ्चनशेखरम् ॥
इत्युक्त्वाश्वगजान्दत्त्वा प्रेषितः सोऽथ वज्रिणा । आगान्मेरुध्वजो हृष्टो भूतले नगरं निजम् ॥
ते तु च्छलकृतावद्यास्तस्य पातालसंश्रयात् । खेचरत्वं गतस्यापि प्राप्या नासन्किलासुराः ॥
ततः शक्राच्छ्रुतस्यासौ राजा पुत्रेच्छुराश्रमम् । तपोधनस्य तस्यर्षेर्ययौ दिव्येभवाहनः ॥
तत्राभिगम्य तमृषिं शक्रादेशं निवेद्य तम् । भगवन्नादिशोपायं शीघ्रं मेऽत्रेति सोऽब्रवीत् ॥
स च तस्याचिरेणेष्टसिद्धये मुनिरादिशत् । व्रतमाराधनं शंभोः सभार्यस्य महीभुजः ॥
स तेनाराधयामास व्रतेनोर्वीपतिः शिवम् । तुष्टः स च विभुः स्वप्ने तमेवमवदन्नृपम् ॥
उत्तिष्ठ राजन्प्राप्तासि क्रमेणैवाविलम्बितम् । शेषासुरविनाशाय द्वौ पुत्रावपराजितौ ॥
एतच्छ्रुत्वा प्रबुध्यैव प्रातरुक्त्वा मुनेश्च सः । सभार्यः पारणं कृत्वा राजा स्वपुरमाययौ ॥
तत्र तस्य महादेवी राज्ञी मेरुध्वजस्य सा । ऋतुं दिनैः कतिपयैः प्रतिपेदे सुलक्षणा ॥
तस्याः स गर्भे समभून्मुक्त्वा शापवशेन ताम् । वैद्याधरीं तनुं मुक्ताफलकेतुरतर्कितम् ॥

च तस्य तनुस्तत्र निजे चन्द्रपुरे पुरे । विद्याप्रभावादम्लाना तस्थौ बान्धवरक्षिता ॥ ३५
पि मेरुध्वजस्यात्र राज्ञो देवसभे पुरे । राज्ञी सगर्भा संपद्य नन्दयामास तं पतिम् ॥ ३६
ा यथा च सा राज्ञी जज्ञे गर्भभरालसा । तथा तथा स सोत्साहस्तस्याः पतिरभून्नृपः ॥ ३७
े च समये पुत्रं सा सूते स्मार्कसंनिभम् । बालमेवोग्रमहसं कुमारमिव पार्वती ॥ ३८
ृव चोत्सवः कृत्स्ने न परं वसुधातले । यावन्नभस्तलेऽप्यासीद्देवप्रहतदुन्दुभौ ॥ ३९
प्रमागान्मुनिश्चात्र दिव्यदृक्स तपोधनः । दिष्ट्या वर्धयितुं मेरुध्वजं तं पृथिवीपतिम् ॥ ४०
साकं स मुनिना नाम्ना शक्रोदितेन तम् । मुक्ताफलध्वजं चक्रे पुत्रं राजा कृतोत्सवः ॥ ४१
ो गते मुनौ तस्मिंस्तस्य संवत्सरान्तरे । राज्ञो द्वितीयस्तनयो राज्यां तस्यामजायत ॥ ४२
व नाम्ना स नृपतिश्चकार मलयध्वजम् । तथैव हर्षायातेन तेनैव मुनिना सह ॥ ४३
: संयतकः सोऽपि शापात्तन्मन्त्रिणः सुतः । जज्ञे नाम पिता चास्य महाबुद्धिरिति व्यधात् ॥ ४४
स्तौ सिंहशावाभाववर्धेतां नृपात्मजौ । क्रमेण तेजसा सार्धं मन्त्रिपुत्रेण तेन च ॥ ४५
ष्वथाष्टमात्रेषु वर्षेषु स तपोधनः । एत्योपनयनं चक्रे राजसून्वोस्तयोर्मुनिः ॥ ४६
ौ चान्यानि वर्षाणि विद्यासु च कलासु च । महास्त्रेषु च सर्वेषु विनीयेते स तेन तौ ॥ ४७
ा युवानौ दृष्ट्वा तौ सर्वशस्त्रास्त्रयोधिनौ । पुत्रौ कृतिनमात्मानं मेने मेरुध्वजो नृपः ॥ ४८
तं स्वाश्रमं गन्तुमिच्छन्तं सोऽब्रवीन्मुनिम् । अभीष्टा दक्षिणेदानीं भगवन्गृह्यतामिति ॥ ४९
व दक्षिणाभीष्टा मम त्वत्तो महीपते । असुरान्यज्ञहन्तॄन्यत्सपुत्रो मे हनिष्यसि ॥ ५०
ुचिवांसमवदत्तं महर्षिं स भूपतिः । अत एवाधुना ग्राह्या भगवन्दक्षिणा त्वया ॥ ५१
रभस्व यज्ञं त्वं तद्विज्ञायासुराश्च ते । एष्यन्त्यहं च तत्कालं तत्रैष्यामि सपुत्रकः ॥ ५२
काले हि दैत्यास्ते कृत्वा दोषं छलेन वः । खमुत्पत्य निपत्याब्धौ पातालमगमन्मुने ॥ ५३
नीं त्विन्द्रदत्तौ मे विद्येते खचरौ गजौ । ताभ्यां सह सपुत्रस्तान्प्राप्स्यामि व्योमगानपि ॥ ५४
ुत्वा स मुनिस्तुष्टस्तमुवाच नराधिपम् । तर्हि त्वं यज्ञसंभारं यथायोग्यं कुरुष्व मे ॥ ५५
ाहिग्विश्रुतं गत्वा तत्र यागं समारभे । प्रेषयामि च वो दूतं शिष्यमेतं दृढव्रतम् ॥ ५६
ातकामगोदाममहाबलखगाकृतिम् । मुक्ताफलध्वजस्यास्य भविता सैष वाहनम् ॥ ५७
क्त्वा स मुनिः प्रायात्स्वाश्रमं स च भूपतिः । प्राहिणोत्सर्वसंभारांस्तस्यानुपदमेव तान् ॥ ५८
ध्ये तेन यज्ञे च मिलद्देवर्षिसंसदि । बुद्ध्वा पातालनिलया दानवाः क्षोभमाययुः ॥ ५९
ात्वा स मुनिः शिष्यं प्राहिणोत्तं दृढव्रतम् । शापकल्पितपक्षीन्द्ररूपं देवसभं पुरम् ॥ ६०
प्राप्तं च तं दृष्ट्वा स्मृत्वा मुनिवचश्च सः । सज्जीचकार तौ दिव्यौ राजा मेरुध्वजो गजौ ॥ ६१
ारोह तयोर्मुख्यं स काञ्चनगिरिं स्वयम् । कनीयसे च पुत्राय ददौ काञ्चनशेखरम् ॥ ६२
व्रतखगेन्द्रं च तं स मुक्ताफलध्वजः । आरुरोहात्तदिव्यास्त्रो बन्दिवृन्दाभिवन्दितः ॥ ६३
ते प्रययुर्वीरास्त्रयः खेचरवाहनाः । दत्ताशिषो द्विजवरैः पुरः प्रहितसैनिकाः ॥ ६४
ानां चाश्रमं तेषां स मुनिः प्रीतमानसः । अभेद्याः सर्वशस्त्राणां भूयास्तेति वरं ददौ ॥ ६५
च दानवबलं निहन्तुं यज्ञमाययौ । अभ्यधावच्च तद्दृष्ट्वा मेरुध्वजबलं नदत् ॥ ६६
र्तत ततो युद्धं दैत्यानां मानुषैः सह । दैत्यास्तु मानुषान्खस्था भूतलस्थान्बबाधिरे ॥ ६७
स पक्षिवहनो दैत्यान्मुक्ताफलध्वजः । प्रधाव्य शरवर्षेण चकर्त च ममाथ च ॥ ६८
दृष्ट्वा विहंगस्थं ज्वलन्तमिव तेजसा । तच्छेषाः प्राद्रवन्दैत्यास्ते नारायणशङ्किताः ॥ ६९
भयाच्च पातालं सर्वे त्रैलोक्यमालिने । तत्कालं दैत्यराजाय शशंसुस्ते तथैव तत् ॥ ७०
ाबुद्ध्वा द्रुतं चारैरन्विष्य तमवेत्य च । मुक्ताफलध्वजं मर्त्यं मानुषाभिभवाक्षमी ॥ ७१
ह्य सर्वपातालदानवानसुरेश्वरः । वार्यमाणोऽपि शकुनैर्योद्धुमागात्तमाश्रमम् ॥ ७२
ाफलध्वजाद्याश्च तत्रैवावहिताः स्थिताः । तमभ्यधावन्दृष्ट्वैव सबलं दानवाधिपम् ॥ ७३

ततः प्रवृत्ते भूयोऽत्र मर्त्यासुरमहाहवे । विमानैराययुर्द्रष्टुं रुद्रेन्द्रप्रमुखाः सुराः ॥
मुक्ताफलध्वजश्चात्र तत्क्षणोपस्थितं पुरः । ददर्शालङ्घ्यतेजस्कमस्त्रं पाशुपतं महत् ॥
अतिप्रमाणमुद्वह्निज्वालं त्र्यक्षं चतुर्मुखम् । एकाङ्घ्रिमष्टबाहुं च कल्पान्तानलसंनिभम् ॥
विद्धि मां शंकरादेशादायातं विजयाय ते । इति ब्रुवाणं सोऽभ्यर्च्य राजपुत्रस्तदग्रहीत् ॥
तावच्च गगने तैस्तैरसुरैरस्त्रवृष्टिभिः । मेरुध्वजबलं तान्यदधःस्थितमबाध्यत ॥
ततस्तद्रक्षितुं चित्रयोधी मुक्ताफलध्वजः । शरजालं ददौ मध्ये युयुधे चासुरैः सह ॥
पितृभ्रातृयुतं दृष्ट्वा तं नभश्चरवाहनम् । त्रैलोक्यमाली दैत्येन्द्रः पन्नगास्त्रं मुमोच सः ॥
तस्मान्निर्गच्छतोऽसंख्यान्घोरानाशीविषानहीन् । गरुडैर्गारुडास्त्रोत्थैर्दयन्मलयध्वजः ॥
ततो यद्यत्स दैत्येन्द्रः सपुत्रोऽस्त्रमवासृजत् । मुक्ताफलध्वजस्तत्तन्निरास्थत्तस्य हेलया ॥
अथ क्रुद्धः स देवारिस्तत्पुत्रोऽन्ये च दानवाः । आग्नेयादीनि युगपत्तस्मिन्नस्त्राणि चिक्षिपुः ॥
तानि तस्याग्रतो दृष्ट्वा स्थितं पाशुपतं ज्वलत् । भीतान्यस्त्राणि सर्वाणि विमुखानि क्षणाद्ययुः ॥
ततस्ते यावदिच्छन्ति भीता दैत्याः पलायितुम् । तावत्तदाशयं बुद्ध्वा वीरो मुक्ताफलध्वजः ॥
बबन्ध तेषामूर्ध्वं च चतुर्दिक्कं च तत्क्षणम् । शरजालं स दुर्भेदं वज्रपञ्जरसंनिभम् ॥
तत्रान्तर्भ्रमतस्तांश्च शकुन्तानिव दानवान् । पित्रा भ्रात्रा च सहितः स जघान शितैः शरैः ॥
निपेतुश्च कराः पादाः शरीराणि शिरांसि च । छिन्नानि तेषां दैत्यानामवहंश्चास्रनिम्नगाः ॥ ८८
साधुवादे ततो दत्ते पुष्पवर्षानुगे सुरैः । मोहनास्त्रं ददौ तेषां द्विषां मुक्ताफलध्वजः ॥ ८९
तेन संमोहितान्भूमौ पतितांस्तान्सराजकान् । असुरान्वारुणास्त्रेण पाशबद्धांश्चकार सः ॥ ९०
तपोधनोऽथ सोऽवादीन्मेरुध्वजनृपं मुनिः । न वध्यमासुरं सैन्यं हतशेषमिदं खलु ॥ ९१
स्वीकृतेन ह्यनेनैव प्रवेक्ष्यध्वं रसातलम् । दैत्येन्द्रस्तु सपुत्रोऽयं बद्ध्वा नीत्वा समन्त्रिकः ॥ ९२
महासुरैर्दुष्टनागैर्युक्तो मुख्यैश्च राक्षसैः । स्थाप्यो देवसभासन्ने श्वेतशैलगुहान्तरे ॥ ९३
इत्युक्तो मुनिना दैत्ययोधान्मेरुध्वजोऽब्रवीत् । मा भैष्ट यूयं नास्माभिर्वध्या सभ्रातृकस्य तु ॥ ९४
मुक्ताफलध्वजस्यास्य वर्तध्वं शासनेऽधुना । इत्युक्ता दानवा राज्ञा हृष्टास्तत्प्रतिपेदिरे ॥ ९५
ततः स राजा तं दैत्यराजं त्रैलोक्यमालिनम् । पुत्रादिभिस्तैः सहितं श्वेतशैलमनाययत् ॥ ९६
तद्गुहाभ्यन्तरे तं च स्थापयामास संयतम् । भूरिशूरबलोपेतप्रधानामात्यरक्षितम् ॥ ९७
ततो निवृत्ते सङ्ग्रामे मुक्तमन्दारवृष्टिषु । वैमानिकेषु यातेषु प्रवृत्ते जगदुत्सवे ॥ ९८
स तत्र पुत्रौ वक्ति स्म राजा मेरुध्वजो जयी । इहैव यज्ञरक्षार्थमहं तिष्ठामि संप्रति ॥ ९९
युवां प्रयातं पातालमेतैः स्वैः सैनिकैः सह । प्राप्तदैत्यविमानौघैः शेषासुरबलेन च ॥ १००
आश्वास्य स्थापयित्वा च वशे पातालवासिनः । प्रधानाधिष्ठितान्कृत्वा स्वीकृत्येहागमिष्यथः ॥ १०१
एतच्छ्रुत्वा तथेत्याशु दिव्यकामगवाहनः । मुक्ताफलध्वजो वीरः स चापि मलयध्वजः ॥ १०२
रसातलं विविशतुः ससैन्यौ भ्रातरावुभौ । सह दानवसैन्येन प्रणतेनाग्रयायिना ॥ १०३
हत्वा च रक्षिणः स्थानस्थानेषु परिपन्थिनः । अदातामत्र तौ शेषजनस्याभयडिण्डिमम् ॥ १०४
विश्वस्तप्रणते चैतौ जने सप्त रसातलान् । स्वीचक्रतुः पुरशतैर्नानारत्नमयैर्युतान् ॥ १०५
बुभुजाते च तान्रम्यानुद्यानैः सर्वकामदैः । दिव्यासवभृतानेकरत्नसोपानवापिकैः ॥ १०६
तत्राद्भुताकृती तौ च ददृशुर्दानवाङ्गनाः । तत्कन्याश्च तरुण्यन्तर्मायाच्छादितविग्रहाः ॥ १०७
आरेभे च तदा तत्र भर्तुर्बद्धस्य शर्मणे । तपः स्वयंप्रभा नाम भार्या त्रैलोक्यमालिनः ॥ १०८
तस्याः सुते च त्रैलोक्यप्रभात्रिभुवनप्रभे । आरेभाते तपस्तद्वत्कुमार्यौ श्रेयसे पितुः ॥ १०९
तौ च राजसुतौ तत्र पाताले सकलं जनम् । लब्धप्रशमनस्वस्थं संमान्य विविधैः प्रियैः ॥ ११०
स्थापयित्वा च सङ्ग्रामसिंहादीनधिकारिणः । तपोवनाश्रमपदं पितुः पार्श्वमुपेयतुः ॥ १११
तावत्तत्र मुनेर्यज्ञः स समाप्तिमुपाययौ । गन्तुं प्रारेभिरे देवाः स्वधिष्ण्यान्यृषयस्तथा ॥ ११२

मेरुध्वजः शक्रं परितुष्टं व्यजिज्ञपत् । आगम्यतां मन्नगरं देव तुष्टोऽसि चेन्मयि ॥ ११३
त्वा तत्प्रियायागान्मुनिमामन्त्र्य वासवः । राज्ञा तेन सपुत्रेण सह देवसभं पुरम् ॥ ११४
चोपाचरत्तं स राजा लोकद्वयेश्वरः । तथा शक्रं यथा दिव्यं सुखं विसरति स्म सः ॥ ११५
प्रीतः स शक्रोऽपि तं सपुत्रं महीपतिम् । दिव्यात्मवाहनारूढं निनाय स्वं त्रिविष्टपम् ॥ ११६
नारदरम्भादिसंगीतसुखसुन्दरे । स विश्रमय्य तं मेरुध्वजं समलयध्वजम् ॥ ११७
फलध्वजं चेन्द्रः पारिजातमयीः स्रजः । दत्त्वा सदिव्यमुकुटाः संमान्य प्राहिणोद्गृहम् ॥ ११८
ागत्यात्र भूलोके पाताले च गतागतम् । कुर्वाणाश्चक्रिरे राज्यं नृदेवा लोकयोर्द्वयोः ॥ ११९
मेरुध्वजो मुक्ताफलध्वजमुवाच सः । विजिताः शत्रवः पुत्र युवानौ भ्रातरौ युवाम् ॥ १२०
ाना राजकन्याश्च मया ताश्च गवेषिताः । वर्तन्ते प्राप्तकालस्तत्क्रियतां दारसंग्रहः ॥ १२१
पित्रोदितेऽवादीत्सोऽथ मुक्ताफलध्वजः । न मे परिणये तात मनस्तावत्प्रवर्तते ॥ १२२
तपश्चरिष्यामि संप्रत्याराधितुं हरम् । एष वत्सस्तु कुरुतां विवाहं मलयध्वजः ॥ १२३
त्वैव मलयध्वजस्तं सोऽनुजोऽब्रवीत् । विवाहो मम युक्तः किमार्य त्वय्यपरिग्रहे ॥ १२४
वा त्वय्यराज्यस्थे तव मार्गानुगो ह्यहम् । इत्युक्ते तेन मलयध्वजेनोवाच भूपतिः ॥ १२५
ाजस्तं तनयं ज्येष्ठं मुक्ताफलध्वजम् । युक्तमेवामुना तावदनुजेन तवोदितम् ॥ १२६
युक्तं वदस्येतन्नव एवात्र यौवने । को नाम कालस्तपसो भोगकालो ह्ययं तव ॥ १२७
लोचितः पुत्र मुच्यतामेष दुर्ग्रहः । इति तेनोच्यमानोऽपि राज्ञा ज्येष्ठः सुतोऽत्र च ॥ १२८
चक्रे यदा संप्रत्युद्वाहं निश्चयेन सः । तदा स नृपतिस्तूष्णीं तस्थौ कालं प्रतीक्षितुम् ॥ १२९
तरे च पाताले भार्या त्रैलोक्यमालिनः । स्वयंप्रभामूचतुस्तां तपःस्थे ते स्वकन्यके ॥ १३०
ोरम्ब सप्ताष्टवर्षयोः संयतः पिता । राज्यभ्रंशश्च संवृत्तः कस्मादकृतपुण्ययोः ॥ १३१
वर्षमेतच्च तपस्यन्त्योर्न नौ हरः । प्रसीदति न तातोऽयं मुच्यतेऽद्यापि बन्धनात् ॥ १३२
ावयोर्न स्याद्रिपोः परिभवोऽथवा । निर्लक्षणामिमां तावदनले जुहुवस्तनुम् ॥ १३३
। दुहितृभ्यां सा जगादैवं स्वयंप्रभा । पुत्र्यौ प्रतीक्ष्यतां तावदुदयो ह्यस्ति नः पुनः ॥ १३४
ातां हि मां स्वप्ने जाने देवोऽब्रवीच्छिवः । वत्से कुर्या धृतिं राज्यं पुनः प्राप्स्यति ते पतिः ॥ १३५
लध्वजश्चैष तथैव मलयध्वजः । दुहित्रोस्तव भर्तारौ राजपुत्रौ भविष्यतः ॥ १३६
विति मा चैतौ विज्ञासीरेतयोर्यतः । एको विद्याधरवरो द्वितीयो मामको गणः ॥ १३७
द्वेश्वरेणाहं प्रबुद्धा रजनीक्षये । इत्याशयैतया चैष सोढः क्लेशो महान्मया ॥ १३८
ाविद्याम्येतदर्थं युष्मत्पितुः प्रभोः । तदिच्छया यतिष्ये च युष्मदुद्वाहसिद्धये ॥ १३९
भ्रास्य सा राज्ञी कन्यके स्वे स्वयंप्रभा । उवाचेन्दुमतीं नाम वृद्धामन्तःपुरस्त्रियम् ॥ १४०
त्रस्य निकटं श्वेतशैलगुहां व्रज । निपत्य पादयोस्तं च विज्ञापय गिरा मम ॥ १४१
ास्मि महाराज धात्रान्येनैव दारुणा । त्वद्वियोगाग्निनाद्यापि न दह्ये ज्वलतापि या ॥ १४२
तु न मया त्यक्तः पुनस्त्वद्दर्शनाशया । इत्युक्त्वा मामकं शार्वं स्वप्नादेशं निवेदयेः ॥ १४३
न्याविवाहार्थं पृच्छेस्तं यच्च वक्ष्यति । तत्त्वयागत्य मे वाच्यं विधास्येऽहं तथाविधम् ॥ १४४
ेन्दुमतीं तां सा प्रैषयत्सापि निर्गता । पातालात्प्राप तच्छैलगुहाद्वारं सुरक्षितम् ॥ १४५
ऽभ्यर्थ्य तत्रान्तः प्रविश्यालोक्य संयतम् । त्रैलोक्यमालिनं तं सा साश्रुर्जग्राह पादयोः ॥ १४६
ाशला तच्च शनैस्तस्मै शशंस सा । कृत्स्नं स्वभार्यासंदेशं ततो राजा जगाद सः ॥ १४७
हो राज्यलाभो नः शर्वेणास्तु तथैव सः । मेरुध्वजस्यात्मजयोः कन्यादाने तु का कथा ॥ १४८
विपर्यय न तु दद्यां निजात्मजे । शत्रुभ्यां मानुषाभ्यां च संयतः सन्नुपायनम् ॥ १४९
ान्दुमती राज्ञा प्रेषिता तेन सा ततः । एत्य स्वयंप्रभायै तत्तत्पत्यै तद्वचोऽभ्यधात् ॥ १५०
तस्ते त्रैलोक्यप्रभात्रिभुवनप्रभे । दैत्येन्द्रकन्ये जननीमूचतुस्तां स्वयंप्रभाम् ॥ १५१

आवयोर्यौवनभयादग्निरेवाधुना गतिः । तदम्बास्यां चतुर्दश्यां तत्प्रवेशं विदध्वहे ॥
कृतनिश्चययोरेवं तयोः साप्यकरोत्तदा । निश्चयं मरणायैव तन्माता सपरिच्छदा ॥
प्राप्तायां च चतुर्दश्यां ताः पापरिपुनामनि । तीर्थे सर्वाश्चिताश्चक्रुरार्चित्वा हाटकेश्वरम् ॥
तावन्मेरुध्वजो राजा तिथौ तस्यां सपुत्रकः । सभार्यश्चाययौ तावद्धाटकेश्वरमर्चितुम् ॥
स पापरिपुतीर्थे तत्स्नानार्थं सानुगो व्रजन् । दूराद्ददर्श तत्तीरे वनान्तर्धूमसुद्गतम् ॥
धूमोद्गमः कुतोऽत्रेति पृच्छन्तं तं च भूपतिम् । ऊचुः सङ्ग्रामसिंहाद्याः पातालाधिकृता निजाः ॥
त्रैलोक्यमालिनो भार्या महाराज स्वयंप्रभा । दुहितृभ्यां कुमारीभ्यां सहात्र तपसि स्थिता ॥
नूनं ता अग्निकार्यादि किंचिदत्राद्य कुर्वते । यदि वातितपःखिन्नाः कुर्वन्त्यग्निप्रवेशनम् ॥
तच्छ्रुत्वा सह पुत्राभ्यां पत्न्या तैश्चाधिकारिभिः । द्रष्टुं स राजा तत्रागान्निषिद्धान्यपरिच्छदः ॥
ददर्श चात्र प्रच्छन्नस्थितस्ते दैत्यकन्यके । समातृके पूजयन्त्यौ सुसमिद्धं चितानलम् ॥
मुखलावण्यसंदोहनिःस्यन्दैर्दिक्षु सर्वतः । चन्द्रबिम्बशतानीव रचयन्त्यौ रसातले ॥
लोलहाराम्बुपूराभ्यां कामस्येवाभिषेचनम् । कुचकाञ्चनकुम्भाभ्यां कुर्वत्यौ त्रिजगज्जये ॥
बिभ्राणे जघनाभोगं विपुलं बद्धमेखलम् । नक्षत्रमालाङ्कमिव स्मरद्विपशिरःस्थलम् ॥
वहन्त्यौ केशपाशौ च पन्नगाविव निर्मितौ । धात्रा लावण्यसर्वस्वनिधानं रक्षितुं तयोः ॥
दृष्ट्वा ते चिन्तयामास स राजा जातविस्मयः । अहो विश्वसृजः सृष्टिर्लसन्नवनवाद्भुता ॥
यदेतयोर्न रम्भापि नोर्वशी न तिलोत्तमा । रूपे भजति तुल्यत्वमसुराधिपकन्ययोः ॥
इति चिन्तयतस्तस्य राज्ञः सा दैत्यकन्यका । ज्येष्ठार्चयित्वा त्रैलोक्यप्रभा वह्निं व्यजिज्ञपत् ॥
उक्तः स्वप्नहरादेशो यतः प्रभृति मेऽम्बया । ततः प्रभृति बद्धैव भर्तृबुद्धिर्यतो मया ॥
तस्मिन्गुणनिधौ राजपुत्रे मुक्ताफलध्वजे । तत्स एव पतिर्भूयाद्भगवन्मेऽन्यजन्मनि ॥
इह जन्मनि तातेन संयतस्थेन मानिना । दित्सिताप्यम्बया तस्मै दातुं नाङ्गीकृतास्मि यत् ॥
तच्छ्रुत्वा तद्वदेवात्र सापि त्रिभुवनप्रभा । वव्रे हुताशान्मलयध्वजं जन्मान्तरे पतिम् ॥
ततो मेरुध्वजो राजा स तच्छ्रवणहर्षुलः । तद्भार्या च महादेवी परस्परमवोचताम् ॥
प्राप्नुयातामिमे भार्ये यद्यस्मत्तनयाविमौ । तदेताभ्यामवाप्तं स्याल्लोकद्वयजयात्फलम् ॥
तद्यावदस्मिन्ननले नात्मानं क्षिपतः क्षणम् । तावत्किं नोपसृत्यैते वारयामः समातृके ॥
एवं देव्या सहालोच्य राजावोचदुपेत्य ताः । मा कार्ष्ट साहसं दुःखं शमयिष्याम्यहं हि वः ॥
श्रुत्वैतच्छ्रोत्रपीयूषवर्षाभं भूपतेर्वचः । दृष्ट्वा च तं ताः सकलाः प्रणेमुरसुराङ्गनाः ॥
पश्यन्त्योऽपि वयं पूर्वं मायाछन्ना न लक्षिताः । लोकद्वयेश्वरेणेह दृष्टाः स्मोऽद्य पुनस्त्वया ॥
त्वद्दृष्टानां च दुःखान्तो भवत्येवाचिरेण नः । किं पुनः स्वगिरा दत्ते देवेनाभ्यर्थिते वरे ॥
तद्गृहीतार्घ्यपाद्यादि कृतासनपरिग्रहाः । भवन्तो हि जगत्पूज्या अयं चास्माकमाश्रमः ॥
इति स्वयंप्रभामुक्तवतीमाह हसन्नृपः । जामातृभ्यां त्वयैताभ्यां पाद्यार्घ्यं दीयतामिति ॥
ततः स्वयंप्रभावादीत्तदेताभ्यां वृषध्वजः । देवो दापयितार्घादि युष्माभिस्त्वद्य गृह्यताम् ॥
मेरुध्वजो जगादाथ सर्वमात्तमिदं मया । यूयं च मरणोद्योगान्निवर्तध्वमितोऽधुना ॥
प्रविश्य तिष्ठतैकस्मिन्स्वपुरे सर्वकामदे । ततोऽहमेव ज्ञास्यामि यथा वः कुशलं भवेत् ॥
इत्युक्तवन्तं राजानं सा जगाद स्वयंप्रभा । देवादेशान्निवृत्ताः स्मः शरीरत्यागनिश्चयात् ॥
कारास्थे तु प्रभौ युक्ता कथं नः स्वगृहस्थितिः । तदिहैव वयं तावत्तिष्ठामो देव संप्रति ॥
यावद्देवः स्वयं दत्तं वरं नः पालयिष्यति । ससुतामात्यमस्माकं मोचयिष्यति च प्रभुम् ॥
मुक्तस्त्वदधिकारी सन्स च राज्यं करिष्यति । अर्पयिष्यति राज्यं च तुभ्यमेव त्वदिच्छया ॥
समयप्रतिबन्धं च स करिष्यति तादृशम् । अन्तरस्था वयं चात्र सह पातालवासिभिः ॥
पातालेभ्योऽस्मदीयानि रत्नानि स्वीकुरुष्व च । एवमुक्तवतीं तां स राजा मेरुध्वजोऽब्रवीत् ॥

स्वाम्यहमेवैतत्स्मर्तव्यं स्ववचस्तु वः । इत्युक्त्वा स नृपः स्नात्वा हाटकेशमपूजयत् ॥ १९१
ाजसुते ते च तयोरेवं स्वदृष्टयोः । तत्पुत्रयोस्तदेकाग्रगतचित्ते बभूवतुः ॥ १९२

अथ स रसातलनिलयैर्निखिलैस्त्रैलोक्यमालिनो मुक्तिम् ।
प्रणिपत्य याच्यमानो राजा मेरुध्वजः सुकृती ॥ १९३

छत्रैः स्वयशःशुभ्रैः स्थगयन्नाशाः सदारसुतभृत्यः ।
निर्गत्यासुरलोकात्तस्मादागान्निजं नगरम् ॥ १९४

तत्रास्य पुत्रो मलयध्वजस्तां कनीयसीं दानवराजपुत्रीम् ।
ध्यायन्ननिद्रोऽपि निमीलिताक्षः स्मरज्वरार्तो रजनीं निनाय ॥ १९५

स धैर्यजलधिस्तु तामपि विचिन्त्य मुक्ताफल-
ध्वजोऽसुरपतेः सुतां दृढनिबद्धभावां युवा ।
मुनीन्द्रमनसामपि स्मरविकारदां ज्यायसीं
पुरार्थितवरो मुनेर्न खलु चुक्षुभे चेतसा ॥ १९६

मेरुध्वजस्तु तमवेत्य सुतं निषिद्धदारक्रियं स्मरवशं मलयध्वजं च ।
कन्याप्रदानविमुखं च महासुरं तमासीदुपायघटनाकुलचित्तवृत्तिः ॥ १९७

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके पञ्चमस्तरङ्गः ।

---

षष्ठस्तरङ्गः ।

ारुध्वजो राजा तं तथा मलयध्वजम् । पश्यन्स्मरज्वराक्रान्तं देवीं स्वामेवमब्रवीत् ॥ १
दृष्टे त्रैलोक्यमालिनस्ते सुते न चेत् । भार्ये मत्पुत्रयोः स्यातां तन्मया किं कृतं भवेत् ॥ २
कनिष्ठां च विना पुत्रो मे मलयध्वजः । लज्जानिगूढकामाग्निः पुटपाकेन पच्यते ॥ ३
च मयाद्यापि मोक्षस्त्रैलोक्यमालिनः । प्रतिश्रुतोऽपि तत्पत्न्यै सत्वरं न विधीयते ॥ ४
क्तो दुहितरावसुरत्वाभिमानतः । पुत्राभ्यां मानुषाभ्यां मे स दद्यान्नहि जातुचित् ॥ ५
र्थं सान्त्वेन ब्रूमस्तस्याधुना वरम् । इत्यालोच्य समं देव्या स प्रतीहारमादिशत् ॥ ६
ठगुहां गत्वा प्रीत्या मद्वचनेन तम् । त्रैलोक्यमालिनं ब्रूहि दैत्येन्द्रं संयतस्थितम् ॥ ७
ादिह क्लिष्टा यूयं दैत्यपते चिरम् । तदिदानीं मम वचः कृत्वा क्लेशं शमं नय ॥ ८
ष्यानुरागिण्यौ मत्सुताभ्यां स्वकन्यके । इतो मुक्तः स्वराज्यं च विहितप्रत्ययः कुरु ॥ ९
त्रा प्रेषितो राज्ञा गत्वा तत्र गुहान्तरे । दैत्येन्द्रायाब्रवीत्तस्मै क्षत्ता राजवचः स तत् ॥ १०
भ्यामहं कन्ये न दास्यामीति तेन च । प्रत्युक्तः स तथैवेत्य क्षत्ता राजानमभ्यधात् ॥ ११
यं विचिन्वाने तस्मिन्मेरुध्वजे नृपे । दिवसेषु च यातेषु विज्ञाततदुदन्तया ॥ १२
त्प्रेषिता भूयः सा स्वयंप्रभया तया । आगादिन्दुमती तत्र दूती संदेशहारिणी ॥ १३
गत्य प्रतीहार्या मुखेनावेदितात्मका । प्रविवेश महादेव्या निकटं तत्कृतादरा ॥ १४
प्राब्रवीत्तां च देवि देवी स्वयंप्रभा । विज्ञापयति किं वस्तद्विस्मृतं वचनं निजम् ॥ १५
: कुलशैलाश्च भवन्ति प्रलयेऽन्यथा । भवादृशां तु वचनं न तदाप्यन्यथा भवेत् ॥ १६
ागतं नास्मत्स्वामिना कन्यकार्पणम् । तत्स बद्धो दुहितरौ कथं दद्यादुपायनम् ॥ १७
त्रेणोपकाराय युष्माभिश्चेत्स मुच्यते । तन्निश्चितं सुतादानात्कुर्याद्वः प्रत्युपक्रियाम् ॥ १८
'पि त्यजेत्प्राणानन्यथा सा स्वयंप्रभा । तेन न स्यात्सुताप्राप्तिर्न च वः सत्यपालनम् ॥ १९
व तथा देवि समयप्रत्ययादिना । यथा राजा विमुञ्चेत्तं प्रभुं नः सर्वसिद्धये ॥ २०
ाविसृष्टं च गृहाणेदं विभूषणम् । दिव्यैस्तैस्तैश्चितं रत्नैः खेचरत्वादिदायिभिः ॥ २१
ावतीमिन्दुमतीं राज्ञी जगाद सा । दुःखितायाः कथं तस्या मयैतद्गृह्यतामिति ॥ २२

अगृहीते त्वयैतस्मिन्नस्माकमधृतिर्भवेत् । गृहीते तु निजं दुःखं शान्तं मन्यामहे वय
इतीन्दुमत्या राज्ञी सा तया यत्नेन बोधिता । आश्वासहेतोस्तस्यास्तद्रत्नाभरणमग्रहीत
इहैव तावत्तिष्ठार्ये राजा यावदुपैष्यति । इत्युक्त्वा तां च तत्रैव राज्ञी स्थापयति स्म
तावत्स राजा तत्रागादुत्थायेन्दुमती च सा । राज्ञीनिवेदिता भूपं प्रणनाम तदाहता
स्वयंप्रभावितीर्णं च चूडारत्नं समर्पयत् । विषरक्षोजरारोगहरं तस्मै नृपाय सा ॥
स्वसत्यमनुपाल्यैतन्नग्रहीष्यामीति वादिनम् । नृपमिन्दुमती सा तमेवं प्रौढा व्यजिज्ञ
देवेन प्रतिपन्नं चेत्सत्यं पालितमेव तत् । अस्मिन्गृहीते त्वस्माकमाश्वासः सुतरां भवे
एवं तयोक्ते साधूक्तमित्युक्त्वैवास्य भूपतेः । चूडारत्नं तदादाय राज्ञी मूर्ध्नि बबन्ध
ततः स्वयंप्रभावाक्यं यथा राज्ञ्यै निवेदितम् । तथा शशंस सा राज्ञे तस्मायिन्दुमत
ततो राज्ञ्या तथैवोक्तोऽवादीदिन्दुमतीं नृपः । इहैवाद्य प्रतीक्षस्व प्रातर्वक्ष्याम्यहं त
इत्युक्त्वा तां निशां नीत्वा प्रातराहूय मन्त्रिणः । स तामिन्दुमतीमेवं राजा मेरुध्वज
एभिर्मन्मन्त्रिभिः साकं राज्ञे त्रैलोक्यमालिने । आवेद्य गत्वा पातालादानयासुरयोषि
स्वयंप्रभाद्याः सर्वाश्च मुख्यान्पातालवासिनः । हाटकेश्वरसंबन्धि मुद्रितं कोषवारि
अस्मद्वशे वर्तितव्यं नित्यं त्रैलोक्यमालिना । सभृत्यबन्धुना भाव्यं नागैश्चासस्वधा
अत्रार्थे भर्तृचरणान्स्पृष्ट्वा मन्मन्त्रिसंनिधौ । स्वयंप्रभाद्याः शपथैरन्तरस्था भवन्तु न
पातालवासिनः सन्तु तद्वत्प्रतिभुवोऽखिलाः । अपत्यानि च सर्वेऽपि स्थापयन्तु सर
सराजकाश्च लिखितं कुर्वन्तु निखिला अपि । हाटकेश्वरसर्वाङ्गवारिकोषं पिबन्तु च
ततो मोक्ष्याम्यहं कारागृहात्त्रैलोक्यमालिनम् । इत्युक्त्वेन्दुमतीं राजा सामात्यां वि
सा गत्वा मन्त्रिसहिता प्रोच्य त्रैलोक्यमालिने । तच्छ्रद्धिता तथैवेन्दुमती पातालम
स्वयंप्रभादीनानीय कोषवारि च सा ततः । राजोक्तं तदमात्याग्रे सर्वान्सर्वमकारय
विहितप्रत्ययं तं च मुमोच सपरिच्छदम् । त्रैलोक्यमालिनं मेरुध्वजः कारागृहान्नृप
आनीय च गृहं सम्यक्संमान्य सपरिग्रहम् । स्वीकृतासुररत्नौघः स्वराज्ये विससर्ज
सोऽपि त्रैलोक्यमाली स्वं पुनरेत्य रसातलम् । प्राप्तराज्यो ननन्द स्वैः सहितो भृत
मेरुध्वजश्च पातालप्रभवैरर्थसंचयैः । पृथिवीं पूरयामास प्रावृड्घन इवाम्बुभिः ॥
अथ त्रैलोक्यमाली स संमन्त्र्य निजभार्यया । कन्यारत्नद्वयं दित्सुस्तत्सुताभ्यां स्व
नृपं मेरुध्वजं नेतुं तं निमन्त्र्य सबान्धवम् । स्मृतोपकारो दैत्येन्द्रः पातालात्स्वयम
आगत्य तं च राजानं कृतातिथ्यमुवाच सः । युष्माभिर्नातिनिर्वृत्या तदा दृष्टं रस
परिचर्यापरेष्वस्मास्विदानीमेत्य दृश्यताम् । कन्यारत्ने मदीये च गृह्येतां सुतयोः
इत्युक्तेऽसुरराजेन तेन मेरुध्वजोऽथ सः । तत्रैवानाययामास भार्यां पुत्रौ च ताव
तेभ्योऽसुरेन्द्रवाक्यं तत्कन्यादानान्तमब्रवीत् । ततो जगाद तं ज्येष्ठः पुत्रो मुक्ताफ
विवाहं न करिष्येऽहमनाराधितशंकरः । उक्तं मया प्राक्क्षन्तव्यमेतस्मान्मेऽपराध
मयि प्रयाते भवनं करोतु मलयध्वजः । विना पातालकन्यां तां नास्त्येवास्य हि
तच्छ्रुत्वा स कनीयांस्तमवादीन्न त्वयि स्थिते । अयशस्यमधर्म्यं च करोम्यार्याहमी
ततो मेरुध्वजे राज्ञि प्रयत्नाद्बोधयत्यपि । मुक्ताफलध्वजो नैच्छत्स्वविवाहक्रियां यद
तदा त्रैलोक्यमाली तं खिन्नमामन्त्र्य भूपतिम् । ययौ स्वमेव पातालं सानुगः स
तत्र वृत्तान्तमावेद्य भार्यां पुत्रं च सोऽभ्यधात् । न्यक्कारैकपरोऽस्माकं कीदृशः
मानुषौ नाद्य गृह्णीतः कन्ये मे प्रार्थितावपि । पूर्वं ये प्रार्थिते ताभ्यां दातुं नाङ्गी
तच्छ्रुत्वा तौ जगदतुः को जानाति कथं विधेः । चेतस्येतत्स्थितं किं हि शांभवं स्
इत्यादि तेषां वदतां बुद्ध्वा ते तत्र चक्रतुः । कन्ये प्रतिज्ञां त्रैलोक्यप्रभात्रिभुवनप्र

ाहं निराहारस्थितयोरावयोर्यदि । देवो विवाहसंपत्तिप्रसादं न करिष्यति ॥ ६२
कार्यमावाभ्यां सहैवाग्निप्रवेशनम् । न तु धार्यं निकारार्थं वृत्त्यर्थं वा शरीरकम् ॥ ६३
नेयस्य देवस्य पुरतस्तस्थतुश्च ते । निराहारे जपध्यानपरे दैत्येन्द्रकन्यके ॥ ६४
ा च तयोर्माता पिता च दितिजेश्वरः । तथैवात्र निराहारावास्तां दुहितृवत्सलौ ॥ ६५
स्वयंप्रभा सा तां तन्मातेन्दुमतीं पुनः । मेरुध्वजमहादेव्यै वक्तुं तत्प्राहिणोद्रुतम् ॥ ६६
गत्वा तदाख्यातं स्वस्वामिगृहसंकटम् । राज्ञ्यै तस्यै विवेदाथ राजा मेरुध्वजोऽपि तत् ॥ ६७
दनुरोधात्तौ जहतुस्तत्र दंपती । आहारं तौ च तत्पुत्रौ पितृभक्त्यनुरोधिनौ ॥ ६८
ोकद्वये राजगृहयोः संकटस्थयोः । मुक्ताफलध्वजोऽनश्नन्ध्यातवाञ्शरणं शिवम् ॥ ६९
च गते राजपुत्रः प्रातः प्रबुध्य सः । पूर्वं संयतकं मित्रं महाबुद्धिमभाषत ॥ ७०
स्वप्नेऽद्य जानेऽहमारूढो वाहने निजे । तपोधनमुनिप्रत्ते कामरूपे मनोगतौ ॥ ७१
ातामुपगते निर्वेदान्मेरुपार्श्वगम् । गौरीशायतनं दिव्यमतिदूरमितो गतः ॥ ७२
श्यमहं कांचिद्दिव्यकन्यां तपःकृशाम् । तामुद्दिश्याब्रवीन्मां च जटाभृत्पुरुषो हसन् ॥ ७३
ाः कन्यकायास्त्वं पलाय्यैवमिहागतः । इहैषा च द्वितीया ते संप्राप्ता पश्य तिष्ठति ॥ ७४
ण्र्य वचस्तस्य तत्कन्यारूपदर्शने । अतृप्त एव सहसा प्रबुद्धोऽस्मि निशाक्षये ॥ ७५
तत्रैव गच्छामि प्राप्तुं तां दिव्यकन्यकाम् । प्राप्स्यामि चेन्न तां तत्र प्रवेक्ष्यामि हुताशनम् ॥ ७६
ोपनतां हित्वा दैत्यकन्यां मनो मम । रज्यते स्वप्नदृष्टायामस्यां किं क्रियते विधेः ॥ ७७
च तत्र यातस्य निश्चितं शुभमस्ति मे । इत्युक्त्वा तत्स सस्मार मुनिदत्तं स्ववाहनम् ७८
श्च विमानत्वं प्राप्तं सख्या समं च सः । मनःसंकल्पितस्थानप्रापकं कामरूपकृत् ॥ ७९
फलध्वजः प्रायाद्दिव्यं गौरीशधाम तत् । प्राप्य तच्च यथा स्वप्ने दृष्टं पश्यञ्जहर्ष सः ॥ ८०
ावृते तत्र स सिद्धोदकनामनि । तीर्थे स्नानादिकं कर्तुं सख्यैकपरिचारकः ॥ ८१
काप्यविज्ञातगतं बुद्ध्वा स तत्पिता । राजा मेरुध्वजो भार्यासुतादिसहितस्तदा ॥ ८२
सक्कृशो दुःखक्षोभं स्वपुरगो दधौ । तथा तदैव पातालेऽप्येतत्सर्वमबुध्यत ॥ ८३
ैलोक्यमाली स गृहीत्वा ते स्वकन्यके । सोपवासः सभार्यादिस्तत्रैवागान्नृपान्तिकम् ॥ ८४
र्यां गतः सोऽद्य नूनं काप्यर्चितुं हरम् । तत्प्रतीक्षामहे तावदिहैवैतद्दिनं वयम् ॥ ८५
त्र स तत्रैव यास्यामो नागतो यदि । ततो यद्भवतीत्येव सर्वे ते निश्चयं व्यधुः ॥ ८६
त्रे मेघवने तस्मिन्गौर्याश्रमे स्थिता । सापि पद्मावती तस्मिन्दिनेऽवादीन्निजाः सखीः ॥ ८७
स्वप्नेऽद्य जाने मां सिद्धीश्वरगतां पुमान् । जटाधरोऽब्रवीत्कोऽपि देवागाराद्विनिर्गतः ॥ ८८
समाप्तमासन्नो भर्त्रा ते पुत्रि संगमः । इत्येवोक्त्वा गतेऽस्मिन्मे गते निद्रानिशे अपि ॥ ८९
तत्र गच्छाम इत्युक्त्वा सा जगाम तत् । मेरुपार्श्वस्थितं पद्मावती गौरीशकेतनम् ॥ ९०
सिद्धोदके स्नान्तं दूरान्मुक्ताफलध्वजम् । दृष्ट्वा सविस्मया सा तं स्वसखीरेवमब्रवीत् ॥ ९१
मे प्रियस्यार्य पुमान्पश्यत कीदृशः । आश्चर्यं किं स एव स्यान्नास्त्येतन्मानुषो ह्ययम् ॥ ९२
ा तं च दृष्ट्वा ताः सख्यस्तामेवमब्रुवन् । न केवलं सुसदृशो देव्ययं प्रेयसस्तव ॥ ९३
तद्वयस्योऽयं त्वत्कान्तसुहृदः किल । तस्य संयतकस्यापि पश्य सादृश्यमश्रुते ॥ ९४
ा वर्णितं देवि यथाद्य स्वप्नदर्शनम् । तथा जानीमहे व्यक्तं शापान्मानुषतां गतौ ॥ ९५
ाविहानीतावीश्वरेण स्वयुक्तितः । मानुषागमनं देवभूमावस्यां कुतोऽन्यथा ॥ ९६
खीभिरुक्ता सा पद्मावत्यर्चितेश्वरा । तस्थौ देवान्तिके छन्ना तं जिज्ञासितुमुत्सुका ॥ ९७
ात्वार्चितुं देवं तत्र मुक्ताफलध्वजः । आगतः सर्वतो वीक्ष्य महाबुद्धिमुवाच तम् ॥ ९८
ायतनं चित्रमिदं स्वप्ने यदीक्षितम् । लिङ्गान्तर्दृश्यगौरीशमूर्ति रत्नमयं मया ॥ ९९
चैतान्पश्यामि स्वप्नदृष्टानिहाधुना । प्रदेशान्दिव्यविहगस्फुरद्रत्नप्रभद्रुमान् ॥ १००

तत्कालदृष्टां दिव्यां तु कन्यां पश्यामि नेह ताम् । अप्राप्तया तया चेह देहं त्यक्ष्यामि निश्चितम् ॥
इत्युक्ते तेन सख्यस्तामूचुः पद्मावतीं रहः । शृणु नूनमिह स्वप्ने दृष्ट्वा त्वामयमागतः ॥
त्वद्दर्शनेनैव विना त्यक्तुं प्राणान्समीहते । तन्निगूढस्थिता एव पश्यामो देवि निश्चयम् ॥
इति च्छन्नासु तास्तत्र स्थितास्वन्तः प्रविश्य सः । मुक्ताफलध्वजो देवमर्चयित्वा विनिर्ययौ ॥
निर्गत्य यावत्कुरुते भक्तितस्त्रिः प्रदक्षिणम् । तावत्स च सखा चास्य जातिं सस्मरतुर्निजाम् ॥
हर्षाच्च पूर्ववृत्तान्तं यावदन्योन्यमाहतुः । तावत्पद्मावती दृष्टिगोचरं सा ययौ तयोः ॥
मुक्ताफलध्वजः पूर्वजन्मवृत्तं स्मरंश्च सः । तां दृष्ट्वैव तमाह स्म वयस्यं हर्षनिर्भरः ॥
दृष्टा सेयमिह स्वप्ने देवी पद्मावती मया । दिष्ट्या प्राप्ता च तदिमामाशु संभावयाम्यहम् ॥
इत्युक्त्वोपेत्य साश्रुस्तामवोचद्देवि माधुना । क्वापि यासीरहं मुक्ताफलकेतुः स ते प्रियः ॥
दृढव्रतस्य शापेन मानुषीभूय संस्मृता । जातिर्मयाद्येत्युक्त्वा तामैच्छदाश्लेष्टुमुत्सुकः ॥
सा तूद्भ्रान्ता तिरोभूय तत्रासीत्साश्रुलोचना । सोऽपि राजसुतोऽपश्यंस्तां मोहादपतद्भुवि ॥
ततः सदुःखमाकाशे तद्वयस्यो जगाद सः । यदर्थं स तपःक्लेशो देवि पद्मावति त्वया ॥
अनुभूतः कथं प्राप्तं तमेतं नाभिभाषसे । अहं संयतकः सोपि वयस्यो दयितस्य ते ॥
तद्युष्मदर्थं शप्तस्य किं मे नालपसि प्रियम् । इत्युक्त्वा स समाश्वास्य तमुवाच नृपात्मजम् ॥
तथानुरागोपगता दैत्यराजसुता त्वया । यत्त्यक्ता तस्य पापस्य तवागतमिदं फलम् ॥
तच्छ्रुत्वा सा सखीराह च्छन्ना पद्मावती तदा । शृणुतासुरकन्यासु न किलार्यं प्रवर्तते ॥
ततः सख्योऽपि तामूचुः सर्वं संवादि दृश्यते । किं न स्मरसि यत्तेन शापकाले प्रियेण ते ॥
मानुष्ये मे मनोऽन्यत्र मा गात्पद्मावतीं विना । इत्यर्थितो वरस्तस्मान्मुनेः पूर्वं तपोधनात् ॥
तत्प्रभावादयं नूनमन्यस्त्रीषु न रज्यते । श्रुत्वैतद्राजपुत्री सा संजज्ञे संशयाकुला ॥
मुक्ताफलध्वजः सोऽपि दृष्टनष्टप्रियस्ततः । चक्रन्द हा प्रिये पद्मावति किं नैतदीक्षसे ॥
विद्याधरत्वे यत्प्राप्तः शापो मेघवने मया । त्वदर्थमिह चाद्याहं मृत्युं प्राप्स्याम्यसंशयम् ॥
इत्यादि क्रन्दितं तस्य श्रुत्वा पद्मावती सखीः । प्राह सर्वाणि संवादीन्यभिज्ञानानि यद्यपि ॥
तथापि पारम्पर्येण श्रुतान्येतानि जातुचित् । आभ्यां भवेयुरिति मे न चेतोऽभ्येति निश्चयम् ॥
तन्नार्तमस्य शक्नोमि वचः श्रोतुं व्रजाम्यहम् । तद्गौर्यायतनं तावत्पूजाकालश्च तत्र मे ॥
इत्युक्त्वा ससखीका सा पद्मावत्यम्बिकाश्रमम् । तज्जगामार्चयित्वा च देवीमेवं व्यजिज्ञपत् ॥
स सिद्धीश्वरदृष्टश्चेत्सत्यं पूर्वप्रियो मम । तत्तथा कुरु येन स्याच्छीघ्रमेतेन संगमः ॥
इति पद्मावती यावत्साकाङ्क्षा तत्र तिष्ठति । मुक्ताफलध्वजस्तावत्सोऽपि सिद्धीश्वरे स्थितः ॥
पूर्वं संयतकं मित्रं महाबुद्धिमुवाच तम् । जाने सा स्वास्पदं याता तद्गौर्यायतनं सखे ॥
तदेहि यावस्तत्रैवेत्युक्त्वारुह्य मनोगतौ । तस्मिन्विमाने सोऽप्यागादम्बिकाश्रममेव तत् ॥
दूराद्दृष्ट्वावतीर्णं तं विमानेन नभस्तलात् । सख्यः पद्मावतीमूचुर्देवि पश्येदमद्भुतम् ॥
स इहाप्येष दिव्येन विमानेनागतः किल । मानुषस्यापि दिव्योऽस्य प्रभावः कथमीदृशः ॥
ततः पद्मावती स्माह सख्यः स्मरथ किं न तत् । यत्स शापप्रदातास्य मया शप्तो दृढव्रतः ॥
मानुषत्वेऽवतीर्णस्य वाहनं कामरूपभृत् । इच्छानुगतमस्यैव भविष्यति भवानिति ॥
तत्तेन मुनिशिष्येण वाहनेनैष निश्चितम् । विमानरूपं दधता स्वेच्छं भ्रमति सर्वतः ॥
एवं तयोक्ते सख्यस्तामूचुरेवमवैषि चेत् । तन्न संभावयस्येतं कस्माद्देवि किमीक्षसे ॥
एतत्सखीवचः श्रुत्वा पद्मावत्यवदत्पुनः । एवं संभाव्यते सख्यो निश्चयोऽद्यापि नास्ति मे ॥
सत्यं स एव यदि वा भवत्येष तथापि मे । अभिगम्योऽन्यदेहस्थः स्वदेहानाश्रितः कथम् ॥
तच्छन्ना एव पश्यामस्तावदस्येह चेष्टितम् । इत्युक्त्वा राजपुत्री सा छन्नैवासीत्सखीवृता ॥
तावत्तत्रावतीर्यैव विमानादम्बिकाश्रमे । मुक्ताफलध्वजः सोत्को वयस्यं तमुवाच सः ॥

अमुत्र राक्षसीत्रस्ता पूर्वं संभाविता मया । स्वयंवरागता चेह दृष्टोद्यानान्तरे पुनः ॥ १४०
इह चावाप्तशापं मामनुसर्तुमनास्तदा । प्रिया पद्मावती कृच्छ्रान्मुनीन्द्रेण निवर्तिता ॥ १४१
सैवाद्य पश्य मे मित्र दृष्टिमार्गात्पलायते । एतत्तस्य वचः श्रुत्वा पद्मावत्यब्रवीत्सखीः ॥ १४२
सत्यं सख्यः स एवायं पूर्वदेहमनाश्रितम् । कथं तूपैम्यमुं तन्मे सोऽत्र सिद्धीश्वरो गतिः ॥ १४३
तेनैव दत्तः स्वप्नो मे स एव च करिष्यति । उपायमिति निश्चित्य सागात्सिद्धीश्वरं पुनः ॥ १४४
पूर्वदेहस्थितेनैव प्रियेण मम संगमम् । कुरु वा देहि वा मृत्युं तृतीया न गतिर्मम ॥ १४५
इति विज्ञापयामास सा तमभ्यर्च्य धूर्जटिम् । ससखीका च तत्रैव तस्थौ देवकुलाङ्गने ॥ १४६
तावद्गौर्याश्रमे तत्र तां स मुक्ताफलध्वजः ।अन्विष्याप्राप्य चोद्विग्नस्तमवादीद्वयस्यकम् ॥ १४७
इतः प्राप्ता न सा यावो धाम तच्छांभवं पुनः । ततोऽपि चेन्न लप्स्ये तां प्रवेक्ष्याम्यग्निमेव तत् ॥ १४८
तच्छ्रुत्वा स सखावोचद्भावि कल्याणमेव ते । न मृषा स्यान्मुनिवचः स्वप्नादेशश्च शांभवः ॥ १४९
इत्याश्वासयता तेन सख्या मुक्ताफलध्वजः । सह सिद्धीश्वरं प्रायाद्विमानमधिरुह्य सः ॥ १५०
प्राप्तं दृष्ट्वात्र तं पद्मावती तस्थावलक्षिता । पश्यतेहैव संप्राप्त इति चोवाच सा सखीः ॥ १५१
सोऽपि प्रविश्य देवाग्रं दृष्ट्वा प्रत्यग्रपूजितम् । मुक्ताफलध्वजो देवं वयस्यं तमभाषत ॥ १५२
सखे केनापि पश्यायमधुनैवार्चितो विभुः । नूनं सैव प्रिया मेऽत्र स्थिता काप्यर्चितस्तया ॥ १५३
इत्युक्त्वा सोऽत्र चिन्वानो यदा न प्राप तां तदा । चक्रन्द हा प्रिये पद्मावतीति विरही मुहुः ॥ १५४
पिकीरुते तदालापबुद्ध्या तत्कबरीधिया । बर्हिबर्हे सरसिजे तन्मुखभ्रान्तितस्तथा ॥ १५५
यावन्स्मरज्वरावेशविवशस्तेन कृच्छ्रतः । आश्वास्य जगदे सख्या राजपुत्रोऽनुनीय सः ॥ १५६
बहूपवासक्लान्तेन किमारब्धमिदं त्वया । जितभूलोकपातालं किमात्मानमुपेक्षसे ॥ १५७
त्वय्यन्तिकमनायाते पिता मेरुध्वजस्तव । राजा त्रैलोक्यमाली च श्वशुरो दानवेश्वरः ॥ १५८
त्वदर्थिनी च त्रैलोक्यप्रभा सापि तदात्मजा । माता च ते विनयवत्यनुजो मलयध्वजः ॥ १५९
अनिष्टाशङ्किनः सर्वे सोपवासा जहत्यसून् । तदेहि तावद्गत्वा तान्रक्षावोऽवसितं ह्यहः ॥ १६०
इति तं वादिनं प्राह मित्रं मुक्ताफलध्वजः । त्वमेव मद्विमानेन गत्वाश्वासय तानिति ॥ १६१
ततस्तं स सखावोचत्स समोपनमेत्कथम् । शापेन मुनिशिष्यो यस्तव वाहनतां गतः ॥ १६२
इत्युक्तवन्तं सुहृदं राजपुत्रोऽब्रवीत्स तम् । तर्हि तिष्ठ सखे तावत्पश्यावः किं भवेदिह ॥ १६३
एवं श्रुत्वा तदालापं पद्मावत्यवदत्सखीः । जानेऽभिज्ञानसंवादैः स पूर्वप्रिय एष मे ॥ १६४
कामं मानुषदेहस्थः शापेनैवं कदर्थ्यते । सिद्धकन्योपहासाच्च शापदोषो ममाप्ययम् ॥ १६५
इति यावच्च सा वक्ति तावदालोहितच्छविः । वियोगिवनदावाग्निरुदगान्मृगलाञ्छनः ॥ १६६
पूरयामास च शनैर्जगज्ज्योत्स्ना समन्ततः । कंदर्पदहनज्वाला तं च मुक्ताफलध्वजम् ॥ १६७
ततस्तत्कालचक्राह्व इव क्रन्दन्नृपात्मजः । छन्नस्थयैव जगदे पद्मावत्या स विम्रया ॥ १६८
राजपुत्र स एव त्वं यदि मे पूर्ववल्लभः । तथाप्यन्यशरीरस्थो ममासि परपूरुषः ॥ १६९
अहं ते परदाराश्च तदाक्रन्दसि किं मुहुः । उपायो भवितावश्यं सत्यं चेत्तन्मुनेर्वचः ॥ १७०
एतच्छ्रुत्वा वचस्तस्यास्तामपश्यंश्च सोऽभ्यगात् । मुक्ताफलध्वजो हर्षविषादविषमां दशाम् ॥ १७१
जगाद च मया देवि स्मृतप्राक्तनजन्मना । दृष्ट्वा त्वं प्रत्यभिज्ञाता स्वामेव दधती तनुम् ॥ १७२
त्वं तु वैद्याधरे देहे वर्तमानं विलोक्य माम् । अधुना परिजानीषे मर्त्यदेहगतं कथम् ॥ १७३
तदवश्यं मया त्याज्यमिदं हतशरीरकम् । इत्युक्त्वा सोऽभवत्तूष्णीं छन्नासीत्सापि तत्प्रिया ॥ १७४
ततो भूयिष्ठयातायां रात्रौ निद्रागते श्रमात् । पूर्वसंयतके तस्मिन्महाबुद्धौ वयस्यके ॥ १७५
अप्राप्यां तेन देहेन जानन्पद्मावतीं स ताम् । मुक्ताफलध्वजो दारूण्याहृत्याग्निमदीपयत् ॥ १७६
भगवंस्त्वत्प्रसादेन प्राक्तनीं तां तनुं श्रितः । प्राप्यासमचिरेणैव प्रियां पद्मावतीमहम् ॥ १७७
इति ब्रुवन्प्रणम्यैव लिङ्गमूर्तिं स शंकरम् । जुहाव ज्वलिते तस्मिन्नग्नौ राजसुतस्तनुम् ॥ १७८

तावत्प्रबुद्धः स महाबुद्धिर्मुक्ताफलध्वजम् । तमपश्यन्विचित्यापि पश्यन्नग्निमुदर्चिषम् ॥
विचिन्त्य तं हुतात्मानं वयस्यं विरहाकुलम् । अग्नौ तत्रैव तच्छोकात्सोऽप्यात्मानमपातयत् ॥
तद्दृष्ट्वा सापि दुःखार्ता पद्मावत्यब्रवीत्सखीः । धिगहो हृदयं स्त्रीणां कठिनं कुलिशादपि ॥
पश्यन्त्या वैशसमिदं नोत्क्रान्तं यन्ममासुभिः । तत्कियच्चिरमात्मायमधन्यो धार्यते मया ॥
नास्ति मेऽद्यापि दुःखान्तो मदपुण्यैर्मुनेरपि । वचस्तस्यान्यथा जातं तच्छ्रेयो मरणं मम ॥
परपूरुषमध्ये तु प्रवेष्टुमनलेऽत्र मे । न युक्तं तदनायासः पाश एव हि मे गतिः ॥
इत्युक्त्वा साग्रतः शंभोरुपेत्याशोकपादपे । पाशं विधातुं लतया राजपुत्री प्रचक्रमे ॥
आशाप्रदर्शिभिर्वाक्यैर्यावत्तां स सखीजनः । वारयत्याययौ तावन्मुनिः सोऽत्र तपोधनः ॥
मा पुत्रि साहसं न स्यादसत्यं तद्वचो मम । धीरा भवाधुनैवेह प्राप्तं पश्यसि तं प्रियम् ॥
त्वदीयेनैव तपसा तस्य शापक्षयोऽचिरात् । संवृत्तस्तदनास्थेयं स्वतपस्येव ते कथम् ॥
प्रत्यासन्ने विवाहे च का तवेयं विषादिता । प्रणिधानादवेत्याहमिदं सर्वमिहागतः ॥
इति तं व्याहरन्तं च दृष्ट्वा मुनिमुपागतम् । प्रणम्य दोलारूढेव साभूत्पद्मावती क्षणम् ॥

अथ मर्त्यदेहदाहाद्वैद्याधरमात्मदेहमाश्रित्य ।
सवयस्यो मुक्ताफलकेतुः सोऽत्रायय‍ौ प्रियस्तस्याः ॥

तं वीक्ष्य चातकवधूरिव नूतनाभ्रं राकाशशाङ्कमुदितं च कुमुद्वतीव ।
विद्याधरेन्द्रतनयं गगनागतं सा पद्मावती हृदि दधौ कमपि प्रमोदम् ॥

स च मुक्ताफलकेतुर्मुमुदे दृष्ट्वैव तामवेक्ष्य पिबन् ।
चिरमरुभूमिभ्रमणश्रान्तः पान्थो यथा सरितम् ॥
तौ च शापरजनीक्षयादुभौ चक्रवाकवदवाप्तसंगमौ ।
जग्मतुस्तपनतेजसो मुनेस्तस्य पादपतनेन तृप्तताम् ॥
यद्युवामिह पुनः समागतौ तीर्णशापमुदितौ स एव मे ।
चेतसोऽद्य परितोष इत्यसावभ्यनन्ददथ तौ महामुनिः ॥
यातायां निशि चेन्द्रवारणगतस्तत्रैव सोऽप्याययौ
चिन्वन्दारकनिष्ठपुत्रसहितो मेरुध्वजो भूपतिः ।
त्रैलोक्यप्रभया समं तनयया त्रैलोक्यमाली तथा
दैत्यानामधिपो विमानवहनः सान्तःपुरः सानुगः ॥

ततः स मुक्ताफलकेतुमेतयोः प्रदर्श्य वृत्तान्तमवर्णयन्मुनिः ।
यथा स कार्यार्थमवाप शापतो मनुष्यतां मुक्तिमुपागतस्ततः ॥
बुद्ध्वा तदग्नौ पतनोन्मुखास्ते मेरुध्वजाद्या मुनिनोपदिष्टम् ।
सिद्धोदकस्नानहरार्चनादि कृत्वा विशोकाः सहसा बभूवुः ॥

त्रैलोक्यप्रभया पुनरत्र तया जातिमाशु संस्मृत्य ।
समचिन्त्यत सिद्धाधिपकन्या देवप्रभास्मि सा हन्त ॥
विद्याधराधिनाथः पतिरस्तु ममेति या तपस्यन्ती ।
पद्मावत्युपहसिता प्राविशमनलं स्वकामनासिद्ध्यै ॥
जातास्म्यस्मिंश्च ततो दितिजकुले यत्र चानुरक्तास्मि ।
सोऽप्येष राजपुत्रः प्राप्तो वैद्याधरीं पुनः स्वतनुम् ॥
न च युज्यतेऽन्यरूपो देहेनानेन समभिगन्तुमयम् ।
तदिमामेतत्प्राप्त्यै तनुं जुहोम्यासुरीं पुनर्ज्वलने ॥

एवं विमृश्य हृदि तच्च निवेद्य पित्रोर्मुक्ताफलध्वजहुताशमनुप्रविष्टाम् ।
आदाय तां करुणयार्पितपूर्वदेहामाविर्बभूव हुतभुक्स्वयमब्रवीच्च ॥

भो मुक्ताफलकेतो त्वामियमुद्दिश्य मयि विमुक्ततनुः ।
तदिमां सिद्धेशसुतां गृहाण देवप्रभां भार्याम् ॥ २०४
इत्येतदुक्त्वैव तिरोहितेऽनले ब्रह्मात्र सेन्द्रैरमरैः सहाययौ ।
गन्धर्वराजः सह चन्द्रकेतुना विद्याधरेन्द्रेण च पद्मशेखरः ॥ २०५
प्रह्वाय सर्वैरभिनन्दिताय तैर्गन्धर्वराड्व्यग्रपरिग्रहस्ततः ।
प्रादात्स मुक्ताफलकेतवे सुतां पद्मावतीं तां विधिवद्विभूतिमान् ॥ २०६
स चात्र विद्याधरराजपुत्रश्चिरोत्सुकस्तां दयितामवाप्य ।
मेने फलं जन्मतरोरवाप्तमुवाह तामप्यथ सिद्धकन्याम् ॥ २०७
स च तया दितिजेश्वरकन्यया विधिवदत्र पितृप्रवितीर्णया ।
नृपसुतः समयुज्यत कान्तया त्रिभुवनप्रभया मलयध्वजः ॥ २०८
ततः कृतित्वादभिषिच्य पुत्रं सद्वीपपृथ्वीवलयैकराज्ये ।
मेरुध्वजः स्वे मलयध्वजं तं वनं सदारस्तपसे जगाम ॥ २०९
त्रैलोक्यमाली सपरिग्रहश्च प्रायात्पदं स्वं दितिजाधिराजः ।
शक्रोऽथ मुक्ताफलकेतवे तां ददौ स विद्युद्ध्वजराज्यलक्ष्मीम् ॥ २१०
मुक्ताफलकेतुरयं भुङ्क्तां विद्याधरासुरैश्वर्यम् ।
स्वपदानि यान्तु च सुरा इत्थं वागुच्चचार दिवः ॥ २११
तामाकर्ण्य ययुस्ततः प्रमुदितास्ते ब्रह्मशक्रादयः
शापान्मुक्तवता तपोधनमुनिः शिष्येण साकं ययौ ।
श्रीमुक्ताफलकेतुना च सहितो भार्याद्वयभ्राजिना
पुत्रेणाथ स चन्द्रकेतुरगमद्वैद्याधरं स्वं पदम् ॥ २१२
भुक्त्वा च तत्र गगनेचरचक्रवर्तिलक्ष्मीं सुतेन सह तेन चिरं स राजा ।
तस्मिन्निवेश्य निजराज्यधुरं विरक्तो देव्या समं मुनितपोवनमाश्रितोऽभूत् ॥ २१३
स च मुक्ताफलकेतुः प्रागिन्द्रादसुरराज्यमासाद्य ।
प्राप्य पुनश्च पितुस्तद्विद्याधरचक्रवर्तित्वम् ॥ २१४
पद्मावत्या सहितो दशकल्पान्मूर्तयेव निर्वृत्या ।
भेजे सुसमृद्धोभयसाम्राज्यसुखश्रियं सुकृती ॥ २१५
आलोच्य भावानवसाननीरसान्संश्रित्य चान्ते स मुनीन्द्रकाननम् ।
ज्योतिः परं प्राप्य तपःप्रकर्षतः सायुज्यमीशस्य जगाम धूर्जटेः ॥ २१६
एवं हंसयुगान्निशम्य सरसामेतां कथां तन्मुखा-
ज्ज्ञानं प्राप्य च लब्धदिव्यगतिकः स ब्रह्मदत्तो नृपः ।
तद्भार्यासचिवौ च तौ च विहगौ गत्वैव सिद्धीश्वरं
त्यक्त्वा शापतनूः शिवानुचरतां प्रापुर्निजां तेऽखिलाः ॥ २१७
इत्यहमाकर्ण्य कथां गोमुखतो मदनमञ्चुकाविरहे ।
हे मुनयः क्षणमात्रं धृत्वा चेतो विनोदितवान् ॥ २१८
एवं कथितकथे किल नरवाहनदत्तचक्रवर्तिनि ते ।
गोपालकेन सहिताः परितुतुषुः कश्यपाश्रमे मुनयः ॥ २१९

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे पद्मावतीलम्बके षष्ठस्तरङ्गः ।

समाप्तोऽयं पद्मावतीलम्बकः सप्तदशः ।

॥ श्रीः ॥

महाकविश्रीसोमदेवभट्टविरचितः

# कथासरित्सागरः ।

## विषमशीलो नामाष्टादशो लम्बकः ।

इदं गुरुगिरीन्द्रजाप्रणयमन्दरान्दोलना-
त्पुरा किल कथामृतं हरमुखाम्बुधेरुद्गतम् ।
प्रसह्य रसयन्ति ये विगतविघ्नलब्धर्द्धयो
धुरं दधति वैबुधीं भुवि भवप्रसादेन ते ॥

प्रथमस्तरङ्गः ।

चन्द्राननार्धदेहाय चन्द्रांशुसितभूतये । चन्द्रार्कानलनेत्राय चन्द्रार्धशिरसे नमः ॥
करेण कुञ्चिताग्रेण लीलयोन्नमितेन यः । भाति सिद्धीरिव ददत्स पायाद्वो गजाननः ॥
ततोऽसितगिरौ तत्र कश्यपस्याश्रमे मुनेः । नरवाहनदत्तस्तान्मुनीनेवमभाषत ॥
अन्यच्च देवीविरहे नीत्वाहं सानुरागया । वेगवत्या यदा न्यस्तो विद्याहस्तेऽभिरक्षितुम् ॥
तदा शरीरत्यागैषी विरही परदेशगः । वनान्ते दृष्टवानस्मि भ्रमन्कण्वं महामुनिम् ॥
स मां पादानतं दृष्ट्वा प्रणिधानादवेत्य च । दुःखितं स्वाश्रमं नीत्वा सदयो मुनिरभ्यधात् ॥
सोमवंशोद्भवो वीरो भूत्वा किं नाम मुह्यसि । देवादेशे ध्रुवेऽनास्था का भार्यासंगमे तव ॥
असंभाव्या अपि नृणां भवन्तीह समागमाः । तथा हि विक्रमादित्यकथामाख्यामि ते शृणु ॥
अस्त्यवन्तिषु विख्याता युगादौ विश्वकर्मणा । निर्मितोज्जयिनी नाम पुरारिवसतिः पुरी ॥
सतीव या पराधृष्या पद्मिनीवाश्रिता श्रिया । सतां धीरिव धर्माढ्या पृथ्वीव बहुकौतुका ॥
महेन्द्रादित्य इत्यासीद्राजा तस्यां जगज्जयी । मघवेवामरावत्यां विपक्षबलसूदनः ॥
नानाशस्त्रायुधः शौर्ये रूपे तु कुसुमायुधः । योऽभून्मुक्तकरस्त्यागे बद्धमुष्टिकरस्त्वसौ ॥
तस्य पृथ्वीपतेर्भार्या नाम्नाभूत्सौम्यदर्शना । शचीवेन्द्रस्य गौरीव शंभोः श्रीरिव शार्ङ्गिणः ॥
महामन्त्री च सुमतिर्नाम तस्याभवत्प्रभोः । वज्रायुधाभिधानश्च प्रतीहारः क्रमागतः ॥
तैः समं स नृपः शासद्राज्यमाराधयन्हरम् । नानाव्रतधरः शश्वदभवत्पुत्रकाम्यया ॥
अत्रान्तरे च गीर्वाणगणसंश्रितकंदरे । अन्यदिग्जयसानन्दकौबेरीहाससुन्दरे ॥
स्थितं कैलासशैलेन्द्रे पुरारिं पार्वतीयुतम् । उपाजग्मुः सुराः सेन्द्रा म्लेच्छोपद्रवदुःखिताः ॥
प्रणामानन्तरासीनास्ते कृतस्तुतयोऽमराः । पृष्टागमनकार्यास्ते देवमेवं व्यजिज्ञपन् ॥
ये त्वया देव निहता असुरा ये च विष्णुना । ते जाता म्लेच्छरूपेण पुनरद्य महीतले ॥
व्यापादयन्ति ते विप्रान्घ्नन्ति यज्ञादिकाः क्रियाः । हरन्ति मुनिकन्याश्च पापाः किं किं न कुर्वते ॥
भूलोकाद्देवलोकश्च शश्वदाप्यायते प्रभो । ब्राह्मणैर्हुतमग्नौ हि हविस्तृप्त्यै दिवौकसाम् ॥
म्लेच्छाक्रान्ते च भूलोके निर्वषट्कारमङ्गले । यज्ञभागादिविच्छेदाद्देवलोकोऽवसीदति ॥
तदुपायं कुरुष्वात्र तं कंचिदवतारय । प्रवीरं भूतले यस्तान्म्लेच्छानुत्सादयिष्यति ॥
इति देवैः स विज्ञप्तः पुरारातिरुवाच तान् । यात यूयं न चिन्तात्र कार्या भवत निर्वृताः ॥
अचिरेण करिष्येऽहमत्रोपायमसंशयम् । इत्युक्त्वा व्यसृजद्देवान्स्वधिष्ण्यान्यम्बिकापतिः ॥

सेषु चाहूय माल्यवत्संज्ञकं गणम् । सपार्वतीको भगवानेवमादिशति स्म सः ॥ २६
तर मानुष्ये जायस्व च महापुरि । उज्जयिन्यां सुतः शूरो महेन्द्रादित्यभूपतेः ॥ २७
राजा ममैवांशस्तद्भार्या चाम्बिकांशजा । तयोर्गृहे समुत्पद्य कुरु कार्यं दिवौकसाम् ॥ २८
ान्व्यापादयाशेषांस्त्रयीधर्मविघातिनः । सप्तद्वीपेश्वरो राजा मत्प्रसादाच्च भाव्यसि ॥ २९
क्षसवेताला अपि स्थास्यन्ति ते वशे । भुक्त्वा मानुषभोगांश्च पुनरस्मानुपैष्यसि ॥ ३०
ष्टः पुरजिता माल्यवान्सोऽब्रवीद्गणः । अलङ्घ्या युष्मदाज्ञा मे भोगा मानुष्यके तु के ॥ ३१
न्धुसुहृद्भृत्यविप्रयोगाः सुदुःसहाः । धननाशजरारोगाद्युद्भवा यत्र च व्यथा ॥ ३२
न गणेनोक्तो धूर्जटिः प्रत्युवाच तम् । गच्छ नैतानि दुःखानि भविष्यन्ति तवानघ ॥ ३३
देन सुखितः सर्वकालं भविष्यसि । इत्युक्तः शंभुना सोऽभूदहश्यो माल्यवांस्ततः ॥ ३४
चोज्जयिनीं तस्य महेन्द्रादित्यभूभुजः । देव्या ऋतुजुषो गर्भे समभूत्स गणोत्तमः ॥ ३५
ं च निशाकान्तकलाकलितशेखरः । देवो महेन्द्रादित्यं तं नृपं स्वप्ने समादिशत् ॥ ३६
स्म तव तद्राजन्स ते पुत्रो भविष्यति । आक्रमिष्यति सद्वीपां पृथिवीं विक्रमेण यः ॥ ३७
ःपिशाचादीन्पातालाकाशगानपि । वीरः करिष्यति वशे म्लेच्छसंघान्हनिष्यति ॥ ३८
स्यत एवैष विक्रमादित्यसंज्ञकः । तथा विषमशीलश्च नाम्ना वैषम्यतोऽरिषु ॥ ३९
वान्तर्हिते देवे प्रबुध्य स महीपतिः । प्रातः स्वसचिवेभ्यस्तं हृष्टः स्वप्नं न्यवेदयत् ॥ ४०
स्वप्ने हरादेशं पुत्रप्राप्तिफलं क्रमात् । तस्मै शशंसुः सचिवा राज्ञे प्रमुदितास्तदा ॥ ४१
प फलं साक्षाद्राज्ञेऽन्तःपुरचेटिका । अदर्शयदिदं देव्यै स्वप्ने शंभुरदादिति ॥ ४२
राजा मुमुदे सचिवैरभिनन्दितः । सत्यं मम सुतो दत्तः शर्वेणेति मुहुर्वदन् ॥ ४३
ज्ञी सगर्भा सा जज्ञे तस्योर्जितद्युतिः । प्राची प्रातरिवोदेष्यत्सहस्रकरमण्डला ॥ ४४
सा च कुचयोः श्यामया चूचुकत्विषा । गर्भस्थस्येव सम्राजः स्तन्यरक्षणमुद्रया ॥ ४५
म्नापि जलधीनुत्ततार च सा तदा । प्रणम्यमाना निखिलैर्यक्षवेतालराक्षसैः ॥ ४६
समये पुत्रं सा सूते स्म महस्विनम् । नभोऽर्केणेव बालेन येनाभास्यत वासकम् ॥ ४७
तस्मिन्निपतत्पुष्पवृष्टिप्रहासिनी । द्यौरराजत गीर्वाणदुन्दुभिध्वनिनादिनी ॥ ४८
भूताविष्टेव वातक्षोभानृतेव च । तत्कालमुत्सवानन्दव्याकुला सा भवत्पुरी ॥ ४९
तत्राविरतं वसु राजनि वर्षति । सौगतव्यतिरेकेण नासीत्कश्चिदनीश्वरः ॥ ५०
तं विक्रमादित्यं हरोक्तेनाकरोत्पिता । तथा विषमशीलं च महेन्द्रादित्यभूपतिः ॥ ५१
ष्येषु दिवसेष्वत्र तस्य महीभुजः । सुमतेर्मन्त्रिणः पुत्रो जज्ञे नाम्ना महामतिः ॥ ५२
ायुधस्यापि पुत्रोभद्रायुधोऽजनि । श्रीधरोऽजायत सुतो महीधरपुरोधसः ॥ ५३
र्मन्त्रितनयैः सह राजसुतोऽत्र सः । ववृधे विक्रमादित्यस्तेजोवीर्यबलैरिव ॥ ५४
स्य विद्यासु गुरवो हेतुमात्रताम् । ययुस्तस्याप्रयासेन प्रादुरासन्स्वयं तु ताः ॥ ५५
प्रयुञ्जानो यां यां विद्यां कलां तथा । सैव सैवासमोत्कर्षा तस्य तज्ज्ञैरबुध्यत ॥ ५६
योधिनं तं च पश्यन्राजसुतं जनः । मन्दादरोऽभूद्रामादिधनुर्धरकथास्वपि ॥ ५७
तोपनतैर्दत्ताः कन्या रूपवतीर्नृपैः । आजहार पिता तस्य तास्ताः श्रिय इवापराः ॥ ५८
यौवनस्थं तं विलोक्य प्राज्यविक्रमम् । अभिषिच्य सुतं राज्ये यथाविधि जनप्रियम् ॥ ५९
दित्यनृपतिः सभार्यासचिवोऽपि सः । वृद्धो वाराणसीं गत्वा शरणं शिश्रिये शिवम् ॥ ६०
तद्विक्रमादित्यो राज्यमासाद्य पैतृकम् । नभो भास्वानिवारेभे राजा प्रतपितुं क्रमात् ॥ ६१
न कोदण्डे नमत्यारोपितं गुणम् । तच्छिक्षयेवोच्छिरसोऽप्यानमन्सर्वतो नृपाः ॥ ६२
भावो वेतालराक्षसप्रभृतीनपि । साधयित्वानुशास्ति स्म सम्यगुन्मार्गवर्तिनः ॥ ६३
न्त्यः ककुभः सेनास्तस्य महीतले । निश्चेरुर्विक्रमादित्यस्यादित्यस्येव रश्मयः ॥ ६४

महावीरोऽप्यभूद्राजा स भीरुः परलोकतः। शूरोऽपि चाचण्डकरः कुभर्ताप्यङ्गनाप्रियः॥
स पिता पितृहीनानामबन्धूनां स बान्धवः। अनाथानां च नाथः स प्रजानां कः स नाभवत्
श्वेतद्वीपस्य दुग्धाब्धेः कैलासहिमशैलयोः। निर्माणे तद्यशो नूनमुपमानमभूद्विधेः॥
एकदा च तमास्थानगतं भद्रायुधो नृपम्। प्रविश्य विक्रमादित्यं प्रतीहारो व्यजिज्ञपत्॥
प्रेषितस्य ससैन्यस्य दक्षिणाशाविनिर्जये। पार्श्वे विक्रमशक्तेर्यो देवेन प्रेषितोऽभवत्॥
स दूतोऽनङ्गदेवोऽयमागतो द्वारि तिष्ठति। सद्वितीयो मुखं चास्य हृष्टं वक्ति शुभं प्रभो॥
प्रविशत्विति राज्ञोक्ते सद्वितीयं स तत्र तम्। प्रावेशयत्प्रतीहारोऽनङ्गदेवं सगौरवम्॥
प्रविष्टः सप्रणामं च जयशब्दमुदीर्य सः। उपविष्टोऽग्रतो दूतस्तेनापृच्छ्यत भूभुजा॥
कच्चिद्विक्रमशक्तिः स सेनानी कुशली नृपः। कच्चिद्व्याघ्रबलाद्याश्च नृपाः कुशलिनोऽपरे॥
अन्येषां राजपुत्राणां प्रधानानां च तद्बले। कच्चिच्छिवं गजाश्वस्य रथपादातकस्य च॥
इति भूमिभृता पृष्टोऽनङ्गदेवो जगाद सः। शिवं विक्रमशक्तेश्च सैन्यस्य सकलस्य च॥
सापरान्तश्च देवेन निर्जितो दक्षिणापथः। मध्यदेशः ससौराष्ट्रः सवङ्गाङ्गा च पूर्वदिक्॥
सकश्मीरा च कौबेरी काष्ठा च करदीकृता। तानि तान्यपि दुर्गाणि द्वीपानि विजितानि च॥
म्लेच्छसंघाश्च निहताः शेषाश्च स्थापिता वशे। ते ते विक्रमशक्तेश्च प्रविष्टाः कटके नृपाः॥
स च विक्रमशक्तिस्तै राजभिः सममागतः। इतः प्रयाणकेष्वास्ते द्वित्रेष्वेव खलु प्रभो॥
एवमाख्यातवन्तं तं तुष्टो वस्त्रैर्विभूषणैः। ग्रामैश्च विक्रमादित्यो दूतं राजाभ्यपूरयत्॥
अथ पप्रच्छ नृपतिः स तं दूतवरं पुनः। अनङ्गदेव के देशा गतेनात्र विलोकिताः॥
त्वया कुत्र च किं दृष्टं कौतुकं भद्र कथ्यताम्। इत्युक्तो भूभृतानङ्गदेवो वक्तुं प्रचक्रमे॥
इतो देवाज्ञया देव गत्वाहं प्राप्तवान्क्रमात्। पार्श्वे विक्रमशक्तेस्तं सेनासमुदयं तव॥
मिलितानन्तनागेन्द्रसश्रीकहरिशोभितम्। समुद्रमिव विस्तीर्णं सपक्षक्ष्माभृदाश्रितम्॥
उपागतश्च तत्राहं तेन विक्रमशक्तिना। प्रभुणा प्रेषित इति प्रणतेनातिसत्कृतः॥
यावत्तिष्ठामि विजयस्वरूपं प्रविलोकयन्। सिंहलेश्वरसंबन्धी दूतस्तावदुपागमत्॥
राज्ञो हृदयभूतस्तेऽनङ्गदेवः स्थितोऽन्तिके। इति मे कथितं दूतैस्त्वत्पार्श्वप्रहितागतैः॥
तदेतं त्वरयानङ्गदेवं प्रहिणु मेऽन्तिकम्। कल्याणमस्य वक्ष्यामि राजकार्यं हि किंचन॥
इति स्वप्रभुवाक्यं च स दूतः सिंहलागतः। मत्संनिधाने वक्ति स्म तस्मै विक्रमशक्तये॥
ततो विक्रमशक्तिर्मामवदद्गच्छ सत्वरम्। सिंहलेशान्तिकं पश्य त्वन्मुखे किं ब्रवीति सः॥
अथाहं सिंहलाधीशदूतेन सह तेन तत्। अगच्छं सिंहलद्वीपं वहनेनाब्धिवर्त्मना॥
राजधानीं च तत्राहमपश्यं हेमनिर्मिताम्। विचित्ररत्नप्रासादां गीर्वाणनगरीमिव॥
तस्यां च वीरसेनं तमद्राक्षं सिंहलेश्वरम्। वृतं विनीतैः सचिवैः सुरैरिव शतक्रतुम्॥
स मामुपेतमादृत्य पृष्ट्वा च कुशलं प्रभोः। राजा विश्रमयामास सत्कारेणात्र भूयसा॥
अन्येद्युरास्थानगतो मामाहूय स भूपतिः। युष्मासु दर्शयन्भक्तिमवोचन्मन्त्रिसंनिधौ॥
अस्ति मे दुहिता कन्या मर्त्यलोकैकसुन्दरी। नाम्ना मदनलेखेति तां च राज्ञे ददामि वः॥
तस्यानुरूपा भार्या सा स तस्याश्चोचितः पतिः। एतदर्थं त्वमाहूतस्त्वत्स्वाम्यर्थं प्रतीप्सता॥
गच्छ च स्वामिने वक्तुं मद्दूतेन सहाग्रतः। अहं तवैवानुपदं प्रहेष्याम्यत्र चात्मजाम्॥
उक्त्वेत्यानाययामास स राजा तत्र तां सुताम्। भूषिताभरणाभोगां रूपलावण्ययौवनैः॥
उपवेश्य च तामङ्के दर्शयित्वा जगाद माम्। त्वत्स्वामिने मया दत्ता कन्येयं गृह्यतामिति॥
अहं च राजपुत्रीं तां दृष्ट्वा तद्रूपविस्मितः। प्रतीप्सितैषा राजार्थं मयेति मुदितोऽब्रवम्॥
अचिन्तयं च नाश्चर्यविधौ तृप्यत्यहो विधिः। तदुत्तमामिमां चक्रे यत्कृत्वापि तिलोत्तमाम्॥
ततोऽहं सत्कृतस्तेन राज्ञा प्रस्थितवांस्ततः। द्वीपाद्धवलसेनेन तद्दूतेन सहामुना॥

ारुह्य वहनं चावां व्रजावो यावदम्बुधौ । तावद्दृग्दृष्टवन्तौ स्वस्तन्मध्ये पुलिनं महत् ॥ १०४
न्मध्येऽद्भुतरूपे द्वे अपश्याव च कन्यके । एकां प्रियंगुश्यामाङ्गीमन्यां चन्द्रामलद्युतिम् ॥ १०५
ास्ववर्णोचितोपात्तवस्त्राभरणशोभिते । सरत्नकंकणक्वाणवितीर्णकरतालिके ॥ १०६
नर्तयन्त्यौ पुरतः क्रीडाहरिणपोतकम् । अपि जाम्बूनदमयं सजीवं रत्नचित्रितम् ॥ १०७
दृष्ट्वान्योन्यमावाभ्यां विस्मिताभ्यामभण्यत । अहो किमिदमाश्चर्यं स्वप्नो माया भ्रमो नु किम् ॥ १०८
ाब्धावकाण्डे पुलिनं केदृश्यौ तत्र कन्यके । क चेदृग्रत्नचित्राङ्गो जीवन्हेममृगोऽनयोः ॥ १०९
त्यादि वदतोरेव देव साश्चर्यमावयोः । वायुः प्रावर्तताकस्माद्वातुमुद्वेल्लिताम्बुधिः ॥ ११०
नास्मद्वहनं वेल्लद्वीचिन्यस्तमभज्यत । मकरैर्भक्ष्यमाणाश्च ममज्जुस्तद्गता जनाः ॥ १११
ावां च ताभ्यां कन्याभ्यामेत्यैवालम्ब्य बाहुषु । उत्क्षिप्य पुलिनं नीतावप्राप्तमकराननौ ॥ ११२
र्मिभिः पूर्यमाणे च तस्मिन्रोधसि विह्वलौ । आश्वास्यावां गुहागर्भमिव ताभ्यां प्रवेशितौ ॥ ११३
तो वीक्षावहे तावद्दिव्यं नानाद्रुमं वनम् । नाम्भोधिर्न तटं नापि मृगशावो न कन्यके ॥ ११४
त्रं किमेतन्मायेयं नूनं कापीति वादिनौ । क्षणं भ्रमन्तौ तत्रावामपश्याव महत्सरः ॥ ११५
च्छगम्भीरविस्तीर्णमाशयं महतामिव । तृष्णासंतापशमनं निर्वाणमिव मूर्तिमत् ॥ ११६
त्र च स्नातुमायातां साक्षादिव वनश्रियम् । परिवारावृतां कांचिदपश्याव वराङ्गनाम् ॥ ११७
र्णीरथावतीर्णा च तत्रोच्चितसरोरुहा । स्नात्वा सरस्यतुध्यानमकरोत्सा पुरद्विषः ॥ ११८
ावदुद्गम्य सरसो विस्मयेन सहावयोः । साक्षादुपागान्निकटं तस्या लिङ्गाकृतिः शिवः ॥ ११९
ायरत्नमयं तं सा तैस्तैः स्वविभवोचितैः । अभ्यर्च्य विविधैर्भोगैर्वीणामादत्त सुन्दरी ॥ १२०
ालम्ब्य दक्षिणं मार्गं स्वरतालपदैस्तथा । अवधानेन सा सम्यग्गायन्ती तामवादयत् ॥ १२१
था तच्छ्रवणाकृष्टहृदया गगनागताः । तत्र सिद्धादयोऽप्यासन्निःस्पन्दा लिखिता इव ॥ १२२
ासंहृतगान्धर्वा ततः शंभोर्विसर्जनम् । साकरोत्स च तत्रैव देवः सरसि मग्नवान् ॥ १२३
थोत्थाय समारुह्य वहनं सपरिच्छदा । शनैर्गन्तुं प्रवृत्ताभूत्सा ततो हरिणेक्षणा ॥ १२४
यमित्यसकृद्यत्नादावयोः पृच्छतोरपि । नोत्तरं तत्परिजनः कोऽप्यदादनुगच्छतोः ॥ १२५
तोऽस्य सिंहलद्वीपपतिदूतस्य तावकम् । प्रभावं दर्शयिष्यंस्तामित्युच्चैरहमब्रवम् ॥ १२६
ः शुभे विक्रमादित्यदेवाङ्घ्रिस्पर्शशापिता । त्वं मया यद्यनाख्याय ममात्मानं गमिष्यसि ॥ १२७
त्वा परिवारं सा निवार्यैवावरुह्य च । वहनान्मामुपागम्य गिरा मधुरयाभ्यधात् ॥ १२८
चिच्छ्रीविक्रमादित्यदेवः कुशलवान्प्रभुः । किं वा पृच्छामि विदितं सर्वं मेऽनङ्गदेव यत् ॥ १२९
दर्यं मायामानीतो मयैव हि भवानिह । राज्ञोऽर्थे तस्य स हि मे मान्यस्त्राता महाभयात् ॥ १३०
हि मद्गृहं तत्र सर्वं वक्ष्याम्यहं तव । याहं यथा च राजा मे मान्यः कार्यं च तस्य यत् ॥ १३१

इत्युक्त्वा विनयेन मुक्तवहना पद्भ्यां व्रजन्ती पथि
प्रह्वा सा नयति स्म तौ सुवदना स्वर्गोपमं स्वं पुरम् ।
नानारत्नविचित्रहेमरचितं द्वारेषु नानायुधै-
र्नानारूपधरैश्च वीरपुरुषैरध्यासितं सर्वतः ॥ १३२

तत्रावृते वरवधूभिरशेषदिव्यभोगौघसिद्धिभिरिवाकृतिशालिनीभिः ।
स्नानानुलेपनसदम्बरभूषणैर्नौ संमान्य विश्रमयति स्म च सांप्रतं सा ॥ १३३

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे विषमशीललम्बके प्रथमस्तरङ्गः ।

---

द्वितीयस्तरङ्गः

युक्त्वा विक्रमादित्यदेवायास्थानवर्तिने । अनङ्गदेवः पुनरप्येवं कथयति स्म सः ॥ १
ो भुक्तोत्तरं सा मां सखीमध्यस्थिताब्रवीत् । अनङ्गदेव सर्वं ते कथयाम्यधुना शृणु ॥ २

एषाहं धनदभ्रातुर्मणिभद्रस्य गेहिनी । दुन्दुभेर्यक्षराजस्य सुता मदनमञ्जरी ॥
साहं तीरेषु सरितां शैलेषूपवनेषु च । मनोहरेषु व्यहरं भर्त्रा सह सुखं सदा ॥
एकदा च गताभूवमुज्जयिन्यामहं किल । उद्यानं मकरन्दाख्यं विहर्तुं वल्लभान्विता ॥
तत्र दैवादुषस्येकः खण्डकापालिकाधमः । विहारश्रमसंसुप्तप्रबुद्धां पश्यति स्म माम् ॥
स कामवशगः पापो भार्यात्वे होमकर्मणा । मन्त्रेण मां साधयितुं प्रावर्तिष्ट श्मशानगः ॥
तदहं स्वप्रभावेण बुद्ध्वा भर्त्रे न्यवेदयम् । तेनाप्यावेदितं भ्रातुर्ज्यायसो धनदस्य तत् ॥
धनाध्यक्षेण गत्वा च विज्ञप्तः कमलोद्भवः । स चापि भगवानेवं ब्रह्मा ध्यात्वा तमभ्यधात् ॥
सत्यं स भ्रातृजायां ते कपाली हर्तुमुद्यतः । यक्षसाधनमन्त्राणां शक्तिस्तेषां हि तादृशी ॥
तया तु विक्रमादित्यो मन्त्रेणाकृष्यमाणया । आक्रन्दनीयो नृपतिः स रक्षिष्यति तां ततः ॥
एतद्ब्रह्मवचोऽभ्येत्य मद्भर्त्रे धनदोऽब्रवीत् । मद्भर्ता मह्यमाह स्म कुमन्त्रचकितात्मने ॥
तावच्च क्रमसिद्धेन मन्त्रेणाकृष्टवान्स माम् । होमं कुर्वञ्श्मशानस्थः खण्डकापालिकः स्वतः ॥
अहं च मन्त्राकृष्टा तद्वित्रस्ता पितृकाननम् । प्रापमस्थिकपालाढ्यं भैरवं भूतसेवितम् ॥
तत्रापश्यं च तं दुष्टकापलिकमहं तदा । हुताग्निमर्चितोत्तानशवाधिष्ठितमण्डलम् ॥
स च कापालिकः प्राप्तां दृष्ट्वा मां दर्पमोहितः । अगात्कथंचिदाचान्तुं नदीं दैवाददूरगाम् ॥
तत्क्षणं संस्मृतब्रह्मवचनाहमचिन्तयम् । किं नाक्रन्दामि राजानं स रात्रौ जात्विह भ्रमेत् ॥
इत्येतच्चिन्तयित्वोच्चैस्तत्राक्रन्दितवत्यहम् । परित्रायस्व मां देव विक्रमादित्य भूपते ॥
जगद्रक्षामणे पश्य बलात्कुलवधूं सतीम् । गृहिणीं मणिभद्रस्य धनाध्यक्षानुजन्मनः ॥
दुन्दुभेस्तनयां यक्षीं नाम्ना मदनमञ्जरीम् । कापालिकोऽयं त्वद्राज्ये मां ध्वंसयितुमुद्यतः ॥
इत्याक्रन्दितवत्येव ज्वलन्तमिव तेजसा । कृपाणपाणिमायान्तं तमद्राक्षमहं नृपम् ॥
स च मामवदद्भद्रे मा भैषीर्निर्वृता भव । अहं कापालिकादस्माद्रक्षामि भवतीं शुभे ॥
को हि राज्ये ममाधर्ममीदृशं कर्तुमीश्वरः । इत्युक्त्वाग्निशिखं नाम वेतालं स समाह्वयत् ॥
स चाहूतो ज्वलन्नेत्रः प्रांशुरूर्ध्वशिरोरुहः । उपेत्यैवाब्रवीद्भूपं किं करोम्यादिशेति तम् ॥
अथ राजाब्रवीदेष परदारापहारकृत् । पापः कापालिको हत्वा भवता भक्ष्यतामिति ॥
ततः सोऽग्निशिखस्तस्मिञ्शवेऽर्चामण्डलस्थिते । प्रविश्याधावदुत्थाय प्रसारितभुजाननः ॥
अग्रहीज्जङ्घयोः पश्चात्तं चाचान्तपरागतम् । कापालिकं स वेतालः पलायनपरायणम् ॥
नभसि भ्रामयित्वा च क्षिप्रमास्फोट्य च क्षितौ । देहं मनोरथं चैव समस्य व्यचूर्णयत् ॥
हतं कापालिकं दृष्ट्वा भूतेष्वामिषगर्धिषु । आगाद्यमशिखो नाम वेतालस्तत्र दुर्मदः ॥
एत्यैव तदगृह्णात्स कापालिककलेवरम् । ततः सोग्निशिखः पूर्वो वेतालस्तमभाषत ॥
अरे श्रीविक्रमादित्यदेवस्यादेशतो मया । कापालिकोऽयं निहतो दुराचार त्वमस्य कः ॥
एतच्छ्रुत्वा यमशिखः प्राह त्वं ब्रूहि तर्हि मे । किंप्रभावः स राजेति ततः सोऽग्निशिखोऽब्रवीत् ॥
तत्प्रभावं न चेद्वेत्सि तदहं शृणु वच्मि ते । इहाभूड्डाकिनेयाख्यः सुधीरः कितवः पुरि ॥
स जातु हृतसर्वस्वः कितवैर्द्यूतमायया । अधिकावजितान्यार्थनिमित्तं तैरबध्यत ॥
अस्वत्वाददद्न्तं च तैरेव लगुडादिभिः । ताड्यमानोऽवतस्थे च ग्रावभूतो मृतो यथा ॥
ततः स सभ्यैः सर्वैस्तैर्नीत्वा पापैः स चिक्षिपे । महान्धकूपे संभाव्य जीवितोऽस्मात्प्रतिक्रियाम् ॥
स च तत्रातिगम्भीरे कितवो डाकिनेयकः । कूपे भ्रष्टो ददर्शाग्रौ महान्तौ पुरुषावुभौ ॥
तौ च तं पतितं साम्ना दृष्ट्वा भीतमपृच्छताम् । कस्त्वं कुतश्च कूपेऽस्मिन्पतितोऽस्युच्यतामिति ॥
अथाश्वस्य स्ववृत्तान्तं द्यूतकारो निवेद्य सः । तावप्यपृच्छद्भूतं मे कौ कुतश्च युवामिह ॥
तच्छ्रुत्वा तौ जगदतुः पुरुषाववटस्थितौ । आवामस्याः पुरो भद्र श्मशाने ब्रह्मराक्षसौ ॥
अगृह्णीव च तावावामिहैव पुरि कन्यके । मुख्यमन्त्रिसुतामेकामन्यां मुख्यवणिक्सुताम् ॥

च मोचयितुं कश्चित्ते शक्नोति स्म कन्यके । मान्त्रिको दीप्तमन्त्रोऽपि पृथ्व्यामस्मत्सकाशतः ॥ ४२
द्भाथ विक्रमादित्यदेवस्तत्पितृवत्सलः । तत्रागाद्यत्र कन्ये ते पित्रोः सख्यात्सह स्थिते ॥ ४३
दृष्ट्वैव नृपं मुक्त्वा कन्यके ते पलायितुम् । इच्छन्तावपि नैवावां ततो गन्तुमशक्नुवः ॥ ४४
पश्याव दिशः सर्वा ज्वलन्तीस्तस्य तेजसा । ततोऽबध्नात्स नृपतिर्दृष्ट्वा नौ स्वप्रभावतः ॥ ४५
ातमृत्युभयौ दीनौ वीक्ष्य चैवं समादिशत् । भोः पापावन्धकूपान्तर्वसतं वत्सरावधि ॥ ४६
काभ्यां च ततः कार्यं भवद्भ्यां नेदृशं पुनः । करिष्यतश्चेत्तदहं निग्रहीष्यामि वां ततः ॥ ४७
यादिश्यान्धकूपेऽत्र तेनावां क्षपिताविमौ । राज्ञा विषमशीलेन कृपया न विपादितौ ॥ ४८
ष्टभिर्दिवसैः कूपनिवासस्यास्य चावयोः । अवधिः पूर्यते वर्षादितो मुच्यावहे ततः ॥ ४९
द्रक्ष्यं किंचिदेतानि यद्यहानि ददासि नौ । तदुद्धृत्यामुतः कूपात्त्वां क्षिपावो बहिः सखे ॥ ५०
ङ्गीकृत्य न चेदास्यस्यावाभ्यां भक्ष्यमुद्धृतः । ततस्त्वां भक्षयिष्यावो निश्चितं निर्गतावितः ॥ ५१
युक्त्वा ब्रह्मरक्षोभ्यां ताभ्यां स कितवस्ततः । तथेति प्रतिपन्नार्थः कूपाद्बहिरुदस्यत ॥ ५२
कूपादुद्धृतोऽपश्यंस्तदर्थप्राप्तिमन्यथा । पणायितुं महामांसं श्मशानं प्राविशन्निशि ॥ ५३
कालं तिष्ठता तत्र स दृष्टः कितवो मया । गृह्णातु कश्चिद्विक्रीणे महामांसमिति ब्रुवन् ॥ ५४
ं गृह्णामि किं मूल्यं मार्गसीत्युदिते मया । रूपप्रभावौ स्वौ देहि मह्यमित्यब्रवीच्च सः ॥ ५५
र किं कुरुषे ताभ्यामित्युक्तश्च मया पुनः । उक्त्वा कृत्स्नं स्ववृत्तान्तमेवं स कितवोऽभ्यधात् ॥ ५६
त्वद्रूपप्रभावाभ्यां तानाकृष्य ददाम्यहम् । कितवान्ब्रह्मरक्षोभ्यां भक्ष्यं सभ्ययुतानरीन् ॥ ५७
श्रुत्वा धैर्यतुष्टेन तस्मै द्यूतकृते मया । दत्तौ रूपप्रभावौ स्वावाभाष्य दिनसप्तकम् ॥ ५८
भ्यामाकृष्य कूपे तान्क्रमारिक्षिस्त्वापकारिणः । नयति स्म स सप्ताहाद्ब्रह्मराक्षसभक्ष्यताम् ॥ ५९
ो मया स्वीकृतयोः स्वयो रूपप्रभावयोः । सोऽब्रवीड्डाकिनेयो मां द्यूतकारो भयाकुलः ॥ ६०
य दत्तं मया भक्ष्यमष्टमं तदहस्तयोः । तन्मां निर्गत्य तौ ब्रह्मराक्षसौ भक्षयिष्यतः ॥ ६१
त्र किं मया कार्यं ब्रूहि मित्रं हि मे भवान् । इत्युक्तवन्तं तमहं संस्तवप्रीतितोऽब्रवम् ॥ ६२
वं तत्त्वया ताभ्यां राक्षसाभ्यां हि खादिताः । कितवास्ते तवार्थे तौ राक्षसावद्यहं पुनः ॥ ६३
ौ दर्शय मे मित्रेत्युक्तवांस्तेन तत्क्षणम् । नीतस्तत्कूपनिकटं कितवेन तथेत्यहम् ॥ ६४
ाङ्मुखश्च यावत्तं कूपं पश्याम्यशङ्कितः । तावत्तेनास्मि दत्त्वार्धचन्द्रं क्षिप्तस्तदन्तरे ॥ ६५
ान्तः पतितस्याथ रक्षोभ्यां भक्ष्यबुद्धितः । गृहीतस्य समं ताभ्यां बाहुयुद्धमभून्मम ॥ ६६
ातिवर्तितुं बाहुबलं नाशक्नुतां मम । युद्धं त्यक्त्वा तदा कस्त्वमिति तौ मामपृच्छताम् ॥ ६७
ो मया डाकिनेयवृत्तान्तात्प्रभृति स्वके । वृत्तान्ते कथिते मैत्रीं कृत्वा मां वदतः स्म तौ ॥ ६८
ो तवावयोस्तेषां कितवानां च कीदृशी । अवस्था विहिता तेन कितवेन दुरात्मना ॥ ६९
ं न मैत्री न घृणा नोपकारः स्पृशेन्मनः । तेषु च्छलैकविद्येषु विश्वासः कितवेषु कः ॥ ७०
दृशं नैरपेक्ष्यं च कितवानां निसर्गजम् । ठिण्ठाकरालस्य कथा तथा च श्रूयतां त्वया ॥ ७१
त्रामेवोज्जयिन्यां स द्यूतकारोऽभवत्पुरि । पूर्वं ठिण्ठाकरालाख्यो विषमोऽन्वर्थनामकः ॥ ७२
य हारयतो नित्यं द्यूते ये जयिनोऽपरे । ते प्रत्यहं द्यूतकाराः कपर्दकशतं ददुः ॥ ७३
ापणात्स गोधूमचूर्णं क्रीत्वा दिनात्यये । चकारापूपिकाः क्वापि मृदित्वा कर्परेऽम्भसा ॥ ७४
त्रा श्मशाने पक्त्वा ताश्चिताग्नावेत्य चाग्रतः । महाकालस्य तद्दीपघृताभ्यक्ता अभक्षयत् ॥ ७५
व च महाकालदेवागाराङ्गणे सदा । उपधानीकृतभुजः स सुष्वाप क्षितौ निशि ॥ ७६
दा रजनौ तत्र महाकालनिकेतने । मातृमण्डलयक्षादिप्रतिमास्तस्य पश्यतः ॥ ७७
रन्तीर्मन्त्रसांनिध्यान्मतिरेवमजायत । न करोमि किमर्थार्थमुपायमिह युक्तितः ॥ ७८
द्धश्चेद्भद्रमथवा न सिद्धः का क्षतिर्मम । इत्यालोच्याब्रवीद्द्यूतायाक्षिपन्देवताः स ताः ॥ ७९
भोः सह युष्माभिर्दीव्यामीहाहमेव च । सभ्यस्तथा पातयिता जितं सद्यश्च दीयते ॥ ८०

इत्युक्तास्तेन तास्तूष्णीं यत्तस्थुस्तदपातयत्। ठिण्ठाकरालः स पणं कृत्वा चित्रा वराटिकाः॥
अङ्गीकृतं पातनं स्यात्कितवेनानिषेधता। इति द्यूते हि सर्वत्र स्थितिर्द्यूतकृतां सदा॥
ततो जित्वा बहु स्वर्णं देवतास्ता जगाद सः। जितं प्रयच्छत धनं मह्यमाभाषितं यथा॥
इत्युच्यमानाः कितवेनासकृत्तेन ता यदा। देवता नालपन्किंचित्तदा वक्ति स्म स क्रुधा॥
यदि स्थिताः स्थ तूष्णीं तत्क्रियते कितवस्य यत्। अदत्तहारितार्थस्य शिलाभूतस्य तिष्ठतः॥
यमदंष्ट्राग्रतीक्ष्णेन क्रकचेनाङ्गपाटनम्। तदहं वः करिष्यामि नह्यपेक्षास्ति कापि मे॥
इत्युक्त्वा यावदादाय क्रकचं सोऽभिधावति। तावत्तस्मै ददुः स्वर्णं देवतास्ता यथाजितम्॥
हारयित्वा च तत्प्रातर्नक्तमेत्य तथैव सः। आचकर्ष हठद्यूतेनार्थं मातृगणात्पुनः॥
एवं स कुरुते यावत्प्रत्यहं तावदेकदा। जगाद देवी चामुण्डा मातृस्ताः खिन्नमानसाः॥
इतोऽहं निर्गतो द्यूतादित्याहूतो ब्रवीति यः। स नाक्षेप्य इति द्यूते शैलीयं मातृदेवताः॥
तस्मादाह्वयमानं तं तदेवोक्त्वा निरस्यत। इति चामुण्डयोक्तास्ता देव्यश्चेतसि तद्दधुः॥
निशि प्राप्तं कृताह्वानं कितवं तं च देवने। निर्गताः स्म इतो द्यूतादित्यूचुः सर्वदेवताः॥
एवं निराकृतष्ठिण्ठाकरालस्ताभिरेव सः। तत्प्रभुं तं महाकालमेवाह्वयत देवितुम्॥
सोऽपि लब्धावकाशं तं मत्वा हठदुरोदरे। निर्गतोऽहमितो द्यूतादिति देवः किलाब्रवीत्॥
अक्षीणदोषाद्विषमादिष्टानिष्टभयोज्झितात्। दुर्जनाद्धूत देवा अप्यशक्ता इव बिभ्यति॥
तथा दुरोदराचारभग्नकैतवयुक्तिना। तेन ठिण्ठाकरालेन खिन्नेनैवमचिन्त्यत॥
अहो द्यूतस्थितिं देवैः शिक्षित्वास्मि निराकृतः। तदेतमेव देवेशमिदानीं शरणं श्रये॥
इत्याकलय्य हृदये परिगृह्यैव पादयोः। स्तुवंष्ठिण्ठाकरालस्तं महाकालं व्यजिज्ञपत्॥
देव्या द्यूतजितेष्विन्दुवृषकुञ्जरचर्मसु। जानुन्यस्तकपोलं ते नौमि नग्नाङ्गमासितम्॥
यदिच्छामात्रतस्तास्ता विभूतीर्ददते सुराः। यो निरीहो जटाभस्मकपालैकपरिग्रहः
स सलोभोऽद्य जातस्त्वं मन्दपुण्ये कथं मयि। यदल्पहेतोर्मामेवं हा वञ्चयितुमीहसे॥
कल्पवृक्षोऽप्यधन्यानां नाशां पूरयति ध्रुवम्। यद्बिभर्षि न मां नाथ भृतविश्वोऽपि भैरव॥
तत्प्रपन्नस्य मे कष्टव्यसनाविष्टचेतसः। व्यतिक्रममपि स्थाणो भगवन्क्षन्तुमर्हसि॥
त्र्यक्षस्त्वं तादृगेवाहं भस्माङ्गे ते ममापि तत्। त्वं कपाले यथा भुङ्क्षे तथैवाहं दयस्व मे॥
युष्माभिः सममालप्य कथं नु कितवैरहम्। सहालपिष्यामि पुनस्तन्मामापन्नमुद्धर॥
इत्यादि तावदस्तौषीत्कितवस्तं स भैरवम्। यावत्स परितुष्यैवं देवः साक्षादुवाच तम्॥
ठिण्ठाकराल तुष्टोऽस्मि तव मा स्माधृतिं कृथाः। अहं दास्यामि ते भोगानिहैवास्स्व ममान्तिके॥
इति देवाज्ञया तत्र तस्थौ स कितवस्तदा। तत्प्रसादादुपनतां भुञ्जानो भोगसंपदम्॥
एकदा च महाकालतीर्थेऽत्र स्नातुमागताः। रात्रावप्सरसो दृष्ट्वा स देवो व्यादिदेश तम्॥
आसां स्नातुं प्रवृत्तानां सर्वासां सुरयोषिताम्। तटन्यस्तानि वासांसि लघु हृत्वा त्वमानय॥
यावदेता न दास्यन्ति तुभ्यमेतां कलावतीम्। अप्सरःकन्यकां तावदासां वस्त्राणि मा मुचः॥
एवं स भैरवेणोक्तो गत्वामरमृगीदृशाम्। ठिण्ठाकरालः स्नान्तीनां तासां वस्त्राण्यपाहरत्॥
मुञ्च मुञ्चाम्बराण्यस्मान्मा स्म कार्षीर्दिगम्बराः। इति ब्रुवाणाश्च स ता व्याजहार हरौजसा॥
कन्यां कलावतीमेतां यदि मह्यं प्रयच्छथ। तदहं वो विमोक्ष्यामि वासांस्येतानि नान्यथा॥
तच्छ्रुत्वा तं दुराधर्षं दृष्ट्वा स्मृत्वा च तादृशम्। शक्रशापं कलावत्यास्ताश्चैतत्प्रतिपेदिरे॥
ददुः कलावतीं तां च तस्मायुज्झितवाससे। ठिण्ठाकरालाय ततो विधिनालम्बुपासुताम्॥
अथाप्सरःसु यातासु कलावत्या तया सह। तस्थौ ठिण्ठाकरालोऽसौ देवेच्छानिर्मितास्पदः॥
कलावती च देवेन्द्रमुपस्थातुमगाद्दिवा। त्रिदिवं रजनौ तं च सदा पतिमुपाययौ॥
त्वत्प्राप्तिहेतुना शक्रशापेन मम वल्लभ। वरायितमिति प्रीत्या कदाचिद्ब्रुवती च सा॥

ठिण्ठाकरालेन पत्या तच्छापकारणम् । पृष्टा सती सुरवधूः कलावत्यब्रवीदिदम् १२०
ोद्याने सुराञ्जातु मर्त्यभोगास्तुता मया । निन्दन्त्या दिविषद्भोगान्दृष्टिमात्रोपभोगदान् ॥ १२१
द्ध्वा देवराजो मामशपद्गच्छ भोक्ष्यसे । मर्त्येन परिणीता त्वं भोगांस्तान्मानुषानिति ॥ १२२
ायमावयोर्जातः संयोगोऽन्योन्यसंमतः । श्वश्च नाकाच्चिरेणैष्याम्यहं मा भूच्च तेऽधृतिः ॥ १२३
ा नवप्रयोगं हि नर्तिष्यति हरेः पुरः । आ तत्समाप्तेरस्माभिः स्थातव्यं तत्र च प्रिय ॥ १२४
ष्ठिण्ठाकरालस्तां प्रेमदुर्ललितोऽभ्यधात् । अहं द्रक्ष्यामि तं नृत्तं गुप्तं तत्रैव मां नय ॥ १२५
छ्रुत्वा कलावत्या तया स जगदे पतिः । युज्यते कथमेतन्मे कुप्येद्बुद्ध्वा हि देवराट् ॥ १२६
मुक्तोऽपि निर्बन्धं यदा तस्याश्चकार सः । तदा कलावती स्नेहान्नेतुं तं प्रत्यपद्यत ॥ १२७
ः प्रभावगूढं तं कृत्वा कर्णोत्पलान्तरे । ठिण्ठाकरालमनयत्सा महेन्द्रस्य मन्दिरम् ॥ १२८
नशोभितद्वारं नन्दनोद्यानसुन्दरम् । दृष्ट्वा ठिण्ठाकरालस्तद्देवमानी तुतोष सः ॥ १२९
ं चात्र वृत्रारेरास्थाने त्रिदशाश्रिते । प्रगीतस्वर्वधूसार्थं रम्भानृत्तोत्सवाद्भुतम् ॥ १३०
ादिप्रणीतानि सर्वातोद्यानि चाशृणोत् । प्रसन्ने हि किमप्राप्यमस्तीह परमेश्वरे ॥ १३१
प्रेक्षणकस्यान्ते तत्रोत्थाय प्रवृत्तवान् । दिव्यश्छागाकृतिर्भण्डो नर्तितुं दिव्यभङ्गिभिः १३२
ाकरालो दृष्ट्वा तं परिज्ञाय व्यचिन्तयत् । अहो एतमहं पश्याम्युज्जयिन्यामजं पशुम् । १३३
द्रस्य पुरश्चायमीदृशो भण्डनर्तकः । अतर्क्या दिव्यमायेयं विचित्रा बत काचन ॥ १३४
ठिण्ठाकरालस्य तस्य चिन्तयतो हृदि । नृत्तान्ते छागभण्डस्य शक्रास्थानं न्यवर्तत ॥ १३५
कलावती हृष्टा सा कर्णोत्पलसंश्रितम् । ठिण्ठाकरालं स्वस्थानमानिनाय तथैव तम् ॥ १३६
ाकरालश्चान्येद्युरुज्जयिन्यां तमागतम् । दृष्ट्वा छागाकृतिं दर्पाद्देवभण्डमभाषत ॥ १३७
ममाग्रतो नृत्य नृत्यसीन्द्राग्रतो यथा । अन्यथा न क्षमिष्ये ते तन्नृत्तं भण्ड दर्शय ॥ १३८
त्वा विस्मितश्छागस्तूष्णीमेव बभूव सः । कुतोऽयं मानुषोऽप्येवं मां जानातीति चिन्तयन् ॥ १३९
न्धेनोच्यमानो यन्नैव च्छागो ननर्त सः । ततस्ठिण्ठाकरालस्तं लगुडैर्मूर्ध्न्यताडयत् ॥ १४०
स गत्वा शक्राय तथैव च्छगलोऽखिलम् । स्रवद्रक्तेन शिरसा यथावृत्तं न्यवेदयत् ॥ १४१
ऽपि प्रणिधानेन बुबुधे तद्यथा दिवम् । ठिण्ठाकरालमानैषीद्रम्भानृत्ते कलावती ॥ १४२
च च्छागनृत्तं तद्दृष्टं तेनापराधिना । ततः कलावतीमेवमाहूयेन्द्रः शशाप सः ॥ १४३
र्थमस्य च्छागस्य येनावस्था कृतेदृशी । रागात्तं मानुषं गुप्तं यदिहानीतवत्यसि ॥ १४४
छ नरसिंहेन राज्ञा नागपुरे पुरे । देवागारे कृते स्तम्भे भव त्वं सालभञ्जिका ॥ १४५
हवान्कलावत्या मात्रालम्बुषया तया । शक्रोऽनुनाथितः कृच्छ्रादेवं शापान्तमादिशत् ॥ १४६
बहुब्दनिष्पन्नं देवेवेश्म विनश्य तत् । भविष्यति समं भूमेरस्याः शापक्षयस्तदा ॥ १४७
द्रशापशापान्तावेवं साश्रुः शशंस सा । तस्मै कलावती ठिण्ठाकरालाय सवाच्यतम् ॥ १४८
स्वाभरणं तस्मै तिरोभूय विवेश च । गत्वा नागपुरे देवगृहस्तम्भाग्रपुत्रिकाम् ॥ १४९
ाकरालोऽपि ततस्तद्वियोगविषाहतः । न ददर्श न शुश्राव लुलोठ भुवि मूर्छितः ॥ १५०
रहस्यं मत्वापि मूढेनाविष्कृतं मया । निसर्गचपलानां हि मादृशां संयमः कुतः ॥ १५१
ानीमयं प्राप्तो वियोगो विषमो मया । इत्यादिलब्धसंज्ञश्च कितवो विललाप सः ॥ १५२
ाचिन्तयत्कालो वैक्लव्यस्यैष नैव मे । गृहीतधैर्यः शापान्तहेतोस्तस्या न किं यते ॥ १५३
ोच्य विचार्याथ प्रव्राड्वेषं विधाय सः । साक्षसूत्राजिनजटं धूर्तो नागपुरं ययौ ॥ १५४
व्यां चतसृषु न्यधाद्दिक्षु पुराद्बहिः । कान्तालंकारकलशान्निखाय चतुरो भुवि ॥ १५५
ं च महारत्नसंपूर्णं निचखान सः । नगरान्तर्निशि स्वैरं देवाग्रापणभूतले ॥ १५६
त्वा स तत्रासीन्नद्यास्तीरे कृतोटजः । आश्रित्य कैतवतपः कृतकध्यानजप्यवान् ॥ १५७
दिनस्य त्रिः स्नानं भुञ्जानो भैक्ष्यमम्बुभिः । प्रक्षाल्य दृषदि प्राप् स महातापसप्रथाम् ॥ १५८

क्रमाच्छ्रुतिपथायातो राज्ञा सोऽभ्यर्थितोऽपि यत् । नागात्तदन्तिकं तस्स राजा तत्पार्श्वमाययौ ॥
स्थित्वा कथाभिश्च चिरं सायं तस्मिन्नियियासति । राज्यकस्माच्छिवा चक्रे शब्दं तत्र विदूरतः ॥
तच्छ्रुत्वा तापसच्छद्मा कितवो हसति स्म सः । किमेतदिति पृष्टश्च किमनेनेत्यभाषत ॥
निर्बन्धाच्च नृपे पृच्छत्युवाचैवं स मायिकः । अटव्यां नगरस्यास्य पूर्वतो वेतसीतले ॥
रत्नाभरणपूर्णोऽस्ति कलशस्तद्गृहाण तम् । इत्युक्तं मे रुतज्ञस्य नृपते शिवयैतया ॥
उक्त्वैवं कौतुकाविष्टं नीत्वा तं तत्र भूपतिम् । खात्वा स भूमिमुद्धृत्य तस्मै तं कलशं ददौ ॥
ततः स लब्धाभरणः संजातप्रत्ययो नृपः । ज्ञानिनं सत्यवाचं तं मेने निःस्पृहतापसम् ॥
आनीय स्वाश्रमं तं च मुहुर्नत्वा च पादयोः । स ययौ मन्दिरं नक्तं सामात्यस्तद्गुणान्स्तुवन् ॥
एवं क्रमात्तमायान्तं धूर्तो रुतमिषान्नृपम् । सोऽन्यांस्त्रीन्रत्नकलशान्दिग्भ्योऽन्याभ्यो व्यलम्भयत् ॥
ततः स राजा पौराश्च मन्त्रिणोऽन्तःपुराणि च । तत्तापसैकभक्तानि तन्मयान्येव जज्ञिरे ॥
एकदा नीयमानश्च देवागारेक्षणाय सः । राज्ञा कुतापसोऽश्रौषीदापणे काकवाशितम् ॥
ततोऽब्रवीत्तं राजानं श्रुता काकस्य वाक्त्वया । आपणेऽत्रैव देवाग्रे निखातो भुवि तिष्ठति ॥
सद्रत्नपूर्णः कलशः कस्मात्सोऽपि न गृह्यते । इत्येतदुक्तं काकेन तदेहि स्वीकुरुष्व तत् ॥
इत्युक्त्वा तत्र नीत्वा तं भूमेरुद्धृत्य भूभृते । सद्रत्नकलशं प्रादात्स तस्मै कूटतापसः ॥
ततोऽतिपरितोषात्स स्वयं हस्तेऽवलम्ब्य तम् । कपटज्ञानिनं राजा देवागारं प्रविष्टवान् ॥
तत्र स्तम्भे समाधूय परिव्राट् सालभञ्जिकाम् । अनुप्रविष्टां प्रियया कलावत्या ददर्श ताम् ॥
कलावती च तत्सालभञ्जिकारूपधारिणी । दुःखिता तं पतिं दृष्ट्वा प्रारेभे तत्र रोदितुम् ॥
तद्दृष्ट्वा सानुगो राजा सविस्मयविषादवान् । ज्ञान्याभासमपृच्छत्तं किमिदं भगवन्निति ॥
ततो विषण्णविभ्रान्त इव धूर्तो जगाद सः । एहि स्वभवनं तत्र वच्म्यवक्तव्यमप्यदः ॥
इत्युक्त्वा स नृपं नीत्वा राजधानीमुवाच तम् । अस्थाने कुमुहूर्ते च देवागारमिदं त्वया ॥
यत्कृतं तत्तृतीयेऽह्नि भविष्यत्यहितं तव । अतस्त्वद्दर्शनात्सैषा प्रारोदीत्स्तम्भपुत्रिका ॥
तच्छरीरेण चेत्कृत्यं तव निर्लोठ्य तन्नृप । अद्यैवैतद्द्रुतं देवकुलं भूमिसमं कुरु ॥
सुस्थाने सुमुहूर्ते च कुर्वन्यत्र सुरालयम् । अनिमित्तं शमं यातु सराष्ट्रस्यास्तु ते शिवम् ॥
इत्युक्तस्तेन स नृपः समाज्ञाप्य भयात्प्रजाः । एकाह्नैव तद्देवगृहं भूमिसमं व्यधात् ॥
स्थानान्तरे च प्रारेभे कर्तुं देवकुलं पुनः । अहो विश्वास्य वञ्च्यन्ते धूर्तैश्छद्मभिरीश्वराः ॥
सिद्धकार्यस्ततस्त्यक्त्वा प्रव्राड्वेषं पलाय्य सः । ठिण्ठाकरालः कितवः प्रायादुज्जयिनीं ततः ॥
कलावती च तद्बुद्ध्वा शापमुक्ताभ्युपेत्य तम् । मार्गे दृष्ट्वा समाश्वास्य द्रष्टुमिन्द्रमगाद्दिवम् ॥
इन्द्रोऽपि विस्मितो बुद्ध्वा तन्मुखात्तस्य तत्पतेः । मायां तां द्यूतकारस्य जहास च तुतोष च ॥
ततः पार्श्वस्थितः शक्रं तमुवाच बृहस्पतिः । विचित्रमायाः कितवा ईदृशा एव सर्वदा ॥
पुराकल्पे तथा चाभून्नगरे कितवः क्वचित् । कुट्टिनीकपटो नाम कपटद्यूतकोविदः ॥
परलोकगतं तं च धर्मराजः किलाब्रवीत् । कल्पं नरकवासस्ते कितवास्ति स्वपातकैः ॥
एकं तु दिनमिन्द्रत्वमस्ति दानवशात्तव । दत्तं ब्रह्मविदे ह्येकं सुवर्णं जातुचित्त्वया ॥
तद्ब्रूहि पूर्वं किं भुङ्क्षे नरकं किमुतेन्द्रताम् । तच्छ्रुत्वा कितवोऽवोचद्भुञ्जे प्रागिन्द्रतामिति ॥
ततः स धर्मराजेन प्रेषितः कितवो दिवि । एकाहमिन्द्रमुत्थाप्य देवै राज्येऽभ्यषिच्यत ॥
संप्राप्तदेवराज्यः सन्नानाय्य कितवान्सखीन् । स्ववेश्याश्च दिवं देवानादिदेशाधिपत्यतः ॥
नीत्वास्मान्सर्वतीर्थेषु सर्वान्स्नपयत क्षणात् । दिव्येष्वपि च भौमेषु सप्तद्वीपगतेष्वपि ॥
अनुप्रविश्य चाद्यैव भूपतीन्निखिलान्भुवि । प्रयच्छत महादानान्यस्मदर्थमनारतम् ॥
इत्यादिष्टाः सुरास्तेन सर्वं चक्रुस्तदैव तत् । धूतपापः स तैः पुण्यैर्धूर्तः प्रापेन्द्रतां स्थिराम् ॥
तद्वयस्याश्च वेश्याश्च ये तेनानायिता दिवम् । अमरत्वं ययुस्तेऽपि तत्प्रसादाद्धतांहसः ॥

तीयेऽह्नि स्थिरप्राप्तदेवराज्यं स्वबुद्धितः । कितवं धर्मराजाय चित्रगुप्तः शशंस तम् ॥ १९८
तः सुचरितं बुद्ध्वा धर्मराजो विसिस्मिये । अहो बत द्यूतकृता वञ्चिताः स्म इति ब्रुवन् ॥ १९९
दृशाः कितवा वञ्चिन्नित्युक्त्वा विरते गुरौ । ठिण्ठाकरालं द्यामिन्द्रोऽनैषीत्प्रेष्य कलावतीम् ॥ २००
त्र तद्बुद्धिधैर्याभ्यां तुष्टः संमान्य देवराट् । दत्त्वा कलावतीं चक्रे तं स पार्श्वस्थमात्मनः ॥ २०१
तः स देववद्वीरः कलावत्या समं सुखी । ठिण्ठाकरालो न्यवसच्छंकरानुग्रहाद्दिवि ॥ २०२
दृग्द्यूतकाराणां मायासाहसयोर्गतिः । तदग्निशिख वेताल किंचित्रं कितवेन यत् ॥ २०३
ाकिनेयेन निक्षिप्तः कूपेऽस्मिन्मायया भवान् । तत्त्वं निर्याहि मित्रावां निरैष्यावोऽवटादितः ॥ २०४
युक्तो ब्रह्मरक्षोभ्यां निर्गत्याहं ततोऽवटात् । रात्रावस्यां पुरि प्राप्य क्षुधार्तः पथिकं द्विजम् २०५
च गृह्णामि धावित्वा विप्रं यावज्जिघृत्सया । तावच्छ्रीविक्रमादित्यदेवमाक्रन्दति स्म सः ॥ २०६
त्यैव च स निर्गत्य राजा ज्वलनसंनिभः । आः पाप मा वधीर्विप्रमित्यारात्प्रतिहत्य माम् ॥ २०७
वर्तत शिरश्छेत्तुमालेख्यपुरुषस्य यत् । तेन मे छेदमागच्छन्कण्ठोऽभूत्स्रुतशोणितः ॥ २०८
ोऽङ्क्लिष्टस्तेनैव रक्षितोऽस्म्युज्झितद्विजः । एवंप्रभावो देवोऽसौ विक्रमादित्यभूपतिः ॥ २०९
ाज्ञया हतश्चायं खण्डकापालिको मया । तदेतं मम वेताल भक्ष्यं यमशिख त्यज ॥ २१०
मग्निशिखेनोक्तोऽप्याक्षिपत्तस्य पाणिना । दर्पाद्यमशिखः खण्डकापालिककलेवरम् ॥ २११
ः श्रीविक्रमादित्यः प्रकाशयात्मानमत्र सः । आलिख्य पुरुषं भूमौ पाणिं तस्यासिनाच्छिनत् ॥ २१२
ि च्छिन्नौ यमशिखस्यापतत्तस्य यत्करः । ततस्तं कुणपं त्यक्त्वा पलाय्यैवागमद्भयात् ॥ २१३
भक्षयच्चाग्निशिखः कुणपं तं कपालिनः । अहं च निर्भयोऽद्राक्षं सर्वं राजौजसा तु तत् । ॥ २१४
माख्याय सा यक्षवधूर्मदनमञ्जरी । त्वत्प्रभावं महाराज तत्र मामवदत्पुनः ॥ २१५
ो वक्ति स्म मधुरं स राजानङ्गदेव माम् । यक्षि कापालिकान्मुक्ता गच्छ भर्तृगृहानिति ॥ २१६
ः प्रणम्य तमहं गृहं स्वमिदमागता । चिन्तयन्त्युपकारस्य निष्कृतिं तस्य भूपतेः ॥ २१७
ं प्राणाः कुलं भर्ता दत्ता मे प्रभुणा तव । त्वदाख्याता च तस्यैषा संवदिष्यति सत्कथा ॥ २१८
ा ज्ञातं च यत्तस्य राज्ञस्त्रैलोक्यसुन्दरी । प्रेषिता सिंहलेन्द्रेण तनया सा स्वयंवरा ॥ २१९
च हर्तुं कृता बुद्धिः सर्वैः संभूय राजभिः । हत्वा विक्रमशक्तिं तं तत्सामन्तं समत्सरैः ॥ २२०
माद्विक्रमशक्तेस्त्वं गत्वा तद्विदितं कुरु । येन तेषामवहितः प्रतीकारे स तिष्ठति ॥ २२१
् च तत्करिष्यामि प्रयत्नं येन तानरीन् । हत्वा स विक्रमादित्यदेवो विजयमाप्स्यति ॥ २२२
दर्थमिहानीतो मया त्वं निजमायया । येन राज्ञः ससामन्तस्यैतत्सर्वं वदिष्यसि ॥ २२३
द्भूतं च प्रहेष्यामि त्वत्प्रभोस्तस्य तादृशम् । दद्यां तदुपकारस्य लेशतो येन निष्कृतिम् ॥ २२४
वदति यावत्सा तावत्ते तत्र कन्यके । आगते समृगे ये द्वे दृष्टे अस्माभिरम्बुधौ ॥ २२५
ा चन्द्रावदाताङ्गी प्रियंगुश्यामलापरा । सरित्पतेः कृतोपासे जाह्नवीयमुने इव ॥ २२६
ण्णयोस्तयोस्तां च यक्षीं देवास्मि पृष्टवान् । देवि के कन्यके एते सौवर्णोऽयं मृगश्च कः ॥ २२७
श्रुत्वा सा महाराज यक्षिणी मामभाषत । अनङ्गदेव यदि ते कौतुकं वच्मि तच्छृणु ॥ २२८
ायाजग्मतुः पूर्वं प्रजासर्गे प्रजापतेः । घोरौ घण्टनिघण्टाख्यौ दानवौ देवदुर्जयौ ॥ २२९
ोर्विनाशकामश्च विधाता कन्यके इमे । जगदुन्मादनोद्दामरूपशोभे विनिर्ममे ॥ २३०
वात्यद्भुते चैते हरन्तौ तौ महासुरौ । परस्परं युध्यमानौ जग्मतुर्द्वावपि क्षयम् ॥ २३१
ा ब्रह्मा धनाध्यक्षायैते कन्ये समर्पयत् । त्वया योग्याय कस्मैचिद्भर्त्रे देये इमे इति ॥ २३२
दोऽप्यर्पयदिमे मद्भर्त्रे स्वानुजन्मने । मद्भर्ता चार्पयन्मह्यं तथैव वरकारणम् ॥ २३३
ा श्रीविक्रमादित्यश्चानयोश्चिन्तितो वरः । देवावतारो ह्युचितः स एव पतिरेतयोः ॥ २३४
रूपे इमे कन्ये मृगस्याख्यायिकां शृणु । जयन्तो नाम तनयो दयितोऽस्ति शचीपतेः ॥ २३५
भ्राम्यमाणः स्वःस्त्रीभिर्व्योम्ना जातु शिशुर्भुवि । राजपुत्रानधोऽद्राक्षीत्क्रीडतो मृगपोतकैः ॥ २३६

ततः स बालभावेन क्रीडामृगशिशुं विना । हेवाकी त्रिदिवं गत्वा प्रारोदीत्पितुरग्रतः ॥
तेन तस्य कृते शक्रोऽकारयद्विश्वकर्मणा । सुधासेकार्पितप्राणं हेमरत्नमयं मृगम् ॥
अथ तेन स चिक्रीड जयन्तः संतुतोष च । सोऽप्यत्र तस्थौ विहरन्नाके हरिणपोतकः ॥
कालेनेन्द्रजितान्वर्थनाम्ना रावणसूनुना । सोऽपहृत्य मृगो निन्ये लङ्कां स्वनगरीं दिवः ॥
गते च काले हतयोः सीताहरणमन्युना । रामलक्ष्मणवीराभ्यां रावणेन्द्रजितोस्तयोः ॥
लङ्काराज्येऽभिषिक्तस्य राक्षसेन्द्रस्य मन्दिरे । विभीषणस्य सोऽतिष्ठद्रत्नहेममृगोऽद्भुतः ॥
विभीषणश्च तं मह्यमुत्सवे जातुचिद्गृहान् । नीतायै भर्तृबान्धव्यान्मृगं संमानयन्नदात् ॥
सोऽयं मृगशिशुर्दिव्यो वर्ततेऽद्य गृहे मम । मया च त्वत्प्रभोरेव कर्तव्योऽयमुपायनम् ॥
इति सा यावदाख्याति यक्षिणी मे कथाक्रमम् । तावत्कमलिनीकान्तो रविरस्तमुपाययौ ॥
ततस्तया समादिष्टे धाम्नि संध्याविधेः परम् । सिंहलेश्वरदूतोऽयमहं च शयितावुभौ ॥
प्रातः प्रबुद्धौ पश्यावो यावदावामनीकिनीम् । प्राप्तौ विक्रमशक्तेस्तां सामन्तस्य तव प्रभो ॥
ततो विचिन्त्य यक्षिण्यास्तत्प्रभावविजृम्भितम् । पार्श्वे विक्रमशक्तेर्द्राग्गतावावां सविस्मयौ ॥
स च दृष्ट्वैव संमान्य कुशलं परिपृच्छ्य च । सिंहलेश्वरसंदेशं यावन्नौ प्रष्टुमिच्छति ॥
तावत्ते यक्षिणीप्रोक्तस्वरूपे दिव्यकन्यके । मृगपोतश्च संप्राप्तास्तत्र यक्षचमूवृताः ॥
तान्दृष्ट्वा दुष्टभूतादिमायाशङ्की स संशयात् । देव विक्रमशक्तिर्मां किमेतदिति पृष्टवान् ॥
ततः ससिंहलाधीशकार्यं तस्मायहं क्रमात् । यक्षिणीकन्यकायुग्ममृगोदन्तमवर्णयम् ॥
यक्षीमुखाच्छ्रुतं तं च सर्वेषामैकमत्यतः । राजद्विष्टोद्यमं राज्ञां तस्यावोचमहं ततः ॥
ततः स संमान्यावां च दिव्यकन्ये च ते उभे । प्रहृष्टः सैन्यमकरोत्सामन्तः सज्जमाहवे ॥
क्षणाच्चाश्रावि देवात्र सैन्यतूर्यमहारवः । क्षणाच्चादर्शि सम्लेच्छं प्रतिराजबलं महत् ॥
अन्योन्यदर्शनक्रोधादभिधावितयोस्तयोः । प्रावर्तत द्वयोर्युद्धमस्मत्सैन्यारिसैन्ययोः ॥
ततो यक्षीविसृष्टैस्तैर्यक्षैरस्मद्द्विषद्बलम् । अन्यैरस्मद्भटाविष्टैरन्यैः सख्यादहन्यत ॥
सैन्यरेणुगणाकीर्णं खड्गधारानिरन्तरम् । सशूरगर्जितं घोरमुदभूद्रणदुर्दिनम् ॥
छेदोच्छलद्भिर्द्विषतां निपतद्भिश्च मूर्धभिः । अशोभत जयश्रीर्नः क्रीडन्ती कन्दुकैरिव ॥
क्षणाच्च हतशेषास्ते राजानो भग्नसैनिकाः । त्वत्सामन्तस्य कटकं प्रणताः शरणं श्रिताः ॥
ततो जितासु सद्वीपास्वाशासु चतसृष्वपि । उत्सादितेषु म्लेच्छेषु सर्वभूमीश्वर त्वया ॥
निजेन भर्त्रा सहिता प्रकटीभूय यक्षिणी । देव विक्रमशक्तिं तं मां चैवं वदति स्म सा ॥
मया यदेतद्विहितं सेवामात्रं भवत्प्रभोः । तदावेद्यं पुनश्चैवं स विज्ञाप्यो गिरा मम ॥
त्वयैते परिणेतव्ये कन्यके देवनिर्मिते । द्रष्टव्ये च प्रसादेन लालनीयोऽप्ययं मृगः ॥
मदीयं प्राभृतं ह्येतदित्युक्त्वा रत्नसंचयम् । दत्त्वा यक्षी तिरोऽभूत्सा भर्त्रा सह सहानुगा ॥
अन्येद्युः परिवारेण विभवेन च भूयसा । आगान्मदनलेखा सा सिंहलेश्वरकन्यका ॥
कृत्वा प्रत्युद्गमं साथ तेन विक्रमशक्तिना । प्रावेश्यत स्वकटकं प्रणतेन प्रहर्षतः ॥
द्वितीयेऽह्नि गृहीत्वा तां ते चोभे दिव्यकन्यके । हेमरत्नमृगं तं च त्रिजगन्नेत्रकौतुकम् ॥
सिद्धकार्य इहागन्तुं देवपाददिदृक्षया । ततो विक्रमशक्तिः स चलितो राजभिः सह ॥
स चेह निकटप्राप्तः सामन्तो देव वर्तते । आवेदनाय देवस्य तेनावां प्रेषितौ पुरः ॥
तदेव सिंहलेन्द्रस्य यक्षिण्याश्चानुरोधतः । तत्कन्याहरिणान्देवः प्रत्युद्यातु नृपानपि ॥
इत्युक्तोऽनङ्गदेवेन विक्रमादित्यभूपतिः । कृतं दुःसाध्यमपि तद्यक्षिणीरक्षणं स्मरन् ॥
नामन्यत तृणायापि श्रुत्वा तत्प्रत्युपक्रियाम् । बहु कृत्वापि मन्यन्ते स्वल्पमेव महाशयाः ॥
हृष्टश्च सिंहलाधीशदूतयुक्तं पुनः स तम् । अनङ्गदेवं हस्त्यश्वग्रामरत्नैरपूरयत् ॥

नीत्वा दिनं तदथ सिंहलराजपुत्र्यास्तस्यास्तयोः कमलजोद्भवकन्ययोश्च ।

प्रत्युद्गमाय स महीपतिरुज्जयिन्याः सैन्यैर्गजाश्ववहनैः सममुच्चचाल ॥ २७५
सत्कुञ्जरोऽञ्जनगिरिर्जयवर्धनस्य मत्तद्विपो रणभटस्य च कालमेघः ।
सङ्ग्रामसिद्धिरपि सिंहपराक्रमस्य वीरस्य विक्रमनिधे रिपुराक्षसश्च ॥ २७६
पवनजवो जयकेतोर्वल्लभशक्तेः समुद्रकल्लोलः ।
अश्वौ बाहुसुबाह्वोः शरवेगो गरुडवेगश्च ॥ २७७
श्यामा कुवलयमाला कोङ्काणी कीर्तिवर्मणस्तुरगी ।
कर्का गङ्गालहरी सुसैन्धवी समरसिंहस्य ॥ २७८
इति हस्त्यश्वं राजसु तेष्वपि चलितेषु विभजतामभितः ।
शुश्रुविरेऽत्र च राजनि चलिते दण्डाधिकारिणां वाचः ॥ २७९
भूमिः सैन्यमयी तदुत्थितमहाशब्दैकमय्यो दिशः
संसर्पद्ध्वजिनीविमर्दविलसद्धूलीमयी द्यौरपि ।
सर्वस्याद्भुततत्प्रभावमहिमव्याहारमय्यो गिर-
स्तस्मिन्राज्ञि पथि प्रयाति सकलद्वीपाधिनाथेऽभवन् ॥ २८०

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे विषमशीललम्बके द्वितीयस्तरङ्गः ।

तृतीयस्तरङ्गः ।

ा विक्रमादित्यो जयसैन्यमवाप तत् । अधिष्ठितं स्वसेनान्या तेन विक्रमशक्तिना ॥ १
तेन तेनैव सोत्केन प्रणतात्मना । सराजकेन सहितः स्वबलं स विवेश च ॥ २
शक्तिकुमारोऽयं कर्णाटोऽयं जयध्वजः । लाटो विजयवर्मायं काश्मीरोऽयं सुनन्दनः ॥ ३
ः सिन्धुराजोऽयं भिल्लो विन्ध्यबलोऽप्ययम् । निर्मूकः पारसीकोऽयं नृपः प्रणमति प्रभो ॥ ४
ाने नृपान्सोऽत्र प्रतीहारनिवेदितान् । सम्राट् संमानयामास सामन्तान्सैनिकानपि ॥ ५
न्द्रसुतादिव्यकन्याहेममृगांश्च तान् । यथार्हं सत्करोति स्म स सविक्रमशक्तिकान् ॥ ६
नं सबलोऽन्येद्युः प्रतस्थे च ततः कृती । स राजा विक्रमादित्यः प्राप चोज्जयिनीं पुरीम् ॥ ७
ातविसृष्टेषु स्वदेशानथ राजसु । जगदानन्दिनि प्राप्ते वसन्तसमयोत्सवे ॥ ८
पुष्पाभरणैर्मण्डनं कुर्वतीष्विव । तन्वतीष्विव संगीतं भृङ्गयोषित्सु गुञ्जितैः ९
ीष्विव चाश्लिष्टमरुत्सु वनराजिषु । पिकेषु कलशब्देषु मङ्गलानि पठत्स्विव ॥ १०
ता विक्रमादित्यः परिणिन्ये शुभेऽहनि । सिंहलेश्वरकन्यां तां ते च द्वे दिव्यकन्यके ॥ ११
श्वरकन्याया ज्येष्ठो भ्राता सहागतः । सिंहवर्मा ददौ वेद्यां महान्तं रत्नसंचयम् ॥ १२
ामेत्य च तयोर्यक्षिणी दिव्यकन्ययोः । असंख्यान्रत्नराशीन्सा ददौ मदनमञ्जरी ॥ १३
गन्तुमानृण्यं देव त्वत्सुकृतस्य किम् । किं तु दर्शयितुं भक्तिं नैतत्किंचित्कृतं मया ॥ १४
दोऽनयोः कार्यः कन्ययोर्हरिणस्य च । इत्युक्त्वा च तिरोऽभूत्सा यक्षी राज्ञाभिपूजिता ॥ १५
ांप्राप्य भार्यास्ताः सद्वीपां च महीं कृती । शशास विक्रमादित्यो राजा राज्यमकण्टकम् ॥ १६
श्चास्त विहरंस्तदा चोद्यानभूमिषु । ग्रीष्मे जलेषु सरसां धारायन्त्रगृहेषु च ॥ १७
न्तःपुरेषूद्यन्मृदङ्गरवहारिषु । शरदीन्दूदयापानहृद्यहर्म्यतलेष्वपि ॥ १८
ासुखशय्येषु कालागुरुसुगन्धिषु । वासवेश्मसु हेमन्ते स नृपोऽन्तःपुरैर्वृतः ॥ १९
ास्य राज्ञश्च नगरस्वामिसंज्ञकः । बभूव ग्रामशतभुक्चित्रकृज्जितविश्वकृत् ॥ २०
न व्यहेनास्मै राज्ञे प्राभृतपुत्रिकाम् । लिखित्वान्यान्यया रूपभङ्ग्या चित्रकरो ददौ ॥ २१
चोत्सववशाद्विस्मृत्य लिखिता न सा । तेन चित्रकृता दैवात्पुत्रिका नृपतेः कृते ॥ २२
प्राभृतदिने स्मृत्वा यावत्समाकुलः । आस्ते चित्रकरो हा किं ढौकयेयं प्रभोरिति ॥ २३
ागतः कोऽपि पान्थोऽकस्मात्तमभ्यगात् । स चास्त पुस्तिकां हस्ते न्यस्यैव क्वाप्यगाल्लघु ॥ २४

कौतुकाच्च स यावत्तामुद्धाटयति चित्रकृत् । तावद्ददर्श तत्रान्तश्चित्रस्थां पुत्रिकां पटे ॥
दृष्ट्वैवाद्भुतरूपां तां नीत्वा नृपतये ददौ । प्राभृतं प्रत्युतेदङ्के सिद्धमद्येति हर्षुलः ॥
नृपतिस्तां तु दृष्ट्वैव साश्चर्यः स जगाद तम् । न भद्र तव रेखेयं रेखेयं विश्वकर्मणः ॥
मानुषो हि कुतो वेत्ति लिखितुं रूपमीदृशम् । तच्छ्रुत्वा चित्रकृद्राज्ञे यथावृत्तं शशंस सः ॥
ततः सोऽनन्यदृग्राजा तां पश्यन्पुत्रिकां सदा । स्वप्ने द्वीपान्तरेऽद्राक्षीत्तद्रूपामेव कन्यकाम् ॥
संगमं भजते यावत्सोत्कः सोत्सुकया तया । तावत्प्रबोधितः सोऽभूद्यामिकेन निशाक्षये ॥
प्रबुद्धो भग्नतत्स्वप्नसमागमसुखश्च सः । यामिकं तं क्रुधा राजा नगर्या निरकालयत् ॥
क्व पान्थः पुस्तिका कास्य क्व तस्यां चित्रपुत्रिका । तस्या एव सजीवायाः स्वप्ने संदर्शनं क्व च ॥
तदेषा दैवघटना कन्या सास्तीति वक्ति मे । न च जानामि तद्द्वीपं प्राप्नुयां तत्कथं नु ताम् ॥
इत्यादि चिन्तयन्सोऽथ सर्वत्रारतिमान्नृपः । स्मरज्वरेण जज्वाल पर्याकुलपरिच्छदः ॥
ससंतापश्च विजये क्षत्त्रा भद्रायुधेन सः । शनैस्तत्कारणं पृष्टो जगादैवं महीपतिः ॥
शृणु तद्वच्मि ते मित्र ज्ञातं तावदिदं त्वया । यच्चित्रपुत्रिका तेन दत्ता चित्रकरेण मे ॥
तां चिन्तयंश्च सुप्तोऽहं स्वप्ने जानामि वारिधिम् । उत्तीर्य प्राप्य नगरं प्रविष्टोऽस्म्यतिसुन्दरम् ॥
तत्रापश्यमहं बह्वीः सायुधाः कन्यकाः पुरः । ता मां दृष्ट्वा जहि जहीत्युच्चैः कलकलं व्यधुः ॥
ततः ससंभ्रमा कापि जाने मामेत्य तापसी । प्रवेश्यैव निजं गेहं संक्षेपादिदमब्रवीत् ॥
पुरुषद्वेषिणी पुत्र राजपुत्रीयमागता । इतो मलयवत्याख्या विहरन्ती यदृच्छया ॥
दृष्टमात्रं च पुरुषं कन्याभिर्घातयत्यसौ । एताभिस्तेन रक्षार्थं मयेह त्वं प्रवेशितः ॥
इत्युक्त्वा तापसी सद्यः स्त्रीवेषं सा व्यधान्मम । अवध्याः कन्यकास्तास्तु मत्वा सोढं मयापि त
यावत्प्रविष्टामत्रैव सकन्यां तां नृपात्मजाम् । पश्यामि तावच्चित्रस्था या मयादर्शि सैव सा ॥
अचिन्तयं च धन्योऽहं यच्चित्रलिखितामिमाम् । दृष्ट्वा पुनश्च पश्यामि साक्षात्प्राणसमामिति ॥
राजपुत्री च सा तावत्तापसीं तां सकन्यका । दृष्टोऽस्माभिः प्रविष्टोऽत्र पुमान्कोऽपीत्यभाषत ॥
पुमान्कुतः प्राघुणिका स्थितैषा मे स्वसुःसुता । इति तां तापसी सापि प्रत्यवोचत्प्रदर्श्य माम् ॥
ततः सा राजतनया स्त्रीरूपमपि वीक्ष्य माम् । विस्मृत्य पुरुषद्वेषं सद्यः स्मरवशाभवत् ॥
आसीत्कण्टकिता किंचिच्चिन्तयन्तीव निश्चला । लब्धच्छिद्रेण कामेन कीलितेव समं शरैः ॥
क्षणाच्च तापसीं तां सा व्याहरद्राजकन्यका । तद्धार्ये त्वत्स्वसृसुता ममापि प्राघुणी न किम् ॥
आयातु मद्गृहमियं प्रहेष्याम्यर्चितामिमाम् । इत्युक्त्वादाय पाणौ मामनैषीत्सा स्वमन्दिरम् ॥
अहं च लब्धचित्तोऽस्या जाने तत्र तथेत्यगाम् । अन्वमन्यत मां सापि विदग्धा वृद्धतापसी ॥
ततोऽहं स्थितवांस्तत्र राजपुत्र्या तया सह । क्रीडन्त्या कन्यकान्योन्यविवाहादिविनोदनैः ॥
न च मामसुचत्पार्श्वात्क्षणं सा मद्गतेक्षणा । यत्र नाहं न सा तस्यै काचनारोचत क्रिया ॥
अथ ताः कन्यकाः कृत्वा वधूं तां राजकन्यकाम् । मां वरं चावयोर्जाने विवाहं क्रीडया व्यधुः
कृतोद्वाहौ ततश्चावां प्रविष्टौ वासकं निशि । निःशङ्का तत्र मां सा च कण्ठे राजसुताग्रहीत् ॥
तत्कालं च मयात्मानं प्रकाश्यालिङ्गितैव सा । सिद्धेष्टहृष्टा दृष्ट्वा मामासील्लज्जानता क्षणम् ॥
प्रवर्तयामि सुरते यावच्चैतां हृतत्रपाम् । तावत्प्रबोधितोऽस्मीह यामिकेन दुरात्मना ॥
तद्भद्रायुध नेदानीं चित्रे स्वप्ने च दृष्टया । तया मलयवत्याहं विना जीवितुमुत्सहे ॥
इत्युक्तवन्तं राजानं सत्यस्वप्नमवेत्य सः । भद्रायुधः प्रतीहारस्तमाश्वास्यैवमुक्तवान् ॥
कृत्स्नं चेत्स्मर्यते सम्यक्तत्तदालिख्यतां पटे । देवेन नगरं यावदुपायोऽत्र निरूप्यते ॥
इति भद्रायुधेनोक्तः स राजा लिखति स्म तत् । पटे पुरवरं सर्वं तद्वृत्तान्तं च तत्क्षणम् ॥
तं चित्रपटमादाय प्रतीहारस्तदैव सः । मठं नवं कारयित्वा तत्र भित्तावलम्बयत् ॥
मठे चात्राकरोद्दूरदेशादागतबन्दिनाम् । सत्रे षड्रसमाहारं सवस्त्रयुगकाञ्चनम् ॥

त्रस्थमिदं वेत्ति पुरं कोऽपि स एति चेत् । ममावेद्य इति प्रादादाज्ञां च मठवर्तिनाम् ॥ ६४
तरे ग्रीष्मवनं मल्लिकामोदिमारुतम् । छायानिषण्णपथिकं दृष्ट्वा पुष्पितपाटलम् ॥ ६५
ामाम्बुदश्यामो गुरुगम्भीरगर्जितः । केतकोद्दामदशनः प्रावृट्कालमदद्विपः ॥ ६६
ठं तस्य पौरस्त्यपवनेद्ध इवाययौ । वृद्धिं विरहदावाग्निर्विक्रमादित्यभूपतेः ॥ ६७
ारलते देहि सिञ्च चित्राङ्गि चन्दनैः । पत्रलेखेऽब्जिनीपत्रशयनं शिशिरं कुरु ॥ ६८
तेने कदलीदलैर्वितर मारुतम् । इति तद्वारनारीणां तदा शुश्रुविरे गिरः ॥ ६९
' विद्युद्विषमः शशामास्य घनागमः । राज्ञः सविरहज्वालो न पुनर्मदनज्वरः ॥ ७०
: पथि प्रवर्तन्तां दूरस्थानां प्रवृत्तयः । प्रियाः प्रियाणां ग्रथ्यन्तां जायन्तां तत्समागमाः ॥ ७१
शन्तीव ततः कलहंसरवैः शरत् । आगात्फुल्लाम्बुजमुखी सकाशकुसुमस्मिता ॥ ७२
दूरागतो बन्दी तत्र क्षत्तृकृते मठे । भोजनार्थी विवेशैको निशम्य ख्यातिमेकदा ॥ ७३
शम्बरसिद्धिः स मठेऽत्र कृतभोजनः । आत्तवस्त्रयुगश्चित्रपटं भित्तौ ददर्श तम् ॥ ७४
य तत्र चित्रस्थं नगरं तत्स विस्मितः । जगाद बन्दी केनेदमहो आलिखितं पुरम् ॥ ७५
' मया दृष्टं लिखितं येन तेन च । द्वितीयेनेति जानेऽहं नापरेणेति केनचित् ॥ ७६
त्वा मठजनेनोक्तं भद्रायुधस्य तत् । तत्तेन स्वयमेत्यासौ बन्दी निन्ये नृपान्तिकम् ॥ ७७
त्रा नगरं सत्यं तद्दृष्टमिति भूभृता । तत्र शम्बरसिद्धिः स परिपृष्टोऽब्रवीदिदम् ॥ ७८
त्रा तन्मलयपुरं नाम महापुरम् । भ्रमता भुवमुत्तीर्य वारिधिं द्वीपमध्यगम् ॥ ७९
मलयसिंहाख्यो नगरेऽस्ति महीपतिः । तस्यास्ति नाम्ना मलयवतीत्यनुपमा सुता ८०
षिणी सा च स्वप्ने जातु कथंचन । विहारनिर्गता कंचिन्महापुरुषमैक्षत ॥ ८१
कितमात्रेण स भीत इव तत्क्षणम् । निर्ययौ मनसस्तस्याः पुरुषद्वेषदुर्ग्रहः ॥ ८२
' तं स्वभवनं स्वप्न एव विधाय च । विवाहं तेन सहिता वासवेश्म विवेश सा ॥ ८३
ा समं यावत्सेवते सुरतोत्सवम् । तावद्वासस्थया दास्या सा निशान्ते प्रबोधिता ॥ ८४
र्वास्य कोपात्तां दासीं स्वप्नावलोकितम् । तं स्मरन्ती प्रियतमं प्राज्वलद्विरहाग्निना ॥ ८५
न्ती गतिं कांचित्स्मरेण विवशीकृता । उत्थायोत्थाय शयने स्रस्ताङ्गी न्यपतत्परम् ॥ ८६
ूताक्रान्तेव तमःसंमोहितेव च । नोत्तरं पृच्छतः किंचिद्ददौ परिजनस्य सा ॥ ८७
पित्रा मात्रा च ततः पृष्टातिकृच्छ्रतः । शशंस स्वप्नवृत्तान्तं सा तमाप्तसखीमुखे ॥ ८८
त्रा कृताश्वासा प्रतिज्ञामकरोच्च सा । विशाम्यग्निं तमाप्नोमि षड्भिर्मासैर्न चेदिति ॥ ८९
ासा गताश्चाद्य तस्याः को वेत्ति भावि किम् । इतीदृक्तत्र वृत्तान्तः पुरे परिगतो मया ॥ ९०
' ससंवादमुक्ते शम्बरसिद्धिना । जातार्थनिश्चये हृष्टे राज्ञि भद्रायुधोऽभ्यधात् ॥ ९१
ार्य स देशो हि त्वद्वशः सनृपः प्रभो । तत्तत्र गम्यतां यावन्मासः षष्ठो न यात्यतः ॥ ९२
ोदिते क्षत्त्रा तदाख्यातार्थविस्तरम् । कृत्वा शम्बरसिद्धिं तमग्रे भूरिधनार्चितम् ॥ ९३
नषु संपातं पाण्डिमानं धनेषु च । सरित्तोयेषु कार्श्यं च निरस्येव निजं नृपः ॥ ९४
ः स संपद्य तदैव दयितां प्रति । प्रतस्थे विक्रमादित्यः सैन्येन लघुना वृतः ॥ ९५
मेण तीर्णाब्धिर्यावत्प्राप्तः पुरं स तत् । तावद्ददर्श तत्राग्रे जनं कोलाहलाकुलम् ॥ ९६
ठ्यवत्यद्य पूर्णे षाण्मासिकेऽवधौ । अप्राप्तदयिता वह्निं राजपुत्री विविक्षति ॥ ९७
शुश्राव जनात्पृष्टादथ स भूपतिः । उपागाच्च स तं देशं रचिता यत्र तच्चिता ॥ ९८
दपसृते जने तत्र ददर्श तम् । दृशोरकाण्डपीयूषवर्षं सा राजकन्यका ॥ ९९
ाणेश्वरः स्वप्नपरिणेता ममागतः । तत्तातस्योच्यतां शीघ्रमिति स्माह च सा सखीः ॥ १००
त्रा तथैवोक्तस्तत्पिता सोऽथ भूपतिः । निर्दुःखो जातहर्षस्तं प्रह्वो राजानमभ्यगात् ॥ १०१
ुदिक्षिप्य भुजं तेन शम्बरसिद्धिना । उच्चैरवसरज्ञेन बन्दिनेदमपठ्यत ॥ १०२

जय निजतेजःसाधितभूतगण म्लेच्छविपिनदावाग्ने ।
जय देव सप्तसागरसीममहीमानिनीनाथ ॥
जय विजितसकलपार्थिवविनतशिरोधारितातिगुर्वाज्ञ ।
जय विषमशील विक्रमवारिनिधे विक्रमादित्य ॥

इत्युक्ते बन्दिना तं स विक्रमादित्यमागतम् । बुद्ध्वा मलयसिंहोऽत्र राजा जग्राह पादयोः ॥
विवेश च कृतातिथ्यस्तेन साकं स्वमन्दिरम् । तया मलयवत्या च दुहित्रा मृत्युमुक्तया ॥
ददौ च तां सुतां तस्मै विक्रमादित्यभूभृते । स राजा तेन जामात्रा मन्वानः कृतकृत्यताम् ॥
यथा चित्रे तथा स्वप्ने यथा स्वप्ने तथैव ताम् । विलोक्य साक्षान्मलयवतीमङ्कगतां प्रियाम् ॥
स चापि विक्रमादित्यस्तदद्भुतममन्यत । फलं शैलसुताकान्तप्रसादसुरशाखिनः ॥

अथ तामादाय वधूं निर्वृतिमिव रूपिणीं स मलयवतीम् ।
उत्तीर्य वारिराशिं सोत्कलिकं सुचिरविरहमिव ॥
तत्तत्प्राभृतहस्तैः प्रणम्यमानः पदे पदे भूपैः ।
निजनगरीमुज्जयिनीं प्रत्यागाद्विक्रमादित्यः ॥
प्रभावमालोक्य च तत्र तस्य तं यथेच्छसत्यीकृतचित्रकौतुकम् ।
विसिस्मिये को न जहर्ष को न वा चकार को वा न महोत्सवं जनः ॥

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे विषमशीललम्बके तृतीयस्तरङ्गः ।

---

## चतुर्थस्तरङ्गः ।

ततोऽस्य विक्रमादित्यस्यैकदात्र कथान्तरे । राज्ञी कलिङ्गसेनाख्या सपत्नीरेवमब्रवीत् ॥
राज्ञा मलयवत्यर्थे यत्कृतं न तदद्भुतम् । सदा विषमशीलो हि देवोऽयं प्रथितो भुवि ॥
अहं न परिणीता किमवस्कन्धामुना बलात् । मद्रूपां पुत्रिकां दृष्ट्वा गतेनानङ्गनिघ्नताम् ॥
एतन्निमित्तमाख्याता कथा कार्पटिकेन या । देवसेनेन मे तां वः कथयामि निशम्यताम् ॥
परिणीतास्म्यविधिना कथं राज्ञेतिदुःखिताम् । मामेत्याश्वासयन्नेवं स हि कार्पटिकोऽब्रवीत् ॥
मा स्म मन्युं कृथा देवि श्रद्धया परया ह्यसि । परिणीतातिसंरम्भादत्रामूलात्कथां शृणु ॥
अहं कार्पटिको भूत्वा सेवां कुर्वन्भवत्प्रभोः । अटव्यां दूरतोऽद्राक्षं महान्तं क्रोडमेकदा ॥
दंष्ट्राविशङ्कटमुखं तमालश्यामलच्छविम् । कृष्णपक्षं शशिकलाः खादन्तमिव रूपिणम् ॥
एत्य चावेदितो देवि मया राज्ञे तथैव सः । राजापि तद्रसाकृष्टो निरगान्मृगयाकृते ॥
मृगाटवीं च संप्राप्य कुर्वन्व्याघ्रमृगक्षयम् । आवेदितं मया दूराद्वराहं पश्यति स्म तम् ॥
दृष्ट्वाद्भुतं च तं मत्वा कंचित्कारणसूकरम् । रत्नाकराख्यमारोहदश्वमुच्चैःश्रवःसुतम् ॥
मध्याह्ने हि सदा भानुर्मुहूर्तं व्योम्नि तिष्ठति । तत्कालं चारुणेनाश्वा मुच्यन्ते स्नानपानयोः ॥
एकदोच्चैःश्रवा मुक्तस्तदा रविरथाद्वने । दृष्ट्वामुपेत्य राज्ञोऽश्वां तं तुरंगमजीजनत् ॥
तस्मिन्नारुह्य वाताश्वे जवादन्वपतच्च तम् । वराहं विद्रुतं राजा भूमिं दूराद्दवीयसीम् ॥
तत्र दृष्टिपथात्सोऽस्य नष्टोऽभूत्क्वापि सूकरः । उच्चैःश्रवःसुतादश्वात्तस्मादपि जवाधिकः ॥
ततो राजा तमप्राप्य दूरोज्झितपरिच्छदः । एकमन्वागतं दृष्ट्वा मामेवं परिपृष्टवान् ॥
अपि जानासि कियतीं वयं भूमिमुपागताः । तच्छ्रुत्वा देवि राजानं प्रत्यवोचमहं तदा ॥
योजनानां शतानि त्रीण्यागताः स्मः प्रभो इति । ततो राजाब्रवीत्तर्हि त्वं पद्भ्यां कथमागतः ॥
एवं सविस्मयेनाहं राज्ञा पृष्टस्तमब्रवम् । देवास्ति पादलेपो मे वृत्तान्तं चात्र तं शृणु ॥
पूर्वं भार्यावियोगेन तीर्थयात्राविनिर्गतः । पथि देवकुलं सायं सोद्यानं प्राप्तवानहम् ॥
तत्र चाहं निशां नेतुं प्रविष्टोऽपश्यमन्तरे । स्त्रियमेकामतिष्ठं च तत्रातिथ्याद्दत्तया ॥

ात्रौ च सा नभस्येकमोष्ठं कृत्वापरं भुवि । व्यात्तास्या प्राह मामीदृग्दृष्टं क्वापि मुखं त्वया ॥ २२
तोऽसिधेनुमाकृष्य सभ्रूभङ्गमबिभ्यता । त्वया चेदृक्पुमान्दृष्टः क्वापीत्युक्ता मयापि सा ॥ २३
ाथ सौम्यवपुर्भूत्वा साब्रवीन्मामवैकृता । यक्षी चण्ड्यभिधानाहं तुष्टा धैर्येण चास्मि ते ॥ २४
दिदानीं मम ब्रूहि किं प्रियं करवाणि ते । एवमुक्तवतीं तां च यक्षिणीमहमभ्यधाम् ॥ २५
रितुष्टासि चेत्सत्यं तत्कुरुष्व तथा मम । अक्लेशेन यथा तीर्थान्यटेयं निखिलान्यपि ॥ २६
वं मयोक्ता यक्षी सा पादलेपमदान्मम । तेन तीर्थान्यहं भ्रान्तस्त्वं चेहाद्यालुधावितः ॥ २७
नैव प्रत्यहं चाहमिहागत्याटवीभुवि । भुक्त्वा फलान्युज्जयिनीमेत्य सेवां करोमि ते ॥ २८
ते देवि मया राजा विज्ञप्तोऽन्तरमन्यत । प्रसन्नदृष्टिकथितं योग्यं मामनुयायिनम् ॥ २९
यो मयैवं विज्ञप्तो राजा देवानयाम्यहम् । सुस्वादूनि फलानीह भुज्यन्ते प्रभुणा यदि ॥ ३०
हं भोक्ष्ये न मे किंचिदुपयुक्तं भवान्पुनः । भुङ्क्तां किंचित्परिश्रान्त इति राजादिशच्च माम् ॥ ३१
ः कर्कटिकां तत्र संप्राप्याहमभक्षयम् । तया चाजगरोऽभूवमहं भक्षितमात्रया ॥ ३२
ा चाजगरीभूतमकस्माद्देवि मां तदा । देवो विषमशीलोऽभूत्सविषादः सविस्मयः ॥ ३३
ाकीं चात्र वेतालं भूतकेतुं समस्मरत् । प्राङ्नेत्ररोगादृष्ट्यैव मोचयित्वा वशीकृतम् ॥ ३४
वेतालः स्मृतायातः प्रह्वो राजानमब्रवीत् । किं स्मृतोऽस्मि महाराज निदेशो दीयतामिति ॥ ३५
। राजाब्रवीदेतं भद्र कार्पटिकं मम । सहसाजगरीभूतं प्रापय प्रकृतिं निजाम् ॥ ३६
ालोऽप्यवद्देव नास्ति शक्तिर्ममेदृशी । शक्तयो नियता वारि वैद्युताग्निं नु हन्ति किम् ॥ ३७
। राजाब्रवीत्तर्हि यामः पल्लीमिमां सखे । अतो बुध्येत भिल्लेभ्यः कोऽप्युपायः कदाचन ॥ ३८
ालोच्य सवेतालो राजा पल्लीं जगाम ताम् । तत्र साभरणं दृष्ट्वा तं चौराः पर्यवारयन् ॥ ३९
ातां शरवर्षाणि तेषां पञ्चशतानि च । भूतकेतुः स वेतालो राजादेशादभक्षयत् ॥ ४०
ाः पलाय्य गत्वा तत्स्वसेनापतयेऽब्रुवन् । एकाकिकेसरी नाम स चागात्सबलः क्रुधा ॥ ४१
स्यैकस्य च मुखाद्बुद्ध्वा प्रत्यभिजानतः । सेनापतिः स राजानमेत्य जग्राह पादयोः ॥ ४२
निवेदितात्मानं प्रह्वं प्रत्यभिनन्द्य तम् । पृष्ट्वा च कुशलं राजा सेनापतिमभाषत ॥ ४३
कार्पटिको भुक्त्वा फलं कर्कटिकां वने । गतोऽजगरतां तस्य युक्तिं तन्मुक्तये कुरु ॥ ४४
ाजवचः श्रुत्वा सेनापतिरुवाच सः । देवानुगोऽयं मत्पुत्रायास्मै तं दर्शयत्विति ॥ ४५
स तेन तत्पुत्रो वेतालेन सहैत्य माम् । ओषधीरसनस्येन पूर्ववन्मानुषं व्यधात् ॥ ४६
ाच्छाम च ततो हृष्टा राजान्तिकं वयम् । राजा च तमुदन्तं मां पादानतमबोधयत् ॥ ४७
किकेसरी सोऽथ भिल्लसेनापतिर्निजम् । गृहमभ्यर्थ्य राजानमनैषीदस्मदन्वितम् ॥ ४८
ायाम च तत्तस्य सदनं शबरीवृतम् । दन्तिदन्तचितोत्तुङ्गभित्ति व्याघ्रच्छदच्छवि ॥ ४९
ंसि बर्हिपिच्छानि हारा गुञ्जाफलस्रजः । मातङ्गमदनिःष्यन्दो यत्र स्त्रीणां च मण्डनम् ॥ ५०
सेनापतेर्भार्या परिचर्यां व्यधात्स्वयम् । राज्ञो मृगमदामोदिवासा मुक्ताद्यलंकृता ॥ ५१
भुक्तस्ततो राजा तत्र वृद्धांस्तदात्मजान् । सेनापतिं च तरुणं दृष्ट्वा तं परिपृष्टवान् ॥ ५२
ाते ममाश्चर्यमिदं तावत्त्वयोच्यताम् । तरुणस्त्वं त्वदीयास्तु पुत्रा वृद्धा अमी कथम् ॥ ५३
ा राज्ञा गदितः शबरेन्द्रोऽब्रवीदिदम् । महत्येषा कथा देव श्रूयतां यदि कौतुकम् ॥ ५४
ञामीति विप्रोऽहं मायापुर्यां पुरावसम् । सोऽहं वनमगां जातु दार्वर्थं पितुराज्ञया ॥ ५५
ो मर्कटो मार्गं रुद्ध्वातिष्ठदबाधकृत् । आर्तेन चक्षुषा पश्यन्मार्गमन्यं प्रदर्शयन् ॥ ५६
दत्येष मां तावत्तद्गच्छामि वरं पथा । एतत्प्रदर्श्यमानेन पश्याम्यस्याशयं कपेः ॥ ५७
ोच्याथ तेनाहं मार्गेण प्रस्थितोऽभवम् । स च मे मर्कटोऽग्रेऽग्रे प्रायात्पश्यन्विवृत्य माम् ॥ ५८
च दूरमारोहज्जम्बूवृक्षं स मर्कटः । तत्पृष्ठे च लताजालघने दृष्टिमदामहम् ॥ ५९
लयबद्धाङ्गीमपश्यंचात्र वानरीम् । एतदर्थमनेनाहमानीत इति चाविदम् ॥ ६०

ततोऽहं वृक्षमारुह्य वल्लीवलयपाशकम् । छित्त्वा परशुना तं च वानरींताममोचय
अथावतीर्य वृक्षात्तौ वानरो वानरी च सा । अवतीर्णस्य मे पादावगृह्णीतामुभावपि
स्थापयित्वा च मे पादलग्नां तां वानरीं क्षणम् । गत्वा स कपिरानीय मह्यं दिव्यम
तदादाय गृहीत्वाहमिन्धनान्यागमं गृहम् । तत्र चाभक्ष्यं भार्यासहितस्तत्फलोत्तम
तस्मिन्भुक्ते जरारोगौ सभार्यस्य गतौ मम । ततस्तत्रोदभूदस्मद्देशे दुर्भिक्षविप्लवः ।
तदाक्रान्तश्च तत्रत्यो जनो यातो यतस्ततः । अहं दैवादिमं देशं सभार्यः प्राप्तवान्
इह काञ्चनदंष्ट्राख्यस्तदाभूच्छबराधिपः । तस्य शस्त्रमुपादाय भृत्यतामहमाश्रयम्
आयोधनेषु दृष्ट्वा च तेषु तेष्वग्रयायिनम् । सोऽथ काञ्चनदंष्ट्रो मां सेनापत्येऽभि
एकभक्त्या च स मया ततोऽप्याराधितः प्रभुः । मह्यमेवान्तकालेऽत्र राज्यं प्राद
इहस्थस्य च मे यातान्यब्दानां सप्तविंशतिः । शतानि न जरा चास्ति मम तत्फल
एवं स्वोदन्तमाख्याय स राजानं सविस्मयम् । एकाकिकेसरी भूयो भिल्लराजो व्य
तन्मया वानरफलाद्यत्कृतं चिरजीवितम् । पूर्णं ततोऽद्य संप्राप्तं फलं त्वत्पाददर्शन
अतोऽहमर्थये देव यो गृहागमनान्मयि । दर्शितोऽनुग्रहोऽद्यायं परितोषं स नीयत
भार्यायां क्षत्रियायां मे देवोत्पन्नास्ति कन्यका । अनन्यतुल्या रूपेण नाम्ना मदन
कन्यारत्नं च तद्देवादृते नान्यत्र शोभते । तत्प्रयच्छामि तां तुभ्यमुद्वहस्व यथावि
दासोऽहं च धनुर्लक्षद्वयेनानुगतः प्रभो । इति तेनार्थितो राजा स तथेत्यन्वमन्यत
शुभे लग्ने च तां तस्य तनयां परिणीतवान् । मुक्ताकस्तूरिकाभारभृतोष्ट्रशतदायिन
सप्तरात्रमुषित्वा च राजा प्रस्थितवांस्ततः । तया मदनसुन्दर्या सभिल्लानीकया सह
अत्रान्तरेऽश्वापहृते राज्ञि तन्मृगयावने । स्थितमस्मद्बलं खिन्नं क्षत्ता भद्रायुधोऽभ्य
अलं विषादेनायाति न चिरादेव वः प्रभुः । नास्य दिव्यप्रभावस्य किंचिदत्यहितं
किं न स्मरथ यद्गत्वा पातालात्परिणीय च । नागकन्यां सुरूपाख्यामेककः स इ
गन्धर्वलोकं गत्वा च वीरः प्रत्यागतस्ततः । तारावलीमुपादाय गन्धर्वाधिपकन्यक
इत्युक्त्वाश्वासिताः सर्वे तेन भद्रायुधेन ते । अतिष्ठन्नटवीद्वारे राज्ञो मार्गावलोकि
राजापि स्पष्टमार्गेण समं शबरसैनिकैः । तस्यां मदनसुन्दर्यां प्रक्रामन्त्यां यथेच्छ
प्राविशत्तुरगारूढः सवेतालो मया सह । वनं तत्पूर्वदृष्टस्य वराहस्य दिदृक्षया ॥
प्रविष्टस्य च तत्रागाद्वराहस्तस्य सोऽग्रतः । दृष्ट्वैव च स राजा तमवधीत्पञ्चभिः
हतस्य तस्य धावित्वा वेतालेन विदारितात् । उदरादेव निरगादकस्मात्सुभगः पु
को भवानिति यावत्तं राजा पृच्छति विस्मयात् । जङ्गमाद्रिनिभस्तावदागात्तत्र व
आपतन्तं तमारण्यं राजा दृष्ट्वैव कुञ्जरम् । एकेनैव पृषत्केन मर्माहतमपातयत्
तस्यापि पाटितात्तेन वेतालेनोदरान्तरात् । पुरुषो निरगाद्दिव्यः स्त्री च सर्वाङ्गसु
प्रष्टुकामं च राजानं वराहोदरनिर्गतः । स पुमानवदद्राजन्स्वोदन्तं शृणु वच्मि ते
आवां देवकुमारौ द्वौ भद्राख्योऽयमहं शुभः । तौ भ्रमन्तावपश्याव कण्वं ध्याना
गजसूकरयो रूपमावाभ्यां क्रीडया कृतम् । कृत्वा च त्रासितो मोहान्महर्षिः शप
अटव्यामीदृशावेव भवतं गजसूकरौ । विक्रमादित्यभूपेन हतौ मुक्तिमवाप्स्यथः
इत्यावां मुनिशापेन गजसूकरतां गतौ । त्वयाद्य मोचितौ स्त्री तु स्वोदन्तं वक्ति
एतं च सूकरं कण्ठे पृष्ठे च स्पृश वारणम् । कृपाणचर्मणी दिव्ये तवैतौ हि भवि
इत्युक्त्वा सद्वितीयः स तिरोऽभूत्तौ च भूपतेः । क्रोडद्विपौ करस्पृष्टौ संपन्नौ ख
ततः सा स्त्री स्ववृत्तान्तं पृष्टा सत्येवमब्रवीत् । भार्याहं धनदत्ताख्यस्योज्जयिन्यां
सा हर्म्यतलसुप्ताहमागत्यानेन दन्तिना । निगीर्यैवमिहानीता न चास्यान्तः पुमा

ञोदरात्तु निर्यातः पुमानस्मान्मया सह । एवमुक्तवतीं राजा दीनां तामवदत्स्त्रियम् ॥ १००
रा भव गृहान्भर्तुर्भवतीं प्रापयाम्यहम् । समं मदवरोधेन गच्छ प्रक्रमनिर्भया ॥ १०१
युक्त्वानाययित्वा तां वेतालेन समर्पयत् । राज्ञ्यै मदनसुन्दर्यै प्रक्रामन्त्यै पृथक्पथा ॥ १०२
ागतेऽथ वेताले तत्रापश्याव कानने । अकस्माद्राजकन्ये द्वे भूरिभव्यपरिच्छदे ॥ १०३
नाययच्च मां प्रेष्य तयो राजा महत्तरान् । कुतः के कन्यके चैते इति पृष्टाश्च तेऽब्रुवन् ॥ १०४
स्त द्वीपं कटाहाख्यं केतनं सर्वसंपदाम् । अन्वर्थनामा तत्रास्ति नृपतिर्गुणसागरः ॥ १०५
ाजनि महादेव्यां नाम्ना गुणवती सुता । निर्मातुरेव धातुर्या रूपेणाश्चर्यदायिनी ॥ १०६
ाश्च सिद्धैरादिष्टः सप्तद्वीपेश्वरः पतिः । ततश्च तत्पिता राजा सोऽमन्त्रयत मन्त्रिभिः ॥ १०७
क्रमादित्यदेवोऽस्या योग्यो मे दुहितुर्वरः । तत्पाणिग्रहणायैतां तस्यैव प्रेषयाम्यहम् ॥ १०८
। संमन्त्र्य वहने जलधौ सपरिच्छदाम् । आरोप्य सधनां तां च स राजा व्यसृजत्सुताम् ॥ १०९
ार्णद्वीपनिकटं प्राप्तं दैवाद्व्यगीर्यत । सराजकन्यं सजनं वहनं शफरेण तत् ॥ ११०
चाब्धिवेलया नीत्वा विधिगत्येव रोधसि । क्षिप्तस्तद्द्वीपसंलग्नो महामत्स्योऽवसन्नवान् ॥ १११
ःव तत्र धावित्वा नानाप्रहरणो जनः । व्यापाद्याश्चर्यमत्स्यस्य तस्योदरमपाटयत् ॥ ११२
ागाच्च ततः पूर्णं जनैस्तद्वहनं महत् । बुद्ध्वैतद्विस्मयादागात्तत्र तद्द्वीपभूपतिः ॥ ११३
चन्द्रशेखरो राजा गुणसागरभूभृतः । स्यालो जनाद्वहनगाद्यथातत्त्वमबुध्यत ॥ ११४
ो बुद्ध्वा गुणवतीं भागिनेयीं स तां नृपः । प्रवेश्य राजधानीं स्वामानन्दादुत्सवं व्यधात् ॥ ११५
येद्युश्च सुतां चन्द्रवतीं नाम स भूपतिः । विक्रमादित्यदेवाय दातुं प्राक्परिकल्पिताम् ॥ ११६
ावत्या तया साकं तत्कृते विभवोत्तराम् । प्रास्थापयत्प्रवहणे सुमुहूर्तेऽधिरोपिताम् ॥ ११७
इमे तीर्णजलधी प्रक्रामन्त्यौ क्रमादिह । राजकन्ये उभे प्राप्ते वयं परिकरोऽनयोः ॥ ११८
प्राप्तांश्च नः क्रोडवारणावभ्यधावताम् । सुमहान्तौ ततोऽस्माभिरेवमाक्रन्दितं प्रभो ॥ ११९
गते विक्रमादित्यदेवस्यैते स्वयंवरे । कन्यके लोकपालास्तत्तस्य धर्मेण रक्षत ॥ १२०
छ्रुत्वावोचतां तौ नः क्रोडेभौ व्यक्तया गिरा । धीरा भवत भीर्नास्ति राजनामग्रहेण वः ॥ १२१
व तं च राजानमागतं द्रक्ष्यथाधुना । इत्युक्त्वा तौ गजक्रोडौ दिव्यौ कौचिदितो गतौ ॥ १२२
ोऽस्मदीयवृत्तान्त इत्युक्ते तैर्महत्तरैः । अयं स एव राजेति देवि तानहमब्रवम् ॥ १२३
स्ते पादपतिता हृष्टास्ते राजकन्यके । तस्मै गुणवतीचन्द्रवत्यौ राज्ञे समर्पयन् ॥ १२४
ाप्यादिश्य वेतालं सुन्दर्यौ ते अनाययत् । सार्धं मदनसुन्दर्या समं तिस्रोऽपि यान्त्विति ॥ १२५
ं च तेन वेतालेनागतेन ततः क्षणात् । मया च सहितः प्रायादुत्पथेनैव देवि सः ॥ १२६
छतां च वनेऽस्माकं रविरस्तमुपागमत् । तत्कालं तत्र चास्माभिरश्रावि मुरजध्वनिः ॥ १२७
ो मुरजशब्दोऽयमिति राजनि पृच्छति । वेतालः सोऽब्रवीद्देवकुलं देवात्र विद्यते ॥ १२८
्यकौतूहलं तच्च निर्मितं विश्वकर्मणा । तत्रैष मुरजध्वानः संध्याप्रेक्षणके प्रभो ॥ १२९
ुक्तवान्स वेतालो राजा चाहं च कौतुकात् । तत्रागच्छाम संयम्य तुरगं प्रविशाम च ॥ १३०
ाश्यामार्चितं चात्र तार्क्ष्यरत्नमयं महत् । लिङ्गं तदग्रे चोदग्रदीपकं प्रेक्षणीयकम् ॥ १३१
ृत्यन्सुचिरं तत्र दिव्यरूपा वरस्त्रियः । चतुर्विधेन वाद्येन गानगान्धर्वयोगिना ॥ १३२
यान्ते दृष्टमस्माभिस्तत्राश्चर्यं प्रविश्य यत् । स्तम्भस्थपुत्रिकास्वन्तर्नर्तक्यो लयमागताः ॥ १३३
पना वादकाद्याश्च चित्रस्थपुरुषेष्वपि । तद्दृष्ट्वा विस्मिते राज्ञि स वेतालोऽब्रवीदिदम् ॥ १३४
ेयमीदृशी दिव्या विश्वकर्मकृताक्षया । सततं हि भवत्येतत्संध्ययोरुभयोरपि ॥ १३५
ुक्ते तेन तत्रान्तर्भ्रमन्तौ वयमेकतः । सविशेषामपश्याम रूपेण स्तम्भपुत्रिकाम् ॥ १३६
ता तु तां विलोक्यैव तल्लावण्यविमोहितः । शून्यः स्तब्धः क्षणं सोऽपि स्तम्भोत्कीर्ण इवाभवत् ॥ १३७
ावीच्च न पश्यामि रूपेणानेन चेदहम् । सजीवामङ्गनां तन्मे किं राज्यं किं च जीवितम् ॥ १३८

एतच्छ्रुत्वा स वेतालोऽवादीन्नैतद्दुरासदम्। कलिङ्गसेना नामास्ति कलिङ्गाधिपतेः सुता ॥ १३९
तां दृष्ट्वा रूपकारेण तद्रूपघटनेप्सुना। वर्धमानपुरीयेण कृतेयं सालभञ्जिका॥ १४०
तद्गत्वोज्जयिनीं तस्मात्कालिङ्गान्नृपतेः प्रभो। तामर्थयस्व तत्कन्यां विक्रमेण हराथवा॥ १४१
इति वेतालवचनं न्यधाद्राजा तथा हृदि। ततो नीत्वात्र तां रात्रिं प्रातः संप्रस्थिता वयम्॥ १४२
यान्तश्चाशोकवृक्षस्य तलेऽपश्याम पूरुषौ। भव्यौ द्वौ तौ च राजानमुत्थायानमतां ततः॥ १४३
कौ युवां किमरण्यस्थाविति राज्ञोक्तयोस्तयोः। एको वक्ति स्म देवैतच्छ्रूयतां कथयाम्यहम्॥ १४४
धनदत्ताभिधानोऽहमुज्जयिन्यां वणिक्सुतः। सोऽहं हर्म्यतले जातु संसुप्तो भार्यया सह॥ १४५
प्रातः प्रबुध्य पश्यामि यावत्सा तत्र नास्ति मे। भार्या हर्म्ये न चान्येषु प्रासादोपवनादिषु॥ १४६
न तस्याश्चित्तमन्यादृक्क्लृप्तोऽत्र प्रत्ययस्तथा। यदि साध्व्यस्मि तदियं न म्लायेद्ध्रुवमित्यसौ॥ १४७
माला मह्यं तया दत्ता सा चाम्लानैव वर्तते। तन्न जाने क याता सा नीता भूतादिना नु किम्॥ १४८
इति संचिन्तयंश्चिन्वन्नाक्रन्दन्विलपन्रुदन्। अतिष्ठं तद्वियोगाग्निज्वलितोऽहमभोजनः॥ १४९
बान्धवाश्वासितः किंचित्कृताहारोऽथ दुःखितः। ब्राह्मणान्भोजयन्नासं देवागारे कृतस्थितिः॥ १५०
तत्र जातु परिश्रान्तो विप्रो मामयमभ्यगात्। मया विश्रमितश्चायं स्नानाहारादिना तदा॥ १५१
कुतस्त्वमिति पृष्टश्च भुक्तोत्तरमसौ मया। वाराणसीसमीपस्थाद्ग्रामादस्मीत्यभाषत॥ १५२
मद्भृत्याख्यातमद्दुःखस्तत एषोऽब्रवीत्पुनः। आत्मावसादितो मित्र किमनुद्योगिना त्वया॥ १५३
व्यवसायी हि दुष्प्रापमपि प्राप्नोति तत्सखे। उत्तिष्ठ तव भार्यां तामन्विष्याव: सखास्मि ते॥ १५४
कथं सान्विष्यते यस्या दिङ्मात्रं नैव बुध्यते। इत्युक्तवन्तमथ मां प्रीत्या भूयोऽब्रवीदयम्॥ १५५
मैवं किं केसटो न प्रागसंभाव्यसमागमाम्। प्राप रूपवतीं भार्यां तथा चैतत्कथां शृणु॥ १५६
पुरे पाटलिपुत्रेऽभूद्धनाढ्यब्राह्मणात्मजः। केसटाख्यो द्विजयुवा रूपे काम इवापरः॥ १५७
स भार्यां सदृशीं प्रेप्सुः पित्रोरविदितो गृहात्। निर्गत्य देशान्बभ्राम तांस्तांस्तीर्थापदेशतः॥ १५८
क्रमाच्च नर्मदातीरं प्राप्तो जातु ददर्श सः। महान्तमागतं तेन जन्ययात्राजनं पथा॥ १५९
दृष्ट्वा च दूरात्तन्मध्यादेत्यैकस्तं द्विजाग्रणीः। संभाष्य केसटं वृद्धः प्राह सप्रणयं रहः॥ १६०
त्वत्तोऽहमर्थये किंचिल्लीलासाध्यं च तत्तव। मम तूपकृतिः पूर्णा करोषि यदि वच्मि तत्॥ १६१
तच्छ्रुत्वा केसटोऽवादीदार्य शक्यं ब्रवीषि चेत्। तन्निश्चितं मया कार्यं भवतूपकृतिस्तव॥ १६२
ततो वृद्धद्विजोऽवादीच्छृणु पुत्रास्ति मे सुतः। स चाग्रणीर्विरूपाणां सुरूपाणां भवानिव॥ १६३
दन्तुरश्चिपिटघ्राणः कृष्णः काचरलोचनः। पृथूदरो वक्रपादः शूर्पकर्णपुटश्च सः॥ १६४
तादृशस्य कृते स्नेहात्कृत्वा रूपाभिवर्णनम्। ब्राह्मणाद्रत्नदत्ताख्यात्कन्यका याचिता मया॥ १६५
सा च रूपवती नाम पित्रा दातुं प्रतिश्रुता। तेनान्वर्थाभिधा तस्मै सोऽद्य पाणिग्रहस्तयोः॥ १६६
तदर्थमागता एते वयं दृष्टे च मत्सुते। न संबन्धी सुतां दद्यादारम्भोऽयं वृथा भवेत्॥ १६७
उपायं ध्यायता चात्र मया लब्धो भवानिह। तद्वाचा प्रतिपन्नं द्रागिदं मे वाञ्छितं कुरु॥ १६८
अस्माभिः सममागत्य कन्यां तां परिणीय च। मत्पुत्राय प्रयच्छाद्य वध्वास्त्वं ह्यनुरूपकः॥ १६९
तच्छ्रुत्वा तं तथेत्युक्तवन्तमादाय केसटम्। नौभिः स नर्मदां तीर्त्वा पारं वृद्धद्विजो ययौ॥ १७०
प्राप्य चैकं पुरं सोऽथ व्यश्रमत्सानुगो बहिः। आकाशपथिकोऽस्ताद्रौ तावदर्कोऽप्युपाविशत्॥ १७१
प्रसर्पति ततो ध्वान्ते जलोपान्ते स केसटः। उपस्प्रष्टुं गतोऽद्राक्षीद्राक्षसं घोरमुत्थितम्॥ १७२
भक्षयाम्यहमेष त्वां क मे केसट यास्यसि। इत्युक्तवन्तं च स तं राक्षसं केसटोऽभ्यधात्॥ १७३
मा स्म मां भक्षयेस्तावत्त्वामुपैष्याम्यहं पुनः। ब्राह्मणस्य प्रतिज्ञातं कार्यं निर्वाह्य निश्चितम्॥ १७४
तच्छ्रुत्वा कारयित्वा च शपथं सोऽथ राक्षसः। मुमोच केसटं सोऽपि तज्जन्यबलकं ययौ॥ १७५
ततः स वृद्धविप्रस्तं वरमण्डनमण्डितम्। आदाय केसटं जन्यैः समं तत्प्राविशत्पुरम्॥ १७६
तत्र सज्जितवेदीकं रत्नदत्तगृहं च सः। प्रावेशयत्केसटं तं विविधातोद्यनादितम्॥ १७७

ेसटश्च स तां सम्यगुपयेमे वराननाम् । कन्यां रूपवतीं तत्र पित्रा प्रत्तमहाधनाम् ॥ १७८
ानन्द स्त्रीजनश्चात्र तुल्यौ वीक्ष्य वधूवरौ । सा च रूपवती प्राप्तं दृष्ट्वा तं तादृशं वरम् ॥ १७९
स्याः सख्योऽपि तं दृष्ट्वा जज्ञिरे जातमन्मथाः । विषादविस्मयाक्रान्तः स त्वासीत्केसटस्तदा ॥ १८०
ात्रौ च शयनीये तं चिन्तासक्तं पराङ्मुखम् । प्रियं रूपवती दृष्ट्वा व्याजसुप्तं चकार सा ॥ १८१
नशीथे सोऽथ सुप्तां तां मत्वा निर्गत्य केसटः । राक्षसस्यान्तिकं तस्य सत्यं पालयितुं ययौ ॥ १८२
ापि रूपवती स्वैरमुत्थायानुपलक्षिता । सकौतुका तं भर्तारमन्वियाय पतिव्रता ॥ १८३
ाप्तं च केसटं तत्र राक्षसः स जगाद तम् । साधु भोः पालितं सत्यं महासत्त्वोऽसि केसट ॥ १८४
ंरं पाटलिपुत्रं तद्देसटश्च पिता त्वया । पवित्रितस्तदायाहि यावत्त्वां भक्षयाम्यहम् ॥ १८५
च्छ्रुत्वा सहसोपेत्य रूपवत्यभ्यधादिदम् । मां खाद भक्षिते ह्यस्मिन्पत्यौ का मे गतिर्भवेत् ॥ १८६
नक्षा ते गतिरित्युक्ते रक्षसा साप्युवाच तम् । को मे भिक्षां महासत्त्व दास्यतीह स्त्रिया इति ॥ १८७
ो न दास्यति भिक्षां ते याचितस्तस्य यास्यति । शतधा शिर इत्युक्ते राक्षसेन च साब्रवीत् ॥ १८८
र्हि त्वमेव मे देहि भर्तृभिक्षामिमामिति । अददच्च ममाराशु शीर्णमूर्धा स राक्षसः ॥ १८९
ाथ केसटमादाय तच्चारित्रातिविस्मितम् । आगाद्रूपवती वेश्म तावच्चाक्षीयत क्षपा ॥ १९०
ोभूते च कृताहारं तज्जन्यबलकं ततः । प्रस्थाय नर्मदातीरं संप्राप सवधूवरम् ॥ १९१
तो वधूं रूपवतीं नावमारोप्य सानुगाम् । स मुख्यवृद्धविप्रोऽन्यां नावमारोहदात्मना ॥ १९२
ेसटं तु पृथङ्नावि स्वीकृत्याभरणादि सः । आरोपयच्छठः कृत्वा नाविकैः सह संविदम् ॥ १९३
तः स सवधूजन्यः पारं तीर्त्वा ययौ द्विजः । नदीमध्येन दूरं तु दाशैर्निन्ये स केसटः ॥ १९४
त्र क्षिप्त्वा महत्योघे नावं तां केसटं च ते । वृद्धद्विजादात्तधना बाहुतीर्णापगा ययुः ॥ १९५
ेसटस्तु सनौकोऽपि नद्या हृत्वोत्तरङ्गया । क्षिप्तोऽम्बुधौ वातवशाद्व्यस्तोऽभूदूर्मिणा तटे ॥ १९६
त्रायुषः सशेषत्वात्समाश्वस्य व्यचिन्तयत् । अहो प्रत्युपकारोऽयं कृतस्तेन द्विजेन मे ॥ १९७
ि वा तेनैव नाख्याता तस्य निर्धर्ममूर्खता । युनक्ति भार्यया पुत्रं परेण परिणाय्य यत् ॥ १९८
ति संचिन्तयन्यावदास्ते तत्र स विह्वलः । विचरत्खेचरीचक्रा तावत्तस्याययौ क्षपा ॥ १९९
स्यां विनिद्रस्तुर्ये स यामे कलकलं दिवि । श्रुत्वा ददर्श सुभगं खाद्भ्रष्टं पुरुषं पुरः ॥ २००
स्तश्चिरादविकृतं तं विभाव्य स केसटः । को भवानिति पप्रच्छ ततस्तं सोऽब्रवीत्पुमान् ॥ २०१
ं मे ब्रूहि भवान्कोऽत्र ततो वक्ष्याम्यहं तव । तच्छ्रुत्वा केसटस्तस्मै स्ववृत्तान्तमवर्णयत् ॥ २०२
तः स पुरुषोऽवादीत्तुल्यावस्थोऽसि तर्हि मे । तदिदानीं स्ववृत्तान्तं तव वच्मि सखे शृणु ॥ २०३
ास्ति वेणानदीतीरे पुरं रत्नपुराख्यया । तत्र कंदर्पनामाहमाढ्यपुत्रो गृही द्विजः ॥ २०४
ोऽहं प्रदोषे तोयार्थी वेणामवतरन्नदीम् । तस्यां स्खलित्वा पतितो वार्योघेन हृतोऽभवम् ॥ २०५
ंरं नीत्वा तया रात्र्या तेनाहं च दिनागमे । आयुर्बलात्कच्छगते तरुखण्डे निवेशितः ॥ २०६
ाखावलम्बेनारुह्य रोधस्याश्वस्य चान्तिके । मातृदेवगृहं शून्यं तत्रापश्यमहं महत् ॥ २०७
स्मिन्प्रविश्य दृष्ट्वान्तः स्फुरन्तीरिव तेजसा । मातृरहं शान्तभयो नत्वा स्तुत्वा व्यजिज्ञपम् ॥ २०८
ागवत्यः परित्राणं कुरुध्वं कृपणस्य मे । अहमेष हि युष्माकं प्राप्तोऽद्य शरणागतः ॥ २०९
ति विज्ञप्य नद्योघपरिक्लिष्टस्य तत्र मे । विश्राम्यतः शनैर्मित्र विश्रान्ति वासरोऽप्यगात् ॥ २१०
ागात्ताराास्थिमालाढ्या ज्योत्स्नाभूतिसिता ततः । शशिशुभ्रकपाला च रौद्री रजनितापसी ॥ २११
त्काले चात्र जानामि ततो मातृगणान्तरात् । निर्गत्य योगिनीग्रामः परस्परमभाषत ॥ २१२
ाद्य चक्रपुरेऽस्माभिर्गन्तव्यं चक्रमेलके । इह च श्वापदाकीर्णे रक्षास्य ब्राह्मणस्य का ॥ २१३
देष स्थाप्यतां नीत्वा यत्रैतस्य शुभं भवेत् । आनेष्यामः पुनश्चैनमेषोऽस्माञ्शरणं श्रितः ॥ २१४
त्युक्त्वा खेन नीत्वा मामलंकृत्य निधाय च । पुरे क्वापि गृहे कस्याप्याढ्यविप्रस्य ता गताः ॥ २१५
ात्र पश्यामि यावच्च कन्योद्वाहाय सज्जिता । वेदी लग्नश्च संप्राप्तो न जन्यबलकं पुनः ॥ २१६

ततस्तत्र स्थितं दिव्यवरवेषं विलोक्य माम् । अयं तावद्वरः प्राप्त इति सर्वोऽब्रवीज्जनः ॥ २१७
ततो नीत्वैव मां वेदीमानीयालंकृतां सुताम् । गृहस्थोऽत्र स विप्रस्तां मह्यं प्रादाद्यथाविधि ॥ २१८
दिष्ट्या तुल्यवरप्राप्तेरस्याः सुमनसोऽधुना । सौन्दर्यं सफलीभूतमित्यन्योन्यं स्त्रियोऽभ्यधुः ॥ २१९
ततः कृतविवाहोऽत्र तया सुमनसा सह । महोपचारसुखितः प्रासादे सुप्तवानहम् ॥ २२०
अथास्मिन्पश्चिमे यामे योगिन्यश्चक्रमेलकात् । आगत्य ताः स्वयुक्त्या मां हृत्वैवोदपतन्नभः ॥ २२१
यान्तीनां नभसा तासामन्याभिर्मजिहीर्षुभिः । साकं प्रवृत्तयुद्धानामहं हस्तादिह च्युतः ॥ २२२
न च तद्वेद्मि नगरं यत्र सा सुमना मया । परिणीता न जाने च किमिदानीं भविष्यति ॥ २२३
इत्येष विधिना दत्ता या मे दुःखपरम्परा । सा सुखान्तैव संपन्ना ममाद्य त्वत्समागमात् ॥ २२४
इत्युक्तवन्तं कंदर्पं केसटस्तमुवाच सः । मा भैषीर्मित्र नेदानीं योगिन्यः प्रभवन्ति ते ॥ २२५
अस्ति मे तादृशी शक्तिः काप्यप्रतिहता यतः । सहैव च भ्रमिष्यावो विधिः श्रेयो विधास्यति ॥ २२६
अन्योन्यं वदतोरेवं व्यतीयाय तयोर्निशा । प्रातस्ततः प्रयातः स तौ च तीर्णाम्बुधी उभौ ॥ २२७
क्रमाद्भीमपुरं नाम नगरं प्रापतुश्च तौ । सह केसटकंदर्पौ रत्ननद्याः समीपगम् ॥ २२८
तत्र तौ तन्नदीतीरे श्रुत्वा कलकलं तदा । गत्वा ददृशतुर्मत्स्यमापूरिततटद्वयम् ॥ २२९
समुद्रवेलया क्षिप्तं बद्धं कायमहत्तया । मांसार्थिभिः पाट्यमानं नानाशस्त्रकरैर्जनैः ॥ २३०
पाट्यमानस्य निरगादुदरात्तस्य चाङ्गना । साश्चर्यजनदृष्टा च सा भीताशिश्रियत्तटम् ॥ २३१
ततस्तां वीक्ष्य कंदर्पो हृष्टोऽभाषत केसटम् । वयस्य सेयं सुमना यामहं परिणीतवान् ॥ २३२
न जाने पुनरेतस्या वासो मत्स्योदरे कथम् । तत्तूष्णीमिह तिष्ठावो यावद्व्यक्तिर्भविष्यति ॥ २३३
तथेति केसटेनोक्ते तत्रावस्थितयोस्तयोः । का त्वं किमेतदिति सा पृष्टाभूत्सुमना जनैः ॥ २३४
ततः कृच्छ्रेण सावादीदहं रत्नाकरे पुरे । जयदत्ताभिधानस्य विप्रचूडामणेः सुता ॥ २३५
सुमना इति नाम्नास्मि साहं भव्येन केनचित् । परिणीतानुरूपेण निशि ब्राह्मणसूनुना ॥ २३६
तद्रात्रावेव सुप्ताया गतः क्वापि स मे पतिः । यत्नान्विष्टोऽपि मत्पित्रा न च प्राप्तः कुतोऽपि सः ॥ २३७
ततोऽस्मि पतिता नद्यां तद्वियोगाग्निशान्तये । निगीर्णानेन मत्स्येन संप्राप्तेह विधेर्वशात् ॥ २३८
इति तां वादिनीमेव निर्गत्य जनमध्यतः । आश्लिष्य यज्ञस्वामीति विप्र एकोऽब्रवीदिदम् ॥ २३९
एह्येहि पुत्रि भवती भगिनीदुहिता मम । यज्ञस्वामीति हि भ्राता सोदर्यो मातुरस्मि ते ॥ २४०
तच्छ्रुत्वा मुखमुद्घाट्य सुमनास्तमवेक्ष्य सा । मातुलं प्रत्यभिज्ञाय सास्रा जग्राह पादयोः ॥ २४१
क्षणं त्यक्त्वाश्रु चावादीत्त्वं तु काष्ठानि देहि मे । आर्यपुत्रवियुक्ताया अग्नेरन्या न मे गतिः ॥ २४२
बोध्यमानापि सा तस्मान्निश्चयान्न चचाल यत् । तत्परीक्षिततच्चित्तः कंदर्पस्तामुपाययौ ॥ २४३
तमुपागतमालोक्य प्रत्यभिज्ञाय धीमती । सुमनाः पादयोस्तस्य पतिता प्ररुरोद सा ॥ २४४
जनेन पृच्छ्यमाना च तेन सा मातुलेन च । अयं स मम भर्तेति निजगाद मनस्विनी ॥ २४५
ततः सर्वेषु हृष्टेषु यज्ञस्वामी निनाय ताम् । स्वगृहं तत्पतिं तं च कंदर्पं केसटान्वितम् ॥ २४६
तत्र तान्वर्णितस्वस्ववृत्तान्तान्सकुटुम्बकः । उपचारेण महता प्रीत्या परिचचार सः ॥ २४७
गतेष्वहःसु कंदर्पं केसटोऽत्र जगाद तम् । अभीष्टभार्याप्राप्त्या त्वं प्राप्तस्तावत्कृतार्थताम् ॥ २४८
तत्सभार्योऽधुना गच्छ निजं रत्नपुरं पुरम् । अकृतार्थो गमिष्यामि न स्वदेशमहं पुनः ॥ २४९
तीर्थान्येव भ्रमन्देहं क्षपयिष्याम्यमुं सखे । तच्छ्रुत्वा केसटं यज्ञस्वामी तत्र स्थितोऽवदत् ॥ २५०
किमुद्वेगाद्वदस्येवं सर्वं जीवद्भिराप्यते । कुसुमायुधवृत्तान्तं तथा च शृणु वच्मि ते ॥ २५१
देवस्वामीत्यभूच्चण्डपुराख्ये नगरे द्विजः । तस्यातिरूपा कन्याभून्नाम्ना कमललोचना ॥ २५२
शिष्यश्च विप्रपुत्रोऽभून्नाम्नास्य कुसुमायुधः । स शिष्यः सा च तत्कन्या प्रीतावास्तां परस्परम् ॥ २५३
एकदा निश्चिता दातुं पित्रान्यस्मै वराय सा । कन्या सखीमुखेनाशु तं स्माह कुसुमायुधम् ॥ २५४
तातो मां दातुमन्यस्मै प्रतिपन्नो भवांश्च मे । पूर्वसंकल्पितो भर्ता तद्युक्त्या हर मामितः ॥ २५५

स्याः सोऽपहाराय कृतसंविद्बहिर्निशि । आस्थापयद्वेगसरीं भृत्यं च कुसुमायुधः ॥ २५६
नेर्गत्य चारूढा तस्यां भृत्येन तेन सा । न तस्य निकटं निन्ये निन्ये स्वीकर्तुमन्यतः ॥ २५७
ता च सा तेन रात्रौ कमललोचना । प्राप्यैकं नगरं प्रातस्तमाह स्म च सा सती ॥ २५८
मी क स मद्भर्ता तं प्रापयसि किं न माम् । तच्छ्रुत्वा स शठोऽवादीदेकिकां तां विदेशगाम् ॥ २५९
त्वां परिणेष्यामि किं तेन स कुतोऽधुना । श्रुत्वैतत्साब्रवीत्प्राज्ञा त्वं हि मे सुतरां प्रियः ॥ २६०
त्र न किं सद्यः परिणेयोऽस्यहो मम । .................................................... ॥ २६१
नगरोद्याने स्थापयित्वैव दुर्मतिः । स विवाहोपकरणं जगामानेतुमापणम् ॥ २६२
लाय्य गत्वा सा कन्या वेगसरीयुता । मालाकारस्य कस्यापि वृद्धस्य प्राविशद्गृहम् ॥ २६३
निजवृत्तान्ता तस्थौ सा तेन सत्कृता । सोऽप्यप्राप्य कुभृत्यस्तामुद्यानाद्विमुखो ययौ ॥ २६४
चोवाच पृच्छन्तं प्रभुं तं कुसुमायुधम् । ऋजुस्त्वं वेत्सि न स्त्रीणां कुटिलानां हि चेष्टितम् ॥ २६५
निरगात्तावद्दृष्टो यावदहं जनैः । तत्रान्यैस्तैरवष्टब्धो हृता वेगसरी च सा ॥ २६६
थंचिदधुना पलाय्याहमिहागतः । तच्छ्रुत्वा विमृशंस्तूष्णीमासीत्स कुसुमायुधः ॥ २६७
प्रेरितः पित्रा विवाहाय व्रजंश्च सः । तत्प्राप नगरं यत्र स्थिता कमललोचना ॥ २६८
सितजन्यौघमुद्याने निकटस्थिते । एकं भ्रमन्तं कमललोचना सा ददर्श तम् ॥ २६९
मालाकाराय तस्मै सा यद्गृहे स्थिता । सोऽपि गत्वोक्तवृत्तान्तस्तं तस्याः पतिमानयत् ॥ २७०
तोपकरणस्ततः सुचिरकाङ्क्षितः । वरवध्वोस्तयोः सद्यो विवाहो निरवर्तत ॥ २७१
पापभृत्यं स निगृह्य कुसुमायुधः । परिणीयापि कमललोचनाप्राप्तिकारणम् ॥ २७२
मपि कन्यां तां यद्विवाहार्थमागमत् । ताभ्यां वधूभ्यां सहितो हृष्टः स्वं देशमाययौ ॥ २७३
वति भव्यानामचिन्त्योऽपि समागमः । तत्केसट त्वमप्येवमचिराद्याप्स्यसि प्रियाम् ॥ २७४
नोदिते यक्षस्वामिना तस्थुरस्य ते । कान्यप्यहानि कंदर्पसुमनःकेसटा गृहे ॥ २७५
श्च स्वदेशं ते ततः प्राप्य महाटवीम् । जज्ञिरेऽन्योन्यविभ्रष्टा वन्येभापातसंभ्रमात् ॥ २७६
केसटो गच्छन्नेकाकी दुःखितः क्रमात् । प्राप्य काशिपुरीं मित्रं कंदर्पं प्राप्तवांस्ततः ॥ २७७
कं ययौ तत्र निजं पाटलिपुत्रकम् । पित्राभिनन्दितस्तत्र कंचित्कालमुवास सः ॥ २७८
द्रूपवतीविवाहप्रभृति स्वकम् । कंदर्पोदन्तपर्यन्तं पित्रोर्वृत्तान्तमत्र सः ॥ २७९
रे सा सुमना हस्तिभीतिपलायिता । वनं विवेश तत्रास्या ययौ चास्तं दिवाकरः ॥ २८०
र्यपुत्र हा तात हाम्बेत्यत्र निशागमे । शोचन्ती दावदहने क्षेप्तुं तनुमियेष सा ॥ २८१
योगिनीचक्रं कंदर्पस्य कृपापरम् । योगिनीस्ता विजित्यान्यास्तत्रापायतनं निजम् ॥ २८२
स्मृत्य कंदर्पं स्वविज्ञानादवेत्य च । भार्या तस्य वने भ्रष्टां मन्त्रयांचक्रिरे च ताः ॥ २८३
पुरुषो धीरो वाञ्छितं प्राप्नुयात्स्वयम् । तद्भार्या तु वने भ्रष्टा ध्रुवं बाला त्यजेदसून् ॥ २८४
रत्नपुरं नीत्वा क्षिपामो येन तत्र सा । कंदर्पस्य पितुर्गेहे सपत्न्या सह तिष्ठति ॥ २८५
मन्त्र्य गत्वा तद्वनमाश्वास्य चात्र ताम् । योगिन्यस्ताः सुमनसं नीत्वा रत्नपुरे जहुः ॥ २८६
निशि सा तत्र भ्रमन्ती सुमनाः पुरे । उच्यमानं जनेनेदं शुश्राव परिधावता ॥ २८७
ङ्गवती भार्या कंदर्पस्य द्विजन्मनः । पत्यौ क्वापि गते कालं कंचित्तत्प्राप्तिवाञ्छया ॥ २८८
साध्वी तमप्राप्य निराशा निर्गताधुना । अग्निं प्रवेष्टुं दुःखिभ्यां श्वशुराभ्यामनुद्रुता ॥ २८९
त्वैव सुमना तच्चितास्थानमाशु सा । गत्वानङ्गवतीमेवं तामुपेत्य न्यवारयत् ॥ २९०
मा साहसं कार्षीः स हि जीवति ते पतिः । इत्युक्त्वा मूलतः कृत्स्नं तद्वृत्तान्तं शशंस सा ॥ २९१
यच्च कंदर्पदत्तं रत्नाङ्गुलीयकम् । ततः सर्वेऽभ्यनन्दंस्तां सत्यं विज्ञाय तद्वचः ॥ २९२
ङ्गवतीं तुष्टां वधूं सुमनसं च ताम् । संपूज्य कंदर्पपिता गृहे तुष्टो न्यवेशयत् ॥ २९३
सुमनःप्राप्त्यै भ्रान्तुं पाटलिपुत्रकात् । कंदर्पोऽनिच्छतोऽनुज्ञया केसटस्य ययौ ततः ॥ २९४

केसटोऽपि गते तस्मिन्दुःखी रूपवतीं विना । गृहादविदितः पित्रोः प्रायाद्भ्रान्तुमितस्ततः ॥
कंदर्पोऽपि भ्रमन्दैवात्तत्प्राप नगरं किल । यत्र रूपवतीं तां स केसटः परिणीतवान् ॥
जनकोलाहलं श्रुत्वा किमेतदिति तत्र तम् । कंदर्पं परिपृच्छन्तं पुमानेकोऽब्रवीदिदम् ॥
एषा रूपवती भर्त्रा केसटेन विनोद्यता । भर्तु कलकलस्तेन शृणु वृत्तान्तमत्र च ॥
इत्युक्त्वा केसटोद्वाहराक्षसोदन्तकौतुकम् । रूपवत्याश्रितं प्रोच्य स पुमानब्रवीत्पुनः ॥
ततस्तं वञ्चयित्वैव वृद्धविप्रः स केसटम् । आदाय तां रूपवतीं पुत्रार्थं प्रययौ ततः ॥
केसटस्तु न विज्ञातः क यातः परिणीय ताम् । रूपवत्यप्यपश्यन्ती केसटं साब्रवीत्पथि ॥
आर्यपुत्रं न पश्यामि किं सर्वेषु व्रजत्स्विह । तच्छ्रुत्वा दर्शयन्पुत्रं तं स वृद्धद्विजोऽभ्यधात् ॥
सोऽयं मत्तनयः पुत्रि भर्ता ते दृश्यतामिति । ततो रूपवती वृद्धांस्तत्रस्थानब्रवीत्क्रुधा ॥
कोऽयं कुरूपो भर्ता मे मरिष्याम्येव निश्चितम् । येन ह्यः परिणीतास्मि तं प्राप्स्यामि न चेत्पतिं
एवं वदन्ती त्यक्तान्नपाना राजभयेन सा । पितुरेव गृहं तेन वृद्धविप्रेण नायिता ॥
तत्रोक्तद्विजव्याजां शोचंस्तामवदत्पिता । कोऽसाविति कथं ज्ञेयः परिणेता स पुत्रि ते ॥
ततो रूपवती स्माह तात पाटलिपुत्रकात् । देसटाख्यद्विजसुतः केसटाख्यः स मत्पतिः ॥
रक्षोमुखान्मया ह्येतच्छ्रुतमित्यभिधाय सा । कृत्स्नं तस्मै समाचख्यौ वृत्तान्तं पतिरक्षसोः ॥
ततः स तत्पिता गत्वा दृष्ट्वा रक्षो मृतस्थितम् । संजातप्रत्ययोऽतुष्यद्दंपत्योः सत्त्वतस्तयोः ॥
पतिप्राप्त्याशयाश्वास्य सुतां तां प्राहिणोच्च सः । अन्वेषान्केसटपितुः पार्श्वं पाटलिपुत्रकम् ॥
ते तत्र गत्वा न चिरादागत्यैवमिहाब्रुवन् । दृष्टः पाटलिपुत्रस्थः सोऽस्माभिर्भर्तृदेसटः ॥
केसटः क स ते पुत्र इति पृष्टश्च तत्र सः । सबाष्पमब्रवीदस्मान्केसटोऽत्र कुतः सुतः ॥
स ह्यागतोऽपि कंदर्पनाम्नि मित्रे सहागते । इतो रूपवतीदुःखात्क्वाप्यनुक्त्वैव मे गतः ॥
एतत्तस्य वचः श्रुत्वा क्रमाद्वयमिहागताः । इत्युक्तेऽन्वेषकै रूपवती पितरमभ्यधात् ॥
नास्त्यार्यपुत्रप्राप्तिर्मे तदग्निं प्रविशाम्यहम् । भर्त्रा विनाकृता तात तिष्ठेयं हि कियच्चिरम् ॥
एवं ब्रुवाणा न यदा निषेद्धुं तेन पारिता । तदा रूपवती साद्य निर्गता मर्तुमग्निना ॥
तस्याः सख्यावुभे कन्ये तद्वन्मर्तुं विनिर्गते । एका शृङ्गारवत्याख्या ह्यनुरागवती परा ॥
तद्विवाहे स ताभ्यां हि दृष्टः प्राक्केसटो युवा । तद्रूपहृतचित्ताभ्यां भर्तृत्वे पर्यकल्प्यत ॥
इत्थं कोलाहलमिदं जनस्यात्रेति तेन सः । कंदर्पः पुरुषेणोक्तो ययौ तासां चितान्तिकम् ॥
ततो दूरात्कलकलं निवार्योपेत्य च द्रुतम् । अवोचदग्निमर्चन्तीमेवं रूपवतीं स ताम् ॥
अलं ते साहसेनार्ये जीवत्येव स केसटः । स भर्ता तव मित्रं मे कंदर्पं मामवेहि च ॥
इत्यूचिवान्वृद्धविप्रच्छद्मनौकाधिरोहणात् । आरभ्य केसटोदन्तं कथयामास सोऽखिलम् ॥
ततः संवादसंजातप्रत्यया सा पितुर्गृहम् । हृष्टा रूपवती ताभ्यां सखीभ्यां प्राविशत्सह ॥
कंदर्पोऽपि च तत्पित्रा प्रीत्योपचरितस्तदा । सुरक्षितश्च तत्रैव तस्थौ तदनुरोधतः ॥
तावत्स केसटो दैवात्प्राप रत्नपुरं भ्रमन् । कंदर्पस्य गृहं तत्र तद्भार्ये यत्र ते स्थिते ॥
परिभ्रमन्तं तं तत्र हर्म्यात्कंदर्पभार्यया । दृष्ट्वा सुमनसा हर्षादूचिरे श्वशुरादयः ॥
आर्यपुत्रसुहृत्सोऽयं संप्राप्तः केसटोऽधुना । अस्मात्प्रवृत्तिर्बुध्येत शीघ्रं संभाव्यतामिति ॥
ततो गत्वैव तैरुक्त्वा यथावस्तु स केसटः । आनीतस्तां सुमनसं दृष्ट्वाहृष्यदुपागताम् ॥
विश्रान्तश्च क्षणात्पृष्टस्तस्यै वन्येभसंभ्रमात् । आरभ्य कंदर्पगतं स्वं च वृत्तान्तमब्रवीत् ॥
सत्कृतो दिवसान्कांश्चिदास्ते यावच्च तत्र सः । लेखहस्तः पुमांस्तावदागात्कंदर्पपार्श्वतः ॥
यत्र रूपवतीं नाम तत्सुहृत्परिणीतवान् । केसटस्तत्र कंदर्पः स्थितो रूपवती च सा ॥
इति चोवाच स पुमांल्लेखार्थोऽभूत्तथैव च । कंदर्पपित्रे स्वोद्वाहं केसटोऽवर्णयच्च सः ॥
ततः कृतोत्सवोऽन्येद्युः कंदर्पानयनाय सः । तत्पिता प्राहिणोद्दूतं प्रियाप्राप्त्यै च केसटम् ॥

ऽपि ययौ साकं लेखहारेण तेन सः । तं देशं यत्र सा रूपवती पितृगृहे स्थिता ॥ ३३४
भावयामास स तां रूपवतीं चिरात् । सोत्सवां हृतसंतापस्तोयदश्चातकीमिव ॥ ३३५
: समागम्य परिणिन्ये च ते अपि । रूपवत्या वयस्ये द्वे पूर्वोक्ते प्रेरितस्तया ॥ ३३६
ृरागशृङ्गारवत्यौ रूपवतीं च ताम् । आदायापृष्टकंदर्पः स्वदेशं केसटो ययौ ॥ ३३७
ऽपि सद्भूतस्तद्गत्वा रत्नपुरं ततः । संजग्मे सुमनोनङ्गवतीभ्यां बन्धुभिस्तदा ॥ ३३८
निजनिजदेशगतौ तौ रूपवतीसुमनसौ प्रिये प्राप्य ।
केसटकंदर्पावथ भुञ्जानौ तस्थतुर्भोगान् ॥ ३३९
इति विधुरविधातृविप्रयुक्ताः पुनरपि यान्ति समागमं प्रियाभिः ।
अकलितगहनावधीनि दुःखान्यपि विषमाण्यवतीर्य धीरसत्त्वाः ॥ ३४०
तच्छीघ्रमुत्तिष्ठ सखे व्रजावश्चिन्वंस्त्वमप्याप्स्यसि जातु भार्याम् ।
को वेद दैवस्य गतिं मयैव मृतापि भार्याधिगता सजीवा ॥ ३४१
इत्येवमाख्याय कथामनेन प्रोत्साहितश्चानुगतश्च सख्या ।
भ्रमन्भुवं प्रापमिमामथात्र सक्रोडमद्राक्षमहं गजेन्द्रम् ॥ ३४२
उद्गीर्य तेन च गजेन पुनर्निगीर्णां तामेव चित्रमवशां स्ववधूमपश्यम् ।
तं चिन्वतापि करिणं चिरदृष्टनष्टं दृष्टा मयाद्य सुकृतैरिह देवपादाः ॥ ३४३
एवं तस्योक्तवतो वणिक्सुतस्याथ विक्रमादित्यः ।
आनाय्य तां स राजा गजवधलब्धां समर्पयद्भार्याम् ॥ ३४४
तौ च विचित्रसमागममुदितावन्योन्यकथितवृत्तान्तौ ।
श्रीविषमशीलसंस्तुतिमुखरमुखौ दंपती तदाभूताम् ॥ ३४५

इति महाकविश्रीसोमदेवभट्टविरचिते कथासरित्सागरे विषमशीललम्बके चतुर्थस्तरङ्गः ।

---

पञ्चमस्तरङ्गः ।

' विक्रमादित्यो राजा तस्य सहागतम् । वणिक्पुत्रस्य सुहृदं तमेवं परिपृष्टवान् ॥ १
ृतापि जीवन्ती मया भार्येति यत्त्वया । उक्तं कथं तदिति नः कथ्यतां भद्र विस्तरात् ॥ २
स्तेन राज्ञा स वणिक्सूनोः सखाब्रवीत् । कौतुकं यदि तद्देव श्रूयतां कथयाम्यदः ॥ ३
ऽग्रहाराग्र्यनिवासी द्विजपुत्रकः । चन्द्रस्वामीत्यहं भार्या सुरूपा चास्ति मे गृहे ॥ ४
मयि कार्यार्थं ग्रामं पित्राज्ञया गते । तां मे कापालिकोऽद्राक्षीद्भार्यां भिक्षार्थमागतः ॥ ५
ट्रैव सा जातज्वरा सायं व्यपद्यत । ततो मद्बन्धुभिर्नीत्वा नक्तमारोपिता चिताम् ॥ ६
ल्यां चितायां च ग्रामात्तत्राहमागमम् । अश्रौषं च यथावृत्तं स्वजनात्क्रन्दतः पुरः ॥ ७
ये चितोपान्तमागात्कापालिकश्च सः । अंसस्थनृत्यत्खट्वाङ्गः स्फूर्जड्डमरुकारवः ॥ ८
पेण शमिते चिताग्नौ देव तेन सा । उदतिष्ठच्चितामध्यादक्षताङ्गी मदङ्गना ॥ ९
ृाय कपाली तां सिद्धयाकृष्टानुधाविताम् । प्राद्रवल्लघु तां चाहमन्वगां सधनुःशरः ॥ १०
ाङ्गातटे प्राप्य गुहां भूमौ निधाय तत् । खट्वाङ्गमब्रवीद्धर्षादन्तःस्थे कन्यके उभे ॥ ११
ाप्ते अपि मया नोपभुक्ते यया विना । सैषाद्य हस्ते प्राप्ता मे प्रतिज्ञा सिद्धिमागता ॥ १२
ाभ्यां स मद्भार्यां यावद्दर्शयति ब्रुवन् । तावत्तत्तस्य खट्वाङ्गं गङ्गायामहमक्षिपम् ॥ १३
ालिक भार्यां मे जिहीर्षुर्न भवस्ययम् । इत्याक्षिपं च तमहं भ्रष्टखट्वाङ्गसिद्धिकम् ॥ १४
न्सोऽथ खट्वाङ्गं पलायनपरः शठः । धनुराकृष्य काण्डेन दिग्धेन निहतो मया ॥ १५
द्ध्यैकसंतोषविडम्बितशिवागमाः । पाखण्डिनः पतन्त्येवं प्रागेव पतिता अपि ॥ १६
ाय स्वभार्यां तामन्ये द्वे ते च कन्यके । गृहमागतवानस्मि दत्ताश्चर्यः स्वबन्धुषु ॥ १७

तत्र पृष्टे स्ववृत्तान्ते कन्ये ते वदतः स्म मे । वाराणस्यां सुते आवां क्षितिभृत्सार्थवाहयोः ॥
सिद्धियुक्त्या हृते चावामेतयैव कपालिना । त्वत्प्रसादाच्च मुक्ते स्वः पापादस्माददूषिते ॥
इत्युक्तवत्यौ चान्येद्युर्नीत्वा वाराणसीं मया । अर्पिते ते स्वबन्धूनां तद्वृत्तान्तमुदीर्य तम् ॥
आगच्छंश्च ततोऽपश्यमिमं भार्यावियोगिनम् । वणिक्पुत्रं ततोऽनेन मिलित्वाहमिहागतः ॥
कापालिकगुहालब्धेनाङ्गरागेण रञ्जितात् । क्षालितादपि देहान्मे दृश्यतां वाति सौरभम् ॥
इत्थं मृतोत्थिता प्राप्ता मया भार्येतिवादिनम् । विप्रं तं सवणिक्पुत्रं सत्कृत्य प्राहिणोन्नृपः ॥
ततो गुणवतीचन्द्रवतीमदनसुन्दरीः । आनीयादाय च समं मिलित्वा च स्वसैनिकैः ॥
आगात्स विक्रमादित्यभूभृदुज्जयिनीं पुरीम् । तस्यां गुणवतीचन्द्रवत्यौ च परिणीतवान् ॥
संस्मरन्नथ तां विश्वकर्मदेवगृहेक्षिताम् । स्तम्भस्थपुत्रिकां राजा स प्रतीहारमादिशत् ॥
कलिङ्गसेनात्कन्यां तां प्राप्तुं दूतो विसृज्यताम् । यस्याः प्रतिकृतिर्दृष्टा सा मया स्तम्भपुत्रिका ।
इति राज्ञा समादिष्टः क्षत्तानीय तदग्रतः । प्राहिणोद्दत्तसंदेशं दूतं नाम्ना सुविग्रहम् ॥
गत्वा कलिङ्गविषयं दृष्ट्वा तं च यथोचितम् । कलिङ्गसेनं राजानमेवं दूतो जगाद सः ॥
देवः श्रीविक्रमादित्यस्त्वामादिशति भूपते । वेत्थ त्वं भुवि यद्रत्नं तदस्मानुपगच्छति ॥
तवास्ति कन्यारत्नं च तदस्मभ्यं समर्पय । अस्मत्प्रसादाच्च निजं भुङ्क्ष्व राज्यमकण्टकम् ॥
एतच्छ्रुत्वा स कालिङ्गः क्रुद्धो राजाभ्यभाषत । को नाम विक्रमादित्यः स एवाज्ञां ददाति नः ।
मार्गत्युपायनं कन्यां दर्पान्धोऽधः पतिष्यति । एतत्कलिङ्गसेनात्स श्रुत्वा दूतः समभ्यधात् ॥
भृत्योऽप्येवमनात्मज्ञः कथमोजायसे प्रभोः । किं मूढ तत्प्रतापाग्नौ शलभायितुमिच्छसि ॥
इत्युक्त्वा तत आगत्य स दूतस्तन्न्यवेदयत् । वचः कलिङ्गसेनोक्तं विक्रमादित्यभूभृते ॥
ततो विषमशीलोऽसौ क्रुद्धः प्रायाद्बलैः सह । सभूतकेतुवेतालः कालिङ्गं प्रति तं प्रभुः ॥
देह्याशु कन्यामिति तं कालिङ्गं ब्रुवतीष्विव । सेनारवप्रतिरवैर्दिक्षु तद्देशमाप च ॥
दृष्ट्वाथ युद्धसंनद्धं रुद्ध्वा तं च नृपं बलैः । राजा स विक्रमादित्यो मनस्येवमचिन्तयत् ॥
एतत्सुतां विना तावन्मम नास्त्येव निर्वृतिः । तत्कथं श्वशुरं हन्मि युक्तिमत्र करोमि किम् ॥
इत्यालोच्य सवेतालो राजा तत्सिद्ध्यलक्षितः । सुप्तस्य प्राविशद्रात्रौ कलिङ्गेशस्य वासकम् ॥
अरे विषमशीलेन विगृह्य स्वपिषीति तम् । प्रबोध्य तत्र वित्रस्तं वेतालः सोऽब्रवीद्धसन् ॥
स चोत्थाय कलिङ्गेन्द्रो दृष्ट्वा दर्शितसाहसम् । परिज्ञाय च राजानं रौद्रवेतालसंगतम् ॥
इदानीं वशगोऽहं ते देवादिश करोमि किम् । इति विज्ञापयामास भीतस्तच्चरणानतः ॥
मया चेत्प्रभुणा कार्यं तव तद्देहि मे सुताम् । कलिङ्गसेनामिति तं राजापि प्रत्यभाषत ॥
तथेति प्रतिपेदे च कलिङ्गाधिपतिः स तत् । राजापि वेतालयुतः स्वमागाच्छिबिरं कृती ॥
अन्येद्युश्च कलिङ्गेन्द्रः स देवि त्वामदात्पिता । राज्ञे विषमशीलाय विधिवद्विभवोत्तरम् ॥
एवं गाढानुरागेण राज्ञा देहर्पणेन च । परिणीतासि विधिवद्देवि नारिजिगीषया ॥
इति कार्पटिकस्याहं देवसेनस्य वक्त्रतः । श्रुत्वावमानप्रभवं हे सख्यो मन्युमत्यजम् ॥
इत्थं विवाहिता स्तम्भपुत्रिकादर्शनादहम् । चित्रावलोकनाच्चैषा राज्ञा मलयवत्यपि ॥
एवं कलिङ्गसेना सा विक्रमादित्यवल्लभा । भर्तृप्रभावमाख्याय स्वसपत्नीरनन्दयत् ॥
स चैवं विक्रमादित्यः सर्वाभिस्ताभिरन्वितः । तया मलयवत्या च तस्थौ साम्राज्यसुस्थितः ॥
अथैकदा राजपुत्रः कोऽप्यागाद्दक्षिणापथात् । कृष्णशक्त्यभिधानोऽत्र परिभूतः स्वगोत्रजैः ॥
स सिंहद्वारमागत्य राज्ञः कार्पटिकव्रतम् । शिश्रिये राजपुत्राणामन्वितः पञ्चभिः शतैः ॥
द्वादशाब्दान्मया सेवा विक्रमादित्यभूपतेः । कार्येति प्रतिजज्ञे च वार्यमाणोऽपि भूभुजा ॥
निश्चयेन च तस्यात्र तिष्ठतः सानुयायिनः । सिंहद्वारे नृपसुतस्यैकादश समा ययुः ॥
प्राप्ते च द्वादशे वर्षे तस्य देशान्तरस्थिता । भार्या चिरवियोगार्ता प्राहिणोल्लेखपत्रिकाम् ॥

ोरचर्यागते रात्रौ प्रच्छन्ने राज्ञि शृण्वति । दीपेनावाचयत्तस्यामार्या स लिखितामिमाम् ॥ ५७

संतप्तायततरलास्तव विरहे नाथ कठिनहृदयायाः ।
निर्यान्त्यविरतमेते निःश्वासा मे न तु प्राणाः ॥ ५८

ति वाचयतस्तस्मात्सम्राट् कार्पटिकान्मुहुः । श्रुत्वा स राजधानीं स्वां गत्वा राजा व्यचिन्तयत् ॥ ५९
ीदत्कलत्रः क्लिष्टोऽयं बत कार्पटिकश्चिरम् । असिद्धकार्यः पूर्णेऽस्मिन्द्वादशेऽब्दे त्यजेदसून् ॥ ६०
ाद्विलम्बो न कार्योऽस्य मयेत्यालोच्य भूपतिः । आनाययत्कार्पटिकं दासीं प्रेष्य तदैव सः ॥ ६१
ासनं लेखयित्वा च तमेवं स समादिशत् । ओंकारपीठमार्गेण भद्र गच्छोत्तरां दिशम् ॥ ६२
ात्रामुना शासनेन ग्रामं भुङ्क्ष्व मदर्पितम् । नाम्ना तं खण्डवटकं पृच्छन्गच्छन्नवाप्स्यसि ॥ ६३
इत्युक्त्वा शासनं तस्मै प्रददौ तस्य भूपतिः । सोऽप्यनावेद्य भृत्येभ्यो ययौ कार्पटिको निशि ॥ ६४
का जिगीषा ममैकेन ग्रामेण व्रीडदायिना । तथाप्याज्ञा प्रभोः कार्येत्यसंतुष्टः क्रमाद्व्रजन् ॥ ६५
ओंकारपीठतो गत्वा दूरेऽरण्ये ददर्श सः । क्रीडन्तीः कन्यका बह्वीः पृच्छति स्म ततश्च ताः ॥ ६६
अपि जानीथ भोः खण्डवटकं क भवेदिह । एतच्छ्रुत्वा तमूचुस्तास्तन्न जानीमहे वयम् ॥ ६७
ाच्छाग्रे योजनेष्वत्र दशमात्रेषु नः पिता । सौम्य तिष्ठति तं पृच्छ विद्याद्ग्रामं स जातु तम् ॥ ६८
ावमुक्तः स कन्याभिस्ताभिर्गत्वा ददर्श तम् । कार्पटी पितरं तासां राक्षसं भीषणाकृतिम् ॥ ६९
इह क्व खण्डवटकं ब्रूहि भद्रेति तं च सः । पप्रच्छ सोऽपि तं धैर्यमोहितो राक्षसोऽब्रवीत् ॥ ७०
किं तत्र ते तद्धि पुरं चिरशून्यं तथापि चेत् । यासि तच्छृणु मार्गोऽयं पुरतस्ते द्विधा गतः ॥ ७१
तत्र वामेन गच्छेस्त्वं पथा यावदवाप्स्यसि । प्रतोलीं खण्डवटकस्योच्चप्राकारहारिणीम् ॥ ७२
इत्युक्तो रक्षसा गत्वा प्रतोलीं तामवाप्य सः । विवेश शून्यं भयदं दिव्यं हृद्यं च तत्पुरम् ॥ ७३
सप्तकक्षावृतं तत्र राजवेश्म प्रविश्य च । आरुरोह स हर्म्याग्रं मणिकाञ्चननिर्मितम् ॥ ७४
तत्र रत्नासनं दृष्ट्वा तस्मिन्नुपविवेश च । तावच्च राक्षसोऽभ्येत्य वेत्रहस्तस्तमभ्यधात् ॥ ७५
भो मानुष किमत्र त्वमुपविष्टो नृपासने । तच्छ्रुत्वा कृष्णशक्तिः स धीरः कार्पटिकोऽब्रवीत् ॥ ७६
अहमत्र प्रभुर्यूयं करदाश्च कुटुम्बिनः । विक्रमादित्यदेवेन विलब्धाः शासनेन मे ॥ ७७
तच्छ्रुत्वा शासनं दृष्ट्वा राक्षसस्तं प्रणम्य सः । उवाच राजा त्वमिह प्रतीहारस्तवास्मि च ॥ ७८
सर्वत्र विक्रमादित्यदेवस्याज्ञा ह्यखण्डिता । इत्युक्त्वा प्रकृतीः सर्वा आजुहाव स राक्षसः ॥ ७९
आययुर्मन्त्रिणश्चात्र तथा राजपरिच्छदः । अपूरि चतुरङ्गेण बलेन नगरं च तत् ॥ ८०
सर्वैः प्रणम्यमानोऽथ हृष्टः कार्पटिकोऽत्र सः । चक्रे राजोपचारेण कृत्स्नाः स्नानादिकाः क्रियाः ॥ ८१
ततः स राजा भूत्वात्र सविस्मयमचिन्तयत् । अहो प्रभावः कोऽप्येष विक्रमादित्यभूपतेः ॥ ८२
गाम्भीर्यगरिमा चित्रमपूर्वस्तस्य च प्रभोः । ददाति यद्ग्राममिति ब्रुवन्राज्यमपीदृशम् ॥ ८३
इति चित्रीयमाणोऽत्र राज्यं कुर्वन्नुवास सः । तत्सखीन्विक्रमादित्योऽप्युज्जयिन्यां पुपोष तान् ॥ ८४
दिनैश्च विक्रमादित्यं प्रणन्तुं स उपाययौ । सोत्कः कार्पटिको राजा सैन्यकम्पितभूतलः ॥ ८५
आगतं विक्रमादित्यः पादानतमुवाच तम् । पत्न्याः प्रहितलेखाया निःश्वासान्गच्छ वारय ॥ ८६
इत्युक्त्वा भूमिपतिना प्रेषितस्तेन साद्भुतः । स कृष्णशक्तिः सखिभिः साकं देशमगान्निजम् ॥ ८७
उत्सार्य गोत्रजान्भार्यां नन्दयित्वा चिरोत्सुकाम् । सिद्धेप्सिताधिकः सोऽथ भेजे राज्यश्रियं पराम् ॥ ८८
एवं सोऽद्भुतचारित्रो विक्रमादित्यभूमिपः । एकदात्र ददर्शैकमूर्ध्वरोमकचं द्विजम् ॥ ८९
पप्रच्छ तं च हे ब्रह्मन्नीदृक्कस्माद्भवानिति । ततः सोऽस्मै स्ववृत्तान्तमेवं राज्ञे द्विजोऽब्रवीत् ॥ ९०
अग्निस्वामीति विप्रोऽभूदेव पाटलिपुत्रके । महाग्निहोत्रिणस्तस्य देवस्वामीत्यहं सुतः ॥ ९१
मया च दूरतो देशाद्विप्रकन्या विवाहिता । बालत्वात्सा च तत्रैव स्थापिताभूत्पितुर्गृहे ॥ ९२
कालेन यौवनस्थां तामानेतुं श्वाशुरं गृहम् । आरुह्याश्वं सहैकेन भृत्येन गतवानहम् ॥ ९३
सत्कृतः श्वशुरेणाहं सहायातैकचेटिकाम् । आदायाश्वाधिरूढां तां भार्यां प्रायामहं ततः ॥ ९४

अर्धमार्गे च साश्वाया अवरुह्यैव मे बधूः । अम्बुपानापदेशेन नदीकच्छमगात्किल ॥
चिरं नायाति यावत्सा तावच्च तदवेक्षणे । सह स्थितं तं तत्रैव भृत्यमस्मि विसृष्टवान् ॥
सोऽपि नायाति यावच्च तावदस्मि गतः स्वयम् । तच्चेटिकां स्थापयित्वा तुरगीरक्षणाय ताम् ॥
गत्वा पश्यामि यावत्स भृत्यो मद्भार्यया तया । भक्षयित्वास्थिशेषो मे कृतो रक्ताक्तवक्त्रया ॥
वित्रस्तश्च ततो यावद्गच्छामि तुरगीं प्रति । तावत्सापि तया तद्वत्तच्चेट्या भक्षिता मम ॥
ततः पलाय्य यातोऽहं तत्रासेनाधुनापि मे । नैवोर्ध्वरोमकेशत्वमन्तःस्थेन निवर्तते ॥
तदत्र मे गतिर्देव इति तं वादिनं द्विजम् । आज्ञया विक्रमादित्यो गतत्रासं व्यधत्त सः ॥
अहो धिङ्नास्ति विश्वासः स्त्रीषु साहसभूमिषु । इति राज्ञि वदत्यस्मिन्नेकोऽमात्योऽब्रवीदिदम्
तादृश्य एव दुर्जाताः स्त्रियो देव तथा च किम् । न श्रुतं वृत्तमिह यद्ब्राह्मणस्याग्निशर्मणः ॥
इहैवास्त्यग्निशर्माख्यः सोमशर्मसुतो द्विजः । पित्रोः प्राणसमो मूर्खः सर्वविद्यास्वशिक्षितः ॥
वर्धमानपुरात्तेन परिणीता द्विजात्मजा । बालेति सा च न त्यक्ता पित्रा धनवता गृहात् ॥
तस्यां च यौवनस्थायामग्निशर्माणमूचतुः । पितरौ पुत्र भार्यां तां नानयस्यधुनापि किम् ॥
श्रुत्वैवैतदनापृच्छ्य पितरौ स जडाशयः । अग्निशर्मा ततः प्रायादेकाकी गृहिणीं प्रति ॥
निर्गतस्य गृहात्तस्य दक्षिणोऽभूत्कपिञ्जलः । दक्षिणा च विरौति स्म शिवा वामैकशंसिनी ॥
सोऽपि मूर्खोऽभ्यनन्दत्तज्जीव जीवेत्युदीरयन् । अदृश्या च जहासास्य श्रुत्वा शकुनदेवता ॥[1]
संप्राप्य श्वाशुरं स्थानं तस्य च प्रविविक्षतः । वामः कपिञ्जलो वामा शिवाभूत्कथिताशिवा ॥
भूयोऽपि चाभ्यनन्दत्स जीवजीवेत्युदीर्य तत् । अचिन्तयच्च शकुनाधिष्ठात्री देवतापि सा ॥
अहो मूर्खोऽयमशुभं शुभमित्यभिनन्दति । तत्कार्ये जीवयति यद्रक्ष्यो जीवोऽस्य तन्मया ॥
इत्यस्यां चिन्तयन्त्यां च देवतायां विवेश सः । दत्तप्रहर्षः श्वशुरस्याग्निशर्मा निवेशनम् ॥
आगतोऽसि किमेकाकीत्युक्तोऽत्र श्वशुरादिभिः । आयातोऽस्मि गृहेऽनुक्त्वा सर्वेषामिति सोऽब्रवी
ततः कृतोचितस्नानभोजनस्य निशागमे । शय्यागृहेऽन्तिकं भार्या तस्योपागात्प्रसाधिता ॥
पथिश्रमाच्च सुप्तस्य तस्य निर्गत्य सा बहिः । चौरस्योपपतेः शूलविद्धस्याप्यन्तिकं ययौ ॥
आलिङ्गन्ती च तद्देहं दशनैश्छिन्ननासिका । भूतेन तत्प्रविष्टेन पलायत ततो भयात् ॥
गत्वा च पत्युः सुप्तस्य तस्य न्यस्यासिधेनुकाम् । पार्श्वे विक्रोशमाक्रन्ददेवं आवितबान्धवा ॥
हा हा मृता मृतास्म्येषा निष्कारणमनेन मे । किमप्युत्थाय यद्भर्त्रा कृतं नासानिकर्तनम् ॥
तच्छ्रुत्वा स्वजनस्तस्या एत्य तां छिन्ननासिकाम् । दृष्ट्वा तमग्निशर्माणं लगुडाद्यैरताडयत् ॥
प्रातश्च विज्ञप्य नृपं तदादेशाद्वधाय तम् । निर्दोषभार्याद्रोहीति वधकेभ्यः समर्पयत् ॥
नीते वध्यभुवं तस्मिन्सा तच्छकुनदेवता । तद्भार्यानैशवृत्तान्तदर्शिनी समचिन्तयत् ॥
अनिमित्तफलं तावत्प्राप्तमेतेन यत्स्वयम् । उक्तवाञ्जीव जीवेति तेन रक्ष्याम्यमुं वधात् ॥
इत्यालोच्यान्तरिक्षात्सा निगूढा देवताभ्यधात् । निर्दोष एष वधका न वध्यो विप्रपुत्रकः ॥
शूलस्थचौरदन्तान्तर्गत्वा पश्यत नासिकाम् । इत्युक्त्वा तद्वधूरात्रिवृत्तान्तं तं जगाद सा ॥
ततस्तत्प्रत्ययात्क्षत्तृमुखेन वधकैर्नृपः । विज्ञप्तो वीक्ष्य नासां तां चौरदन्तान्तरस्थिताम् ॥
वधात्तमग्निशर्माणं निर्मोच्य व्यसृजद्गृहम् । कुस्त्रीं तां च निजग्राह तद्बन्धूंश्चाप्यदण्डयत् ॥
एवंविधाः स्त्रियो राजन्नित्युक्ते तेन मन्त्रिणा । स राजा विक्रमादित्यस्तत्तथेत्यन्वमोदत ॥
ततोऽब्रवीन्मूलदेवो धूर्तो राजान्तिकस्थितः । देव साध्व्यो न सन्त्येव किमसाध्वीषु क्वासुचित् ॥
किं न चूतलताः सन्ति सतीषु विषवल्लिषु । तथा च श्रूयतामेतदनुभूतं मयैव यत् ॥

---

१ श्लोकोऽमुद्रितपुस्तकेऽस्मादनन्तरम् 'अदृश्या च जहासास्य श्रुत्वा शकुनदेवता । ………………… ………… ॥' इति त्रुटितोत्तरार्धः श्लोकोऽधिकोऽस्ति.

लिपुत्रं प्रागगच्छं शशिना सह । मत्वा नागरिकक्षेत्रं तद्वैदग्ध्यदिदृक्षया ॥ १३१
सरस्येकां दृष्ट्वा स्त्रीं वस्त्रधाविनीम् । इह क्वावास्यते पान्थैरित्यहं परिपृष्टवान् ॥ १३२
पु चक्राह्वैर्मत्स्यैर्वारिणि षट्पदैः । अब्जेष्वावास्यते नात्र पान्थावासो मयेक्षितः ॥ १३३
इं वक्रोक्त्या प्रत्युक्तो वृद्धयोषिता । विलक्षः शशिना साकं प्राविशं नगरान्तरम् ॥ १३४
णे पात्रस्थे परमान्ने पुरः स्थिते । बालं दृष्ट्वा गृहद्वारि रुदन्तमवदच्छशी ॥ १३५
बुद्धिर्बालोऽयं योऽग्रदत्तं न खादति । परमान्नं वृथात्मानं क्लिश्नाति रुदितैः पुनः ॥ १३६
सोऽब्रवीद्बालः प्रमृज्य नयने हसन् । मूर्खा यूयं न जानीथ रोदने ये गुणा मम ॥ १३७
शनैरेति स्वादुतां शीतलीभवत् । घटतेऽभ्यधिकं चान्यच्छ्लेष्मा गच्छति च क्षयम् ॥ १३८
मे रुदतो नाहं मौर्ख्येण रोदिमि । यूयं ग्राम्याः पुनर्मूर्खा नाभिप्रायं विदन्ति ये ॥ १३९
न बालेन स्ववैदग्ध्यविलज्जितौ । शशी चाहं च साश्चर्यावपसृत्यान्यतो गतौ ॥ १४०
ततरुस्कन्धगतामाम्रावचायिनीम् । वरकन्यामपश्याव मूलस्थितपरिच्छदाम् ॥ १४१
मभ्याम्रफलानि कतिचिच्छुभे । इति चास्माभिरुक्ता सा कन्यकैवमभाषत ॥ १४२
फलान्युष्णान्युत किं शिशिराणि वा । तच्छ्रुत्वाश्चर्यजिज्ञासुस्तां कन्यामहमब्रवम् ॥ १४३
तावदुष्णानि ततोऽन्यान्यपि सुन्दरि । श्रुत्वैतदक्षिपद्भूमौ पांसुष्वाम्रफलानि सा ॥ १४४
नीरजीकृत्य तान्यस्मामिर्मुखानिलैः । ततः सपरिवारा सा कन्या प्रहसिताब्रवीत् ॥ १४५
विमुष्णानि दत्तान्याम्रफलानि वः । तथा च दत्त्वा फूत्कारान्भवन्तो यान्यभक्षयन् ॥ १४६
शीतलान्येतान्यफूत्काराणि वासांसि । एवमुक्त्वाञ्चलेष्वन्यान्यक्षिपत्सा फलानि नः ॥ १४७
य ततः स्थानाद्वयं याता विलक्षिताः । ततः सहचरानन्याञ्शशिनं चाहमब्रवम् ॥ १४८
रिणैषा विदग्धा कन्यका मया । अवहासप्रतीकारः कार्यः का धूर्ततान्यथा ॥ १४९
रन्विष्टं तैस्तस्याः सदनं पितुः । वयं वेषान्तरालक्ष्या अगच्छामापरेऽहनि ॥ १५०
पठतो वेदं यज्ञस्वामीत्युपेत्य सः । तत्कन्याजनकोऽपृच्छत्कुतो यूयमिति द्विजः ॥ १५१
पुरीस्थानाद्विद्याहेतोरिहागताः । इत्युक्तः स ततोऽस्माभिराढ्योऽवोचद्द्विजोत्तमः ॥ १५२
चतुर्मासीमेतां वसत मद्गृहे । कुरुतानुग्रहं यूयं दूरदेशागता यतः ॥ १५३
चाम वयं ब्रह्मन्कुर्मो भवद्वचः । चतुर्मासावसाने चेदर्थितं नः प्रदास्यसि ॥ १५४
भिरुक्तः स यज्ञस्वामी द्विजोऽभ्यधात् । शक्यं यदर्थं मृगयध्वे तद्दास्याम्येव निश्चितम् ॥ १५५
श्रुते तेन तद्गृहे वयमास्महि । अथोक्तः स द्विजोऽस्माभिः पूर्णे मासचतुष्टये ॥ १५६
तत्पूर्वोक्तं देहि यत्प्रार्थयामहे । किं तदित्युक्तवन्तं तं मां प्रदर्श्याब्रवीच्छशी ॥ १५७
न्याय कन्यासौ भवता दीयतामिति । ततः स विप्रो वाग्बद्धो यज्ञस्वामी व्यचिन्तयत् ॥ १५८
न्यभिरस्त्वेतत्को दोषो गुणवानयम् । इत्यालोच्य स मे विप्रो यथावत्तामदात्सुताम् ॥ १५९
हसन्वासगृहे तामवदं वधूम् । कच्चित्स्मरसि तान्याम्राण्युष्णानि शिशिराणि च ॥ १६०
प्रत्यभिज्ञाय सा मां सस्मितमभ्यधात् । एवमेव विडम्ब्यन्ते ग्राम्या नागरिकैरिति ॥ १६१
यवोचं तामास्व नागरिके सुखम् । ग्राम्यो यास्याम्यहं दूरं त्वां विहाय प्रतिज्ञया ॥ १६२
करोत्सापि प्रतिज्ञां निश्चितं मया । वष्टभ्यानायितव्यस्त्वं त्वत्तो जातेन सूनुना ॥ १६३
प्रतिज्ञाते सा शेते स्म पराङ्मुखी । स्वाङ्गुलीयमहं चास्याः सुप्ताया अङ्गुलौ न्यधाम् ॥ १६४
मिलित्वा तैरहं सहचरैस्ततः । तस्या दिदृक्षुर्वैदग्ध्यमागामुज्जयिनीं निजाम् ॥ १६५
सुता प्रातरपश्यन्ती प्रबुध्य माम् । अङ्गुलीयं च पश्यन्ती मन्नामाङ्कमचिन्तयत् ॥ १६६
स मां त्यक्त्वा प्रतिज्ञा तेन पालिता । मयापि स्वप्रतिज्ञातं पाल्यं त्यक्तानुतापया ॥ १६७
नामास्मिन्दृश्यते चाङ्गुलीयके । तद्ध्रुवं मूलदेवो यः ख्यातो धूर्तः स एव सः ॥ १६८
अन्यां वसतीत्युच्यते सततं जनैः । तत्तत्र युक्तितो गत्वा मया साध्यं समीहितम् ॥ १६९

इति संकल्प्य पितरं सैवं कृतमृषाब्रवीत् । गतस्तात परित्यज्य भर्ता मां सहसैव सः ॥
तद्वियुक्ता कथं चाहं तिष्ठामीह यथासुखम् । तद्यामि तीर्थयात्रायै क्लिश्नाम्येतां हतां तनुम् ॥
इत्युक्त्वा तमनिच्छन्तमप्यनुज्ञाप्य यत्नतः । पितरं सा ततः प्रायात्सधना सपरिच्छदा ॥
क्रमेण गत्वा कृत्वा सा महार्घं गणिकोचितम् । वेषं विवेशोज्जयिनीं पुरीं लोकैकसुन्दरी ॥
कृत्वा च परिवारेण सह कर्तव्यसंविदम् । सुमङ्गलेति साकार्षीन्नाम विप्रसुतात्मनः ॥
कामरूपान्महात्यागभोग्या नाम्ना सुमङ्गला । आगता गणिकैषेति भृत्यैराख्याप्यतात्र सा ॥
देवदत्ताभिधानाथ तत्रत्या गणिकोत्तमा । ददावभ्येत्य तस्यै स्वं राजार्हं मन्दिरं पृथक् ॥
तत्र स्थितां भृत्यमुखेनादौ मित्रं स मे शशी । तामब्रवीत्ख्यातिहृतो भाटिर्मे गृह्यतामिति ॥
अस्मद्वचोऽनुतिष्ठेद्यः प्रविशेत्सोऽत्र कामुकः । न भाट्या कार्यमस्माकं नान्यैः पशुनिभैर्नृभिः ।
इत्युक्तस्तन्मुखेनैव स सुमङ्गलया तया । तथेत्युक्त्वा शशी रात्रिमुखे तन्मन्दिरं ययौ ॥
तत्र स प्रथमं द्वारं संप्राप्यावेदितात्मकः । द्वारपालेन जगदे कुर्वस्तत्स्वामिनीवचः ॥
स्नातोऽपीह पुनः स्नाहि प्रवेशो नास्ति तेऽन्यथा । तच्छ्रुत्वा स शशी स्नानं तथेत्यङ्गीचकार त
ततः स यावद्दासीभिरभ्यङ्गोद्वर्तनोत्तरम् । विस्रब्धं स्नपितस्तावत्प्रथमः प्रहरो गतः ॥
स्नात्वा प्राप्तोऽथ स द्वारं द्वितीयं द्वाररक्षिणा । ऊचे स्नातोऽसि तत्तावत्प्रसाधनविधिं कुरु ॥
तथेत्युक्तवतस्तस्य दास्यस्तावत्प्रसाधनम् । चक्रुर्यावद्द्वितीयोऽपि प्रहरः पर्यहीयत ॥
तृतीयमथ संप्राप्तः कक्ष्याद्वारं स रक्षिभिः । जगदे भुङ्क्ष्व तावत्त्वं प्रविशाभ्यन्तरं ततः ॥
बाढमित्युक्तवन्तं तं दास्यस्तावद्व्यलम्बयन् । आहारैर्विविधैर्यावत्तृतीयः प्रहरो गतः ॥
अथ वासगृहद्वारं चतुर्थं स कथंचन । संप्राप्तो द्वारपालेन तत्रैवं निरभर्त्स्यत ॥
ग्राम्यकामुक निर्याहि मा खलीकारमाप्स्यसि । कालः किं पश्चिमे यामे गणिकानवसंगमे ॥
एवं तिरस्कृतस्तेन स कालेनेव रूपिणा । शशी विगलितच्छायो यथागतमगात्ततः ॥
इत्थं सुमङ्गलेत्याख्यां दधत्या वञ्चितास्तया । गणिकारूपया विप्रसुतयान्येऽपि कामुकाः ॥
तच्छ्रुत्वा कौतुकादेव कृत्वा दूतगतागतम् । अहं नक्तं गृहं तस्या अगच्छं सुप्रसाधितः ॥
तत्र द्वाःस्थान्प्रतिद्वारमनुरञ्जयार्थदानतः । तस्या वासगृहद्वारं प्राप्तोऽहमविलम्बितः ॥
कालप्राप्तो विमुक्तश्च द्वाराद्वाःस्थैः प्रविश्य ताम् । वेश्यावेशापरिज्ञातामपश्यं स्वप्रियामहम् ॥
सा पुनः प्रत्यभिज्ञाय कृतप्रत्युद्गमादिका । वेश्येव धूर्ता पर्यङ्कनिषण्णं मामुपाचरत् ॥
ततो लोकैकसुन्दर्या साकं नीतनिशस्तया । बद्धानुरागो त्रिर्गन्तुं नाशकं तद्गृहादहम् ॥
सापि बद्धरतिः पार्श्वान्नापयाति स्म मे तदा । यावद्दिनैः सगर्भाभून्मेचकाग्रपयोधरा ॥
कृत्वाथ कूटलेखं सा विदग्धा मह्यमर्पयत् । राज्ञा मे प्रभुणा लेखः प्रहितो वाच्यतामिति ॥
ततश्चाहं तमुन्मुच्य लेखमेवमवाचयम् । श्रीकामरूपतः श्रीमान्मानसिंहो महीपतिः ॥
सुमङ्गलामादिशति स्थितास्यत्र चिरं कथम् । शीघ्रमागम्यतां हित्वा देशान्तरकुतूहलम् ॥
मयैवं वाचिते लेखे साब्रवीद्दुःखितेव माम् । याम्यहं मयि मा मन्युं कृथाः परवती ह्यहम् ॥
एवं कृत्वा मिषं प्रायात्स्वं सा पाटलिपुत्रकम् । अहं तु तां परायत्तेत्यनुरक्तोऽपि नान्वगाम् ॥
सा च पाटलिपुत्रस्था कालेन सुषुवे सुतम् । स वर्धमानश्च कलाः सर्वाः शिशुरशिक्षत ॥
द्वादशाब्दश्च वयसा स बालो बालचापलात् । दासेरकं सवयसं लत्तया जात्वताडयत् ॥
ताडितस्तं च सोऽवादीद्रुदन्दासेरको रुषा । त्वं ताडयसि मां यस्य तव न ज्ञायते पिता ॥
मातुर्विदेशभ्रान्ताया जातस्त्वं हि यतस्ततः । इत्युक्तस्तेन वैलक्ष्याद्गत्वाप्राक्षीत्स मातरम् ॥
अम्ब को मे पिता कुत्र स चास्ते कथ्यतामिति । साथ माता द्विजसुता वीक्ष्य क्षणमुवाच तम्
पिता ते मूलदेवाख्यो मां त्यक्त्वोज्जयिनीं गतः । इत्युक्त्वा मूलतस्तस्मै स्ववृत्तान्तं शशंस सा
ततः स बालोऽवादीत्तामम्ब तर्ह्यानयाम्यहम् । गत्वा तं पितरं बद्ध्वा प्रतिज्ञां पूरयामि ते ॥

इत्युक्त्वा जननीमेव स बालः प्रस्थितस्ततः । तयोक्तमदभिज्ञानः प्रापदुज्जयिनीमिमाम् ॥ २०९
दीव्यन्तमक्षैर्मां तत्र दृष्ट्वाभिज्ञाननिश्चितम् । ठिण्ठास्थानेत्य सर्वांश्च द्यूतेन जयति स्म सः ॥ २१०
बालत्वेऽपि महाधूर्तः सर्वस्य कृतविस्मयः । अर्थिभ्यः स ददाति स्म तद्द्यूतावर्जितं धनम् ॥ २११
रात्रौ स्वयुक्त्या चागत्य कार्पासनिचयोपरि । लघु विन्यस्य सुप्तं मां शय्याखट्वामपाहरत् ॥ २१२
ततः प्रबुद्धो दृष्ट्वाहमात्मानं तूलपृष्ठगम् । अखट्वं सहसाभूवं सलज्जाहासविस्मयः ॥ २१३
अथाहमापणं देव शनैर्गत्वा परिभ्रमन् । तमेव बालं तां खट्वां विक्रीणानं व्यलोकयम् ॥ २१४
उपगम्याब्रवं तं च कियता दीयते त्वया । एषा मूल्येन खट्वेति ततो बालोऽब्रवीत्स माम् ॥ २१५
न लभ्यतेऽसौ मूल्येन खट्वा धूर्तशिरोमणे । अपूर्वाद्भुतवृत्तान्तवर्णनेन तु लभ्यते ॥ २१६
तच्छ्रुत्वाहमवोचं तं तर्हि वच्म्यद्भुतं तव । तत्त्वतः सत्यमिति तद्बुद्ध्वा चेदनुमन्यसे ॥ २१७
यदि त्वसत्यमिति तद्वक्ष्यस्यप्रत्ययेन मे । ततस्त्वं जारजातः स्याः खट्वां च प्राप्नुयामहम् ॥ २१८
अनेन समयेनाङ्ग विचित्रं शृणु वच्मि ते । पूर्वं दुर्भिक्षदोषोऽभूद्राष्ट्रे कस्यापि भूपतेः ॥ २१९
स वाहनानां नागानां शीकराम्बुमहाभरैः । सूकरप्रेयसीपृष्ठे स्वयं चक्रे कृषिं नृपः ॥ २२०
ततो धान्यैः समुत्पन्नैः समृद्धः स महीपतिः । दुर्भिक्षं शमयामास प्रजानां जनपूजितः ॥ २२१
एवं मयोक्ते विहसन्सोऽवादीद्बालकस्तदा । नागानां वाहना मेघाः सूकरप्रेयसी क्षितिः ॥ २२२
विष्णोः सूकररूपस्य सा हि प्रियतमोच्यते । तस्यां मेघाम्बुभिर्धान्यमुत्पन्नं चेत्किमद्भुतम् ॥ २२३
इत्युक्त्वा बालधूर्तो मां विस्मितं सोऽब्रवीत्पुनः । इदानीमहमाख्यामि तवापूर्वं किमप्यदः ॥ २२४
प्रत्येषि यदि विज्ञाय तत्सत्यमिति तत्त्वतः । तत्ते खट्वां ददाम्येतां स्यास्त्वं दासो ममान्यथा ॥ २२५
तथेत्युक्ते मया सोऽथ बालधूर्तोऽब्रवीदिदम् । उदपादि पुरा धूर्तपते कोऽपीह बालकः ॥ २२६
अकम्पयत्पदभरेणोर्वीमुत्पन्न एव यः । तदैव वृद्धो भूत्वा च चक्रे लोकान्तरे पदम् ॥ २२७
इत्युक्तवन्तं बालं तं तद्बुद्ध्वाहमब्रवम् । अलीकमेतन्नास्त्यत्र सत्यता काप्यहो इति ॥ २२८
ततः स बालोऽवादीन्मां जातस्यैव न किं हरेः । चकम्पे चरणाक्रान्ता वसुधा वामनाकृतेः ॥ २२९
तदैव वृद्धिं गत्वा च चक्रे तेन न किं पदम् । द्युलोके तज्जितोऽस्येव मया दासीकृतोऽसि च ॥ २३०
अत्रापणगताश्चैते सर्वे नौ साक्षिणः पणे । तदहं यत्र गच्छामि तत्रागच्छ समं मया ॥ २३१
इत्युक्त्वा सोऽग्रहीद्बालो धीरो मां पाणिना भुजे । तत्रस्थाश्च तथैवास्य साक्ष्यं सर्वे व्यधुर्जनाः ॥ २३२
ततश्च मामवष्टभ्य पणबद्धं स सानुगः । नयति स्मान्तिकं मातुः पुरं पाटलिपुत्रकम् ॥ २३३
तन्माता च तदानीं तं दृष्ट्वा सा मामभाषत । आर्यपुत्र मयाप्येषा स्वप्रतिज्ञाद्य पूरिता ॥ २३४
आनायितोऽस्यवष्टभ्य त्वज्जातेनैव सूनुना । इत्युक्त्वावर्णयत्साध्वी वृत्तान्तं सर्वसंनिधौ ॥ २३५
ततस्तां बान्धवाः सर्वे स्वप्रज्ञासाधितेप्सिताम् । पुत्रापमृष्टकौलीनामभ्यनन्दन्कृतोत्सवाः ॥ २३६
कृतार्थश्च तया पत्न्या साकं तेन सुतेन च । उषित्वा चिरमत्राहमागामुज्जयिनीमिमाम् ॥ २३७
एवं सन्त्येव देवेह भर्तृभक्ताः कुलाङ्गनाः । न पुनः सर्वथा सर्वा दुर्वृत्ता एव योषितः ॥ २३८
इत्येतां मूलदेवस्य निशम्य वदनात्कथाम् । विक्रमादित्यनृपतिस्तुतोष सह मन्त्रिभिः ॥ २३९
इत्याश्चर्याणि शृण्वन्स पश्यन्कुर्वंश्च भूपतिः । विजित्य विक्रमादित्यः सद्वीपां बुभुजे महीम् ॥ २४०

इति संयोगवियोगैर्निचितामाख्याय विषमशीलकथाम् ।
कण्वमुनिः पुनरवदत्तस्मिन्मां मदनमञ्चुकाविरहे ॥ २४१
एवं भवन्त्यचिन्त्या विरहाश्च समागमाश्च जन्तूनाम् ।
तस्मात्तवापि न चिरान्नरवाहनदत्त संगमः प्रियया ॥ २४२
अवलम्बस्व धृतिं तत्सुचिरं भोक्तासि वत्सराजसुत ।
भार्यासचिवसमेतो विद्याधरचारुचक्रवर्तिपदम् ॥ २४३